# सूर्योदयः

भारत... स्य
मासिकं मुखपत्रम्




वर्षम् ४५

अङ्कः १

सम्पादकः
गो० न० वैजापुरकरः

जनवरी
१९६९

वार्षिक-मूल्यम्
५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्

## जागृहि शीघ्रं बन्धो !

निद्रां त्यक्त्वा जागृहि शीघ्रं बन्धो !
निशा व्यतीता हे !!
परम-पावनी प्रभात-वेला
युक्ता नैतस्या अवहेला ।
अभिषेकार्थमागता प्राची
मुदिता कुङ्कुमहस्ता हे ॥१॥
बालारुणोऽभियातीदानीम्
भीतं विशतित मोऽरण्यानीम् ।
नीडेभ्यो निर्यान्ति शकुन्ताः
कर्मपथे रवयुक्ता हे ॥२॥
किरति सुगन्धं विकसित-पुष्पा
वनराजि - धृत-लताकलापा ।
जनमानस - मुकुलानि फुल्लतां
नय निजदीप्ति दत्वा हे ॥३॥
वेलेयं नोचिता शयार्थम्
पुरुषोऽसि त्वं भज पुरुषार्थम् ।
द्रुतमुत्तिष्ठ विजयलाभार्थं
भैरवनादं कृत्वा हे ॥४॥

—श्री डॉ० शिवराम शर्मा

# ग्राहकेभ्यः अत्यावश्यकी सूचना

अनेनाङ्केन सूर्योदयस्य पञ्चचत्वारिंशत्तमस्य नववर्षस्यारम्भः। अद्यावधि नैकैः प्राचीन-ग्राहकैः नववर्षस्य शुल्कं प्रेषितं नास्ति। तैः कृपया एतदङ्कलाभसमनन्तरमेव मनिआर्डरद्वारा तत् शीघ्रं प्रेषणीयम्। येषां ग्राहकत्वं नववर्षे नाभीष्टम्, तैरपि वयं कृपया सूचनीयाः, येन अस्माकं वितथो व्ययो न भवेत्।

—व्यवस्थापकः

# अ नु क्र मः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, पौषः २०२५ : जनवरी, १९६९ ई० [ १ अङ्कः



## ददातु दैनन्दिनं न आनन्दम् !

श्रीमन्मुकुन्दकान्तां चन्दिरवदनां पुरन्दराऽऽसेव्याम् ।
वन्दारुवृन्दवन्दित - पादामरविन्द - मन्दिरां बन्दे ॥ १ ॥
काञ्चनसञ्चयरुचिमद वञ्चक देहप्रभाभरैर्भरिताम् ।
काञ्चन किञ्चनकुञ्चितलोचनकमलां भजे हरेर्महिलाम् ॥ २ ॥
निस्तुलशस्तगुणाऽऽवलिसंस्तुतमस्ताऽऽपदुद्गमं स्तुत्यम् ।
किञ्चिद् वस्तु पुरस्तात् चकास्तु, हृदये हरेस्तु वास्तव्यम् ॥ ३ ॥
मधुररसाऽधिकमसृणं क्षीरधिमथनोदितं सुधासहजम् ।
किञ्चन नवनवनीतं नमतां तनुतां तनोः परां पुष्टिम् ॥ ४ ॥
मञ्जुलमञ्जुलशिञ्जितमणिमञ्जीरं निरञ्जनैर्ध्येयम् ।
रञ्जयतु मानसं नः किमपि महः क्षीरसागरोदरजम् ॥ ५ ॥
हरिहृदयहारि कौस्तुभसहजं सुकुमारकायमतिदीप्रम् ।
किञ्चन रत्नाकरजं प्रत्नं रत्नं तनोतु शं नूत्नम् ॥ ६ ॥
परिहृत - पौरोभाग्यं योग्यन्तरमात्र - भावनायोग्यम् ।
प्रमदाऽऽकृति हरिभाग्यं दद्यादारोग्यशालि सौभाग्यम् ॥ ७ ॥
रदजित - सुन्दरकुन्दं कन्दुकवक्षोज - मिन्दिराऽभिख्यम् ।
सदयं दैवतरत्नं ददातु दैनन्दिनं न आनन्दम् ॥ ८ ॥

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—श्री विन्ध्येश्वरीप्रसाद शास्त्री—

१३१.

इमे किराताः प्रभवन्ति वीराः श्रद्धालवः साधुषु भूसुरेषु।
विश्वासभाजो निजराष्ट्रभक्ता आखेटसक्ता विचरन्ति चात्र ॥

१३२.

स्त्रियस्तदीया अपि साधुशीला-
श्छलादि-दोषैर्नितरां विहीनाः।
पतिव्रतं स्वं परिपालयन्त्यो
गायन्ति नृत्यन्ति सदा प्रसन्नाः॥

१३३.

निरीक्ष्य सर्वं प्रससाद योगी
सधन्यवादं नृपमित्युवाच।
गन्तुं समीहे नगरात् तवाऽहं
निजामनुज्ञां मम देहि राजन्॥

१३४.

श्रुत्वा वचस्तन्मुनिपुङ्गवस्य
स भूपतीनां वृषभो न्यगादीत्।
भाषस्व मैवं भगवन् मुनीन्द्र !
त्वया विना नैव सुखं लभेऽहम्॥

१३५.

वस्तव्यमत्रैव मदीयराज्ये
दया विधेयाऽऽदृत-राजयोगिन्।
चित्तौरदुर्गाश्रित - राज्यखण्डं
दास्यामि ते त्वं मयि सुप्रसीद॥

१३६.

नैनंजं गेहं सर्वसम्पत्सुखाढ्यं
भूस्वामित्वं साधु, मत्वा तृणाय।
धर्मं गोप्तुं शाश्वतं भूतरक्षं
संन्यासी यस्तस्य राज्येन किं स्यात्॥

१३७.

निजचरणमुपेतं तं नृपेन्द्रं यतीन्द्रः
प्रणययुतवचोभिः स्वैः समाश्वास्य यत्नात्।
पुनरपि तव वेश्मन्यागमिष्यामि राजन्
इति वचनमुदीर्य स्वाश्रमं स प्रतस्थे॥

॥ इतिश्री महर्षि-ज्ञानानन्दचरिते महाकाव्ये त्रयोदशः सर्गः ॥

सम्पादकीयम्

# अस्माकं पञ्चचत्वारिंशत्तमं वर्षम्

अकारणकरुणावरुणालयस्य जगज्जीवातुः परमेश्वरस्य परमया कृपया 'सूर्योदयः' जीवनस्य चतुश्चत्वारिंशद्-वर्षाणि परिसमाप्याद्य पञ्चचत्वारिंशत्तमे वर्षे प्रविशति। अस्मिन्नवसरे ये येऽस्य उपकर्तारस्तेषां सर्वेषां कृतज्ञताज्ञापनमस्माकं परमं कर्तव्यम्। तत्र प्रथमतः सर्वेश्वरः परमेश्वर एव प्रणम्यते यस्यानुग्रहेण मूकोऽपि वाचस्पतियति, पङ्गुरपि त्रैलोक्ययात्रीयते। ततः परं श्री भारतधर्ममहामण्डलमपि सादरं स्मर्यते येन प्रभूतमार्थिकव्ययमपि सोढ्वा भीषणेऽस्मिन् महर्घताकालेऽव्याहतमिदं पत्रं परिचाल्यते। तत्रापि महामण्डलस्य सञ्चालिकाः श्रीमत्यो विद्यादेवी-महोदया विशेषतः स्मरणीयाः, यासां निर्विशेषं संस्कृत-प्रेम सूर्योदयस्य कृते अमृतायते। तदनन्तरं सूर्योदयस्य भूतपूर्वसम्पादकौ शिवसायुज्यमुपेयुषौ सर्वश्री अवधेशप्रसाद - द्विवेद - विन्ध्येश्वरीप्रसाद - शास्त्रिणौ सदैव सादरं स्मरणीयौ ययोरसाधारणेन पौरुषेण पत्रेणानेन विदुषां समवाये समासादितम् आत्मनो गौरवपूर्णं पदमद्यावधि विजृम्भते। विगतवर्षे श्री विन्ध्येश्वरीप्रसादशास्त्रिणामाकस्मिकेन कैलासवासेन प्रत्यक्षतो नूनं पत्रमिदम् अनाथायितमभवत्। तथापि आत्मनोऽविनाशित्वाद् व्यापकत्वाच्च शरीरपरिच्छेदशून्यं तेषामात्मतत्त्वमद्यापि पत्रस्यास्य शिरसि वरदहस्तं धारयत्येवेति अस्माकं द्रढीयान् विश्वासः। अतोऽत्र प्रसङ्ग तयोश्चरणयोः सादरं श्रद्धाञ्जलिः समर्प्यते। इतः परं ते मान्या लेखकाः सादरं स्मर्यन्ते यैरमूल्यमात्मनः चिराध्यवसायफलायमानो ज्ञानपाथोधिः देववाणी-कमण्डलौ प्रपूर्य पत्रस्यास्य माध्यमेन पाठकेभ्यः प्रस्तूयते। सूर्योदयस्तेषामेतानुपकारान् कथं विस्मर्तुं शक्नुयात्? अतस्तेऽप्यत्र सादरं प्रणम्याः। पाठका ग्राहका अनुग्राहकाश्चापि अवसरेऽस्मिन् साधुवादार्हाः, येषां प्रोत्साहनेनैव पत्रमिदं प्राणीति। ये केचनान्ये साक्षात्परम्परया वाऽत्र कार्ये सहयोगिनः, सर्वेऽप्यस्मिन् शुभेऽवसरे सूर्योदयेन सादरं स्मरणीयाः।

भारतशासनमपि अस्मिन् कृतज्ञताज्ञापनपर्वणि कथं विस्मारणीयं नाम? संस्कृतप्रचाराय तद् बहुमुखं साहाय्यं वितरति तत्सेवापरायणेभ्यः संस्थानेभ्यः। अस्माभिरपि द्वित्रवर्षपर्यन्तं ततो यत्किमपि 'शाकाय लवणाय वा' आर्थिकं साहाय्यमासादितमिति कथं न तत्स्मर्तव्यम्? परं तदनन्तरं विगतवर्षत्रयेभ्यः पत्रमिदं तदीयकृपाकटाक्षपातैर्वञ्चितमेव। तत्रापि आश्चर्यमेतद् यद् डॉक्टर रामकरणशर्म-सदृश - संस्कृतविशेषाधिकारिणः कार्यकाले इयं स्थितिः। कामं शासनयन्त्रीयविध्यनुगृहीत-विवरणादिप्रेषणे कार्यालयद्वारा किञ्चिद् वैकल्यं भवेत्। तथापि संस्कृतप्रचारप्रसारव्रतम्मन्यस्य शासनस्य कर्तव्यं भवति यत्स्वयमेव तद्विधिपूरणेन एतादृशस्य चिरसेविनः साहाय्यकरणं नाम। दौर्भाग्यात् तादृशोऽवसारोऽस्माभिर्न लब्ध इति ससङ्कोचं वक्तव्यं भवति। यथाबुद्धि-समपेक्षित-विधिपूरणमपि पत्रेणानेन कृतम् क्रियते, तदर्थं सर्वदा प्रस्तुतमप्यस्ति इदम्। तथापि पत्रमिदमशेषतो आत्मानं संस्कृतोन्नयनव्रतिनं मन्यमानस्य शासनस्य आर्थिकसहयोगेन विकलमेवास्ते। शासनस्य सविधे ये नामधारिणः संस्कृतोन्नायकाः यथाकथमपि तादृशं विधिं प्रपूर्य समुपतिष्ठन्ते, ते सहस्र-लक्ष-कोटिमितं साहाय्यं लभन्ते। परं ये तथाकर्तुं न पारयन्ति, अथ च वस्तुतः चिरकालतः संस्कृतसेविनस्ते भीषणतमेऽस्मिन् महर्घतायुगे केवलं स्वशक्तितः संस्कृतसेवायै दीपवत् आत्मनः प्रज्वाल्य शिष्टं स्नेहमपि समर्पयितुं समुद्यता-

स्ते स्वतन्त्रभारतशासनस्य कृपाकटाक्षेण सर्वथा वञ्चिता-स्तिष्ठन्ति, किमतः परं विधुरम् !

संस्कृतपत्राणां मूल्यं दत्वा पाठकाः किल प्रायो दुर्लभाः । अतस्तेषामार्थिकं साहाय्यं तेभ्यः कियद् भवितुं शक्नोतीति सुस्पष्टमेव । दौर्भाग्यमेतद् यदस्माभिः नैकेभ्यो विद्यालयेभ्यो महाविद्यालयेभ्यश्च, ये किल शासकीय-मनुदानमपि भजन्ते, नैकैः वर्षैः अमूल्य 'सूर्योदयः' प्रेष्यते । विगतवर्षद्वयेभ्यस्तेऽस्माभिः सम्प्रार्थिताः यदितः परं पञ्चमुद्रात्मकं वार्षिकमूल्यं सम्प्रेष्य तैरस्य ग्राहकत्वं स्वीकरणीयमिति । परमेकेनापि विद्यालयेन महाविद्यालयेन वा एतावदौदार्यं संस्कृत-प्रेम वा न प्रदर्शितम् । इयमेव स्थितिर्नैकेषां व्यक्तिगतपाठकानां भूतपूर्वग्राहकाणाञ्चापि वर्तते । वाराणसेय - संस्कृत-विश्वविद्यालयसदृशं संस्थानमपि आंग्ल-हिन्दीपत्रेभ्यः स्वीयं विज्ञापनं ददाति । परं सूर्योदय-सदृश-चिरन्तन-पत्रं किलास्मिन् प्रसङ्गे तस्य स्मृतिपथमपि नारोहति । इत्थं वर्तते पत्रस्य कृते जनाधारस्य स्थितिः ।

तदेवं शासनाधारं जनाधारञ्च विरहय्य केवल-मात्माधारेण प्रचलति पत्रमिदम् । नूनं भारतधर्म-महामण्डलस्य परमौदार्यं यदस्यां स्थितावपि तद्यथाशक्ति आर्थिकसहयोगदानेन कथमपि जीवयति पत्रममुम् । परमिदमस्य जीवनं नाममात्रेण जीवनमेव । शासकीया नुदानाभावेन विगतवर्षद्वयतोऽष्टपृष्ठात्मकोऽस्य कलेवरो-ऽपि कृशतां गतो येन समुचित-पर्याप्त-साहित्योपायनमपि न कर्तुं शक्यते । संस्कृतप्रचारस्यास्माकं सुविचारिता योजना वर्तते । अन्यूनम् अशीतिपृष्ठात्मकं यावदिदं प्रतिमासं न प्रकाशयेत् तावत्तस्या योजनाया अशेषतः कार्यान्वयनं सर्वथा असम्भवि । परमेतत् शासन-जनाधारेणैव भवितुं शक्नोति । वर्तमानस्थितौ कथं वयं तदाधारौ आशास्महे ? संस्कृतप्रणयिनः सुप्रसिद्धा व्यवसायिनो वाऽस्माभिः कुत आसादयेरन् ये दानेनेदं जीवयितुं पारयेयुः । एवं स्थितौ अशरणशरणः करुणावरुणालयो [illegible] ... णम् । स एव मुहुर्मुहुः प्रार्थ्यते यत् 'प्रभो, अद्यावधि यथा पत्रमिदं भवता संरक्षितम्, तथैवास्माकं मनो-नीताः योजना अपि सफलयितुं शासनं जनताजनार्दनम् उदाराशयान् लक्ष्मीपुत्रात् प्रेरयेत्, येन चतुर्भिर्वर्षैः स्वीय-स्वर्णजयन्तीपर्यन्तं पत्रमिदमपेक्षितां भव्यरूपतां गच्छेदिति ।

## यशःशेषाः श्री सम्पूर्णानन्दाः !

महामनसां श्री मदनमोहन मालवीय महोदयानां काशीसायुज्यानन्तरमयमपरो हिन्दी-हिन्दु-हिन्दुस्थानस्य मानबिन्दुरक्षकस्य महापुरुषस्य काशीसायुज्यलाभो यः किल तत्त्वतः प्रत्येकं भारतीयं कारुण्यपारावारे निमज्ज-यितुं प्रभवति । स्मरणीया यशःशेषाः श्री सम्पूर्णानन्द-महाभागाः नूनं स्वात्मदृष्ट्या सर्वथा अशोचनीयाः । यतो हि तैर्यावज्जीवं त्रैविक्रमं पदमिदं महता धैर्येण आत्म-निष्ठया च समाक्रान्तम् । त्रिविध-पुरुषार्थ-सोपानानीमानि क्रान्त्वा सपदि वै परमे पदे प्रतिष्ठता विजृम्भन्ते । सत्येवं ते कथं नाम शोचनीया भवेयुः ? शोचनीयाः किल वयं तत्त्रैविक्रम-पदयात्रिणो यैरेतादृशो नेता कृत्वा समुपदेष्टा तन्मार्गद्रष्टा महामनसामनन्तरं भूयोऽपहारित इति ।

अनुकार्यचरितानां श्री सम्पूर्णानन्दानां समग्रं जीवनं क्रमशः समुत्कर्षपदं काम्यतां जनानां कृते परा वलभी-दीपिका । हिन्दी-राष्ट्रभाषायाः कृते तैर्महतोऽपि महत्तरस्य नेतुः प्रातिकूल्यं न परिगणितम् । हिन्दुजातेः कृते 'आर्यों का आदिदेश'-सदृशं ग्रन्थरत्नं प्रस्तूय सर्वेषां कूटनीतिज्ञानां वैदेशिकानाम्, अन्धश्रद्धयाताननुकुर्वतां स्वात्मीयानामपि सर्वथा मुखमुद्रणं कृतम् । यदि हिन्दू-परपर्याया आर्या अन्यतः समागत्यात्र उषितवन्तस्तदा अस्मिन् राष्ट्रे तेषां स्वत्वमेव किम् ? इत्यासीत् कूटनीतिज्ञानां भारतीयानां कृते मूलोच्छेदिका नीतिः । सम्पूर्णानन्द-महाभागैः ग्रन्थकुठा-रेणानेन सा खण्डं खण्डं नीता । हिन्दुस्थानविषये तेषां सुव्यवस्थितं शासनकौशलमपि अस्माभिरनुभूतचरम् ।

# दीक्षान्त-भाषणं
# सार्वभौम-संस्कृत-समारोह-फलश्रुतिश्च

— श्री 'अङ्गारः' —

१९६८ मितेशवीय-वत्सरस्य अन्तिमे दिने १९६९ मितेशवीय-वत्सरस्य आदिमेषु त्रिषु दिवसेषु च वाराणस्यां संस्कृत-सम्मेलनद्वयं महत्त्वपूर्णं सम्पन्नम्। दिसम्बरमासस्य अन्तिमदिनाङ्के वाराणसेय-संस्कृत-विश्वविद्यालयस्य एकादशतमो दीक्षान्त - समारोहः सम्पन्नः। जनवरीमासस्य प्रथमादि-तृतीयदिनाङ्केषु सार्वभौम - संस्कृत-प्रचार-कार्यालयस्य विशेषाधिवेशनं महता समारोहेण नैकैः अवान्तर - सम्मेलनैः सम्पन्नम्। आयोजनद्वयमपि वाराणसेय - संस्कृत - विश्वविद्यालयस्य भवने एव सम्पन्नम्, यत्र प्रमुखपदं दिल्लीप्रदेशोपराज्यपालैः श्री आदित्यनाथ झा महाभागैरेव समलङ्कृतम्। प्रथमे आयोजने ते दीक्षान्तोपदेशकर्तार आकस्मिकतया सम्पन्नाः। यतो हि विश्वविद्यालयेन तदर्थं वैशाली-विद्यापीठ-सञ्चालकाः सुप्रसिद्धगवेषकाः श्री सतकडी मुखोपाध्याया एव मनोनीताः, परं विशेषकारणवशात् ते समुपस्थातुं नापारयन्। अत एव श्री झा महाभागैरेव तत्कार्यं निर्व्यूढम्। झा - महोदयानां स उपदेशोऽस्मिन्नङ्के अन्यत्र सङ्कलित आस्ते। सार्वभौम-सम्मेलनस्य अध्यक्ष-पदेन प्रदत्तं तेषां भाषणमपि महत्त्वपूर्णमभूत्। सम्मेलनेन पारिताः प्रस्तावा अपि सर्वथा मननीया अभूवन्। अत एव उभयोरप्यायोजनयोरत्र समासतो विमर्शः अप्रासङ्गिको न भवेत्।

तत्र दीक्षान्त-भाषणे श्री झा महोदयैः प्रमुखतः तथा अभिनवा शिक्षोपनिषत् समुद्घाटिता। कियन्ती मुखरितानि तेषामिमानि सूत्राणीति क्षणं विमृश्यताम्—'विनयो हि नाम शिक्षणम्। अक्षर ग्रहणमात्रेण न शिक्षणं परिसमाप्यते। विषयावबोधमात्रेण न कृतकृत्यता, तदनुसारमाचरणमप्यपेक्ष्यते। स्वयमाचरणेनापि न कार्यपरि समाप्तिः। तस्य प्रचारोऽपि भूयानावश्यकः। एतावान् शिक्षकाणां व्यापारः' इति। शिक्षकेभ्यः सङ्केतममुं प्रदाय झा-महाभागैः राष्ट्रव्यापिनी साम्प्रतिकी दुर्भाग्यपूर्णा विश्वविद्यालयीय - छात्रस्थितिरपि समीक्षिता, तत्र प्रमुखं कारणं च दलगतराजनीतेः प्रवेश एव निर्दिष्टम्। ते वदन्ति--'राजनीतिस्तु गहना विचित्रा च भवति। सा हि रागं द्वेषञ्च समुत्पादयेत्। स्वभावोऽयं गुणो वा दोषो वा तस्याः। तत्र रागद्वेषनिर्मुक्तानां शिक्षायां संलग्नानामस्माकं कः सम्बन्धः ? विनेयानां जीवनं परमपवित्रं खलु भवति। राजनीतेरन्यः पन्थाः, शिक्षायाश्चान्यः। स्वे स्वे पथि विचरन् शासको विनेयो वा साधु कर्म सम्पादयितुं प्रभवति। मार्गयोरनयोः संमिश्रणं दोषाय कल्पेत। शासकैः एवमेव शिक्षणं कर्तव्यमिति न निर्बन्धः कर्तव्यः। विनेयैश्च एवमेव शासनं कर्तव्यमिति निर्बन्धो न विधेयः। यर्हि उभयोर्व्यतिक्रमो भवति तर्हि समायातं रागद्वेषादिकालुष्यम्। निसर्गसिद्धोऽयं गुणो यन्महतां व्यतिक्रमं विलोक्य कोमलमतयोऽपि पन्थानमतिक्रम्य

तास्तथैव तेषां विनेतारः शिक्षक-शासक-प्रभृतयोऽपि बलादवधातुं प्रेरिताः। अन्ते च संस्कृतच्छात्रेभ्यो विशेषतस्तैः सन्दिष्टम्—'अन्येषु विश्वविद्यालयेषु कोलाहलः प्रचलतीति नास्माभिरपि तत्र मनो देयम्। कोलाहलकर्तॄणां हृदय-परिवर्तनाय चेष्टितव्यमस्माभिरि'ति।

झा-महाभागानामस्मिन्नुपदेशे नूनं नाक्षरलेशं परिष्करणमपेक्ष्यते। त्रिकालाबाधितं खलु तदुपदिष्टम्। किन्त्वद्य पाश्चात्यविद्याध्यायिनामिव शास्त्राध्यायिनोऽपि सर्वथा बहिर्वृत्तयः सम्पन्नाः। तेषामादर्श एव स नास्ति यद्विषये झा-महोदयैः सङ्केतितम्। शिक्षकेष्वपि न समुपदिष्टेऽस्मिन् आदर्शे तथाविश्वासः परिलक्ष्यते। संस्कृत-शिक्षा-क्षेत्रे नागच्छन्ति बाह्यानि राजनैतिक-दलानि। तत्र तु अस्माभिरेव शिक्षकैः पण्डितैः घृणिततराः सङ्कुचिततमा अनन्यसमुल्लासिताः राजनीतिविलासाः प्रस्तूयन्ते। वाराणसेय - संस्कृत - विश्वविद्यालयो यदर्थं झा-महाभागैः स्थापितः स्यान्नाम। इयं प्रत्यग्राऽपूर्वा राजनीतिर्नूनमत्र अङ्कुरयति, पल्लवयति, पुष्पायति, फलायति चेति महता खेदेन वक्तव्यं भवति। सन्त्यत्र वाराणस्यामनेके संस्कृतस्य विभिन्नक्षेत्रेषु सुदीर्घकालतः कृतभूरिश्रमाः समधिगतकौशलाः विद्वांसो ये उदरदरीपूरणाय स्वीयां तादृशीं क्षमां शक्तिं संस्कृतेतरक्षेत्रेषु विशृङ्खलयितुं विवशा भवन्ति। संस्कृत-विश्वविद्यालयस्य द्वारं पुनस्तेषां कृतेऽनया नव्यया संस्कृत-समाजमात्रगतया राजनीत्या सर्वथा पिहितमास्ते। आश्चर्यमेतद् यदन्यत्र तत्र तत्र विषये लब्धप्रतिष्ठा विद्वांसो विश्वविद्यालयेऽस्मिन् पदलाभप्रसङ्गे तत्रैव सुपरिचिते विषये अयोग्या उद्घुष्यन्ते। किमेतादृशैः महतां व्यतिक्रमैः विनेयाः [illegible]

कश्चन उपायो निर्ध्यातः? किं वा एवमेवेयं परमदूषिता पण्डितसमाज-पाण्डित्यघस्मरी तथाकथिता राजनीतिरुन्मुक्तं नग्नताण्डवं कुर्वन्ती प्राचीन-संस्कृतिरक्षणव्याजेन देशस्य बहुल-विपुलधनमपव्ययीकुर्यात्? कटुसत्यमिदं तैर्निर्णेयमेव, यतो हि स्वर्गीय श्री सम्पूर्णानन्द महोदयेभ्यः परं त एव संस्कृतक्षेत्रे विश्वविद्यालयीय-प्रथाया जनका वर्तन्ते। किमपि तादृशं सार्वकालिकं सर्वजनोन्नायकं दृढं कार्यमनेन विश्वविद्यालयेन न क्रियेत चेत् किम् उपकुलपतीनां शिरःस्फोटनेनैव तस्य कृतार्थता? अनुपेक्ष्य सर्वथा समाधेयोऽयं प्रश्नः।

महिला-संस्कृतमहाविद्यालयस्थापनस्य प्रशस्ततरताऽऽवश्यकताविषये पुनस्तैर्यदुक्तं तदपि सर्वथा नूत्नाविष्करणं प्रतिभाया इति तदपि सर्वथा समनुग्राह्यमेव। परं तद्विषये विश्वविद्यालयस्यास्य यावती प्रगतिः सा तु झा-महाभागैरेव स्वीये प्रवचने विवृता। पाण्डित्यरक्षणाय च तैर्ये द्विविधे परीक्षाधारे प्रवाहिते (ये किल 'काचः काचो मणिर्मणिः' कर्तुं सर्वथा समर्थे स्तः), तयोरपि गतिस्तैरेव अग्रे भाषणेऽस्मिन् समुट्टङ्किता। तटस्थाः संस्कृतप्रणयिनोऽचिरादेव अस्वास्थ्यकर्त्र्या अस्याः स्थितेः परिष्कारस्तेभ्यः कामयन्ते।

आस्तां तावदलमश्रेयस्याः दोषकथायाश्चिन्तनेन। सार्वभौम-संस्कृत प्रचार-संस्थानस्य विशेषाधिवेशने सभापतिपदेन भाषयद्भिः श्री झा-महोदयः स्पष्टमेव समुद्घुष्टं यत्संस्कृतभाषा - प्रचारेणैव नैकासां राष्ट्रियसमस्यानां समाधानं भवितुमर्हतीति। तैरुक्तम्—'वैदेशिकभाषा-संस्कृति-सभ्यता - प्रभावेण देशेऽद्य संस्कृतभाषातो भारतीयसंस्कृतितश्च वैमुख्यमालोक्यते। प्रादेशिकता-कथितसाम्प्रदायिकता-भाषाविवादादिभिश्च अस्माकं राष्ट्रं विषमस्थितौ

( शेषांशः २१७ पर )

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

अत्र दुर्गमसङ्गमनी—स्थायिभावसामान्यरूपं प्रेमनाम्ना प्रणयादिकमपि क्रोडीकरोति। स्वरूप-प्रकाशिका स्वरूपशक्तेः संविदाख्या वृत्तिः।

**ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंस्थितौ।**
**ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते॥**

ह्लादिनीमहाशक्तेः सारवृत्तिसमवेतवृत्तिसमवेत-तत्त्वसारांशत्वम्, तयोः समवेतयोः सारत्वञ्च।

**सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।**
**भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥**
**प्रसाद आन्तरो यः स्यात् स हार्द इति लक्ष्यते।**

शुद्धसत्त्वविशेषत्वञ्चात्र स्वरूपशक्तिशक्त्यन्तर-लक्षण इति विष्णुपुराणानुसारेण ह्लादिनीनाम्ना महाशक्तिः तदीयसारवृत्तिसमवेततत्सारांशत्वमेव अवगन्तव्यम्। तयोः समवेतयोः सारत्वञ्च तन्नित्य-प्रियजनाधिष्ठानक-तदीयानुकूलेच्छामय - परमवृत्ति-त्वम्। ह्लादिनीसारसमवायित्वञ्च अस्यैव भावस्य परमपरिणामरूपमोदनाख्ये महाभावे व्यज्यते। तदुक्तम् 'उज्ज्वलनीलमणौ'—

**राधिकायूथ एवासौ मोदनेन तु सर्वतः।**
**यः श्रीमान् ह्लादिनीशक्तेः सुविलासः प्रियो वरः॥**

असौ-पदेन चानुकूल्येन कृष्णानुशीलनरूपा सामान्येन लक्षिता भक्तिरेवाकृष्यते। सापि यद्यपि धात्वर्थसामान्यरूपा, तथाप्यत्र चेष्टारूपा न गृह्यते। किन्तु चेष्टाभावरूपैव, विधेयस्य भावस्य साक्षा-न्निर्दिष्टत्वात्। भावमात्रस्य लक्षणम्—

**शरीरेन्द्रियवर्गस्य विकाराणां विधायिकाः।**

चित्तवृत्तयश्चात्र प्रकारान्तरेण चित्तस्य स्थितयः। 'विकारो मानसो भावः' इत्यमरः। तथापि वक्ष्य-माणानां व्यभिचारिणामप्राप्तिस्तेषां योजयिष्य-माणानां चित्तमासृण्यकृत्त्वाभावात् प्रेमाङ्कुरत्वे विशेष्यत्वाच्च।

असौ सामान्यतो लक्षिता या भक्तिः, सैव निजांशविशेषे भाव उच्यते। स च किं किं स्वरूपः? कृष्णस्य सर्वशक्तिरूपः शुद्धसत्त्वविशेषो यः स एवात्मा तन्नित्यप्रियजनाधिष्ठानतया नित्यसिद्धं स्वरूपं यस्य सः।

**भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते।**

अस्य अप्राकृतत्वम्, अतादृश-शुद्धसत्त्वविशेष-ह्लादिनीसाररूपत्वञ्च मोक्षसुखस्यापि तिरस्कार-कारित्वात्।

किञ्च—रुचिभिः प्राप्त्याद्यभिलाष-स्वकर्तृकानु-कूल्याभिलाष-सौहार्दाभिलाषैः चित्तार्द्रताकृत्।

शान्ति-प्रीति-प्रेयो-वत्सल-मधुराख्या मुख्यरसाः। हास्या-ऽद्भुत-वीरकरुण - रौद्र - भयानक - बीभत्साः गौणरसाः।

शुद्धाद्वैतिभिः गोपालतापनीय-नारदपाञ्चरात्रा-द्यनुसारेण तस्याः प्रकारान्तरमपि निरूप्यते—'भक्तिरस्य भजनम्, तदिहामुत्रफलभोगनैराश्येना-स्मिन् मनःकल्पनमि'ति। तन्मनःकल्पनं किं स्वरूप-मिति जिज्ञासायां नारदपाञ्चरात्रे तन्निष्कृष्यते—

**माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः।**
**स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा॥**

(क्रमशः)

# मानस-भारती--देवगिरा गुम्फितं मानसम्

— श्री जनार्दन गङ्गाधर रटाटे, एम० ए०, साहित्याचार्यः —

अतः प्रयाहि भवनं विचार्य कुशलं स्वकम्।
श्रुत्वेति रावणः प्राह दीपितो दुर्वचस्तदा॥
गुरुर्यथा किं ब्रूषे मां वद को मे समो भटः।
ततश्चिचिन्त मारीचः—'शस्त्रि-मर्मज्ञ-बालिशैः॥
वैद्य - बन्दि - प्रभु - कवि - पाचकै - र्धनिन-स्तथा।
सहैभिर्नवभिर्वैरे न हि कल्याणमीरितम्'॥
द्विधा दृष्ट्वा निजं मृत्युं स मेने साम्प्रतं तदा।
दत्ते प्रत्युत्तरे नूनं मां हनिष्यति दुर्भगः॥
तत् किं रामस्य शरणं प्राप्तो बाणेन न म्रिये।
विचार्य चेतसीत्थं स रावणेन समं ययौ॥
रामस्य पादयोस्तस्य सुदृढं प्रेम विद्यते।
याम्यद्य परमं स्नेहकर्तारं रघुनन्दनम्।
इत्थं चित्तेऽतीवहर्षः किन्तु नादर्शयत् स तम्॥

**स्वकं परं प्रियं प्रभुं विलोक्य लोचने निजे।**
**विधाय सत्फले सुखं लभे सुनिश्चितं त्वहम्॥**
**श्रियाऽनुजेन युक्ततः कृपानिधेः पदाम्बुजे।**
**मनो युनज्मि यस्य रुड् ददाति मुक्तिमुत्तमाम्॥**
**करोति भक्तिरावशं स्वतन्त्रमत्र यं सदा।**
**हरिः स मां सुखाम्बुधिः स्वबाणतो हनिष्यति॥**

**विधाय पाणौ धनुराशुगञ्च**
**धावन्तमारादनु मां धरायाम्।**
**द्रक्ष्यामि देवं मुहुरञ्चितोऽहं**
**कोऽप्यस्ति तुल्यो न मयाऽधुनाऽत्र॥ २६॥**

लङ्केशस्तद्वनं यातो यत्र रामोऽवसत् तदा।
मारीचोऽपि ततो जातो मृगः कपटवेषधृक्॥
अतिचित्रोऽवर्ण्यरूपो मणियुक् स्वर्णविग्रहः।
सीता प्रत्यङ्गरुचिरं तं दृष्ट्वोचे निजं पतिम्॥
शृणु वीर कृपालोऽतिमञ्जु चर्मास्य विद्यते।
सत्यसन्ध प्रभो त्वेनं हत्वा चर्मानयस्व मे॥

सोऽपि हेतुं विदन् सर्वं सुरकार्यार्थमुद्यतः।
मृगं परिकरी दृष्ट्वा चापेऽसौ सन्दधे शरम्॥
समुवाचाऽनुजं भ्रातश्चरन्त्यतिवनेऽस्त्रपाः।
सीतां रक्षाऽऽलोच्य कालबले मतिविवेकतः॥
पलायते मृगो दृष्ट्वाऽनुदधाव शरी प्रभुः।
श्रुतिर्यमाह नेतीति ध्यानेनाप्नोति यं शिवः॥
मायामृगं सोऽनुधावन् वर्तते विपिनेऽधुना।
इत्थं छली निनायासौ बहुदूरं रघूत्तमम्॥
तत आलक्ष्य तं रामः कठिनं शरमक्षिपत्।
चीत्कृत्य स मृगो घोरं पपात धरणीतले॥
आदौ लक्ष्मणमाक्रुश्य रामं सस्मार चेतसा।
रक्षोदेहो मृत्युकाले प्रेम्णा रामस्य सोऽस्मरत्॥
ज्ञात्वा हार्दं प्रेम तस्य सर्वज्ञो रघुनन्दनः।
निजां गतिं ददौ तस्मै रक्षसे मुनिदुर्लभाम्॥

**वर्षन्ति पुष्पाणि सुरा बहूनि**
**गायन्ति रामस्य गुणाननन्तान्।**
**यद् दीनबन्धू रघुनाथ आराद्**
**रात्रिञ्चरायाप्यददात् पदं स्वम्॥ २७॥**

खलं हत्वा तूर्णमेव परावृत्तो रघूत्तमः।
पाणौ शरो निषङ्गश्च पृष्ठे तस्य विराजितौ॥
श्रुत्वार्तं तद्वचः सीताऽतिभीता प्राह देवरम्।
गच्छाश्वतिभये भ्राता तां विहस्याऽऽह लक्ष्मणः॥
मातः सृष्टिलयौ यस्य केवलं भ्रूविलासतः।
स्वप्नेऽपि सङ्कटे किं स पतेत् क्वचिदपि प्रभुः॥
यदा सीता मर्मभेदि वचनं प्राह लक्ष्मणम्।
प्रभुणा प्रेरितस्यास्य चित्तं विकलतां ययौ॥
ततो दिशां वनानाञ्च देवताभ्यः समर्प्य ताम्।
ययौ रावणसोमार्थं यत्र राहुः प्रभुः स्थितः॥

(क्रमशः)

# एषा शिक्षोपनिषद्

-- श्रीमन्तः आदित्यनाथ झा महाभागाः —

[ उपराज्यपालः—दिल्ली-प्रदेशस्य ]

[ वाराणसेय-संस्कृत-विद्यालयस्य पेषम एकादशके उपाधिमहोत्सवे प्रदत्तमिदं दीक्षान्तभाषणम् ]

देशस्य समुन्नतये समाजस्य चाभ्युत्थानाय शिक्षैव साधु प्रधानतमञ्च साधनम् । शिक्षितैरेव मानवैर्देशः समाजो वा मस्तकमुन्नमय्य अवस्थातुमर्हति । निकेतनस्येव धारकाः स्तम्भा देशस्य शिक्षिता भवन्ति । यथा हि विश्वस्य जगतश्चराचरात्मकस्य मुख्यात्मा प्राणो धारकः, तथैव देशस्य शिक्षितः । चिरन्तनादेव कालादियमस्माकं वाराणसी संख्यातीनान् तेषु तेषु शास्त्रेषु लब्धप्रतिष्ठान् अनितरसाधारणं वैदुष्यमाबिभ्रतो विद्वत्तल्लजान् समुत्पाद्य प्रमुदितान्तरङ्गा देशान्तराणां शिक्षयित्री विलसतीति अस्माकं पचेलिमं भागधेयमहिमानम् । वाराणस्या एवेदं वैशिष्ट्यं यदन्यत्र प्रान्तेषु गृहीतविद्या अपि तेषु तेषु दर्शनेषु शास्त्रेषु वा कूलङ्कषं वैदुष्यमावहन्तोऽपि अत्र समागत्य यावत्स्वीयं पाण्डित्यं प्रदर्श्य अत्रत्यान् विदुषो न तर्पयन्ति, तावत्तेषां वैदुष्यं न्यूनमेव पर्यगण्यत । अत्र हि चिरन्तनाः पण्डिताः परम्परासमागतानि दुरूहाणि रहस्यानि सावधानं रक्षन्तः छात्रांश्च तानि न वाचैव केवलं शिक्षयन्तोऽभूवन्, किन्तु देश-समाजोन्नत्याधायकानि कर्माण्युच्चावचं प्रवर्तयन्तो यथायथं तानि समाचरन्तश्च विनेयान् ग्राहयाम्बभूवुः । चारित्रपरिरक्षणे तेषां महानभिनिवेशः । अतः तच्छिक्षणे ते जागरूका अभवन् । चारित्रसंरक्षणौपयिकान् विविधान् विषयान् ग्रन्थात्मना उपनिबध्य तदध्ययने लोकान् निर्बबन्धुः । कुमार्गगामिनामपि मतिमान्द्येना अध्ययनव्याप.रे मन्दोत्साहानामप्यधीतिनां मनांसि स्वमतिकौशलेन समाकृष्य तान् सत्पथे प्रवर्तयितुं मतेर्मान्द्यं निरस्य अध्ययने उत्साहञ्च वर्धयितुं कुशलास्ते शिक्षाका अभूवन् ।

त एव कुशलाः शिक्षकाः परिगण्यन्ते ये सच्चारित्रं सततं परिपालयन्ति, वैदुष्यञ्च अनितरसाधारणमाबिभ्रति, लोभनीयां चिरन्तनादेव च कालात्सम्प्रवृत्तां संस्कृति- ... छात्राननुशंसति । एवं शासिताः शिक्षिताश्चैव देशस्य मानसमुन्नायका भवितुमर्हन्ति । अत एव शासकानां धर्मान् नीतिञ्च प्राधान्येन निरूपयितुं प्रवृत्तः कुशाग्रधिषणश्चाणक्याचार्यः स्वीयेऽर्थशास्त्रे विनयाधिकारं नाम प्रथममधिकरणं निवेशयामास । विनयो हि नाम शिक्षणम् । अक्षरग्रहणमात्रेण न शिक्षणं परिसमाप्यते । शिक्षितानामक्षराणां बोधोऽप्यावश्यकः । विषयावबोधमात्रेण न कृतकृत्यता, तदनुसारमाचरणमप्यपेक्ष्यते । स्वयमाचरणेनापि न कार्यपरिसमाप्तिः, तस्य प्रचारोऽपि भूयानावश्यकः । एतवान् शिक्षकाणां व्यापारः । अस्मिंश्च शिक्षाक्रमे चतुरा अस्माकमत्र विद्वांसोऽभवन् ।

एतेषां महानवलम्बो वेदो नाम । नियतैः स्वरैः वर्णैः क्रमेण च विशिष्टो गुरुमुखोच्चारणेनैव लभ्यः अलौकिकार्थावेदकः शब्दराशिः वेद इत्यभिधीयते । अस्तु स शब्दराशिः केनचन महापुरुषेण निर्मितः, पुरुषसम्बन्धरहितो वा । नायं विषयः प्रकृते विवादमर्हति । इदन्तु निश्चप्रचम् अङ्गीकर्तव्यम् यत् पवित्रतमस्य भारतस्यायम् अमूल्यः शेवधिरिति । मन्त्र-ब्राह्मणरूपैः विविधैः रत्नैः परिपूर्णोऽयं महान् निधिर्भारतस्य । अनेनैव निधिना भारतमद्यापि देशान्तराण्यतिशेते । यदि जगति किमपि प्राचीनतमं वस्तु तर्हि तद् वेदाभिधानमेव । पुरुषप्रणीतत्वं स्वीकुर्वद्भिरपि वेदस्य प्राचीनतमत्वं बलादेष्टव्यमेव । निधेरस्य संरक्षणायैव प्राचीनाः स्वयं जीवनं यापयाम्बभूवुः । प्राचीनैर्विरचिता ये ये ग्रन्थसन्दर्भास्ते साक्षात्परम्परया वा वैदिकीं मर्यादामनतिक्रम्यैव प्रवृत्ताः । कामं भवन्तु ग्रन्थप्रणेतारो वेदबाह्याः, वेदान्निन्दतोऽपि ते स्वस्वरचितस्य ग्रन्थस्य वेदमूलत्वमभ्युपगन्तुं कामयन्त इत्यत्र सन्ति सुलभानि उदाहरणानि । अस्मिन्नेव शब्दराशौ मन्त्र-ब्राह्मणात्मके भारतीया सभ्यतापि संस्कृतिर्निहिता वर्तते ।

यथा व्यष्ट्या समष्ट्या वा लोकान् धारयति, तथैव वैदिकी संस्कृतिः भारतं धारयति। नूनं सन्ति नैकविधाः सम्प्रदाया भारते, तथापीमे लोभनीयेन वैदिकसंस्कृतिसूत्रेण प्रबद्धा वर्तन्ते। इदमेव वैशिष्ट्यं भारतस्य देशान्तरापेक्षया यद्वेदाभिधानः शब्दराशिः तत्तत्साम्प्रदायिकैः सिद्धान्तैः तत्तत्प्रान्तीयाभिः भाषाभिश्च भिन्नानपि भारतीयान् चिरन्तनात् कालादेकरूपेण अनुशास्तीति। वेदोदितं संस्कृतिसूत्रमिदम् अप्रमत्ताः पालयन्तः चिरन्तना भारतस्य गौरवं विशेषतश्च वाराणसीवैशिष्ट्यं समेधयाम्बभूवुः। यदा हि वैदिकसंस्कृति-धारायाः किञ्चिदिव आयतौ क्षीणतामाकलयाम्बभूवुः, तदा तस्या अपाकरणाय पुराणानि स्मृतिग्रन्थान् दर्शनानि सूत्राणि च प्राणैषुः। अत एव विमर्शकानाम् अग्रणीः भगवान् जैमिनिः प्राक्तनैः शिक्षाशास्त्रिभिः वैदिकसंस्कृतेः परिचालकैः विरचितानां स्मृतिपुराणादीनां मूलभूतानि वेदवाक्यानि प्रत्यक्षमनुपलभमानो वैदिक-संस्कृतौ तेषां प्रामाण्यव्यवस्थापनाय **अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्** इति सूत्रयन् प्राचीनतमस्य अमूल्यस्य कस्यचन निधेरन्वेषणाय शोभनञ्च मार्गम् उपदिशन्—**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणः संमर्शिनो युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः** इति श्रौतमर्थं स्मारयति।

भगवान् आपस्तम्बाचार्यः स्वकीये धर्मसूत्रे निखिलानपि भारतीय-संस्कृत्यपरपर्यायान् धर्मान् सविशेषं निरूप्य अन्ते श्रान्त इव **शेषं सर्ववर्णेभ्यः स्त्रीभ्यः प्रतीयात्** इति कथयन् भारतीयानां नारीणामपि शिक्षावैशिष्ट्यमवद्योतयति। स्त्रियो वा भवन्तु पुमांसो वा, युवानो वा भवन्तु प्रवयसो वा, सर्व एव इमं वैदिकं पन्थानम् आतस्थिवांसो यदा आसन्, तदा देशः क्षेमसुभिक्ष आसीत्। अत्र च कारणं तदानीन्तनः शिक्षाक्रमः, शिक्षकाणा-

विनेया अन्ववर्तन्त। शिक्षकैः अवलम्बिताया नीतेः परिवर्तने, तत्र न्यूनातिरेक-समुद्घाटने वा विनेयाश्छात्रा न प्रावर्तन्त। अनुशासनपरिपालन एव तेषामधिकारः। प्राचीनैः प्रवर्तितस्यैव शिक्षाक्रमस्यायं महिमा यद्विनेयानां शिक्षकेषु महत्त्वबुद्धिः, शिक्षकाणाञ्च विनेयेषु वात्सल्यञ्चेति। बौद्धिकव्यायामेन सह शारीरिक-व्यायामोऽपि तेषामासीत्। बुद्धिशक्तिः साधुष्वेव कर्मसु उपायोज्यत पूर्वजैः। केवलमक्षरावाप्तयेऽध्ययनं तैर्नाक्रियत। वस्तुतत्त्व-परीक्षाया निकषोपलास्ते अभूवन्। जीवितुमेव तेषाम् अभ्यवहारः, न त्वभ्यवहाराय जीवनम्। द्रव्योपार्जनैक-फलानि तेषां कर्माणि नाभवन्, किन्तु आध्यात्मिकशक्ति-सम्पादनायापि। आढ्यत्वं द्रविणेन ते न पर्यगणयन्, किन्तु सत्येन तपसा स्वाध्यायप्रवचनाभ्यां च। **सत्यमिति सत्यवचा राथीतरः, तप इति तपोनिष्ठः पौरुशिष्टिः, स्वाध्यायप्रवचने एवेति नाको मौद्गल्य** इति वेदवाक्येषु पर्यालोच्यमानेषु पठनं पाठनञ्चेति कर्मद्वयमेव तेषां प्रशस्तमभवदिति परिज्ञायते। **स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्** इत्यनुशासनं सर्वैरनुश्रियते स्म। नियतकर्तव्येषु कर्मसु पूर्वजानां मुख्यम् आवश्यकञ्च कर्मेदमेव यदध्ययनं नाम। य एव नाधीते, अधीतानुसारेण कर्माणि नाचरति, चारित्रञ्च न पालयति, स लोकैर्दूरतः पर्यह्रियत। गुरुकुलान्येव तदानीमासन् विद्यालयाः, न प्रासादाः। वलभीष्वेव छात्रा अधीयते स्म, न सुन्दरेषु निकेतनेषु। अधीनं छात्रं सर्वतः परीक्ष्यैव गुरवः स्नानाय प्रेरयामासुः।

तदस्य महाफलस्य सम्पादनाय वाराणस्याम् अयं विश्वविद्यालयो नूतनोत्साहेन नव्यभावेन आत्मनः प्राक्तन-गौरवाभिरक्षणसङ्कल्पेन च उदेष्यमाणाय भारतराष्ट्राय उत्तरप्रदेश-शासनस्य सुमहत् प्रदानम्। तस्यास्य विश्वविद्यालयस्य समक्षं कर्तव्यद्वयं विद्यते। एकं कर्तव्यमिदं यद् अनेन विश्वविद्यालयेन आत्मनः शिक्षणप्रवृत्तिस्तथा संग्रहं

कोटिकपण्डितानां परम्पराया विच्छेदो नापद्येत । कामम् अङ्गुलिगणनीया एव भवेयुः, परमद्यापि न्यायव्याकरणादिशास्त्राणां प्राचीनशैल्याः कतिपये प्रकाण्डाः पण्डिताः सन्त्येव, येषां प्रयत्नेन विशिष्टपण्डितपरम्परायाः संरक्षणं भवितुमर्हति । विश्वविद्यालयेन एतद्विषये अत्यन्तं सतर्केण वर्तितव्यम् । यदि विशिष्टाः पण्डिताः न सम्पत्स्यन्ते, तदा प्राचीनातिगभीराणि संस्कृतशास्त्राणि केवलं सङ्ग्रहालयस्यैव सीमितायुष्काः सम्पदो भविष्यन्ति, कालान्तरे पुनस्तदुद्धारस्तादृशानां पुनर्निर्माणं च असम्भवे भविष्यतः ।

अनेनैव अभिप्रायेण मया द्विविधयोः पाठ्यक्रमयोः परिचालनं प्रवर्तितमासीत् । एकस्मिन् पाठ्यक्रमे प्राचीनशास्त्राणां प्राधान्यम् अन्यस्मिंश्च शास्त्रेतराधुनिकविषयाणां प्राधान्यमासीत् । आधुनिकशास्त्री, शास्त्रीयशास्त्रीति नाम्ना परीक्ष द्वयमपि प्रवर्तितमासीत् । ईदृशस्य पाठ्यक्रमस्य ईदृश्याः परीक्षायाश्च मध्यमात आरभ्य आचार्यपर्यन्तं परिचालनं मे लक्ष्यमासीद्, येन शास्त्रेतराधुनिकविषयप्रधानां शिक्षां प्राप्तवन्तः संस्कृतच्छात्रा देशस्य प्रशासनिकीषु प्रतियोगितापरीक्षासु प्रविश्य तत्र च सफलीभूय प्रशासनसम्बद्धानि उच्चपदानि अधिकुर्युः । शास्त्रप्रधानां शिक्षां प्राप्तवन्तश्च छात्राः शास्त्राणामुद्भटाः पण्डिताः भूत्वा प्राध्यापकपदं प्रसाधयन्तः प्राचीनानां गभीरशास्त्राणां पाण्डित्यस्य संरक्षका नवीनानां शास्त्रीयगभीरग्रन्थानां लेखकाश्च भवेयुः । परमिदं विज्ञाय मे महान् खेदो यन्मम परवर्तिभिः उपकुलपतिभिः अस्मिन् लक्ष्ये अस्यां च शिक्षापरीक्षायोजनायामुचिता दृष्टिर्न दत्ता । फलतः शिक्षापरीक्षयोः प्रायः स एव क्रमः पुनः प्रतिष्ठितोऽभूद् यो भूतपूर्वे राजकीय-संस्कृत-महाविद्यालयेऽविद्यत ।

विश्वविद्यालयस्य द्वितीयं कर्तव्यमस्ति यत् सम्पूर्णे देशे गृहे गृहे जने जने संस्कृतभाषायाः प्रचारणम् । यावदिदं कार्यं न सम्पत्स्यते, यावद् देशस्य जनतायाः संस्कृतशिक्षणे रुचिर्न जागृता भविष्यति, यावत् संस्कृतस्य उपयोगित्वं सौन्दर्यं च

शिक्षायां जनताया आग्रहानुदयेन तदर्थं प्रशासनेन अपेक्षितं ध्यानं नैव दातुं शक्यते । अतः संस्कृतप्रचारणमपि विश्वविद्यालयेनात्मनः कर्तव्यतया निर्धारणीयम्, तदर्थं यथासाधनं प्रयतनीयं च । मया एतल्लक्ष्यपूर्तये योजनाद्वयं निर्मितमासीत् । एकस्या योजनाया अनुसारेण संस्कृताध्ययने महिलानां प्रोत्साहनाय महिला-संस्कृत-महाविद्यालयानां प्रतिष्ठापनं कर्तव्यमासीत् । तदर्थमत्र तदानीन्तनस्य कुलपतेः साम्प्रतं भारतराष्ट्रस्य उपराष्ट्रपतेः महामान्यस्य श्रीमतो वी. वी. गिरि महोदयस्य समुपस्थितौ तत्पत्न्याः श्रीमत्याः सरस्वतीदेव्याः करकमलाभ्यां महिलामहाविद्यालय-भवनस्य शिलान्यासो मया कारित आसीत् । तद्भवनं निर्मितं भूत्वा अधुना कार्यान्तरे विनियुज्यमानमास्ते । को नाम सहृदयो महिलानां संस्कृतशिक्षणयोजनां न समर्थयिष्यति ? को नाम ईदृशो जनो यः साम्प्रतं महिलानां शिक्षण विरोद्धुं प्रभवेत् ? तर्हि यदि महिला नूनं शिक्षणीया एव तदा कथं न नाम एवम्भूतानां विद्यालयानां स्थापना भवेद्, यत्र ताभ्यः संस्कृतप्रधाना तथाविधा शिक्षा दातुं शक्येत, यया तासु आत्मनः कुलस्य प्राचीनमर्यादानां रक्षणस्य भावना उदियाद्, यया च तासु सद्गृहिणीत्वस्य विकासः सम्पद्येत, यया गृहकार्येषु दक्षता निष्पद्येत, यया पुनः मातृत्वलाभे स्वबालकेषु संस्कृतं प्रति स्नेहोत्पादनस्य संस्कृतसंस्काराणां जननस्य च सामर्थ्यं तासु निष्पद्येत ।

को नाम न जानाति तथ्यमेतद् यन्नवीनपरिपाट्या परिचाल्यमानेषु विद्यालयेषु बालिकाभ्यो या शिक्षा साम्प्रतं दीयते सा भारतीयनार्या आदर्शानुरूपा नास्तीति । तत्र शिक्ष्यमाणानां बालिकानां सर्वो जीवनक्रम एव परिवर्तते । अहं तु मन्ये, भारतीय-नारीजीवनस्य विकासानुगुणानां संस्कृत-शिक्षाप्रधानानां महिलाविद्यालयानाम् अभावादेव मातापितरौ आधुनिकविद्यालयेषु आत्मनो बालिका वैवश्यादेव प्रेषयतः । ममायं विश्वासो विद्यते यत्कामं संस्कृतविद्यालयेषु बालकानां संख्या न वर्धेत, यतः संस्कृतशिक्षायाः

स्तदर्थं नोत्सहन्ते । परं भारतेऽधुनावधि जीवन्त्याः परम्पराया अनुसारेण जीविकोपार्जनचिन्तामुक्तानां बालिकानां महिला-संस्कृतविद्यालयेषु संख्या नूनं वर्धिष्यत एव । यदा च देशस्य महिलाः संस्कृतशिक्षिता भविष्यन्ति, तदा तासां क्रोडेषु क्रीडतां शिशूनां मनसि संस्कृत-संस्कारा अवश्यमुत्पत्स्यन्ते । ते च संस्काराः संस्कृतशिक्षायां तेषां प्रवृत्तिजनने नूनं सहायकाः भविष्यन्ति ।

संस्कृतप्रचाराय अपरा योजना मया इत्थं निर्मिताऽऽसीद् यद् विश्वविद्यालयेन केचन इत्थम्भूता जनाः संस्कृतप्रचाराय नियुज्येरन्, ये सरलैः संस्कृतशब्दैः व्याख्याने, कथावाचने, संस्कृताभिनयादीनामायोजने, गृहस्थैः सह सम्पर्कसम्पादने, प्रौढशिक्षा-प्रचारकर्मणि च दक्षाः स्युः । यदि ईदृशा जनाः सुलभा न स्युस्तदा प्रशिक्षणेन ते सुलभीक्रियेरन् । ते हि विश्वविद्यालयस्य योजनानुसारेण सम्पूर्णे देशे प्रसृत्य संस्कृतशिक्षायाः प्रचारं कुर्युः ।

सम्प्रति सर्वमिदमधरोत्तरं दृश्यते । निम्नोन्नतेषु प्रदेशेषु गच्छन् शकट इव परिलक्ष्यते देशः । भारतमाता विनेयानामसह्यानि कार्याणि पश्यन्ती सस्नेहं साश्रुनयना तान् वीक्षत इव । सर्वकारे प्रभूतं द्रविणं शिक्षाविषये व्ययीकुर्वन्त्यपि शिक्षायाः पवित्रं फलं नोपलभ्यते । अध्येतॄणां संख्यावृद्धिं लक्षीकृत्य तदनुसारं प्रतिहायनं नूतनानि विद्यामन्दिराणि सर्वकारो निर्माति, शिक्षकांश्च तत्र नियोजयति । परं सहैव अनेन कर्मणा विनेयानाम् अविनयं प्रशमयितुं राजपुरुषाणाम् न्यायाधीशानाञ्च नियोगः कर्तव्यो भवति सर्वकारस्य । क्व वा पवित्रायाः शिक्षायाः प्रयोजनं शमदमादिसम्पत्समृद्धिः चारित्रसम्पादनञ्चेति, क्व चायं विनेयानामविनयः ? सम्प्रति विनेयाः शस्त्रेण अस्त्रेण वा छुरिकया वा शिक्षकान् भीषयन्तः स्वमनोरथान् साधयितुं समीहन्ते । अधिकारिभिः उन्मिषिते निमिषिते वा क्षुते जृम्भिते वा धर्मघटं कर्तुमारभन्ते । किमत्र कारणं भवितुमर्हति ? मम तु प्रतिभाति यद् नहि वाला विनेया अविनये स्वतः प्रवृत्ता भवेयुः । कुतश्चिद् राजनीतिज्ञेभ्यः तैः अस्मिन् कर्मणि प्रेरणा लभ्यत एवेति । यदा हि स्वं व्यापारम् अध्ययनाध्यापन-भाषण-तत्त्वविमर्शादिकं त्यजन्तो राजनीतौ ते प्रविशन्ति तदाऽयमनर्थः समुद्भवति । राजनीतिस्तु गहना विचित्रा च भवति । सा हि रागं द्वेषञ्च समुत्पादयेत् । स्वभावोऽयं गुणो वा दोषो वा तस्याः । तत्र रागद्वेष-विनिर्मुक्तानां शिक्षायां संलग्नानामस्माकं कः सम्बन्धः ? विनेयानां जीवनं परमं पवित्रं खलु भवति । राजनीतेरन्यः पन्थाः, शिक्षायाश्चान्यः । स्वे स्वे पथि विचरन् शासको विनेयो वा साधु कर्म सम्पादयितुं प्रभवति। मार्गयोरनयोः संमिश्रणं दोषाय कल्पेत । शासकैः एवमेव शिक्षणं कर्तव्यमिति न निर्बन्ध कर्तव्यः, विनेयैश्च एवमेव शासनं कर्तव्यमिति निर्बन्धो न विधेयः । यहि उभयोर्व्यतिक्रमो भवति, तर्हि समायातं रागद्वेषादि-कालुष्यम् । निसर्गसिद्धोऽयं गुणः यन्महतां व्यतिक्रमं विलोक्य विनेयाः कोमलमतयोऽपि पन्थानमतिक्रम्य वर्तेरन्निति । कुशलाः शासकाः चतुराश्च शिक्षका देशस्य स्तम्भा भवन्ति । स्तम्भाश्च निकेतनस्य पृथक् पृथग् धारणकार्यमाचरन्ति । स्वं स्वं कार्यम् अकुर्वन् स्तम्भः परत्र चेत्सम्बध्नीयात् तर्हि निकेतनस्य का वा स्थितिरापद्येत इति विवेचयन्तु विनेयाः ।

भारतवर्षेऽयमेव एको विश्वविद्यालयः संस्कृतस्य । चतुर्दशविद्यास्थानानां परिपालनायैव केवलमयं प्रतिष्ठापितः पूर्वजैः । तत्रापि नवीनविषयैः सह प्राचीनविषयाणां साधुसङ्गमोऽत्र भवत्विति मुख्यमुद्देश्यमस्य प्रवर्तकानाम् । तदिदमुद्देश्यं सफलयितुं शिक्षकाणां विनेयानाञ्च सहयोग आवश्यकः । अन्येषु विश्वविद्यालयेषु कोलाहलः प्रचलतीति नास्माभिर्मनाग् तत्र मनो देयम् । कोलाहलकर्तॄणां हृदयपरिवर्तनाय चेष्टितव्यमस्माभिः । संस्कृतमाध्यमेनैव भारतदेशो देशान्तराणां गुरुः परिगण्यते । तथैव संस्कृतशिक्षणप्राधान्यम् आवहन्नयमपि विश्वविद्यालयो विश्वविद्यालयान्तराणां मार्गप्रदर्शको भवत्विति ।

# नेता कः ?

— श्री डॉ० हरिदत्त पालीवालः 'निर्भयः' —

यो माध्यस्थ्यं निर्वहन् पीडितानां
द्रव्यं तेभ्यस्तद्विपक्षाच्च लुम्पेत् ।
संस्थाभ्यस्तच्छासनार्थं प्रणीभ्यो
मध्ये भूष्णु लाभकृत् सोऽस्ति नेता ॥

अर्थश्रेष्ठं लाभमुत्सीमयन्तं
स्वेच्छाचारा येरयेत् स्वार्थहेतोः ।
कारान्च्यां किं जायते सम्प्रतीति-
प्रश्नादेवाहोत्तरं यः स नेता ॥

आरक्षाग्र्यो नानुकूलो यदि स्यात्
तं तत्स्थानात् सद्य उच्चाटयेद् यः ।
वस्यापि स्याद्राजमन्त्रित्व-सिद्ध्य-
प्रोन्नद्धोऽलं यश्च सोऽस्त्यत्र नेता ॥

सिद्धावस्यां प्राप्यमाणेऽपि कार्ये
प्रत्यूहं यः साधयेत् कञ्चनापि ।
अन्नार्थी तन्मूल्यहस्तः प्रतीक्षां
कुर्वन्नास्तां स स्वपक्षेतरश्चेत् ॥

यस्येच्छाया अन्नलाभं न कर्तुं
शक्तः स्यात्सोऽद्यास्ति लोकाग्र्यनेता ॥

चौर्यक्रीत - द्रव्यपूर्णं ट्रकं यो
निस्सार्याऽथो सूचयेद् रक्षपालम् ।
इत्थं पक्षाभ्यामुभाभ्यामपि स्वं
विन्देदुत्कोचं स लोकाग्र्यनेता ॥

व्याख्यानैर्यो राजते सत्सभासु
लोकस्यान्तर्हारिभिः पाटवेन ।
वार्तापत्रैः सत्यरिक्तं च वृत्तं
सत्यंकारं साधयेत् सोऽद्य नेता ॥

हन्यात् केचिद् रोदने तस्य चास्यं
रुन्ध्याद् यश्च स्वातिचारावरोधे ।
जाता जातु स्यात् सभा कापि तस्याः
प्रत्यग् भूयो-भाषणः सोऽद्य नेता ॥

उद्यद्बाधं कञ्चनापि प्रकुर्यात्
सन्नद्धो यः सर्वदाऽनेकरूपः ।
दीर्घोद्योगः स्यात् पिकेटिंग-डेपू-
टेशन्-प्रोसेशन्-कृते सोऽस्ति नेता ॥

कं लक्ष्यं स्वं साधयेन्नेति वेद्यं
यस्यास्थायां सत्कृतिर्दुष्कृतिः स्यात् ।
दुष्कर्माणं यश्च सन्तं वदन् स्या-
ल्लोकस्याद्याऽग्राभिमान्यः स नेता ॥

पूर्वं दग्ध्वा वह्निना कस्यचिद् यो
गात्रं भूयस्तत्र दध्याद्धिमानीम् ।
दुर्बोधं स्याद् यस्य चेतो-रहस्यं
नेता सोऽसौ खद्दराच्छन्नदेहः ॥

यं कञ्चिद् यो मान्यतां लोकदत्तां
नीत्वा पश्चात् पातयेत् तं स्वसिद्धेः ।
नेता सोऽसौ कन्दुकक्रीडयेव
पातोत्पाताचारचित्रोऽस्ति बालः ॥

द्रव्यं भूयो योऽर्जयित्वा जनेभ्यो
यां काञ्चिद्वा स्थापयेन्नाम संस्थाम् ।
कारारूढः पर्यटेत् पत्तनानि
स्वैरं सोऽयं लोकनेतृत्व-सिद्धः ॥

चातुर्यात् स्वादन्यवित्तैर्विहारान्
कुर्वन्नित्यं मोदमानः स-मानः ।
आपद्व्यूहेऽप्यस्ति यः सुस्थचित्त-
स्तं जानीयु लोक-नेतृत्व-वित्तम् ॥

# वैदिकाऽवैदिक-दर्शन-मीमांसा

—श्री जगन्नाथ श्रीधरशास्त्री पदे—

'अमृतस्याव्ययस्य चे'ति ब्रह्मधर्मा उक्ताः। शाश्वतस्य नित्यस्य धर्मस्यापि प्रतिष्ठा सोपाधिक आत्मैव। तथा 'ऐकान्तिकस्य सुखस्यापि देहोपाधिक सगुण आत्मा विकारवर्तिस्वरूपो वा ईश्वरः प्रतिष्ठा' ( गीता १४. २७ ) अत्र सुखशब्दः प्रयुक्तो नानन्द-शब्दः। आनन्दस्तु ब्रह्मधर्म एव। ब्रह्मप्रतीतावेव आनन्दांशस्य प्राकट्यं भवति। श्लोकोऽयं पर-वैराग्यप्रतिपादनपरे चतुर्दशाध्याये उक्तः।

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्।**

( यो० सू० १.१६ )

इति परवैराग्यं गुणातीतत्वं वा देहव्यतिरिक्ता-ऽऽत्मदर्शनेनैव जायते। आत्मबोधानन्तरं महा-वाक्यानामुपदेशेन तेषां मननेन च ब्रह्मप्रतीतिरिति विकारवर्तिब्रह्मणो रूपमधिकृत्यैवायं श्लोकः।

ब्रह्मप्रतीत्यनन्तरं अहमात्मनो ब्रह्मणा साकं सत्तांशेन चिदंशेन आनन्दांशेन मीलने तादात्म्यो-ऽभेदो वा सम्बन्धः सुस्थिरो भवति। देहपातानन्तर-मेकत्वं सम्पद्यते। यावद्देहोपाधिर्विद्यते, तावदात्मा ब्रह्म चेति पदार्थद्वयमनन्यत्वेन अभेदसम्बन्धेन वाऽवतिष्ठते इति तत्र धर्म-धर्मि-सम्बन्धः। आत्मा च ब्रह्म धर्मी भवति। तस्माद्धर्मशब्देन आत्मा गृह्यते। स च सच्चिद्रूपः। अत एव चिदात्मेति व्यप-दिश्यते। आनन्दांशस्य ब्रह्मधर्मत्वादात्मैकत्वबोध-प्राकट्यम्। आत्मैकत्वप्रतिपत्तिः ब्रह्मप्रतिपत्तिर्वा वेदान्तशास्त्रादेव। तस्मादात्मजिज्ञासैव पूर्वमीमां-

धर्मस्य आत्मनो वा लक्षणम्—

**चोदनालक्षणोऽर्थो धर्मः।** ( पू० मी० १.१.२ ) अत्र धर्मशब्देन देहपरिच्छिन्न आत्मा उच्यते, तस्यैव ब्रह्मधर्मत्वात्। स च अर्थ्यमानत्वादर्थो भवति। तथा च श्रुति—

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः।** ( मा० बृ० २. ४. ५ )

तस्य लक्षणम् अस्तित्वद्योतकोऽसाधारणधर्म-श्चोदना। 'इदं कार्यमिदं न कार्यम्' इति चोदयत्ये-वात्मा। अयं हि तस्यासाधारणो धर्मः सर्वैरनु-भूयते। आत्मनश्चोदनेयं सर्वैः श्रूयत इति सा श्रुति-रिति व्यपदिश्यते। आत्मन इदमपौरुषेयं वाक्यं श्रूयत इति श्रुतेरपौरुषेयत्वम्। प्रत्यक्षं श्रूयत इति श्रुतेः प्रत्यक्षत्वम्। अत एव उत्तरमीमांसायां श्रुति-प्रामाण्यस्य सूत्रकारेण भगवता प्रत्यक्षशब्देनैव निर्देशः कृतः। तथा हि—

**दर्शयतश्चैवं प्रत्यक्षानुमाने।**

( ब्र० सू० ४. ४. २० )

आचार्यैश्च—'दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुति-स्मृती' इति श्रुतिशब्देनैव प्रत्यक्ष-शब्दो व्याख्यातः। वैदिकानां श्रुतिः शब्दो वेदो वा प्रत्यक्षमेव प्रमाणम्। विधि-निषेधात्मकः शब्द-श्चिदात्मनः श्रूयते। चित् ज्ञानं वेद इति पर्यायाः। तस्माद् वेदात्मान एव श्रूयते। वेदानामेवेदं वाक्यं श्रूयते। इयं चोदनैव आत्मास्तित्वे प्रमाणमिति

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।**
( गीता ९. ११ )

इति कामान्धैरसुरैः मानुषीं तनुमाश्रितस्याऽऽत्मनः तद्विधिनिषेधरूपस्य चोदनारूपस्य वाऽपौरुषेयस्य श्रुतिवाक्यस्य अवज्ञैव क्रियते । अत एव मनुनोक्तम्—

**माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ।**
( ८. ८४ )

**तथाच-एकोहमस्मीत्यात्मानं यत्वं कल्याण मन्यसे ।**
**नित्यं स्थितस्ते हृद्येषः पुण्यपापेक्षिता मुनिः ।**
( ८. ९१ )

**यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।**
**तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥**
( ८. ९२ )

**देवस्य त्वा सवितुः प्रसवे** ( मा० सं० १. १०, २१, २४; ५.२२, २६; ६.१, ९, ३०; ९.३०, ३८; ११.९, २८; १८.३७; २०.३; ३७.१, ३८.१ ) । **देवः सवितः प्रसुव यज्ञम्** ( मा० सं० ९.१; ११.७; ३०.१ ) इत्यादिभिः मन्त्रवर्णैः वेदात्मनः सवितुश्चोदनानुसारमेव विद्यावतां वैदिकानां क्रियाः प्रवर्तन्ते, न स्वेच्छया । कामचाराभावात् आत्मनश्चोदनानुसारमेव क्रियाप्रवृत्तेरियं क्रिया राग-द्वेष-मोहैः विमुक्ता निर्दोषा धर्मरूपैव । फलमस्याः कर्मगाम्येव, न कर्तृगामि ।

**नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष** इति काणादाः ( शा० भा० २.३.५० ) इति काणाददर्शनानुसारमेते वैदिका मुक्ता एव । योगदर्शनानुसारमपि **ततः क्लेशकर्मनिवृत्तिः** ( यो० सू० ४.३० ) इति क्लेश-कर्मनिवृत्त्यनन्तरमेव चोदनानुसारं धर्मानुष्ठानमिति वेदितव्यम् ।

आत्मैकत्वपक्षे कामस्याभावात् काम एव नास्ति । कामश्च नात्मधर्मः । बुद्धिपर्य[illegible] पीयं क्रिया धर्मरूपैव । स्वेच्छाचाराभावाद् आत्मनश्चोदनानुसारं क्रियाप्रवृत्तेरियं क्रियैव कर्मसन्न्यासः ।

कर्मसन्न्यासो गीताशास्त्रे विस्तरेण प्रपञ्चितः । कर्मसन्न्यासेऽस्मिन् **काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः** ( गी० १८.२ ), **सर्वकर्माणि मयि संन्यस्य** ( १८.५७ ) इति प्रकारद्वयरूपे । **करिष्ये वचनं तव** ( गी० १८.७३ ) इत्येव धर्मो भवति । भगवत आत्मन्यन्तर्यामित्वेन अनन्यत्वेन अवस्थितस्य चोदनानुसरणमेव धर्मः । येषामविद्यया आत्मबोधो नास्ति तेषां भगवतः परब्रह्मणो विज्ञानघनायाश्चितिशक्तेः वेदमय्यास्त्रयीरूपेण अवस्थितायाः चोदनानुसरणं धर्म इति तेषां गुरुपरम्परागतैः वेदैः प्रतिपादितो धर्मो भवति । इत्थं मीमांसासूत्रमिदं विद्याऽविद्याविषयभेदेन प्रकारद्वयेन द्वेधा व्याख्यायते विद्वदविद्वद्भूमिकानुसारेण । तथा चोक्तं गीताशास्त्रे ( १६.२४ )—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**

ब्रह्मविद्याप्रतिपादकं गुह्यतमं शास्त्रं पञ्चदशाध्यायपर्यन्तमुक्तं भगवता । षोडशाध्याये आत्मविमुखानामिदं सर्वं दृश्यं प्रत्यक्षीकुर्वाणानां देहात्मवादिनाम् असुराणामासुरीसम्पत्परिवर्जनाय अयमुपदेशः । वेदोक्तधर्मचर्ययैव कामनाशनेन वैराग्यप्राप्तौ आत्मबोधो भवतीति । इत्थं विद्यावतां कृते 'करिष्ये वचनं तव' इति धर्मो व्यवस्थितः । अविद्यावतां कृते 'तस्माच्छास्त्रं प्रमाणं ते···'इति च भगवतोपदिष्टम् । एवं 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रं गीताशास्त्रे द्वेधा व्याख्यातम् । इत्थं ब्रह्मवादे चिदात्मा धर्मो ब्रह्म च धर्मीति स्थितम् ।

अनात्मवादे जगतो विनाशित्वात् जगत उत्पत्तिस्थिति-प्रलया वितर्क्यन्ते । जगत इत्थमध्रियमाणत्वात् अनवतिष्ठमानत्वात् च जगदधर्मस्वरूपदेव

वादो वा धर्मवादः, अनात्मवादो जडवादो वाऽधर्मवादः। देहात्मवादिभिः अधर्मस्यैव धर्मत्वेन नयनाद् अधर्म एव नीतिः। अविद्यादिपञ्चपर्वणो विपर्ययस्य स्वरूपमेव नीतिः, कामवादः पुरुषार्थवादो वा।

देहात्मवादे कामो देहधर्म इति कामः पुरुषार्थो भवति। देहस्य असाधारणो धर्मस्त्रैगुण्यं प्रकृतिश्चेति कामोऽपि त्रैगुण्यानुरोधेन त्रिविधः सम्पद्यते। तथा चोक्तं मनुना--

**तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते।**
**सत्त्वस्य लक्षणं धर्मः श्रैष्ठ्यमेषां यथोत्तरम्॥**
--( २.३८ )

**सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्।**
**एतद् व्याप्तिमदेतेषां सर्वभूताश्रितं वपुः॥**
--( २.२६ )

त्रिविधोऽयं कामो धर्मोऽर्थः कामश्चेति क्रमेण व्यपदिश्यते। काम्यं जगत् सुख-दुःख-मोहात्मकम्। कामफलं भोगः। स च सुख-दुःखान्यतरसाक्षात्कारः। तत्र कामो नाम इष्टार्थप्रार्थना। तामसः कामो नाम अनिर्ज्ञातप्राप्येष्टार्थप्रार्थना। निर्ज्ञातप्राप्येर्थप्रार्थना अर्थः। राजसः कामो वा। दृष्टोपायैरशक्यप्राप्तेः इष्टार्थस्य वैदिकैरुपायैः प्राप्तेरिच्छा सात्त्विकः कामो धर्मो वा। तेनास्मिन् पक्षे इह भोगाय अमुत्र भोगाय वा क्रियमाणं काम्यं वैदिकं कर्म 'धर्म' इति व्यपदिश्यते। अवैदिकानामेवं धर्मोऽपि काम एव। वैदिकानां पुनः कामोऽपि धर्म एवेति विशेषः। देहो जडस्वरूपस्तमःस्वरूपो वेति तामसा जडाश्च देहात्मवादिनः। ते हि काममधर्मं धर्ममिति मन्यन्ते। तथा चोक्तम् ईश्वरगीतासु--( १८.३२ )

**अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी॥**

दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्म इत्यष्टौ आत्मगुणास्तैः प्रोक्ताः। तथा हि--

**सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि।**
--( वै० सू० ३.२.४ )

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति।**
( न्या० सू० १.१.१० )

चरकेऽपि ( शारीरस्थाने ४.१.७२ )—

**इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः।**
**बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥**

इति वैशेषिकसिद्धान्त एवाऽनूदितः। सुश्रुते ( शारीरस्थाने १.१७ ) च तथैवोक्तम्। यथा—

**तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः।**

भगवता तु प्रत्याख्यातोऽयं वैशेषिकसिद्धान्तो गीताशास्त्रे। तथा हि—

**इच्छा द्वेषः सुखं-दुःखं सङ्घातश्चेतना धृतिः।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥**
( १३.६ )

इत्येते क्षेत्रस्य देहस्य धर्माः, न तु क्षेत्रज्ञस्य आत्मन इति। तार्किकैरेते आत्मधर्मत्वेन परिगणिताः। देहधर्मानेवैते आत्मन्यध्यस्यन्ति। आत्माऽधर्मान् आत्मधर्मत्वेन परिगणयन्तीति देहव्यतिरिक्तस्य आत्मनोऽस्तित्वमङ्गीकुर्वाणा अप्येते अनात्मवादिनो नास्तिका असुरा अवैदिका इति चोच्यन्ते, आत्मनो यथार्थज्ञानाभावात्। तामसत्वादेषाम् आत्मनो यथार्थज्ञानं न भवति, धर्मज्ञानाभावादात्मनः। आत्माऽधर्मानेव आत्मधर्मत्वेनाभिमन्यन्त इत्याऽऽत्मबोध एषां नास्ति। तस्माद् देहव्यतिरिक्तेऽप्यात्मनि अभ्युपगम्यमाने एते आत्मनः स्वरूपज्ञानाभावात् आत्मनो बोधाभावाच्च

( क्रमशः )

( ६ पृष्ठस्य शेषांशः )

समापतितमस्ति। इमां स्थितिं परिहृत्य अतीत-गौरवाऽऽध्यात्मिकसम्पदोरर्जनस्य भावना कथं समुत्पाद्येत ? निष्पक्षं विचार्यमाणे संस्कृतशिक्षाया अखिलभारतीय - प्रचारेण सर्वासां समस्यानां समाधानं कर्तुं शक्येत। एवमेव देशस्य स्वातन्त्र्यं संरक्ष्येत। नगरेषु ग्रामेषु च बालकानां कृते संस्कृत-विद्यालयानां स्थापनाः क्रियेरन्। तेषु च भारतीय-संस्कृत्यनुरूपो जीवनविकासकारी पाठ्यक्रमः परिचालनीयः। बालिकासु संस्कृतशिक्षाया अयं प्रभावः कालान्तरे तासां मातृत्वपदवी-धारणावसरे बालकेष्वपि संक्रान्तो भवेत्। संस्कृतविदुषां छात्राणां वसतिपार्श्ववर्तिषु गृहेष्वपि सम्पर्कस्थापनेन संस्कृत-प्रचारकार्यं करणीयम्। संस्कृत-नाटक-सङ्गीत-कथा-वादविवादादि-स्पर्धाभिश्चापि संस्कृतप्रचारः कर्तव्यो येन जनेषु संस्कृतभाषायां रुचिरुत्पद्येत। संस्कृतप्रचाराय चातुर्मास्ये संन्यासिनः श्रमणाश्च बालक-बालिकासु संस्कृतरुचिमाधातुं प्रयतेरन्। द्वितीयभाषारूपेण संस्कृतमाददतश्छात्रस्य कृते विशेषसौविध्यं प्रदेयम्। विभिन्नसेवासु संस्कृत-ज्ञानां नियुक्त्यर्थं प्रयत्येत। वृत्तपत्रेषु सरल-संस्कृत-शिक्षा-स्तम्भ-द्वाराऽपि संस्कृतप्रचारः करणीय' इति। संस्कृतप्रचारदृष्ट्या नूनमेताः सर्वा अपि सूचनाः महत्त्वपूर्णाः कार्यकारिण्यश्चावगम्यन्ते। यद्येताः यथायथं कार्यरूपेण परिणताः स्युस्तदा संस्कृतस्य कृते महदुपकृतं भवेत्, तेन च राष्ट्रस्य परममुन्नयनं स्यात्।

विशेषाधिवेशनस्य वृत्तमिदमत्रैव अन्यत्र सङ्कलितमस्ति। तत्र ये दश प्रस्तावः स्वीकृतास्तेऽपि सर्वथा समुचिता एव। १. प्रथमप्रस्तावे उक्तमस्ति यत्सर्वैरपि संस्कृतानुरागिभि[illegible] वर्षान्ते निष्कासनं संस्कृतप्रचारकार्ये च उपयोगः स्यात्। २. द्वितीय-प्रस्तावस्य। ( क ) प्रथमांशे उक्तम्—संस्कृताध्यापकानामपि कृते लाभत्रयी योजना स्वीकृता स्यात्। ( ख ) द्वितीयांशे—'ग' - वर्गीय - पाठशालानामध्यापकवर्गस्य वेतन-क्रमो यथाशीघ्रं निर्धारितः स्यात्, क्रियान्वितश्च विधीयेत। ३. तृतीये—संस्कृतशिक्षासम्बन्धिनां प्रश्नानां समस्यानाञ्च विचारार्थं च उत्तरप्रदेशीय-शासनेन शिक्षाशास्त्रिणामेकः आयोगः स्थापनीयः। ४. चतुर्थे ( क ) प्रथमांशे—संस्कृतविद्यालयानां शिक्षकेभ्यो दीयमानं सर्वमपि वेतनरूपं धनं शासनेन 'चेक'-पत्रद्वारा साक्षाद् अध्यापकेभ्य एव प्रदेयम्। ( ख ) द्वितीयांशे—'ग'वर्गीय-विद्यालयाध्यापकानामपि सर्वं वेतनं शासनेन प्रदेयम्। ( ग ) तृतीयांशे-वेतनातिरिक्तः छात्रवृत्ति-परीक्षा-शुल्क-कार्यालय-पुस्तकादीनां व्ययभारः सञ्चालकैः स्वीकार्यः। ( घ ) चतुर्थांशे—राजकीयोच्चमाध्यमिक-विद्यालयानां राजकीय-संस्कृतोच्चतर-माध्यमिकविद्यालयेषु परिणमनं कर्तव्यं येन अतिरिक्त-धनव्ययमन्तरेणापि शासनेन संस्कृतस्य उल्लेखनीया सेवा साधिता स्यात्।

( ५ ) पञ्चमप्रस्तावे—भाषाशिक्षण - योजनायां संस्कृतस्य अनिवार्यतया समावेशः स्यात्। ( ६ ) षष्ठे—मध्यमा - शास्त्रिप्रभृति - संस्कृतपरीक्षाणां हाईस्कूल - इण्टरमीडियेट - बी०ए०-प्रभृति-परीक्षाभिः समकक्षतायाम् आंग्लभाषाया ज्ञानमनिवार्यं न मन्येत। ( ७ ) सप्तमे—वाराणसेय-संस्कृत-विश्वविद्यालये एकः संस्कृत प्रचारविभागोऽपि सञ्चालितः स्यात्। ( ८ ) अष्टमे ( क ) प्रथमांशे—विदेशेषु भारतीयराजदूतैः सह एकैकस्य [illegible] नियुक्तिः स्यात्। ( ख ) द्विती-

संस्कृतोपाधिकानामेव जनानां नियुक्तिः स्यात्। (ग) तृतीयांशे—राजस्थानप्रदेशवत् सर्वेषु प्रदेशेषु संस्कृतशिक्षानिदेशालयः संस्कृत-शिक्षानिदेशकश्च स्वतन्त्ररूपेण स्थापितौ स्याताम्। (९) नवमे—सार्वभौम-संस्कृत-प्रचार-कार्यालस्य कृते वाराणस्यां भवननिर्माणाय तदुपयुक्त-भूमिधनादिप्राप्तये एका समितिः निर्मिता स्यात्। (एतत्-प्रस्तावानुसारं त्रयोदश सदस्यानामेका समितिः निर्मिताऽपि)। (१०) दशमप्रस्तावे (क) प्रथमांशानुसारं वाराणस्यां केन्द्रद्वारा उत्तरप्रदेशशासनेन वा एको महिला-संस्कृतमहाविद्यालयः स्थापितः स्यात्। तस्य च सर्वोऽपि व्ययभारस्ताभ्यामेव निर्व्यूढः स्यात्। (ख) द्वितीयांशे—संस्कृतपण्डित-समाजेन स्वकुटुम्बान्तर्भुक्ताः सर्वा अपि कन्या महिलाश्च संस्कृतमवश्यं शिक्षणीयाः इति।

विशेषाधिवेशनस्यैते प्रस्तावा यथा कार्यान्विताः स्युस्तथा प्रयतनं संस्थासञ्चालकानां पुण्यं कर्तव्यं भाव्यम्, यच्च संस्थाया अस्या जनकानां श्री वासुदेवद्विवेदानामध्यवसायेन नूनं सफलीभवेदित्यस्माकं द्रढीयान् विश्वासः। विशेषाधिवेशने विविधसांस्कृतिकानां योजनानां सङ्घट्टनमपि नूनं समुल्लेख्यमासीत्। वयं संस्थाया अस्याः एवमेव समुन्नयनं तन्माध्यमेन संस्कृतस्य व्यापक-प्रचारञ्च कामयामहे। ●

( ४र्थपृष्ठस्य शेषांशः )

स्वीये शासने प्राचीनादर्श-परिरक्षणविधेरेकमुदाहरणं 'बनारस'स्य 'वाराणसी'-करणं नाम। अनेनैव एकेनोदाहरणेन तेषामेतद्विषयकं निखिलं हार्दं स्फुटीभवति।

तथाकथित - राष्ट्रियमहासभाया निष्ठावत्सदस्यतां बिभ्राणैरपि एभिर्महाभागैः पदत्रयस्यास्य विप्रतीपः कोऽपि क्रमो जीवने नाऽनुसृतः। अत एव सर्वथा केन्द्रीय-शिक्षामन्त्रिपदयोग्या अपि एते प्रादेशिक - राजनीतावेव, अधिकाधिकं वैधानिक - प्रादेशिक-शासनाधिकारिपदे एव प्रतिष्ठापिताः भारतशासनेन। भारतराष्ट्रस्य तात्त्विके राष्ट्रियेतिहासे सर्वश्री स्वातन्त्र्यवीर सावरकराणां, नेताजी सुभाष वसु महाभागानां राजर्षि टण्डन महाभागानां या स्थितिरभवत्, प्रायस्तादृशी एव स्थितिः श्री सम्पूर्णानन्द-महाभागानामपि। तेषु एतान् पूर्वतनान् समपेक्ष्य कियतांऽशेन तथाकथित - सामञ्जस्यभावः सविशेषं प्रतिफलित आसीत्। अत एवैते तेभ्यः सविशेषं शासकीयं सम्मानमभजन्। तथापि यावत्तेषु राष्ट्रोन्नयनकरं सामर्थ्यमासीत्, सर्वं तद् राष्ट्रोन्नयनविधौ समुपयुक्तमिति को नाम तटस्थः प्रामाणिकं वक्तुं पारयेत्? तथापि त्रैविक्रमपद-निष्ठामिमां पालयद्भिरेतैः यावान् शासकीयः सम्मानोऽलम्भि, सोऽपि महत्तर एव वक्तव्यो भवेत्।

संस्कृतभाषा-वाङ्मय-वेदादिशास्त्रविषये पुनरेतैः स्वीयं तेषामेव पौरुषं यत्तादृशे केन्द्रीय-शिक्षानीतिकाले वाराणसेय-संस्कृत-विश्वविद्यालयो मूर्तरूपतां गतः। नूनम् आदित्यनाथ झा महाभागैः कौशलेन स पल्लवितः पुष्पितश्च, तथापि तत्र मूलभूता शक्तिः सम्पूर्णानन्द-महाभागानामेवासीत्। किन्तु अन्ततोऽस्माकमेव संस्कृतज्ञानामयोग्यतया स सुफलानि दातुं न प्रभवति, कटुफलान्येव समुत्पादनाय प्रयतते इति दृष्ट्वा नितरां खिन्नास्ते ततो विरता इव समभवत्। नैकवारमिदं हार्दं तैः प्रकटितमपि। किमप्यस्तु नाम, इदन्तु निश्चप्रचं यत् श्री सम्पूर्णानन्दमहोदयाः वर्तमान-संस्कृतोन्नयनधारायाः प्रकृष्टतमं जीवातुभूतं स्रोतो यदद्य शुष्कतां गतं यदस्मान् निखिलान् संस्कृतज्ञान् बाढं दुनोति। तेषां पाण्डित्यम्, राजनैतिक-शासकीयकुशलता, दृढनिष्ठादिकं गुणगणं स्मारं-स्मारं रिक्तस्यास्य पदस्य पूर्तिः सर्वथाऽसम्भवीत्येव दृश्यते। संस्कृतसमुन्नयनस्यास्मिन् काले तेषामभावेन संस्कृतज्ञा अञ्जसा स्वात्मानमनाथा इव मन्वते। एक एव आशाबिन्दुर्वर्तते यदात्मा किल अजरामरः। शरीरपरिच्छिन्नः स तथा व्यापको न भवति, यथा सर्वथाऽपरिच्छिन्नो देहातीतः। श्री सम्पूर्णानन्दा इदानीं तत्त्वतः सच्चिदानन्दरूपतां गताः। तद्धि सच्चिदानन्दं सम्पूर्णानन्दं ब्रह्म नूनं यावच्चन्द्रदिवाकरौ यशःशेषतां प्राप्य संस्कृतं संस्कृतज्ञांश्च देहपरिच्छेदादप्यधिकं

# ऋतायन् अवधूतः

—श्री विष्णुदेव पण्डितः एम० ए० वेदान्तशास्त्री—

आसीत् कश्चित् अवधूतः अज्ञातनामा कावेरीतटनिवासी आत्मारामः। स आत्मक्रीडः अनपेक्ष एव वर्तते स्म। यथा प्रकृतिः तथा जीवनम्। निद्राति चेत् निद्राति एव सायं प्रातः अहोरात्रम्। चरति चेत् चरति एव पथानुपथं, दिग्-विदिशम्। आहरणं क्वचित्, निराहारस्तथा। रमणं यथा विरमणं तथा। अवधूत इति गह्वरं गम्भीरं वृत्तम्।

दैत्यराजः प्रह्लादो लोकचर्यां चरति स्म, सतां सङ्गतिं च तनुते स्म, 'सतां सङ्गो हि भेषजम्' इति मन्वानः। कदाचित् कावेरीं प्रति विहरन्, सहजमिव प्रह्लादः अवधूतं दृष्टवान्।

पादयोः पतितं तं भक्तं समादरयन् मधुरया वाण्या, प्रसादमेव दत्तवान्। भक्तेन विचित्रमिव चरितं निरीक्षितम्। न तत्र गह्वरे किञ्चित् भोगसाधनं, न पात्रं, न वासः, न करणं, न दण्डः। भोगरहितोऽपि भोगीव हृष्टश्च पुष्टश्च। अखादन्नपि खादन्निव पीव अपिबन्नपि पानप्रमोदी। जातानुजिज्ञासा हृदये, प्रकाशितं च विनयेन वाण्याः—

'प्रभो! क्षन्तव्योऽयं जनः। अस्ति किञ्चित् जिज्ञास्यम्। दृष्टं मयाऽनुभूतं च 'यत्र भोगस्तत्र भोगी, यत्र रागस्तत्र रागी, यत्र करणं तत्र कर्ता। कथमिव भोगं विना भोगी भवान्, रागं विहाय विरागी चेत् रागी कथम्? चयिष्ठः बलिष्ठ, महिष्ठः कथं भवान्?'

विनयं दृष्ट्वा प्रमुदितं, जिज्ञास्यं विलोक्य प्रहसितम्। सहजः स्वभाव इव बालवत् लालितं, नृत्तवत् क्रीडितम्, मौनवत् चेष्टितम्। तथाविधं बालायितं लालायितं दृष्ट्वा प्रह्लादो विस्मितः। 'अनन्या कापि प्रकृतिः अन्या वा सम्पत्तिः' इति निर्णये न विलम्बः सञ्जातः। मूढायितं तु बाह्यचेष्टया।

अवधूतेन प्रबोधितः—'ज्ञातं रे हरिप्रिय प्रह्लाद! सुगुप्तं च वृत्तं भवति। न तथा लोकव्यवहार इति विमूढोऽयं जनः परिभ्रमति भवाटव्याम्। जानातु भवान्, सहजा सरला च प्रकृतिः स्वयमेव परिपोषयति परितोषयति च। न मे माता न मे, पिता, न भ्राता, भगिनी मम।

'हं, पश्य रे तृणं पुरोवर्ति, न क्लिश्यति तु सन्तापे, न वा क्लीदति वर्षणे, न वा मूर्च्छति शीतले। तथा रे मम जीवनम्। प्रकृतिर्मम माता पुष्यति माम्। पृथिव्याः पीवा भवामि, जलेन हृष्टः, तेजसा पुष्टः, वायुना पुनामि, नभसा विहरामि। न कदाचित् बिभेमि, न हृष्यामि। न शोको, न जरा, न मृत्युः।

'जानीहि, रे भक्त! मधुमतीं विद्याम् ऋग्वेदे संग्रथितां (ऋग्वेद १. ९०. ६-७-८), यजुर्वेदे संकलितां (वा० सं० १३. २७), शतपथब्राह्मणे प्रसिद्धां (श० प० १४. ९. ३. ११)।

इदं तात्पर्यम्—य ऋतायन् सरलस्वभावः, तस्य कृते वाता मधु वहन्ति। य ऋतायन् तस्य कृते सिन्धवः मधु क्षरन्ति। अत्र सहज एव स्वभावस्तव च मम च इति 'नः कृते ओषधीः माध्वीः प्रदधाति सोमः। नक्तम् उत उषसः मधु वर्तेते, पार्थिवं रजः मधुमत्। नः पिता द्यौः मधु अस्तु। वनस्पतिः नः मधुमान्। सूर्यः मधुमान् अस्तु। गावः नः माध्वीः भवन्तु।'

पुनरेव महात्मना किलकिलां प्रहसितम्। प्रह्लादोऽपि परमां वेदवाणीं लब्ध्वा प्रसन्नतां गतः। ज्ञातं च तेन सहज-सरलस्वभावस्य माहात्म्यम्। प्राप्तं च तेन जीवनरहस्यम्। कृतार्थीकृतश्च तेन स्वयमात्मा। अवधूतस्य महाप्रसादं लब्ध्वा प्रव्रजितमेव तेन मनसा साधकत्वेन।

# वाराणसीस्थ सार्वभौम संस्कृत-प्रचार-कार्यालयस्य विशेषाधिवेशन-समारोहः

( 'सूर्योदय'–विशेषप्रतिनिधि द्वारा )

बहवः खलु विभिन्नप्रदेशवासिनः संस्कृतज्ञा जानन्त्येव यद् अखिलभारते संस्कृतप्रचारकैः श्री वासुदेव द्विवेद-महोदयैः संस्थापितं वाराणसीस्थं सार्वभौम-संस्कृत-प्रचार-कार्यालयनामकं संस्थानं - सभा-सम्मेलनादीना-मायोजनेन, संस्कृतप्रचारोपयोगि-विविधसाहित्य-प्रकाशनेन च गतेभ्यो द्वाविंशतिवत्सरेभ्यः संस्कृतसेवायामनारतं निरतं वर्तत इति । एतस्यैव संस्थानस्य ऐषमः पौष शुक्ल त्रयोदशी-चतुर्दशी-पूर्णिमातिथिषु ( तदनुसारं १, २, ३ जनवरी १९६६ दिनाङ्केषु ) संस्कृतजगतो हृदयसम्राजां, महामान्यानां, दिल्ली-उपराज्यपालानां पण्डित श्री-मदादित्यनाथ झा आई० सी० एस० महोदयानां सभा-पतित्वे विविधैः सम्मेलनैः सह महता समारोहेण विशेषाधिवेशनं सम्पन्नम् । प्रस्तूयमाने लेखे तस्यैव संक्षिप्तं विवरणं पाठकानां पुरतः समुपस्थाप्यते ।

## प्रथमदिवसीयम्

### माङ्गलिकं कृत्यजातम्

प्रथमदिवसे तावत् प्रातरेव नववादन-वेलायां सम्मे-लनस्य निर्विघ्नपरिसमाप्तये वाराणसेय-संस्कृत-विश्व-विद्यालयस्य वेदविभागाध्यक्षाणां श्री पण्डित गोपालचन्द्र मिश्र महोदयानां संयोजकत्वे माङ्गलिकं कृत्यजातं सम्पन्नम् । अस्मिन्नवसरे सरस्वतीपूजनं, संस्कृतविश्वविद्यालयस्य शुद्धा-द्वैतजपयज्ञसमितेश्च वेदपाठिभिर्बालकैः चतुर्णामपि वेदानां सस्वरमन्त्रपाठः, माङ्गलिकपद्यपाठो हवनादिकञ्चेति विविधानि कृत्यानि विधिपूर्वकं सुसम्पादितानि ।

### प्रदर्शनीनामुद्घाटनम्

मध्याह्ने साप्ताहिक - 'गाण्डीवम्' - सम्पादकानां प्रदर्शन्या उद्घाटनमक्रियत । प्रदर्शन्यां त्रिविधा सामग्री प्रदर्शिता आसीत् । प्रथमतः संस्कृतस्य महाकाव्य-काव्य-मुक्तक-नाटक-प्रहसन-कथा-उपन्यास-जीवनी-यात्रा-आलो-चना-स्तुति-गीत-सुभाषित-प्रभृतिविषय-सम्बद्धानां नूतन-रचनानां सङ्ग्रहः, द्वितीयतः संस्कृतशिक्षणोपयोगिनां वर्णमाला-रूपावली-अनुवाद निबन्ध-व्याकरण-गद्यपद्यसंग्रह-वाक्यसंग्रहप्रभृतिविषयेषु विविधाः पद्धतीरनुसृत्य लिखितानां पुस्तकानां संग्रहः, तृतीयतश्च सम्प्रति प्रकाश्य-मानानां संस्कृतस्य विविधपत्र-पत्रिकाणां संग्रहः । प्रदर्शन्या अन्यतम उद्घाटकः श्री डा० सत्यव्रतसिंह महोदयः ( लखनऊ - विश्वविद्यालये संस्कृत - विभागाध्यक्षः ) अस्वास्थ्यवशान् उद्घाटनसमारोहे न सम्मिलितः ।

पत्र-पत्रिकादिषु संस्कृतविद्यालयेभ्यः प्रकाश्यमाना वार्षिक-पत्रिका अपि प्रदर्शिता अभूवन् ।

### विशेषाधिवेशनम्

प्रथमदिने एव सायं संस्कृतविश्वविद्यालयस्य सुसज्जिते मुख्यभवने महामान्य - पण्डित - श्रीमदादित्यनाथ झा महोदयानामध्यक्षतायां विशेषाधिवेशन-समारोहः सम्पन्नः । कार्यालयस्य संस्कृत-संगीतशिक्षकैः श्री पण्डित राधाकान्त शास्त्रिभिः 'अमरवाणि जय जननि' इति प्रार्थना-गीतेन अधिवेशनस्य शुभारम्भे विहिते प्राच्यविद्याविशारदैः डा० राय गोविन्दचन्द महोदयैः समागतानामतिथीनां कृते विनयवैदुष्यपूर्णं स्वागतभाषणमकारि । अनन्तरं काशी-विद्यापीठस्य उपकुलपतिभिः श्री राजाराम शास्त्रिमहोदयै-रुद्घाटनभाषणे विहिते कार्यालयस्य प्रधानमन्त्रिभिः श्री केशवचन्द्रमिश्र महोदयैः कार्यालयस्य कार्यविवरणं

शास्त्रि द्रविड महोदयैस्तथा काशी हिन्दू विश्वविद्यालयस्य रेक्टर पदभाग्भिः आचार्य श्री हजारीप्रसाद द्विवेदमहोदयैः शुभाशंसनेषु वितीर्णेषु श्रीमतां झा महोदयानां एतदधिवेशनस्य कृते विशेष-रूपेण सरल-सरसवचोभिरुपनिबद्धं मनोहारि अध्यक्षीयभाषणं सम्पन्नम्। तदनु आचार्य श्री सीताराम चतुर्वेद महोदयैः धन्यवादप्रदानानन्तरं विशेषाधिवेशन-समारोहः समाप्तिमगात्।

### बालोपयोगि-रचना-सम्मेलनम्

विशेषाधिवेशनस्य कार्यकलापेषु समाप्तेषु किञ्चित् कालान्तरं तस्मिन्नेव रङ्गमञ्चे बालोपयोगि-रचना-सम्मेलन नाम द्वितीयोऽपि कार्यक्रमः 'पारिजातहरणम्' महाकाव्यप्रणेतॄणां, मूलतो देवरिया-निवासिनां सम्प्रति च वाराणसीमलङ्कुर्वतां श्रीमदुमापति द्विवेद 'कविपति' महोदयानामध्यक्षतायां लखनऊ-विश्वविद्यालयस्य प्राच्य-विद्याविभागे प्राध्यापकानां न्यायाचार्य श्री पण्डित आनन्द-झा महोदयानां कवितापाठेन सह समारब्धः। अस्मिन् सम्मेलने बाह्यैः वाराणसी - निवासिभिश्च कतिपयैः कविवर्यैः स्वकीया बालोपयोगिन्यः सरलमधुराः रचनाः श्राविताः। संस्कृतसाहित्ये बालोपयोगिरचनानां निर्माणस्य प्रोत्साहनप्रदानस्य च कृते आयोजितमिदं प्रथमं सम्मेलन-मासीत्।

## द्वितीयदिवसीयम्

### विचार-गोष्ठी

द्वितीयदिने प्रातः 'संस्कृतस्य प्रारम्भिक-शिक्षण-पद्धतेः सरलवैज्ञानिकं च स्वरूपं कीदृशं स्यादिति' विषयमवलम्ब्य विचारगोष्ठी प्रावर्तत। आरम्भे गोरखपुर-विश्वविद्यालयस्य संस्कृतविभागे अध्यापकैः डा० श्री रामअवध पाण्डेय महोदयैः प्रवर्तमान-शिक्षणपद्धति-समीक्षापूर्वकं विषयोपन्यासः विस्तरेण कृतः। अनन्तरं च संस्कृतविश्वविद्यालयस्य पालि-विभागाध्यक्षैः श्री करुणापति त्रिपाठि महोदयैश्च स्वकीया विचारा उपस्थापिताः। अन्ते च शिक्षाजगति सुविख्यात-नामधेयानाम् आचार्य श्री पण्डित सीताराम चतुर्वेद महोदयानामध्यक्षीयभाषणे जाते गोष्ठी समाप्तिं गता।

### संस्कृत-प्रचार-सम्मेलनम्

मध्याह्ने आन्ध्रप्रदेशस्य उच्च-संस्कृत-शिक्षाधिकारिणां श्री कप्पगन्तुल लक्ष्मणशास्त्रि महोदयानां सभापतित्वे संस्कृत-प्रचार-सम्मेलनं प्रारब्धम्। तत्रादौ संस्कृत-विश्वविद्यालयस्य साहित्यविभागाध्यक्षैः श्री पट्टाभिराम-शास्त्रिमहोदयैः स्वागतवचनेषु व्याहृतेषु उत्कल-साहित्य-एकेडमी-संस्थानस्य भूतपूर्वैः सम्पादकैः प्रो० श्री गौरी-कुमार ब्रह्मा महोदयैः सुदीर्घेणापि सकलविद्वज्जनमनोहारिणा सरस-मधुरेण भाषणेन सम्मेलनस्य उद्घाटनमकारि। सम्मेलनमिदं सभापतिमहोदयानामध्यक्षीय-भाषणेन तथा सभासंयोजकानां श्री पण्डित वासुदेव द्विवेद-शास्त्रिमहोदयानां धन्यवादप्रदानेन च समाप्तिमभजत।

### बाल-संस्कृत-सम्मेलनम्

अस्य समारोहस्य विविधेषु कार्यकलापेषु बालकानामिदं सम्मेलनं सर्वथा अपूर्वं, नितरामाकर्षकं, बालक-बालिकानाञ्च परममुत्साहवर्धकं समजायत। अत्र द्विवर्षीय-बालकैरारभ्य पञ्चदशवर्षीयैः बालकैः वेदपाठः श्लोकपाठः, अष्टाध्यायीसूत्रपाठः, सन्धिज्ञानम्, हँसते-खेलते संस्कृत, स्तुति-प्रार्थना, अभिनयः, भाषणं, वार्तालापः गीतञ्चेति विविधा मनोरमाः कार्यक्रमाः समुपस्थापिताः। अस्मिन् सम्मेलने संस्कृतपाठिनः क्रिश्चियन-बालका अपि सम्मिलिता अभूवन्। शिशुबालकैरुपस्थापितानि विविध-दृश्यानि सम्मेलनस्यास्य सभासदां कृते चिरस्मरणीयानि जातानि।

अस्य सम्मेलनस्याध्यक्षाः पण्डितराज श्री पण्डित कालीप्रसाद मिश्र महोदया अभूवन्। स्वागतभाषणकर्ता च [illegible]

विद्यालयसञ्चालकैः माननीय श्री मौनी हरिसेवकदास महोदयैः बालक-बालिकाभ्यो मोदकवितरणमक्रियत ।

## तृतीय-दिवसीयम्

### संस्कृत-प्रचारसम्मेलनस्य-समापनम्

तृतीयदिवसे प्रातर्नववादने पुनः संस्कृतप्रचारसम्मेलनस्य द्वितीयमुपवेशनं प्रारब्धम् । अस्मिन्नुपवेशने विविधा महत्त्वपूर्णाः प्रस्तावाः समुपस्थापिताः, सर्वसम्मतया पारिताश्च । प्रस्तावकाः प्रस्तावानधिकृत्य वक्तारश्च श्री बदरीनाथ शुक्लः संस्कृतविश्वविद्यालये न्यायवैशेषिकविभागाध्यक्षः, श्री जगन्नाथ उपाध्यायः संस्कृतविश्वविद्यालये पालिविभागाध्यक्षः, श्रीपट्टाभिराम शास्त्री, संस्कृतविश्वविद्यालये साहित्यविभागाध्यक्षः, श्री यशवन्त सिंह चौहान हरदोई-मण्डले सकाहा-ग्रामस्थ श्री शिवसंकटहरण महाविद्यालयस्य प्रधानाचार्यः, आचार्य श्री रामाश्रय त्रिपाठी, शाहजहाँपुरस्थ-संस्कृत-महाविद्यालयस्य प्रधानाचार्यः, श्री वासुदेव मिश्रो वैद्यः, जौनपुरस्थस्य अमर-भारती-महाविद्यालयस्य सञ्चालकः तथा वासुदेव द्विवेदी शास्त्री चेति अनेके विद्वांस आसन् । अन्ते सभापतिमहोदयैः स्वकीयभाषणेन सम्मेलनमिदं सधन्यवादं समाप्तमुद्घोषितम् ।

### महिला-संस्कृत-सम्मेलनम्

अस्य समारोहस्य इदं खलु द्वितीयं महत्त्वपूर्णं सम्मेलनमासीत् । अस्मिन् वाराणस्यां भूयस्यो विदुष्यः संस्कृतानुरागिण्यश्च विदुष्यो महिलाः, बालिकाः, ब्रह्मचारिण्यो विद्यार्थिन्यश्च उपस्थिता आसन् । अस्य सम्मेलनस्य अध्यक्षपदे हिन्दू-विश्वविद्यालयीय-महिला-महाविद्यालयस्य संस्कृतविभागाध्यक्षाः, सांख्य-योग-पुराणेतिहासाचार्या श्रीमती डा० पद्मा मिश्र महोदया विराजमाना आसीत् । अत्रारम्भे श्रीमती रेखा त्रिपाठी 'संस्कृत-भारती' संयोजिका प्रास्ताविकं भाषणं कृतवती । तदनु कु० प्रेमलता शर्मणा स्वागतभाषणे कृते आर्यमहिला महाविद्यालयस्य च सञ्चालिकाः श्रीमती विद्यादेवी महोदया स्वभाषणेन सम्मेलनस्य उद्घाटनं कृतवती । अनन्तरं वाराणसीस्थाभिः ब्रह्मचारिणी मिश्रादि कतिपयबालिकाभिः श्लोकपाठ-सङ्गीत-भाषणप्रभृतिषु कार्यक्रमेषु उपस्थापितेषु अध्यक्षमहोदयायाः सरलं सुललितं सारगर्भितं च भाषणमभूत् । अनेन भाषणेन उपस्थिताः सर्वेऽपि विद्वांसो नितरां प्रसन्नाः प्रभाविताश्च आसन् । अन्ते श्री वासुदेव द्विवेद महोदयैः धन्यवादभाषणं विहिते सम्मेलनमिदं समाप्तिमगात् ।

### संस्कृत-सङ्गीत-सम्मेलनम्

अस्मिन्नेव दिने सायं षड्वादनात् संस्कृत-सङ्गीत-सम्मेलनस्य कार्यक्रमः हिन्दू-विश्वविद्यालयीय-सङ्गीत-कलामहाविद्यालयस्य प्राध्यापिकायाः कु० प्रेमलता-शर्मणः साहित्याचार्यायाः सभापतित्वे समारब्धः । सम्मेलनस्यास्य उद्घाटनं साहित्य-सङ्गीतोभयविद्या-विशारदैः अभिनवभरतैः आचार्य श्री सीताराम चतुर्वेद महोदयैः विहितम् । अस्मिन् सम्मेलने विविधैः कलाकारैः प्राचीनान्यभिनवानि च सुबहूनि सरस-मधुराणि संस्कृत-गीतानि श्रावितानि । अत्र सर्वेऽपि गायका वादकाश्च संस्कृतज्ञा आसन् । कजली-कौवाली प्रभृतिलयेषु निबद्धानि गीतानि समुपस्थापितानि यानि सभासदां कृते अतितरामाह्लादकारीणि अभूवन् । अन्ते श्री वासुदेव द्विवेद महोदयानां धन्यवादभाषणेन सम्मेलनस्य समापनं जातम् ।

एवं दिवसत्रयव्यापी समारोहोऽयं हर्षोल्लासपुरस्सरं महत्या च सफलतया सह दिशि दिशि संस्कृत-प्रचार-सन्देशं प्रसारयन् समाप्तिमगात् ।

# कुब्जानुग्रह-विलसितम्

— श्री हरिसूरिः —

[ भागवत दशमस्कन्धपूर्वार्धस्य सरसं सालङ्कृतं काव्यमयं व्याख्यानं श्रीहरिसूरि कृतं 'भक्ति-रसायन' नाम्ना भागवतकथाकोविदेषु प्रसिद्धचरम्। सर्वथा दुर्लभमिदं काव्यमचिरादेव प्रकाशपदवीमुपगच्छतीति प्रमोदवार्ता। तस्यैव द्विचत्वारिंशत्तमाध्यायीयः कुब्जानुग्रहप्रसङ्गो रसिकानां पाठकानां विनोदायाऽत्र प्रकाश्यते !

—सम्पादकः ]

यो नानागुणसंभवावरणभृद्राजद्रजोन्तर्गुणां
वाक्पुष्पस्रजमाश्रितो मधुरसां पूर्मध्यवृत्तिः पुमान्।
तस्यावश्यमविद्यया सह रतिर्दत्ताङ्गरागश्रिया
स्यादेतद् ध्वनितं तदध्वनि तथा कुब्जेशयोर्वर्तनात् ॥ १ ॥

व्रजन्नृपपथे प्रजाभृतिजनैर्निजैराश्रितो
द्विषत्पुरगतोऽप्यरि - प्रकृतिदत्तचित्तोऽप्यसौ।
न चालमतिलङ्घने कुटिलचेटिकाया अपी-
त्यभूदिह ततो न किं स्फुटमलङ्घ्यदुर्गं स्त्रियः ॥ २ ॥

वामनोऽहमियं कुब्जा योगोऽयमधुनाऽऽवयोः।
सर्वलोकाद्भुतकरः स्यादिति प्राहसद्धरिः ॥ ३ ॥

श्लाघ्यमप्सरसां रूपं गात्रं तु कुटिलाकृति।
अहो विधातृचातुर्यमीदृगित्यहसद्धरिः ॥ ४ ॥

यन्नो विहाय रमसेऽङ्गनया यथाऽसौ
सौन्दर्यभू - रखिललोक · विलक्षणैव।
प्रायो भवेदिति तु गोपसुतानुयोगे
हास्यं तदुत्तरमिति प्रभुणा व्यबोधि ॥ ५ ॥

सदा महानन्दरसप्रदस्य य-
न्ममापि पाटीररसार्थनोदिता।
अहो विचित्रा समयानुसारिते-
त्यधोक्षजो विस्मयतो जहास किम् ॥ ६ ॥

या स्त्री सहासपरिहासमपि प्रकामं
श्रुत्वा वचो न कुपिता हृदये यदि स्यात्।
वश्या भवत्यचिरमध्वनि सेति कृष्ण-

नादत्तमध्ययवनि सिद्ध्यति किञ्चनेति
निश्चित्य चान्दनरसं भृशमाजिघृक्षुः ।
हासच्छलाद् रसमसावनुरागपूर्वं
प्रादात्तदा किमु मुदा निजमुख्यमस्यै ॥ ८ ॥

दृष्टाः स्त्रियोऽनुभूताश्चा-ऽप्यङ्गभोगमनोरमाः ।
अनङ्गभोगयोग्यासावेकैवैक्षीति विस्मितः ॥ ९ ॥

अनर्घ्य-ललनारत्न - राशिरञ्जित-चेतसः ।
नाहमर्हेति यान्तीं स्वप्रीतिं हासाददर्शयत् ॥ १० ॥

अङ्गरागकराऽप्येषाऽनङ्गरागकरा भवेत् ।
यथाऽचिरं तथा कार्यमित्युज्ज्वलमधात् स्मितम् ॥ ११ ॥

का त्वं सुन्दरि सुन्दरोऽयमपि वा कस्याङ्गरागः कृते
प्रश्नोक्ताविति यत्तदाऽखिलविदाऽप्यज्ञानिताऽङ्गीकृता ।
तेन स्पष्टमभूदिदं यदबला विद्वांसमाकर्षय-
त्यज्ञानं समुदेति तस्य य इह स्यादङ्गरागेक्षणः ॥ १२ ॥

न श्रद्धा वर्धते लोके सत्फलश्रवणं विना ।
श्रेयस्ते न चिराद्भावीत्यूचे युक्तमधोक्षजः ॥ १३ ॥

गन्धार्पणफलं विप्रैः सौमङ्गल्यमुदीरितम् ।
युक्तमूचे तव श्रेयः स्यादितीशो हि तन्मुखः ॥ १४ ॥

यस्या दास्यमहर्निशं विधि-शिव स्वर्गाधिपाद्याः सुराः
कुर्वन्त्यद्भुतवैभवाप्तिमनसो दैत्याः सदैत्यार्जवम् ।
साऽपि श्रीरलमार्जवं विदधती यस्याङ्घ्रिदासी सती
तस्यास्मिन् जगदीश ते त्रिभुवने कुब्जा न दासी कथम् ॥ १५ ॥

गात्रं विधातृकृतमेतदिति त्रिवक्रं
नामापि मे तदनुसारि भुवि प्रसिद्धम् ।
चित्तं त्ववक्रमिह चक्रधरेत्यवेहि
प्रायोऽन्तरङ्गसरलाः सुदृशो भवन्ति ॥ १६ ॥

कौटिल्यमन्तरगतं न बहिः पुराऽऽसी-
दस्मिंस्तु वर्ष्मणि बहिष्कृतमेव नान्तः ।
इत्थं द्विजन्मकलिताऽऽचरणावगत्यै
नामैव वक्रमिति साऽकथयत् किमीशम् ॥ १७ ॥

# कुब्जानुग्रह-विलसितम्

कृष्णातिवक्रगतयो भुवि गोपबाला
बाला अपीह समनुज्झित-वक्रभावाः।
संलालिताः शिरसि येन विहाय तं त्वां
वक्राऽहमन्यमिह कं जनमर्चयामि ॥ १९ ॥

युवामेवाङ्गरागानुलेपनार्हौ मतौ मम।
परस्तु दासी भावेनैवेत्यन्यतमतः स्फुटम् ॥ २० ॥

व्यक्तसत्त्वगुणश्रीको यदेशः स्याद्भवाध्वनि।
वीक्षणार्हः प्रसन्नास्यः शुभदृक् साभिवद् तदा ॥ २१ ॥

सत्यङ्गरागाकलने परात्मा
करोति सङ्कल्पमिति श्रुतं तत्।
युक्तं ततस्तां सरलां विधातुं
सकाङ्गरागस्त्वकमे मुकुन्दः ॥ २२ ॥

नेशस्यास्ति निसर्गतः किमपि वा रागादिकं जीववत्
किन्तु स्वीयजनावनाय भवति स्वीयेच्छयेच्छाश्रितः।
एतत्स्पष्टमभूद्यदत्र पथि तद्भव्यप्रदस्तत्करात्
स्वीकुर्वन् रुचिराङ्गरागमकरोत् कर्तुं तथा तां मनः ॥ २३ ॥

तदङ्गरागभागपि प्रकाममीश्वरोऽप्यहं
न चेत्करोमि सुन्दरं त्वदङ्गमङ्गनोचितम्।
तदत्र शर्म लब्धये न कोऽपि रागमर्पये-
न्ममापि किं महत्त्वमित्यरं तथेहते स सः ॥ २४ ॥

सकलार्थदोऽपि हरिरेष यदैषी त्कुटिलाङ्गमेव सरलं प्रविधातुम्।
स्फुटमेव तेन समभूदिह भक्तलषितेष्टपूर्तिकरणं व्रतमैशम् ॥ २५ ॥

भवतिप्रधानपद शुद्धिरनर्घ्या
न विनाङ्गशुद्धिमिति बुद्धिमदीड्यः।
उचितं तदङ्गमृजुकर्तुमिहैषीत्
सकल - प्रधानपद - कामविशुद्ध्यै ॥ २६ ॥

पादसंपीडनं शूद्रधर्म इत्याकलय्य सः।
तदा तत्प्रपदे पद्भ्यां माधवः किमपीडयत् ॥ २७ ॥

ज्ञात्वा कामस्थितिं तस्याः प्रपदे तद्दिने प्रभुः।
तदुद्बोधाय विज्ञातानङ्गस्थिति - रमर्दयत् ॥ २८ ॥

वीरोऽस्मि वीरवन्द्योऽस्मि शूरवंशोद्भवोऽपि तत्।

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते । धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम् । वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः ।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते । नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते । माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत ।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति । वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते । अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः ।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या । प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम् । अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते ।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् । तेन उत्तरलाभे मुधा विलम्बो न भवेत् ।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते । एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति । सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः ।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठ विज्ञापनं न स्वीक्रियेत । | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी ।**

सम्पादकः प्रकाशकः मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्



वर्षम् ४५



अङ्कः २



सम्पादकः

गो० न० वैजापुरकरः



फरवरी

१९६९



वार्षिक-मूल्यम्

५) रूप्यकाणि



प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्




## सरससमाजोऽसौ वसन्त-वसुधापतेः !

कोमलललितनवपल्लवचयोऽयं हि न,
महितमहाहंपटसंस्तरो विराजते,
कुसुमसमूहवहा नो वा तरुराजिरियम्,
समितिरथैषा साधुसामाजिकसंहतेः ।
मञ्जुनाथ ! नेयं कलकण्ठकुलकाकलिका
विरुदरवोऽयं मञ्जुमागधसुसन्ततेः,
रोचते नवीनवनी नेयमतिमञ्जुतमा
सरससमाजोऽसौ वसन्तवसुधापतेः ॥ १ ॥
शस्त्रग्राहियवनीरिवैताः संवहन्ते लताः,
पार्ष्णिग्राहभूरुहा रमन्ते कुसुमावहाः,
कोकिला विपिनरोधकोलाहलमारभन्ते,
वीराः विजृम्भन्ते समीरा मलयावहाः ।
मञ्जुनाथ ! दीव्यति दिगन्ते पश्य पञ्चशरी
विहिमृगाणां रवाः श्रूयन्ते दयावहाः,
पथिक ! दुरन्ते कुत्र गच्छसि वसन्ते ?
पुरो दृश्यते न किं ते काम-मृगया भयावहा ? ॥ २ ॥
किंशुक - कुसुममिति किं वा भ्रमभीरयसे ?
क्षमसे पुरस्तात् किं न पावकं परीक्षितुम् ?
मञ्जुनाथ ! किं जल्पसि कल्पनापिनद्धगिरम् ?
कल्पसे मधुप इति धूममन्युपेक्षितुम् ।
'स्पष्टं पश्य पुरतो बताऽऽरोहति वह्निशिखा,
पुष्पितपलाशतरुं परितोऽप्यवेक्षितुम्,
कति किल दग्धा हन्त ! कति वाऽर्धदग्धाः
कति वाऽधुनाऽप्यदग्धा इति विधुरानवेक्षितुम् ॥ ३ ॥

—कविवराः श्री मञ्जुनाथशास्त्रिणः

## श्री गायत्रीमन्दिरस्य प्रतिष्ठापनजयन्त्युत्सवः

वाराणसी। भारतधर्ममहामण्डलस्य प्रधानभवनान्तर्गते मन्दिरे पराम्बायाः श्रीगायत्री-देव्याः अन्येषां च देवानां महामण्डल प्रतिष्ठापकस्य महर्षेः श्री ज्ञानानन्दस्वामिनश्च श्रीविग्रहाणां प्रतिष्ठापन-जयन्त्युत्सवः प्रतिवर्षानुसारं फाल्गुन शुक्ल २ तः दिनत्रयं महता समारोहेण सम्पन्नोऽभवत्। देवानां महापूजनोपासन-वसन्तपूजन-कथाप्रवचन-कीर्तनादिविविधैरायोजनैः सम्पन्नोऽयं महोत्सवः परं समाकर्षकोऽभवत्।

### ग्राहकेभ्यो निवेदनम्

'सूर्योदय'स्य ४४ तमवर्षीयो द्वितीयोऽयमङ्कः पाठकानां पुरतः समायाति। अद्यावधि नैकैः प्राच्यग्राहकैः वार्षिकं मूल्यं न प्रेषितम्। तैरस्याङ्कस्य प्राप्तेः समकालमेव मनिआर्डरद्वारा ५) पञ्चमुद्रात्मकं तत् शीघ्रं प्रेषणीयम्। एकैको नव्यो ग्राहकोऽपि प्राच्यैर्ग्राहकैः विधेय इति तान् साग्रहं प्रार्थयामः।

—व्यवस्थापकः

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, माघः २०२५ : फरवरी, १९६९ ई० [ २ अङ्कः


## मति-प्रबोधनम्

यदेकमिह शाश्वतं रहितनामरूपात्मकं
प्रपञ्चशमनं वरं सुखघनं श्रुतौ तन्यते ।
यतो नहि भिदा च यत् सततसौख्यदं पावनं
तदाश्रय मते सदा ह्यविकृतं स्वरूपं शिवम् ॥ १ ॥
शरीरमतिकश्मलं न रुचिरं न वा सौख्यदं,
ह्यतीव दुरितं च यद्रुधिररेतसो मिश्रणम् ।
पवित्रमतिशोभनं स्मरसि जन्म किं तस्य तन्
मते जहिहि माऽस्तु ते श्रय परं स्वरूपं शिवम् ॥ २ ॥
स्वभक्तजनमुक्तये प्रथितनिर्गुणोऽपि स्वयं
सदाचरति हे मते स च न कर्मभिर्लिप्यते ।
न तस्य कृतकेन वा किमपि लभ्भनीयं तथा
निजस्थितिमविस्मरन् खलु विराजते शङ्करः ॥ ३ ॥
अतो न कुरु कैतवं जहिहि दुष्टताऽहङ्कृती
विना कपटनाटकं शरणमेहि मृत्युञ्जयम् ।
न नामयितुमन्तरेऽपि च यतस्व गर्वोद्धता
न नामयितुमीश्वरं विधिरपीह शक्तो हरिः ॥ ४ ॥
आदौ त्वं दोषदृष्ट्या त्यज सुखमिह यत्प्राप्यते जन्मनैव
पश्चान्मन्यस्व सौख्यं निरवधिरचलं जन्मना नो शिवं यत् ।
भिन्नं यस्मान्न किञ्चित्तदमलविभवं प्राप्य भेदं जहीहि
नित्यानन्दे शिवेऽस्मिन्निह हि किल मते राजसे निर्विकल्पा ॥ ५ ॥

— श्रीसमर्थानुगृहीत महात्मा श्रीधरस्वामिमहाराजः —

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—श्री विन्ध्येश्वरीप्रसाद शास्त्री—

।। अथ चतुर्दशः सर्ग ।।

कृष्णधाम मथुरां समागतो भारतीय-शुभ-संसदोऽखिलाः ।
धार्मिकीः स विरचय्य संहताः सङ्घशक्तिमधिगन्तुमैहत ।। १ ।।

२. सिद्धिरस्ति तपसा कलौ युगे
ज्ञानतः सफलता तु तत्परे ।
द्वापरेऽभिमत - यागयोगतः
सङ्घशक्तिमिह साऽऽश्रिता कलौ ।।

३. मण्डली तु निगमागमाभिधा
स्थापिता यतिवरेण या पुरा ।
तद्विधेय - परिचालकानसौ
व्याजहार वचनं बुधानिति ।।

४. भारतेऽत्र भगवत्कृपा सदा
तिष्ठतीति न च कोऽपि संशयः ।
तद्वरेण्य - पुरुषार्थसाधनात्
स्याद् ध्रुवं हि सफलो मनोरथः ।।

५. हन्त सम्प्रति तु भारतावनौ
व्याप्नुतेऽद्भुत-विदेशि शासनम् ।
किन्तु शास्त्यखिलभारतं त्विदं
भूभुजां प्रवर एक आङ्ग्लराट् ।।

६. आङ्ग्लभूपतिवरस्य तस्य तु
खृस्तधर्म - समुपाश्रितत्वतः ।
आर्य-धर्मजनता - समुन्नति-
र्धार्मिकी न हि कदापि सेत्स्यति ।।

७. तद्धिताहितविचारवान् निजे
भारतेऽत्र परवानपि ध्रुवम् ।
ज्ञान-संस्कृति - समाज - धर्मयुक्
स्वोन्नतिं स्वयमिहाचरेद् बुधः ।।

८. गैहिकव्रतरताश्च धार्मिका
भूसुरा विरतिभृत्-तपस्विनः ।
साधवो न्यसन-धर्म-विश्रुता
भारतेऽद्य विलसन्ति सर्वतः ।।

९. वर्णकाश्रम - सुबीजमाप्यते
शुद्धशोणित - मिहाऽऽर्यजातिषु ।
स्वकल्पकादपि परिश्रमान्निजात्
सिद्धिमाप्स्यति समीहितं ध्रुवम् ।।

दुष्करं किमपि यत्नमन्तरा तीर्थनामसु पवित्र-धामसु ।
धर्मभावनिरताः स्त्रियो नराः सम्मिलन्ति प्रतिपर्व कोटिशः ।। १० ।।

<u>सम्पादकीयम्</u>

# मध्यावधिक-निर्वाचनेन किं समासाद्यते

फरवरीमासेऽस्माकं देशे सर्वत्र मध्यावधिक-निर्वाचनस्यैव महान् कोलाहल आसीत्। अद्यापि (लेखलेखनसमये) तत्प्रतिध्वानैः सर्वोऽपि परिसरः परिप्लुतो विलोक्यते। निर्वाचनेनानेन प्रायो भारतदेशस्य अर्धो भागः समाक्रान्त आसीत्। उत्तरप्रदेश-बिहार-पश्चिमवङ्ग-नागभूमि-पञ्चनदप्रदेशा नूनमर्धं भारतं व्याप्नुवन्त्येव। अतोऽस्य प्रभावो भारतव्यापी स्याच्चेत् न तत्र चित्रम्। निर्वाचनं हि साम्प्रतिकस्य शासनतन्त्रस्यदैवतम्, तत्रापि तथाकथित-लोकतन्त्रशासनस्य।

इदं हि मध्यावधिकनिर्वाचनं नामत एव स्वस्य न्यूनत्वमभिव्यनक्ति। प्रतिपञ्चवार्षिकनिर्वाचनं 'महानिर्वाचना'परनामकं तु लोकतन्त्रस्य प्रधानतमं घटकम्। इदं पुनः तेन निर्वाचनेन घटितस्य लोकतन्त्रीय-शासनयन्त्रस्य असमर्थताप्रयुक्तमेव। तच्च असामर्थ्यं केन कथं वा समुत्पादितम्, तत्किल स्फुटं जानन्ति भारतीयाः। मतदातॄणां धन-भय-विवशताऽज्ञानादिभिर्नैकैः साधनैः स्वमते समानयनम्, मतगणनेऽव्यवस्था, मतपेटिका परिवर्तनादिकञ्च निर्वाचनीयाव्यवस्थारूपेण प्रथितचरमेवासीत्। विगते महानिर्वाचने निर्वाचनोत्तरं व्यापकरूपेण सर्वत्र प्रसृतो विधायकानां दलपरिवर्तनं नाम सांक्रामको व्याधिः पुनर्लोकतन्त्रस्य कृते श्वित्रायितोऽभवत्। तैनेव उपर्युक्तेषु प्रदेशेषु मध्यावधिकनिर्वाचनस्य प्रायश्चित्तमिदं समापादितम्।

अस्मिन् मध्यावधिकनिर्वाचने अस्माकं राष्ट्रस्य कियान् प्रभूतो धनराशिः अपव्ययीभूतः! किमेतानि दलानि व्यवहारं कुर्युः, तस्य प्रायश्चित्तं पुना राष्ट्रेण करणीयमिति न्यायसङ्गतं वक्तुं शक्येत? कामं स्वीयमेव शासनतन्त्रं विधानमण्डलं च यथाकथञ्चन स्वानुकूलं विधाय शासनमेतादृशं राष्ट्रियमपव्ययं कर्तुं पारयेन्नाम। नैतिकदृष्टया राष्ट्रियहितदृष्टया तत्कथमपि समर्थनीयं न भवेत्। विशेषतो यदा वयमेतत् पश्यामो यद् दलान्तरीय-प्रशासनानां दौर्बल्यस्य अनुचितलाभेन केन्द्रीयशासनमेष व्ययभारो राष्ट्रस्य शिरसि समापादयति। केन्द्रीयशासनस्य महत्तरं दायित्वं भवति। लघूनां प्रमादा लघवो भवन्ति। महतां प्रमादाः पुनर्हिमालयकल्पा महत्तरा जायन्ते। तेन राष्ट्रस्य महती हानिः सम्पद्यते। यदि नाम एतदेव कृत्यं केनापि परकीयेन प्रशासनेन कृतं स्यात्तदा वयमेव (ये किल कृत्यमिदं स्वयं कुर्वन्ति) तेषां तीव्रविरोधाय प्रवृत्ताः स्युः। कार्यमिदञ्च राष्ट्रघातकं वक्तुं प्रस्तुता भवेयुः। परं स्वयमेवैतत् यदा कुर्मः, स्वयञ्च प्रशासकास्तदा कस्य भयं भवेत्? 'द्वितीयाद्वै भयं भवती'ति सिद्धान्तात्।

अन्ततः एतादृशं प्रभूततरं राष्ट्रीयमपव्ययं कृत्वाऽपि किमासादितं राष्ट्रेण? किं स्थिरप्रशासन-प्रतिष्ठाक्षमं निर्वाचनफलं कुत्रचन दृष्टिपथमुपेयते? उत्तरप्रदेशे, (४९) एकोनपञ्चाशद्विरुद्धम् एकपञ्चाशदात्मकमपि कथितबहुमतम् एकेनापि दलेन नासादितम्, यच्च मूलतः कथमपि दृढस्थिर-प्रशासनाधायकं न भवति। कांग्रेसशासनस्य दृढदुर्गेऽस्मिन् प्रदेशे एव तेनैव भारतशासकीयदलेन प्रवृद्धतरेण एतादृशमाभिमानिकं बहुमतं नासादितम्, तदर्थं

तमानामप्राप्तवयसां दलानाम् ? सत्येवं सङ्घट्टितेऽपि केन्द्रीयप्रशासनदलीय-मन्त्रिमण्डले तस्य स्थिरता तद्द्वारा शुद्धस्वस्थशासनाशा कियती स्यादिति विज्ञा एव विभावयन्तु ।

पञ्चनद-प्रदेशः पुनः केन्द्रप्रशासन-दलान्तरीयमेव मन्त्रिमण्डलं गठितवान् । तदपि दलद्वयस्य सहयोगेन । बहूनां विभिन्नदृष्टीनां दलानां 'सविदेन' ( संयुक्त-विधायक-दलेन ) शासनसञ्चालनाक्षमता तु दृष्टचरा । परं दलद्वयेऽस्य तत्रापि प्रायः समान-विचारधारापोषकस्य तस्य संविदस्य शासनसञ्चालने क्षमता चेन्न तत्र चित्रं भवेत्। तत्रापि तस्य नेतृत्वमपि तस्मिन्नेव समागतं येन इतः पूर्वं कियदवधि शासनसूत्रं सञ्चालितम्, तत्र जायमानाः अन्तरायाः समनुभूताः । अतीततः शिक्षामासाद्य पूर्वदोषांश्च दूरीकृत्य प्रशासनं प्रचाल्येत चेदस्य दलद्वयीय-संयुक्तप्रशासनस्य स्थैर्यं दार्ढ्यं कियतांशेन आशंसनीयं स्यात् । तथापि भूतपूर्वशासकानामस्मिता असहिष्णुता च प्रखरतमा भूत्वा किमपि ताण्डवं कर्तुं प्रवर्तेत चेत्तदा तु इदमपि प्रशासनं देवानां शरणम् ।

बिहारप्रदेशे पूर्वशासकीय-दलस्य बहुमतं तु नास्त्येव, प्रत्युत कस्यापि दलस्य बहुमतं नास्ति । राष्ट्रभाषायां 'चोचों का मुरब्बा' इति शब्देन या स्थितिः प्रतीयते, तादृशी काचन स्थितिर्दृश्यते । पूर्वप्रशासकीयदलं तथापि तत्र संयुक्तं स्वीयदलीयं मन्त्रिमण्डलं सङ्घट्टयितुं प्रयतते । अपरदलानि तद्व्यतिरिक्तं संयुक्तदलीयं शासनं कामयन्ते । अस्य कः परिणामः ? इति तु निश्चितं वक्तुं न शक्यते । पूर्वदलीये प्रशासने सङ्घट्टितेऽपि तस्य स्थिरता सन्देहास्पदैव । केचन अनुत्तरदायिन एवंस्थितौ तत्र राष्ट्रपतिशासनमेव स्थितिस्थापकतां नेयमामनन्ति । सत्येवं गतः समुद्रे मध्यावधिकनिर्वाचनव्ययः ! पुनरपि कियता कालेन राजनैतिकदलानां कोलाहलेन द्वितीयवारं मध्यावधिकनिर्वाचनं करणीयं भवेच्चेद् भगवानेव परित्राता राष्ट्रस्य ! बिहारप्रदेशे भूतपूर्वशासकानां भ्रष्टाचारस्य विवरणं न विस्मृतमद्यापि भारतीयैः स्यात् ।

पश्चिमबङ्गप्रदेशे नैकेषां दलानां संयुक्त-विधायक-दलस्य शासनं प्रारब्धम्, महत्या आन्तरिक्यो नेतृत्व-स्पर्धायाः परत एव । भूतपूर्व-संयुक्त-विधायक-दलीयः शासक एव पुनरपि नेता संवृत्तस्तत्र । पूर्वत्रासितस्य दलविशेषस्यैव बहुमतमपि मध्यनिर्वाचनतः परिणतं यस्य प्रथमः प्रहारो राष्ट्रपालस्यैव उपरि तत्परिवर्तनप्रस्तावेनैव प्रादुरभवत् । आपेक्षिक-बहुमतेन निर्वाचितस्य दलस्य राष्ट्रनिष्ठाविषये वर्तन्ते बहवः सन्दिहानाः केन्द्रीय-शासनदलीया दलान्तरीयाश्च । सत्येवं नवं प्रशासनमपि देवकृपया सुस्थिरं भवत्वित्येव प्रसङ्गेऽस्मिन् वचमः ।

नागभूमि-प्रदेशे इतोऽन्या परिस्थितिः । भूतपूर्व-शासकदलमेव पुनस्तत्र निर्वाचितं यद्धि केन्द्रीयशासन-दलानुगृहीतं तदनुकार्येव च वर्तते । अन्यच्च, नातिबहुलः सः प्रदेशो न वा संस्कृतश्च । तत्र स्थिरशासनाशायाः प्रायो व्याघातो न भवेदित्येव संभाव्यते ।

सविस्तरेणानेन मूल्यमापनेन मध्यावधिक-निर्वाचनेन किमिति दत्तं राष्ट्राय किं वा दातुं शक्यम् ? इत्यस्य सामान्यतो रूपरेखा प्रतीयादेव राजनीतिविदश्चेतसि । किमेतादृशस्य अल्पस्य हेतो राष्ट्रियं बहु धनं हातुमिच्छतामेव नहि, हापितवतामपि विचारमौढ्यं न प्रतिभाति ?

पुनरनेन निर्वाचनेन किं नाम राष्ट्रियं शीलं समुद्भावितम् ? देशेऽस्मिन् प्राचीनतमे दले नास्ति अन्त्य-वर्गस्य मध्यमवर्गस्य च तादृशी निष्ठा । निष्ठैव नहि, आकर्षणमपि तयोः तस्मिन् मनागपि न परिदृश्यते । केवलमुच्चस्तरीया एव तत्पक्षपातिनः स्वार्थविशेषात्, राजकीयानुग्रहास्मितावशीभूतत्वाच्च । निम्नवर्गीयाः पुनरनेन जातिवादेन भृशमुद्वेजिता दृश्यन्ते नव-नवदलमाध्यमेन । तेषां विवेकः केवलं जातिवादे एव केन्द्रिततरः । न केवलं शासनदलीया एव प्रत्याख्याता

अभवन्, नग्नजातिवादप्रचारणेऽक्षमा दलान्तरीया अपि, भारतराष्ट्रेतरराष्ट्रतः प्रेरणां गृह्णन्तोऽपि च निवारिताः। शिष्टाः परिगणिताश्च तोकं विवेकं समाश्रयन्तो नैकैः तदितरैः लक्ष्यविशेषनिष्ठावद्भिर्दलैः आत्मसात् कृताः। इत्थमनेन निर्वाचनेन राष्ट्रियैक्यस्य अखण्डा धारा त्रिभिः स्रोतैः प्रवाहिता, इदमेव सर्वातिशायि राष्ट्रियं शीलं समुद्भावितम्। किमनेन शीलेन राष्ट्रस्य हितं सिद्ध्येत् ? स्पष्टमेव परिदृश्यते यदयं प्रवाहः परिवर्धितश्चेद् राष्ट्रे कदापि स्थिरं सुव्यवस्थमेकं प्रशासनं प्रस्थापितं न प्रभवेत्।

अस्माकं राष्ट्रेण द्वाविंशतिवर्षैः पूर्वं स्वातन्त्र्यं समासादितम्, सम्पूर्णया शताब्द्या व्यापृतेन राष्ट्रियसङ्ग्रामेण। नासीत्तदा कस्यापि दलस्य प्रश्नः। राष्ट्रस्वातन्त्र्यरूपमेकमेव लक्ष्यमासीत् सर्वेषां भारतीयानाम्। लक्ष्यैकतायां तदधिष्ठितदलेषु भेदे प्रमाणाभावात्। तत्साधनप्रकारभेदानाम् अकिञ्चित्करत्वात्। अस्माकं तु दृढं मतं यत्सद्भावना प्रेरितः कोऽपि प्रकारः प्रस्तावितस्य कार्यस्य न जातु परिपन्थी भवितुं शक्नुयात्। अतः स्वातन्त्र्यलाभे यावदहिंसकान्दोलनस्य हेतुत्वं तावदेव हिंसकप्रकाराणामपि। यावान् कस्यचन चिरन्तनस्य दलस्य दायस्तावानेव अल्पीयसां नूतनानां दलानां व्यक्तिविशेषस्यापि च दायः। सर्वेषां दायैरेव मूर्तिमदभवदस्माकं राष्ट्रस्वातन्त्र्यमित्यत्र तत्त्वदृशां मतद्वयासम्भवात्। सत्येवं राष्ट्रियस्वातन्त्र्यलाभोत्तरं राष्ट्रपित्रा महात्मगान्धिना यदुद्भावितं राष्ट्रियमहासभाया विघटनं 'लोकसेवकसङ्घ'-मुखेन परिणमनञ्च, सर्वथा तत् सामयिकं राष्ट्रियभविष्यदृष्ट्या च मङ्गलकरमेवासीत्। परमस्माभिस्तस्य सन्तवरस्य तन्मतं स्वीय-पदलिप्सामोहेन अवमानितम्। तदेवाद्य फलद्रूपं सदेतादृशीः समस्याः समुपस्थापयति।

नाद्य विद्यते अस्माकं देशस्य कृते दलानां कस्यचन पङ्कस्यावश्यकता। सर्वेऽपि वयमेकस्या राष्ट्रभक्त्यास्तप्राणिताः। राजनैतिकस्वातन्त्र्यभाजोऽस्य आर्थिक-भौगोलिक-सामाजिकादि-स्वातन्त्र्यसमासादनमद्यापि अवशिष्टं वर्तते। गतोऽस्माकं दीर्घतरः कालः स्वातन्त्र्यलाभस्य। अद्यावधि एतेषु विषयेषु स्वातन्त्र्यमनासादयद् राष्ट्रं विश्वराष्ट्रियसमुत्कर्षयात्रायां कियद् दूरगामीति पृथक् वक्तव्यं नावशिष्यते। किमिदमस्माकं स्वतन्त्रराष्ट्राय शोभते ? अद्य तु सर्वेषां मनो-बुद्धि-वचांसि राष्ट्रियपुनर्निमाणे एव मूर्तरूपेण नियोजितानि भाव्यानि। राष्ट्रमानबिन्दु-तिरस्कारकर्तॄणां कार्यकारी निरोधः करणीयः। राष्ट्रोन्नयने अन्तरायभूतानां वैयक्तिक-संस्थागतानां सर्वविधप्रकाराणां दोषजातानां निर्ममतया निर्दलनं प्रत्येकस्य भारतीयस्य परमं कर्तव्यं विद्यते। देशो यथा शीघ्रातिशीघ्रं धन-धान्य-पशु-क्षेत्रादिसम्पन्नो भवेत्तथा प्रयतनीयम्। पूर्वं स्वराष्ट्रस्य हितं साधनीयं परराष्ट्राविरोधेन। ततः परमेव परकीयहिताहितचिन्तनं विधेयम्। सर्वस्यास्य कृते कस्यचनैकस्य उत्तरदायिनः पुरुषस्य, पदस्य, ईश्वरस्य ग्रन्थस्य वा अन्तिमाधिकारः स्वीकरणीय एव भवेत्। कामं तदस्माकं संविधानमेव स्यात्, परं तदपि ईश्वराधिष्ठितमेव भाव्यम्। यतः सर्वं किल जगदपूर्णम्। पूर्णस्तु स एव। श्रुतिरप्याह—

**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥** इति।

यदि भारत राष्ट्रमेतादृशं सर्वगुणसम्पन्नं स्वपरहितसाधकराष्ट्ररूपेण उदीयात्तदैव तस्य स्वातन्त्र्यलाभस्य फलम्।

लक्ष्यमेतत् एतादृशैः सर्वथा लक्ष्यविहीनैः अनर्घ्यस्वार्थवशंवदैः दलैः साधयितुं न शक्यम्। एतादृशं कार्यन्तु दलातीतं योग्यता-स्वयसेवाभावाधिष्ठितमेव प्रशासनं निर्वाहयितुं प्रभवेत्। तच्च न साम्प्रतिकेन लोकतन्त्रप्रकारेण संसिद्ध्येत्। लोकतन्त्रं नाम न किमपि सर्वथा निश्चितस्वरूपम्, अणुमात्रमपि परिवृत्त्यसहं शासनम्।

अपितु अस्माकं दृढं मतं यत् तत्तद्भूभागकृतवैशिष्ट्येन लोकतन्त्रमपि विशेषितं सदैव अन्वर्थं लोकतन्त्रं जायते। लोकतन्त्रस्य कृते लोकसामान्यस्य सुशिक्षितत्वं प्राथमिकी आवश्यकता। यावत्तन्न भवति, तावद् यथार्थतो लोकतन्त्रमेव न भवति। सुदीर्घदास्यशृङ्खला-निगडितेन अस्माकं राष्ट्रेन उपकरणमिदमद्यापि नासादितं विद्यते। द्वाविंशतिवर्षेष्वपि अस्माभिरत्र विषये यावदवधातव्यं न ध्यातम्। तथापि अतीतमुरसा निबद्ध्य समाक्रोशो न धीरगम्भीरचिरन्तन-राष्ट्रगौरवावहो भवेत्। तदर्थं सर्वथा दलातीतशासनायैव प्रयतनीयमग्रिमे महानिर्वचने। अस्मिन्नपि मध्यावधिकनिर्वाचनोत्तरकालिके सङ्घट्टनीय-प्रशासनविषयेऽस्माभिः दृष्टिमिमां पुरस्कृत्य यावत् प्रयतितुं शक्येत, नूनं प्रयतनीयम्।

अत्रैकं संसूचनमावश्यकं प्रतिभाति। दरिद्रतरस्य देशस्यास्य कृते साम्प्रतं प्रचलितं महानिर्वाचनं कथमपि हितावहं न प्रतिभाति। शिक्षाविहीनत्वात् परप्रभावासादने मसृणतरत्वाच्च देशस्य कृते तदपव्ययायितमेव प्रायो दृष्टिपथमुपयाति। अत एव अमेरिकादेशवत् अत्रापि राष्ट्राध्यक्षस्य उपराष्ट्राध्यक्षस्य प्रत्येक-प्रदेश-शासकस्य चैव निर्वाचनं राष्ट्रियजनैः सर्वैः करणीयम्। तदनन्तरं निर्वाचितास्ते स्वमत्या स्वीयराजनैतिकविज्ञानेन राष्ट्रं सञ्चालयेयुः। एतदर्थं भारतीयसंविधानसंशोधनमपि करणीयञ्चेत् तदर्थमपि बद्धपरिकरैर्भाव्यम्। अद्यावधि नैकेषु क्षुद्रतमेषु विषयेष्वपि संविधानसंशोधनं संवृतम्। एवंस्थितौ एतादृशस्य महत्त्वपूर्णस्य राष्ट्रिय-जीवन-मरणाधायकस्य प्रश्नस्य कृते संविधान-संशोधनं कथमपि तिरस्कृतं न भवेत्। अस्मिन्नवसरे संक्षेपतः सङ्केतरूपेण इदमेव राजनीतिविदां भारतहितचिन्तकानां विदुषां पुरतः सप्रश्रयं निवेद्यतेऽस्माभिः। आशास्यते च तेऽवश्यमत्र सावहितमवधास्यन्तीति।

## संस्कृत-कवयितुरभिनन्दनम्

'साहित्य एकाडेमी' संस्थया वर्षेऽस्मिन् संस्कृतभाषीय-सर्वश्रेष्ठ-नूतनरचनारूपेण 'श्रीगुरुगोविन्दसिंह-चरितम्' नाम काव्यं पुरस्कृतम्। अस्य रचयितारः श्रीसत्यव्रत-शास्त्रिणः पञ्चसहस्रमुद्राभिः ताम्रपत्रेण च संभाजिताः। 'सूर्योदयः' शास्त्रिणोऽस्मिन्नवसरे हार्दिकमभिनन्दनं करोति। परमेश्वरं च प्रार्थयति यत्ते चिरञ्जीविनो भूत्वा एवमेव सुरवाणीगौरववर्धनाय प्रयतन्त्विति।

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

शाण्डिल्यसूत्रेऽपि—अथातो भक्तिजिज्ञासा इति प्रतिज्ञाय सा पराऽनुरक्तिरीश्वरे इति तस्या लक्षणं क्रियते। अनुरक्तिश्च स्नेह एव। स्निग्ध एवानुरक्त इति प्रयोगदर्शनात्। स्नेहश्च नेच्छाविशेषः, विशेषस्य निर्वक्तुमशक्यत्वात्। न च सुखविषयिणी सा स्नेह इति युक्तम्; स्वर्गकामनायामपि तथात्वप्रसङ्गात्। पुत्रादिविषयकस्नेहस्य इच्छारूपत्वाभावेन तस्य स्नेहत्वाभावप्रसङ्गाच्च।

ननूक्तम्—'इष्यमाणविषयिणी सा स्नेह' इति। तन्न; स्वर्गस्य शत्रुहननादेश्चेष्यमाणत्वात्, तद्विषयकेच्छायां स्नेहादिपदप्रयोगस्य क्वाप्यदर्शनात्। 'स्निह्यामि, प्रीणामि, अनुरज्यामि, नेच्छामी'ति विरुद्धानुव्यवसायाच्च।

अत एव नाराध्यत्वेन ज्ञानं ज्ञानान्तरं वा सः। अत एव न यत्नोऽपि सः। अनुकूलबुद्धिवेद्यत्वाच्च न द्वेषादिरपि। सविषयकत्वान्न लौकिकसुखरूपोऽपि। प्रत्यक्षत्वाच्च अदृष्टरूपोऽपि न। अतो मनोधर्मान्तरमेव स इति निश्चयः।

सोऽपि न क्षणिकः; कालान्तरे तत्कार्यस्य दर्शनात्तद्विषयकसंस्कारे मानाभावाच्च स्थाय्येव। अत एव काव्यादावप्युच्यते—

आविर्भावदिने न येन गणितो हेतुस्तनीयानपि
क्षीयेताऽपि न चाऽपराधविधिना नत्या न यो वर्धते।
पीयूषप्रतिवादिन-स्त्रिजगतीदुःखद्रुहः साम्प्रतं
प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठतालाघवम्॥

एवं स्थायित्वे तस्य सिद्धे मातुः पुत्रदर्शनादौ तदभिव्यक्तिरुत्कर्षश्च भवतीति रसत्वमपि तस्य सुघटमेव। अत एव तत्स्मरणादौ कुचक्षरणादौ च तत्सम्भवं व्यभिचारिणस्तत्र प्रसिद्धा एव। अत एव श्रीमदुद्धवागमने उक्तम्—

यशोदाऽऽकर्ण्य नामानि कृष्णस्याऽऽचरितानि च।
शृण्वन्त्यश्रूणि चास्राक्षीत् स्नेहस्नुतपयोधरा॥

एवमेव पितृ-भ्रातृ-मित्रादिष्वपि द्रष्टव्यम्। अत एव श्रीमद्भागवते नन्दादीनां तादृशानि तत्र तत्र वचांसि। शौनकस्य च—

तदश्मसारं हृदयं बतेदं यद् गृह्यमाणैर्हरिनामधेयैः।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः॥

भक्ते रसत्वं कण्ठतोऽप्युक्तम्—

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः॥

अतो भागवते रसो भक्तिरस एव।

अस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे।
भक्तिरुत्पद्यते पुंसः शोकमोहतमोपहा॥

इति भक्त्यर्थमेव भागवतसंहिता-प्रणयनकथनात् तत्र प्रतिपाद्यमानस्य भागवतरसस्य भक्तिरूपताया एव सिद्धेरिति। अत एव भक्तिरसः शृङ्गाराद्भिन्नतयाऽनुभूयत एव रसिकैः।

यत्तु—"शृङ्गारस्यैव द्वावप्यवस्थाभेदौ संयोगो विप्रलम्भश्चेति सर्वैरुच्यते" इति। तत्तु अविचारितरमणीयम्; मात्रादिष्वपि अनिषिद्धसंभोगसुखविप्रलम्भयोरुपलब्धेः। अतः स्नेहस्यैव तौ भेदौ।

वस्तुतस्तु—रतिरपि स्नेहविशेष एव। एवं सति शृङ्गारस्यैव रसत्वं न केवलं स्नेहस्येत्यत्र विनिगमकाभावात् तदुभयोः पार्थक्येन रसत्वं स्वीकार्यम्। तथा च नायिकायां नायकस्य, तस्मिश्च तस्या या रतिः सा शृङ्गारः। मात्रादीनां पुत्रादौ

तेषां च तेषु या रतिः; स केवलः स्नेहरस इति सिद्धम्।

भगवद्विषयिण्याः निरुपाधिकाया द्विविधाया अपि रतेरलौकिकत्वेन मुख्यरसरूपत्वम्, 'रसो वै सः' इति श्रुतेर्भगवतो रसरूपत्वात्। लौकिक्यासु उपाधिजन्यत्वात् तदाऽऽभासत्वमिति ज्ञेयम्। तेन भक्तिरसस्य तेभ्योऽतिरिक्तत्वं निष्प्रत्यूहम्।

अद्वैतिरीत्या तु—भज्यते = सेव्यते भगवदाकारमन्तःकरणं क्रियतेऽनयेति करणव्युत्पत्त्या श्रवणादिसाधनलक्षणा भक्तिः। भजनं भक्तिरिति व्युपत्त्या अन्तःकरणस्य भगवदाकारतापत्तिरेव भक्तिरिति साधनसाध्यभेदेन भक्तिद्वैविध्योपपत्तिः। तत्र फलरूपाया भक्तेः स्वरूपम्—

भगवान् परमानन्दस्वरूपः स्वयमेव हि।
मनोगतस्तदाकाररसतामेति पुष्कलम्॥

परमानन्दस्वरूपो भगवानेव प्रतिबिम्बरूपेण मनोगतो रसतामेति तयोरैक्यात्। मनसि तत्प्रतिबिम्बमेव मनसो भगवदाकारता। प्राकृतरसेऽपि विषयावच्छिन्नचैतन्यमेव तदवस्थमनोवृत्त्युपारूढतया भावत्वं प्राप्य रसतामेति। तेन प्राकृतरसस्य न परमानन्दता, किन्तु जाड्यमिश्रणादनवच्छिन्नचैतन्याभानात् न्यूनतैव।

अतस्तदेव भावत्वं मनसि प्रतिपद्यते।
किञ्चिन्न्यूनाञ्च रसतां याति जाड्यविमिश्रणात्॥

( क्रमशः )

# मूर्खतैव दुःखहेतुः

आसीत् एकः सज्जनः। महता प्रेम्णा पोषितश्चासीत् तेन एकः श्वा। प्रेम्णा तस्य तदेव नाम कृतं यद्धितस्य श्यालकस्य आसीत्। पत्नीः अपि अनेन तुष्टा अभवत्। अहो रात्रं भ्रातुः स्मरणं यत्तेन जायते स्म। कियद्भिः दिवसैस्तस्याः शुना सह ईदृशः स्नेहः संवृत्तो यत्सा तं भ्रातरमेव मनुते स्म। पुरुषो यदा शुनः प्रशंसां कर्तुं प्रवर्तते, तदा सा परं मोदं गच्छति। यदा स तं निन्दितुं प्रवर्तते तदा सा रुष्टा जायते, विवादञ्च समाचरति—एतादृशी स्थितिरभवत्। गृहे कलहसृष्टिः प्रावर्तत। पत्न्याश्चेतः पत्युरधीनमभवत्। यदा स इच्छेत्; तां रुष्टां कर्तुं प्रभवेत्।

तात्पर्यमेतत् यद् देहस्यास्य नामकरणं 'अहम्' इति कृतमस्ति। बुद्ध्या मोहवशात् तत्स्वीकृतमपि। अस्य निन्दां स्तुतिं मानमपमानं लालनं ताडनं वा सा स्वात्मीयस्य स्वात्मनो वा मनुते। यथा श्वा श्यालकश्च भिन्नौ, तथापि एकत्वभ्रमेण तेन सुखदुःख प्राप्तिः। एवमेव 'अहम्' देहश्चापि परस्परं भिन्नौ। एतयोः एकत्वभ्रम एव सर्वविधदुःखस्य उपादानम्।

शास्त्रेषु अयमेव 'श्याल-शुन'-न्यायेन व्यपदिश्यते।

—( सङ्कलितम् )

# मदीया द्वितीया अध्ययन-यात्रा

—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योग-तन्त्र-विभागस्य, वा० सं० वि० वि० ]

'सारस्वती-सुषमा'यास्तदात्वे वाराणसेय-संस्कृतमहाविद्यालयमुखपत्रिकायाः सप्तमवर्षस्य प्रथमेऽङ्केऽस्माभिः 'पथिकजन-पातकचिन्तन-स्मृति'-नामा लघुग्रन्थो महेश्वरभट्टकृतिः सम्पाद्य प्रकाशितः। तत एव प्ररूढा यात्रावाञ्छालता समये समये पुष्पिता फलिता च। यात्रावसरे पापपुञ्जो घनीभूय प्रकटितो भवतीत्याशयको वारं वारं प्रायः प्रतिश्लोकान्तं संयोजितः **पातकं किमतः परम्?** इति तस्य वचस्त्वनर्थकमेव साम्प्रतिके सर्वविधयात्रासौविध्यसम्पन्ने काल इति प्रतिभायान्नः। किन्त्वस्यां यात्रायां तत्र सत्यांशः कोऽपि विद्यत एवेत्यनुभूतम्।

न केवलमियमासीद् अध्ययनयात्रा, धार्मिकी सांस्कृतिकी चेयं यात्रा अध्ययनयात्राभूमिष्ठेति वक्तुमिच्छामो वयम्। अस्या आरम्भो धार्मिक्या यात्रयैव सञ्जातः। प्रथमेऽध्ययनयात्राविवरणे 'सूर्योदय' पत्र एव प्रकाशिते द्वादशसु ज्योतिर्लिङ्गेषु षण्णां यात्रा समपाद्यत तावदस्माभिरित्युक्तम्। एषाऽध्ययनयात्रा कलिकाता-तिरुपति-मद्रपुरी-तञ्जापुरी-त्रिवेन्द्रम्-महीसूरस्थितानां पुस्तकालयानामनुसन्धानकेन्द्राणां च निश्रिताऽऽसीत्। मध्येमार्गं वर्तमानानि धार्मिकाणि सांस्कृतिकानि च स्थलान्यवश्यं यथावसरं द्रष्टव्यानीति अभिलाषो भगवदिच्छया कियताऽप्यंशेनास्यां यात्रायामपि फलित एव।

कलिकातामार्गे वैद्यनाथधाम-कृतवसतेः ज्योतिर्लिङ्गेषु एकतमस्य वैद्यनाथभगवतो दर्शनेच्छया मईमासस्य द्वाविंश्यां तारिकायां रात्रौ अष्टवादनवेलायां वाराणस्या 'वाराणसी-हाबडा एक्सप्रेस' इत्याख्येन लोहयानेन प्रस्थाय स्थानकमधिगतम्। इतो वैद्यनाथधाम देवघरनगरकं वा नातिदूरमवस्थितं लोहयानेन तैलयानेन वा पञ्चविंशतिपणकमात्रभाटकव्ययेन अधिगम्यते। सन्ति बह्व्यः श्रेष्ठिभिर्धार्मिकैः निर्मिता धर्मशालास्तत्र। उत्तरभारते प्रसिद्धं वैद्यनाथज्योतिर्लिङ्गमत्रैव विराजते। दक्षिणभारतीयास्तु नैतदङ्गीकुर्वते। ते हि हैदराबादनगरं निकषा स्थितं परलीवैद्यनाथ-स्थानकं वैद्यनाथज्योतिर्लिङ्ग-वसतिरिति प्रत्यभिजानन्ति। **परल्यां वैद्यनाथं च** इति विद्वद्गोष्ठीषु प्रथितं वचोऽपि तदनुप्राणकमेव प्रतिभाति। शिवपुराणे तु **वैद्यनाथं चिताभूमौ** (४।१।२३) इति पाठो दृश्यते। अत्र चिताभूमिपदेन वैद्यनाथधाम्नो ग्रहणं भवति न वेत्यवधातव्यं धर्मगुरुभिर्विद्वद्भिश्च। एवमेव **नागेशं दारुकावने** इति नागेशाख्य-ज्योतिर्लिङ्गवसति-विषयकोऽपि विवादस्तावत् जागर्तितराम्। केचन दारुकावनं द्वारावतीं निकषाऽङ्गीकुर्वन्ति, अपरे च च परली-वैजनाथसमीप एव तदामनन्ति। प्रथितानां द्वादशज्योतिर्लिङ्गानां वसतिविषयके विशये जागरूके सत्येकपञ्चाशत्संख्याकानामितो न्यूनानामधिकानां वा शक्तिपीठानां स्थाननिर्णयो दुश्शक एव प्रतिभाति नः।

वैद्यनाथधामस्थितायामेकस्यां धर्मशालायां विश्रम्य स्नानादिकं नित्यकृत्यं सम्पाद्य, ज्योतिर्लिङ्गदर्शनार्चनादिकं च विधाय, प्रसादादिकं च गृहीत्वा पुनः 'जसीडीह'-स्थानकमागत्य तत्र 'तूफान एक्सप्रेस'-यानेन मध्याह्ने द्वादशवादनवेलायां कलिकाता-नगरीं प्रति प्रस्थायि, सायं सप्तवादनवेलायां चाधिगता सा नगरी। मध्येमार्गं

विसृजल्लोहनगरं दुर्गापुरम्, बर्दवान-विश्वविद्यालयस्थलं बर्दवाननगरं च साम्प्रतिकयोः उद्योग-शिक्षाक्षेत्रयोः प्रातिनिध्यमिव कुर्वाणे समवालोक्येताम्। हावडास्थान-केऽवरुह्य लौहयानात् कलिकातामहानगरीप्रवेशाय वर्तते 'हाबड़ा-ब्रिज' इत्याख्यः सेतुर्भगवत्या भागीरथ्या एकस्याः शाखाया हुबलीनामधेयाया उत्तरणाय। साम्प्रतिक-नद्युत्तारकसेतुषु विराजते किमपि वैशिष्ट्यमस्य। प्रायः सर्वे सेतव ईदृशा नदीमध्यनिखातेषु स्तम्भेषु स्थापिता भवन्ति। अस्य च सेतोरवस्थितिः नदीतटयोरारोपितयोः विशालयोराधारयोः साहाय्येन वर्तते, न नदीमध्ये वर्तते कोऽपि आधारस्तम्भोऽपरः। आयामभूमावपि साम्प्रतं भारते वर्षे वर्तमानान् सर्वान् सेतूनतिशाययत्येषः।

कलिकातानगर्यां तिष्ठता मया 'एशियाटिकसोसाइटी' संस्थायाः, संस्कृतमहाविद्यालयस्य, कलिकाताविश्व-विद्यालयस्य च पुस्तकालयेषु तन्त्रशास्त्रविषयका नैकशो हस्तलेखा दृष्टाः। कलिकाता-विश्वविद्यालयेऽपि संस्कृत-विभागीयो वर्तते हस्तलेखानां संग्रहोऽनुसन्धानविभागा-न्तर्गतः। कलिकातानगर्यामेव वर्तते राष्ट्रियः पुस्तकालयः, यत्र भारते राष्ट्रे प्रकाशितानां सर्वेषां ग्रन्थानां प्रेषणं राजाज्ञयाऽनिवार्यतया उद्घोषितम्। डा० प्रबोधचन्द्र-बागचीसंपादितो 'दोहाकोशः' प्रो० तुच्चीप्रकाशितः 'इण्डो-तिबेटिका' इत्याख्यो ग्रन्थश्च वाराणस्यां नोप-लब्धः। तदवलोकनार्थं दिनद्वयं मया तत्रापि गतं ग्रन्थ-द्वयमेतदधीतं च।

सन्त्यस्यां महानगर्यां भूयांसि स्थलानि दर्शनार्हाणि। ग्रन्थावलोकने व्यापृतेन मया न तानि सर्वाणि द्रष्टुम-शक्यन्त। तथापि मित्रप्रवराणां बन्धूनां च श्रीमताममर-नाथद्विवेदमहोदयानां साहाय्येन प्रत्यहमवकाशवेलायां रविवासरे च प्रथिततमानि कानिचन स्थलानि समवलो-कितानि। तानि च 'विक्टोरिया-मेमोरियल' (स्मारक) 'कलकत्ता-म्यूजियम' (संग्रहालय)-'बोटेनिकल-गार्डन' (वनस्पत्युद्यान)-'बेलूरमठ'-'ज्यूलोजिकल गार्डन' (पशुपक्ष्युद्यान)-'पार्श्वनाथजैनमन्दिराणि'। एशि-याटिकसोइटी-पुस्तकालयस्य संस्कृतमहाविद्यालयपुस्तका-लयस्य च कार्यसमयो मध्याह्ने द्वादशवादनतः सायं षड्वादनं यावदासीत्। अनेनापि प्रातःकालिके नगरभ्रमणे किमपि सौविध्यमासादितम्। कलिकातानगराधिष्ठातृदेवताया भगवत्याः काल्या दर्शनसमय एव ततो नातिदूरं निवसतां श्रीमतां चिन्तहरणचक्रवर्तिमहोदयानां तन्त्रशास्त्रे कृत-भूरिपरिश्रमाणां दर्शनसौभाग्यमप्यधिगतम्। न्याय-वैशेषिकबौद्धादिदर्शनानां पारदृश्वानः श्रीमन्त अनन्तलाल-ठक्कुरमहोदया अपि तत्रैव सङ्गता इत्यासीत् शुभ एषः क्षणो यात्रायाः।

अभिनवगुप्तप्रभृतिभिः प्राचीनैरागमाचार्यैः स्मृतानां ग्रन्थानां परिचय एवास्या यात्राया मुख्यं प्रयोजनमासीत्। तत्र एशियाटिक-सोसाइटी-पुस्तकालये 'कुब्जिकामत'स्य प्राचीनतमा मातृका गुप्तलिपिलिखिताऽस्माभिरवलोकिता। अन्येऽपि केचन मतसंप्रदायीया मतोत्तरप्रभृतयः प्राचीना ग्रन्थास्तत्र विद्यन्ते। कुब्जिकामतमेतद् विश्वभारतीविश्व-विद्यालयेन प्रकाशयितुमुपक्रान्तमिति तत्रैव श्रुतमस्माभिः। मद्रपुर्यां च मद्रपुरीविश्वविद्यालय-संस्कृतविभागाध्यक्षेभ्यः 'न्यू कैटलागस् कैटलागरम्' इत्याख्यायाः संस्कृतहस्त-लेखानां बृहत्सूच्याः संपादकेभ्यो डाक्टर श्री वी० राघव-महोदयेभ्यः श्रुतं यत् कुब्जिकामतमेतद् बौद्धकृतिना धर्म-कीर्तिना स्वकीये 'वादन्याये' समुद्धृतमिति। शाक्तागमेषु प्राचीनतमोऽयं ग्रन्थः शीघ्रमेव प्रकाशितो भवेदित्याशास्महे वयम्।

कलिकातातस्तिरुपतिक्षेत्रं प्रस्थितैरस्माभिः मध्येमार्ग-मापतताम् उत्कलराज्यवर्तिनां भुवनेश्वर-जगन्नाथपुरी-कोणार्कसदृशानां धार्मिकाणामैतिहासिकानां सांस्कृतिकानां च स्थलानां दर्शनलोभो नैव रोद्धुमपारि। मद्रपुरीं प्रति प्रस्थितं यानं भुवनेश्वर एव परित्यक्तमस्माभिः। पूर्वं प्राचीने भुवनेश्वरनगरे वर्तमानानि लिङ्गराजप्रभृतीनि मन्दिराणि, तदनु च भुवनेश्वरतो नातिदूरं वर्तमानानि

उदयगिरि-खण्डगिरिवर्तीनि गुहामन्दिराणि दृष्टानि। अत्रैव उत्कलनृपतेः खारवेलस्य प्रथितः शिलालेखो गुहाद्वारस्य उपरितने भागे उत्कीर्णोऽवालोकि। भुवनेश्वरनगरमधितिष्ठत्सु परःशतेषु शैवमन्दिरेषु लिङ्गराज-राजाराणी-मुक्तेश्वर-परशुरामेश्वरमन्दिराणि मध्यकालिकाया भारतीयस्थापत्यकलाया निदर्शनभूतानीति वक्तुं शक्यते। एतानि मन्दिराणि सप्तमशताब्दीतो द्वादशशताब्दीपर्यन्तं निर्मितानि।

भारतराष्ट्रस्य एकत्वबोधकानि सन्ति चारधाम-सप्तपुरी इति नामभ्यां प्रसिद्धानि मुख्यानि तीर्थानि। धामसु जगन्नाथपुर्याः किमपि वैशिष्ट्यं विराजते। प्रतिवर्षमत्र प्रवर्तमाने रथयात्रामहोत्सवे भारतराष्ट्रस्यैक्यं सर्वैरवलोक्यते। भगवताऽऽद्येन शङ्कराचार्येण स्थापितेषु गोवर्धनाख्यं पीठमत्रैव स्थापितम्। साम्प्रतमत्र स्वनामधन्याः श्रीमन्तो निरञ्जनदेवतीर्थपादाः शङ्कराचार्यपदमलङ्कुर्वन्तीति ते गोरक्षायै समर्पितायुषः परिचिता भारतराष्ट्रस्य। गोवर्धनमठस्य मुख्ये द्वारे स्थापिता गोप्रतिमा प्रेरणादात्री आसीद् गोरक्षार्थं कृतस्य तेषामनशनव्रतस्येति वयं संभावयामः। जगन्नाथपुर्यामस्माभिः दिनद्वयं यावदत्रैव स्थितम्, यद्यपि शङ्कराचार्यपादास्तदा तत्र नासन्। पूर्वोदधिपरिसर एव मठोऽयमवस्थितः। भगवतो जगन्नाथस्य मन्दिरं चापि नातिदूरं विराजते। अत्रैव स्थित्वा भगवतो जगन्नाथस्य दर्शनमुदधिस्नानं चास्माभिः सम्पादितम्। स्नानवेलायां यादृशो हि समुद्रलहरीणामानन्दोऽत्रानुभूतः नैतादृशः कन्याकुमारी-परिसरे गोकर्णतीर्थे वेत्यनुभव एवात्र प्रमाणम्।

कोणार्कस्थितं सूर्यमन्दिरं न केवलमुत्कलप्रदेशस्य, अपि तु संपूर्णस्यापि भारतराष्ट्रस्य स्थापत्यकलाया विशेषतो मन्दिरनिर्माणवैशिष्ट्यस्य उत्कृष्टतमेषु स्थलेष्वेकम्। निर्मितिरेषा ईशवीयायाः त्रयोदशतमशताब्द्याः। भारतीयस्थापत्यकलायाश्चूडान्त उत्कर्षोऽत्र घनीभूत इव राजते। शक्यते। १२०० संख्याकैः स्थपतिभिरनारतं द्वादशवर्षाणि यावदुपास्य कलादेवीं तस्याः सर्वाङ्गसुन्दरेयं प्रतिमाऽऽखचिता। भारते राष्ट्रेऽल्पीयांस्येव सूर्यमन्दिराणि अवशिष्टानि साम्प्रतम्। कदाचन भारते गणपति-सूर्यप्रभृतीनां देवतानां तान्त्रिकी पूजापद्धतिः प्रचलिताऽऽसीत्। तदा सूर्यो भगवान् प्रातःकाले कोणार्कप्रदेशे, मध्याह्ने कालपीनगरं निकषा, सायाह्ने च साम्प्रतं पश्चिमपाकिस्तानस्थिते 'मुलतान'नगरेऽर्च्यते स्म। अहो कालविपर्ययः! साम्प्रतं शिवपञ्चायतनादिषु यथाकथञ्चिदुपास्यते स भगवान्। कोणार्कमन्दिरस्य स्थापत्यकलायां मन्दिरान्तरापेक्षया कापि विशिष्टा कल्पना विलसतितराम्। एतद्धि मन्दिरं भगवतो रवेः रथाकारेण निर्मितम्। सप्ताश्वा रथमिमं परिकर्षन्ति। वर्तते च रथस्योभयोः पार्श्वयोर्द्विदश द्वादश चक्राणि वर्षस्य पक्ष-माससूचकानि। प्रतिचक्रमष्टौ अरा दिवसस्याष्टानां प्रहराणां सूचकाः। रथाकारेण स्थितमेतत्सम्पूर्णं मन्दिरमापादमस्तकं विविधाभिः देव-नर-किन्नर-यक्ष-यक्षिणी-पशु-पक्षिप्रभृतीनां प्रतिकृतिभिस्तथैव अतिसौष्ठवेन उत्कीर्णाभिरलङ्कृतमतिरमणीयं भव्यं च स्वविशालतया सुरप्रासादानातिशाययद् दृष्ट्वा सहसा मतिश्चकितचकितेव विभ्रमभरिता प्रशंसति तान् शिल्पिनः, येषां द्वादशवार्षिक्या तपस्यया व्यक्ततामाप तत्सौन्दर्यविधानम्। नमस्तेभ्यो विश्वकर्मपरम्परामुकुटमणिभ्यः शिल्पिभ्यः! साम्प्रतमेषा शिल्पिपरम्परा भारतवर्षे लुप्तेति मनसि दोदूयमानेऽपि कस्तस्याः परम्पराया विकासाय चेष्टते?

उत्कलप्रदेशीयेषु सर्वेष्वेवानुपदं चर्चितेषु मन्दिरेषु कामकलायाः प्रतीकभूताः काश्चन प्रतिकृतय उत्कीर्णा दरीदृश्यन्ते, यथा हि दृश्यन्ते उत्तरभारतस्थेषु खजुराहो-मन्दिरेषु, यथा वा वाराणस्यां ललिताघट्टं निकषा स्थिते नेपालकला-प्रतीकभूते मन्दिरे। बौद्धानां शैवानां शाक्तानां च तदा प्रचलितानां तन्त्राणामेषः प्रभाव इत्यै-

नारीणां चापि प्रतिमा बाहुल्येन दृश्यन्ते खजुराहो-मन्दिरेषु तत्रत्ये संग्रहालये च। परिणामतस्तेषां वैराग्योत्पादनाय विनियोगमाहुः साम्प्रदायिकाः।

यात्रिणां सौविध्यार्थं पुर्यां जगन्नाथस्य भगवतो मन्दिरस्य समीपत एव प्रत्यहं साक्षिगोपाल-भुवनेश्वर-कोणार्क-प्रभृतिस्थानेषु मृत्तर (बस)-यानं प्रचलति। तेनैकस्मिन्नेव दिने सर्वेषामेवैषां स्थानानां यात्रा सम्पद्यते।

पुरीतो दक्षिणभारतस्य यात्रायै पुरीस्थानक-गमनाय यावद् वयं समुद्युञ्जेमहि, तावदेवास्माकं मीमांसादर्शन-गुरवः सुगृहीतनामधेयाः मीमांसासापारदृश्वानः श्रीमन्तः पट्टाभिरामशास्त्रिणस्तत्रैव शाङ्करे मठे समागताः। दक्षिणभारते प्रायः सर्वेष्वेव नगरेषु शाङ्करमठाः सन्तीति तत्र यात्राविरामे किमपि सौकर्यं स्यादिति तेषामुपदेश-मङ्गीकृतवद्भिरस्माभिः आन्ध्रप्रदेशस्य बेजवाड़ानगरे तत्रत्ये शाङ्करमठ एव रात्रावुषितम्। तदाऽस्माकमाकृत्या पूर्वपरिचिता वाराणस्यां स्थिते श्रृङ्गेरीमठे कृतनिवासाः स्वामिनस्तत्रैवासन्। ब्राह्मवेलायामेभिः सह पावनायां कृष्णायां नद्यां स्नातम्। इतो नातिदूरमेव दर्शनीयमासीत् 'कृष्णा-बराज' नामकं नूतनं तीर्थम्, यतः सस्यसमृद्ध्यर्थं क्षेत्राणां पिपासाशान्तये कृषकाणां हर्षवर्धनाः कुल्याः शतशाखं प्रसृता अभूवन् आन्ध्रप्रदेशे। इतः परं शाङ्करमठं निकषाऽवस्थिते मन्दिरे कनकदुर्गादेव्या दर्शनलाभोऽर्जितः। शाङ्करमठे वेदाध्यापकाः श्रीमन्तः सेतुमाधवशर्माणः सुतनिर्विशेषं शिष्यानत्र पालयन्ति वेदमध्यापयन्ति च।

पुरी-बेजवाड़ामध्येमार्गं बुक्कनृपतेः सायणमन्त्रिणो राज्यस्य राजधानी विजयानगरम्, जलपोतनिर्माणस्थलं विशाखापतनम्, आन्ध्रविश्वविद्यालयस्थलं वाल्टेयरनगरम्, सिंहाचलं नाम वैष्णवानां दिव्यदेशः, आन्ध्रेतिहासशोध-संस्थानस्थली राजमहेन्द्री च समापतन्ति। सिंहाचलतीर्थं विशाखापत्तनतो वाल्टेयरस्थानकतश्च नातिदूरं विराजते।

## साम्बशम्भुं भजामि

जगति बहुजनिभ्यो ज्ञातमोदापदर्थो,
नियति-नियतदुःखात् कं शरण्यं व्रजेयम्।
इति विहितविमर्शो स्वान्तसद्मन्यभीक्ष्णं,
निभृतशुचिनिकुञ्जे साम्ब-शम्भुं भजामि॥ १॥

जयति जगदिदं यत् कर्मणां क्षेत्रमुक्तं,
व्रजति खलु पुरस्ताद् येन जन्तुस्त्वधस्तात्।
तदनु विधिविपाके वीक्ष्य दीनस्य दिष्टं,
भवतु ह शरणं सत् साम्ब-शम्भुर्विभुर्मे॥ २॥

जयति जगदिदं यन्नित्यजन्मानुबन्धि,
भ्रमति फलति भाग्यं स्यन्दनाङ्गानुकारि।
क्वचिदिह विपरीतं तन्निरीक्ष्याशु दैवं,
भवतु ह शरणं मे श्रेयसे साम्ब-शम्भुः॥ ३॥

स शिव-शिवसपर्य्यामार्यकार्यां सुऋग्भिः
वदति सुजनवृन्दं तान्त्रिकैश्चापि मन्त्रैः।
तदपि तु न हि कोऽपि भ्राजते शुद्धभावो,
भवति हृदि विकल्पो नूतनो नूतनो मे॥ ४॥

सुकृत-जन-मनीषा-तत्त्वगम्यो गिरांशो-
ऽदिति-दितिजकुलानां पूज्य-पादारविन्दः।
प्रकृति कृपण-बुद्धे-र्दुर्मतेश्चापि नाथो,
द्यतु दुरितकदम्बं ह्याशुतोषः प्रभुर्मे॥ ५॥

मसृण-मलयपङ्कैः पूजनं स्यात् कदाचित्,
फलमपि विविधं नो नो प्रसूनं विभिन्नम्।
भणित-मुरजतालः क्वापि वैदग्ध्यपूर्णो,
निज-कर-कृतवाद्यं वक्त्रवाद्यं तु 'बंबम्'॥ ६॥

सुलभशिवसमर्चां कर्तुकामो न चेद्यः,
कथमिह सुखपात्रं स्यान्मनुष्यो भवेऽत्र।
यदि भवतु भवस्यापार-कारुण्य-दृष्टिः,
'शिव-शिव' इति जप्त्वा प्राप्नुयां जन्ममोक्षम्॥ ७॥

—श्री विद्याधर पाठकः, साहित्याचार्यः

चर्यते सश्रद्धं भावुकैर्भक्तैः। सर्वाणीमानि स्थलानि साम्प्रत-

# प्रत्यूष:

— श्री के० राजन्न शास्त्री —

— १ —

कलानिधाने स्वपतौ गतेऽस्तं ताराः सुरूपा वसुहीनतार्ताः ।
लयं गता एव सुशोभिवृत्तास्त्यजन्त्यसून् सल्ललना न शालम् ॥

— २ —

वृत्त्यर्थमेतान् पततः सुदूरं प्रतिष्ठमानान् निजबन्धुवर्गः ।
वियोगदुःखाच्छ्रुतिभिन्नकण्ठो रवच्छलात् सन्दिशतीव चर्याम् ॥

— ३ —

सदागतिर्गन्धवहोऽतिमन्दो मित्रस्य दारेष्वपि पद्मिनीषु ।
प्रदर्शयत्यम्बुजकुड्मलोरोजातातितप्तो हि त्रिलोलभावम् ॥

— ४ —

सुप्तान् स्वभर्तॄन् शयने विमुच्य पात्रं सुरूपं परिगृह्य कण्ठे ।
यान्ति स्त्रियो निम्नगतिं कथञ्चित् का सोढुमीष्टे प्रियविप्रयोगम् ॥

— ५ —

खे वारुणीसक्तिमितेऽथ पत्यौ नीत्वा निशामुद्यति पद्मिनीयम् ।
बन्धात् समुन्मुच्य कथं कथञ्चिन्निजानुषक्तं मधुपं जहाति ॥

— ६ —

परिबुद्धं विदधानः कुवलयमखिलं गिरीशमूर्धानम् ।
अधितिष्ठन् कमलाप्तो निशावसानं करोति ननु चित्रम् ॥

— ७ —

अम्बरमवलम्ब्य करैरुत्तिष्ठन्तं शनैः शनैर्बालम् ।
उपवेशयति निजाङ्के प्राची रक्ता विभावसुं हृद्यम् ॥

— ८ —

राजनि तमःप्रदीप्ते लयं गतेऽयं नु गोपती रक्तः ।
उद्यन् करैरतापै-र्जनानहो लालयन् जयति ॥

— ९ —

जनता मुकुलितहस्ता वसुमन्तं रक्तमण्डलं धीरम् ।
बालमपि तेजसाऽग्र्यं मुक्तकरं भूभृदग्रसरमीडे ॥

# राष्ट्रभक्तेः मौलिकं सूत्रम्

—श्री 'अङ्गारः'—

विश्वस्य अमरवाङ्मयं वेदः पदे-पदे स्वदेशस्य मातृभूमेश्च कृते गौरवमयान् उद्गारान् व्यनक्ति। **माता भूमि पुत्रोऽहं पृथिव्याः**...इत्येतादृशैः गौरवमयैः सूक्तैः स राष्ट्रस्य राष्ट्रवासिनाञ्च मध्ये अखण्डं सुमधुरञ्च स्नेहसूत्रं ग्रथ्नाति। इतिहास-पुराणयुगेऽपि भावनेयम् अतितरां पोषिताऽभवत्। भगवतो रामभद्रस्य एकेन वचनेनैव उक्तिरियं प्रमापयितुं शक्या। ते हि वदन्ति—

**अपि स्वर्णमयी लङ्का न मे लक्ष्मण ! रोचते।**
**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥**

इति।

भारतभूमिविषये तेजस्विनीं गौरवमयीं च धारणामिमां निकटभूतकालं यावत् भारतीसुपुत्रैः संरक्षिता संवर्धिता च। भारतीय-स्वातन्त्र्य-समरस्य अमरसेनापतिभिः क्रान्तिकर्तृ-हरदयाल-सावरकर-सुभाषचन्द्र-प्रभृतिभिः प्राणानपि पणीकृत्य विदेशेष्वपि उषित्वा स्वराष्ट्रं संरक्षितम्। असिधाराव्रतमिदं तैर्महता गौरवेण निर्व्यूढम्। तैः ईप्सितं स्यात्तदा विदेशेष्वपि उत्कृष्टतमं सम्मानं सौविध्यञ्च संप्राप्य सुखेन जीवनयापनं कर्तुं शक्यते स्म। किन्तु सौविध्यजातं तत्सर्वं तृणाय मत्वा प्राणसङ्कटेन ते स्वदेशं प्राप्तास्ते मातृभूमिं दास्यबन्धनतो विमुच्यैव विश्राममलभन्त।

अत एव सुभाषितकार आह—

**अपि घोरविपद्ग्रस्तः स्वराष्ट्रं न त्यजेत् सुधीः।**
**पराष्ट्रं गतो जेता प्रक्षुब्धः पुनरायत्नौ॥**

सुभाषितस्यास्य उपष्टम्भिकाम् एकां कथाम् ऋग्वेदस्य एका ऋक् सूचयति। तां च ऋचं परतः सूचयिष्यामः पूर्वं सा कथैव श्रोतव्या सहृदयैः।

महर्षेः विश्वामित्रस्य एकशतं पुत्रा आसन्। अ अजीगर्तपुत्रः शुनःशेपस्तैः लब्धो यं हि ते कृतकपुत्रत्वे स्वीचक्रुः। न केवलं पुत्रत्वेन, अपितु सर्वेष्वपि ज्येष्ठत्वे श्रेष्ठत्वेन च समुद्घोषयामासुः।

अनेन काण्डेन ऋषिसन्तानेषु औरसेषु पुत्रेषु ए एवाऽऽतङ्कः प्रसृतः। पक्षद्वयं समभवत्। तेष्वर्धो भाग मर्यादावशीभूतो मौनमेव समाश्रितवान्, यस्याग्रणिर्बभूव ऋषिः मधुच्छन्दाः। शिष्टाः पञ्चाशत्पुत्राः कालप्रभावाद् अविनीताः सन्तो विचारयामासुः—'किमेतत्? मूल एव वयं शतं पुत्राः। पैतृकसम्पत्तौ शतांशभाग एकैकस्य कृते भवेत्। तत्रापि अपर एको वृद्धिं गतः। सोऽपि सुमेरुरिव ज्येष्ठः श्रेष्ठश्च। नूनमस्य कठोरः प्रतिवाद करणीय एव समापतितोऽनभ्रम्' इति।

महता रोषेण ते पितरं समागताः। मधुच्छन्दस पुत्रं महर्षेश्च पौत्रं जेतारमपि ते स्वपक्षीयं कृत्वा समा दाय समवेताः पितरमूचुः—'तात! स्वकीयो निर्णय परिवर्तनीयः। किमेतत् भवता प्रवर्तितम्? नो चे गृहाण स्व-गोत्रप्रवरौ तद्गौरवञ्च! सङ्गच्छामो व देशमिमं परित्यज्य परदेशमि'ति।

पित्रा विश्वामित्रेण नैकशः प्रबोधितास्ते। प केनापि एकमपि वचो न गृहीतम्। भ्रातुष्पुत्रेण जेत्र

– २ –

'वैरस्थान' ( बिलोचिस्तान ) - क्वेटाप्रभृतिदेशान् सन्तीर्य ते सर्वे रुष्टा विश्वामित्रपुत्राः आर्यान्यदेशे ( ईरान-देशे ) पारसीकवसतौ सम्प्राप्ताः। आर्यैर्मतभेदं विधाय कतिपये पूर्वत एवाऽत्र समागन्य वसति कृतवन्त आसन्। तैस्तत्र हिन्दूधर्मं परित्यज्य पारसीकधर्मोऽपि स्वीकृतः। भारतीयार्यधर्म इव पारसीकधर्मानुयायिनोऽपि कामम् अग्नि-सूर्याद्युपासनप्रभृतयः कतिपये आचाराः समनुतिष्ठन्तु नाम। यज्ञ-संस्कृतिं तत्कर्मफलप्रदातॄणां देवानाञ्च अस्तित्वं ते जातुचिदपि न स्वीकुर्वते स्म।

हिन्दुस्थानस्य पथभ्रष्टान् ऋषिकुमारान् स्वदेशे समागतान् वीक्ष्य पारसीकनरपतिः अन्तरा परं मुमुदे। महता गौरवेण तेन राज्ञा एते ऋषिबालकाः उच्चपदेषु नियोजिताः। स्वकीयां संस्कृतिं परित्यज्य समागतानां अग्रणीनां स्वपक्षे संग्रहणं कस्यापि कूटनीतिकशासकस्य महती सफलता मन्यते। पारसीक-नरपतिना स्वर्णिमावसरस्यास्य सकलो लाभः सम्पादितोऽप्रमदितेन।

अत्र ऋषिपुत्राणां कृते कस्यापि वस्तुनो न्यूनता नाभवत्। ते हि तत्र सर्वविध-लौकिक-भोगसामग्रीषु परं समासक्ता अभवन्। तथापि भ्रातुष्पुत्रस्य जेतुः अनेन वैदेशिकसौविध्यजातेन चेतः कथमपि समाहितं नाभवत्। मुहुर्मुहुस्तदीय अन्तरात्मा तं बोधयन्नासीत्—

'किमिदमपि जीवनं नाम! यत्र ग्राम्यपशूनामिव देहमात्रपालनातिरिक्ता सुखभोगात् परतरा काऽपि संस्कृतिरेव न विद्यते। न च कुत्रचन मञ्जुलो वेदध्वनिः श्रूयते, न वा क्वचन मधुरसौगन्ध्यवहा धूमलेखा दृशं लोभयति। न कुत्रापि दानस्य प्रवाहः प्रसरति। न वा क्वचन पूजासंभारा विलोक्यन्ते। इन्द्र-मित्र-वरुणादिभिरन्यै अवकाशं गृहीत्वा स्वकार्यभारः पारसीकाधिकारिष्वेव निहितो वर्तते।

जेता कथमपि अनया वैदेशिकसंस्कृत्या अभिभूतो प्रतिशोणितकणे प्रवहमानमासीत् किल, येन तस्मिन् सहज-जेतृत्वस्य प्रभैव सर्वतः प्रसृताऽऽसीत्।

महर्षिपौत्रोऽयं विविधसुखसौविध्यभागपि अन्तरा नितरां परिक्षुब्धो वर्तते स्म। तन्मनो जातुचिदपि शान्तिं नाससाद।

– ३ –

अथ कियता कालेन तस्मिन् परराष्ट्रे राष्ट्रव्यापिनः अकालस्य भीषणं ताण्डवं प्रारभत। अवर्षणेन सर्वत्र हाहाकारः प्रसृतः। सम्राजा प्रजारक्षणाय राजकोशतः कियद्धनं प्रदत्तम्, परं तद्धि तप्ते लौहखण्डे जलबिन्दुरिवाभवत्। अस्यामपि दुःस्थितौ राजकीयाधिकारिणां सुखसौविध्येषु लेशतोऽपि न्यूनता नाभवत्। साधारणजनस्य पुनर्दशा अतितरां दयनीयतां गच्छन्ती आसीत्।

जेता सर्वमेतद् दृष्ट्वा शुशोच—महद्भयमुपस्थितमिदम्। यदि नाम भारते एतादृशी स्थितिः स्यात् तच्छासकाः नूनमेतेभ्यः पारसीकशासकेभ्यः अतितरां कृपालवः स्युः। सर्वे ऋषयो मिलित्वा कारीरीयागेन देवराजं परितोष्य अवर्षणाऽकालकष्टनिवारणाय दृढं प्रयतेरन्। तदा मदीया स्वल्पतमा शक्तिरपि तत्र विनियुक्ता स्यात्। किन्तु राष्ट्रस्यास्य शासकेषु कर्म-कर्मफल-कर्मदातृ-देवादिषु मनागपि श्रद्धा नास्ति, तदा कथमिदं सङ्कटं परिहृतं भवेत्?

जेतुः मनःक्षोभः परां कोटिमुपागतः। प्रजानां कष्टैः स विचलितोऽभवत्। एतादृशे राष्ट्रे निवासापेक्षया स्वराष्ट्र-प्रत्यावर्तनमेव तेन वरमभिमतम्।

पितृव्यान् असंसूच्यैव जेता तत्कालं स्वदेशाय प्रस्थितः। कतिपयैरेव अहोभिः स्वदेशं प्राप्य स्वापराधाय क्षमायाचनां कृतवता तेन देवराजः इन्द्र प्रार्थितः—'प्रभो, भवतां दयालुतया भक्तेभ्यो लोकोत्तराभीष्टदातृत्वेन मत्पितृव्या अपि मदनुकरणं करिष्यन्ति। अद्याप्यहम् आत्मानम् आर्यधर्मानुयायिनं हिन्दं मन्ये। पुनः कदापि पर-

## श्री सम्पूर्णानन्दान् प्रति !

भवन्ति रत्नानि सदा पयोधेर्गिलन् पयोधिर्न तु तानि दृष्टः ।
सूपे नृरत्नानि गिलस्यपि त्वं कोऽयं विधिः कालपयोनिधे ! ते ॥ १ ॥
न विस्मृतिं यावदमर्त्यवाणी - पीयूषपूताः पुरुषा गता नः ।
तावन्नवोऽयं विधिनापघातो दत्तो द्युवाणीमहितो गतोऽन्यः ॥ २ ॥
कायस्थ-गगन-लोकः कालुष्यं संप्रमुष्य सुधयोन्नः ।
संपूर्णानन्देन हि, नहि नहि मद्यापि समा पूर्णा ॥ ३ ॥
सम्पूर्णानन्द ! यातस्त्वं, दिवं दत्त्वा यशो भुवे ।
शल्यं तु हृदयेऽस्माकं, निखातं सुदृढं त्वया ॥ ४ ॥
हन्त ते जीवनज्योतिर्यदस्मान् प्रत्यदीप्यत । तज्जीवनस्य सन्देशगीतमद्यापि राति नः ॥ ५ ॥
गाढं संस्कृतपाण्डित्यं गवेषणपुरस्कृतम् । दिवं याता त्वया कस्मिन् पात्रे सुस्थापितं वद ॥ ६ ॥
ब्राह्मणान् सावधानान् प्रकुर्वन् गुणान् पूजयन् मानयन् धर्मरीतिं स्थिराम् ।
प्रीणयन् साधु विद्वज्जनान् संस्कृतौ संस्कृतस्यैकनिष्ठस्त्वमास्से क नु ? ॥ ७ ॥
पश्याम कुत्र ते छायां स्वच्छाभां भूतलेऽधुना ।
अच्छायः सन् गतस्त्वं तु स्वर्गलोकं महीतलात् ॥ ८ ॥

—श्री कविवराः लक्ष्मीनारायण द्विवेदाः

लेशतोऽपि मनःसमाधानम् । नूनं कोऽपि राष्ट्रभक्तः स्वराष्ट्रस्य स्वराष्ट्रनायकस्य च छत्रच्छायायामेव समाधानभाग् भवितुमर्हति ।

देवेन्द्रेण नैकैः आशीर्भिः संयोज्य जेता मन्त्रद्रष्टृपदे प्रतिष्ठापितः । देवेन्द्रकृपया जेत्रा एको मन्त्रो दृष्टः । स च इत्थम्—

**तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।**
**उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥**
( ऋ० १.११.६ )

ऋचोऽयमर्थः—शूर विक्रान्त इन्द्र ! अहं मधुच्छन्दसः पुत्रो जेता । तव रातिभिः त्वदीयैर्दानैः, स्वोपासकेभ्यः प्रदीयमानैः पुरस्कारैः वरैर्वा । समाकृष्ट इति शेषः । सिन्धुमावदन् आत्मानं हिन्दूम् आर्यम्, आवदन् प्रतिजानानः । अनार्योऽप्यमिति मत्वा नोपेक्षणीय इति तात्पर्यम् प्रत्यायम् प्रतिनिवृत्तवान् प्रत्यागतवान् । प्रतिपूर्वात् इ लङि उत्तमपुरुषैकवचनमिदम् । 'हरितः सरितः सरस्व हरस्वत्यः' (निघण्टुः १.१३, १२.१३, ३१-३२) इत्य सकारहकारयोः पर्यायेण उच्चारणस्य सुदृष्टत्वेन सि मित्यस्य हिन्दुपर्यायित्वसम्भवात् । आशंसे च न केवलम् मेव, अपरेऽपि मम पितृव्याः आयायिण-आयान्य-ईरा दिनामभिः प्रख्यातं परराष्ट्रं यज्ञ-देवार्चनादिवर्जितं म सह गतास्तेऽपि । हे गिर्वणः स्तुतिभिर्वणनीय वनन सम्भजनीय इन्द्र । ते तव महिमानं विदुः विजानी छन्दसि कालानियमात् । विज्ञाय च याजकेभ्यो मनोऽ लषितं ददतस्तव कारवः स्तोतारः सन्त उपाति त्वत्समक्षमागच्छेयुः, त्वां स्वदेवत्वेन अङ्गीकुर्युरिति ।

पूर्वतोऽनुवृत्तम्—४८

# क्षत्रपति-महाकाव्यम्

—श्री उमाशङ्कर शर्मा त्रिपाठी—

[ आंग्लभाषा-प्राध्यापकः—काशी-विद्यापीठम्, वाराणसी ]

॥ अथ अष्टादशः सर्गः ॥

अथ प्रतीक्षोत्सुकचित्तगर्भा
स्वराज्यसङ्कल्पवतां शुभाशा ।
शिवेऽमरद्रौ द्विजलोकजुष्टे
ननन्द लब्धुं द्रुतमिष्टदोहम् ॥ १ ॥

हुताशसाक्ष्येन विनाऽपि रागा-
न्नृपाङ्कभोगोत्सव-बृंहितात्मा ।
जनापवादा[1]ऽसहना नृपश्रीः
राज्याभिषेकाय शिवं नुनोद ॥ २ ॥

समानगोत्रै[2]स्थिति-पुण्यभाजः
प्रायः स्वभावस्खलनात् परोक्षम् ।
असंयतोक्ति-व्यवहारदोषा-
ज्जनेशखेदाय जनाः बभूवुः ॥ ३ ॥

अजस्रयुद्धोद्यम-कीर्तितेऽपि
बलाधिपे को नृपताभिमानः ।
दृषत्समूहोच्चय-मण्डितेऽपि
क गण्डशैले हिमवत्प्रतिष्ठा ॥ ४ ॥

विदेश्यभूपाल-तिरस्कृतास्ते
महोद्यमार्याधिप-सख्यकामाः ।
प्रतीयुरार्याऽवनिपा न लक्ष्मीं
शिवाश्रितां चापलदोषमुक्ताम् ॥ ५ ॥

ध्रुवं प्रजा वारविलासिनीव
नष्टैव सामान्यजनोपभुक्ता ।
शिवे[3] रतानित्थमधिक्षिपन्ती
प्रतीपभूपप्रकृति-र्जहास ॥ ६ ॥

अशाणसंस्कारपरिष्कृतेऽपि
तस्मिन् मणौ दीपितसर्ववर्णे ।
परम्परा रत्नविदां न मेने
स्वराज्यलक्ष्मीस्तनचुम्बि पुण्यम् ॥ ७ ॥

वर्त्माकुलोऽपि श्रुतिवर्त्मगोप्ता
मुक्तस्पृहोऽपि त्रिदिवेशभूतिः ।
स्वप्नेऽपि नाऽसौ विधिविप्रतीपं
सेहेऽभिषेकं स्वकृते नरेन्द्रः ॥ ८ ॥

सदाग्रहः किन्तु विवेकभाजां
तद्विघ्नमालोच्य मनोरथघ्नम् ।
द्रुतं प्रपेदे विचिकित्सितुं तत्
सम्मर्शिनो ज्ञाननिरस्तपङ्कान् ॥ ९ ॥

क्रमेण याथार्थ्यनिबोधिनीव
वार्ताऽऽतुरेवाऽऽप्तुमनामयत्वम् ।
विद्यामहातीर्थवतां समूहे
वाराणसीमप्यगमत् शिवेशाम् ॥ १० ॥

विश्वेश्वराऽम्भोजपदैकवृत्ते
र्विश्वेश्वरस्य श्रुतिसिद्धधाम्नः ।
प्रभेव सूर्यस्य तमो निहन्तु-
मृतम्भरा गीरनघा जुघूषे ॥ ११ ॥

जयत्वनात्म-प्रभवान्धकार-
प्रबन्धभित् सद्वसतिः सुविद्या ।
या नीरपूरादसतोऽप्यभीता
क्षीरं यथा विन्दति सत्पदार्थम् ॥ १२ ॥

---

१. जनप्रवादाः । २. वंशः । ३. शिवाश्रिता ।

१. पर प्रथा इति पाठभेदः ।

आसेचनं स्निग्धमयूखजालं
पङ्केऽपि रत्नं यदि नाम लोकः।
समुत्सुकोऽप्युत्सहते न नेतुं
तन्निश्चितं रत्नविदामपुण्यम् ॥ १३ ॥

बिभर्तु सामान्यविधौ स्वरागं
परम्परा प्राकृतबोधभूमिः।
यस्मात् स्वयं सा लभते स्वरूपं
तस्याः प्रमाणं किमपेक्षते सः ॥ १४ ॥

युगान्तमेघ-स्तनितानुभावां
यद्धुङ्कृतिं नागवरा निशम्य।
सवेपथुः स्तब्धदृशः पतन्ति
ससंशया तस्य मृगेन्द्रता किम् ॥ १५ ॥

यद्रक्षिता वेदवती धरित्री
यच्छासने शास्त्रपथोऽस्तबाधः।
राजन्यवर्णादपरा परा का
तस्य प्रतिष्ठाऽवनिदेवभाजः ॥ १६ ॥

सपत्ननिर्बन्धविलुण्ठितेऽसि-
न्नद्याऽपि देशे स्वकुलाभिमानः।
विच्छिन्नशाखाप्रचयेऽपि चित्रं
स्थाणौ सुपक्वान्नफलप्रसक्तिः ॥ १७ ॥

वर्णः क्रिया ज्ञातिरथो स्वभावो
द्विषत्पदस्थादपयान्ति देशात्।
स्वस्थेषु यत्तेषु कदापि नैव
स्वतन्त्रता तामवनिं जहाति ॥ १८ ॥

पुरा शकाभीरकुषाणवीरा-
वलुप्तवर्णाश्रम-सत्प्रथा भूः।
गुणस्वभावादिकषेन भूय-
स्तेने चतुर्वर्णवतीं व्यवस्थाम् ॥ १९ ॥

मिथः प्रतीपव्यवहारपद्या-
नेकैकमुद्युक्त - विदेश्यवीराः। ...
वृकोपमाः शस्त्ररमानपीमा-
नार्यावनीशानजयन्... समीके ॥ २० ॥

इमे महाराष्ट्रवरास्तु दैवात्
स्वजीवसन्धामिव शौर्यकीर्तिम्।
सपत्नसैन्यै - र्विजितामवेक्ष्य
जहुर्विदेहा इव जन्मभूमिम् ॥ २१ ॥

पुरा सुरारातिदशास्यहन्ता
रामोऽपि यस्मिन् समवाप जन्म।
शाखेव तस्मात् प्रसृतप्रभावा
'सिसोदिया'[1] मानधनाऽधुनाऽपि ॥ २२ ॥

श्रुतं न लोके सिकतासु तैल-
मिति प्रवादं परिहर्तुकामा।
निश्शङ्करक्तं समरे क्षरन्ती
यत्रारिकम्पं सिकता तनोति ॥ २३ ॥

तां राजपुत्रप्रभवस्थलीं ते
स्वजन्मदात्रीमिव जन्मदात्रीम्।
हित्वा नदीशैलवनावरुद्धे
दूरं महाराष्ट्रपदे निपेतुः ॥ २४ ॥

भुवः प्रतिष्ठा महितैव पूर्वैः
शास्त्रस्य शस्त्रस्य च नन्दितस्य।
परावधिस्तन्न मुधाऽध्वरोधो
लोकस्थितिः किन्तु निरस्तबाधा ॥ २५ ॥

नूनं पराधीनवतस्तु पुंसो
व्यपेतबाधं स्वपथाभिमानः।
विडम्बनैवाऽऽमिषलोलवृत्तेः
काकस्य मेध्यव्रतसाधनेव ॥ २६ ॥

स्वतन्त्रतापर्व - शुभावतारे
स्वयं नृपश्रीस्तमरातिवज्रम्।
शचीव कल्पद्रुममञ्जरीभि-
र्जगद्धितायार्चति शक्रशक्तिम् ॥ २७ ॥

---

१. 'सिसोदिया' क्षत्रियवंशेष्वन्यतमः—राजस्थाने मेवाडशासकाः राणा प्रतापसिंह महाराजाः सिसोदिया ...

पयोऽनलः खं सविताऽनिलो भूः
लोकःप्रसू - ज्ञातमवैरता च ।
निमित्ततां यान्ति यथाऽन्यशुद्धौ
तथैव शक्रप्रतिमोऽयमुर्व्याम् ॥ २८ ॥

अज्ञातशीलेऽपि शिशौ स्वभावः
किं सत्यकामे न ररक्ष वर्णम् ।
बाह्यप्रमाणैरथवा कथं वा
शुद्धिर्मनःसाक्ष्यवती परीक्ष्या ॥ २९ ॥

स्वातन्त्र्यरक्षाव्रतजीवितेन
रत्नप्रसू - र्नूनमनेन धात्री ।
आचारदेहो रिपुकर्षितोऽपि
श्रेयांसि सूते पुनरार्यधर्मः ॥ ३० ॥

धर्मस्य लोकाभ्युदयप्रवृत्ते-
राप्तोदितं शास्त्रमनन्तवर्त्म ।
अतो यथार्हानुसरेण मेधा
प्रामाण्यमाकल्पति तत्प्रयोगे ॥ ३१ ॥

यथैकलक्ष्योऽपि हरिर्जनानां
गुणक्रियानन्त्यमुपैति वर्त्म ।
पूतान्तरात्माऽपि तथैव धर्मः
कालादिभावा - नुररीकरोति ॥ ३२ ॥

निरुद्धमम्भः कृमिजालसृति-
स्यदोऽप्रवाधो हि निसर्गभावः ।
ऋतेन सत्येन तपोभिरिष्टः
सतां तु धर्मो धिषणां वृणोति ॥ ३३ ॥

क्व दासवृत्तेः परलोकपद्या
श्रेयोऽथ वा कुत्र फलोपलब्धिः ।
तदेव पन्थाः यदसूनपीष्टान्
स्वातन्त्र्ययागे पुरुषो जुहोति ॥ ३४ ॥

दुराग्रहोऽयं किमरातिभाजा-
माहोस्विदस्वस्थधियां प्रमादः ।
यदार्यभूशत्रु - पदानुलग्नाः
स्वातन्त्र्यवेलामपि ते द्विषन्ति ॥ ३५ ॥

दुरात्मलोकोज्झितसिक्थवर्ती
पदान्तलग्नो नयनेङ्गितस्थः ।
स्वजातिमात्सर्यभरोऽसदात्मा
कौलेयको वा परवान् जनो वा ॥ ३६ ॥

मा धिक्कृताक्षेपवचोभिरस्मा-
नुत्पत्स्यमानार्यजनाः हसन्तु ।
ऐतिह्यगाथामसदाग्रहो नो
मा दूषयेदाप्रलयं तमोभिः ॥ ३७ ॥

कालाद् धृतन्यायतुलादजोऽपि
बिभेत्यनागाः किमुतान्यमर्त्याः ।
अतो भविष्यत्परिणामदृष्टिः
स्वस्था मतिर्विन्दति वर्तमानम् ॥ ३८ ॥

अतोऽभिषिच्यैन - मपेतपङ्कं
प्रजाधिराजार्हपथेन राज्ये ।
दिशां प्रतीक्षोत्सुकशून्यरन्ध्राः
श्रुतीः श्रुतिः पूरयतु स्वघोषैः ॥ ३९ ॥

छन्दस्वती वेदविदामपापा
मखक्रियाऽन्वर्थ - फलप्रसूतिः ।
ब्राह्मी द्विजानां पुनरेतु लोके
विश्रब्धकल्याणजुषं प्रतिष्ठाम् ॥ ४० ॥

तां दुर्दिनाम्भोदघटामिवाऽसौ
शङ्कां समुद्धूय मरुत्प्रभावः ।
प्रातः प्रतीक्षोत्सुकमानसाना-
मन्वग्रहील्लोकमिव प्रजानाम् ॥ ४१ ॥

सन्मानसं तं सुजनैकवासं
सर्वा दिशः शून्यकला विहाय ।
आमन्त्रिता हंसवराः द्विजेन्द्रा
आनन्दयन् भूभृतमातिथेयम् ॥ ४२ ॥

लोकोदयप्रीत - मनोरथानां
सतां बुधानां पृथिवीभृताञ्च ।
पङ्क्तिस्तमार्याधिपमाजगाम
धर्मं यथाऽन्वेति शुभप्रवृत्तिः ॥ ४३ ॥

( क्रमशः )

# वैदिकाऽवैदिक-दर्शन-मीमांसा

— श्री जगन्नाथ श्रीधरशास्त्री पदे —

बृहदारण्यकोपनिषद्भाष्ये आचार्यैरपि प्रत्याख्यातोऽयं पक्षः। तथाहि—

**यथेच्छादीनामप्यात्मधर्मं कल्पयन्तो वैशेषिका नैयायिकाश्च उपनिषच्छास्त्रार्थेन न सङ्गच्छन्ति इति।** ( बृ० उ० भा० ४.३.२२ )

एवं चात्र पक्षद्वयम्। कामो देहधर्म इति वैदिकानां पक्षः। काम आत्मधर्म इति तार्किकाणां पक्षः। तार्किकाणां पक्षे कामस्य फलं सुखं दुःखं च। सुखदुःखान्यतरसाक्षात्कारो भोगो वा। सोऽपि आत्मधर्म एव। सुखदुःखहेतू पुण्यापुण्ये चात्मधर्म एव। धर्मात् सुखमधर्माद् दुःखमिति सिद्धान्तात्। अनुक्षणविनाशिनः कर्मणः कालान्तरभावि सुखं दुःखं वा फलं भवतीत्यनुपपन्नम्। अभावाद्भावानुत्पत्तेः। अपूर्वस्याचेतनस्य प्रवृत्त्यनुपपत्तेः। अत ईश्वरः फलं ददातीति—

**फलमत उपपत्तेः।** ( ब्र० सू० ३.२.३८ ) इति फलाधिकरणे उत्तरमीमांसायां सिद्धान्तितम्। सृज्यमान-प्राणिधर्माधर्मापेक्षया ईश्वरः फलं ददातीति ईश्वरस्य वैषम्य-नैर्घृण्यदोषप्रसक्तिः वैषम्य-नैर्घृण्याधिकरणे (ब्र० सू० २.१.३४–३६) परिहृता।

एतदुक्तं भवति—तार्किकाणां पक्षे सुखं दुःखं चात्मधर्मः। सुखदुःख-प्राप्तिकारणं पुण्यापुण्ये। सुखदुःख-फलप्रदाता च ईश्वरः। सिद्धान्तोऽयं तर्के प्रतिष्ठितः। तथापि पक्षेऽस्मिन्नाद्या सृष्टिस्तुल्यैव प्राप्नोति कर्माविभागात्। अत तर्कमार्गेण दातुं न शक्यत इति सूत्रकारैः भाष्यकारैश्च **उपपद्यते चाप्युपलभ्यते च** ( ब्र० सू० २.१.३६ ) इति सूत्रे श्रुतिप्रामाण्यमेव उपन्यस्तम्। श्रुतिप्रामाण्योपन्यासात् श्रुतिप्रामाण्यमन्तरा प्रमाणान्तरैः वैषम्य-नैर्घृण्यदोषपरिहारोऽशक्य एवेति ध्वनितम्। श्रौता एव श्रुतिप्रामाण्योपन्यासेन परिहारमङ्गीकरिष्यन्ति न तार्किका इति वैषम्य-नैर्घृण्यदोषस्तदवस्थ एव। तस्माद् देहात्मवादे प्रतिष्ठितोऽयं सिद्धान्तः प्रत्याख्यानयोग्य एव।

कामो देहधर्म इति वैदिकानां पक्षे तु सुख-दुःखान्यतर-साक्षात्कारो भोगोऽपि देहधर्म एव। तदर्थं हेतुत्वेन पुण्यापुण्यत्व-कल्पना, फलप्रदत्वेन ईश्वराभ्युपगमोऽपि देहात्मवाद एव। आत्मवादे कामस्याभाव एव।

**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्।**

इति गीताशास्त्रे ( ३.४१ ) ज्ञान-विज्ञाननाशनः तामसः कामो राजसश्चार्थरूपः कामः सर्वपापमूलभूतः हन्तव्य एवेत्युपदिष्टम्।

**जहि शत्रुं महाबाहो कामरूपं दुरासदम्।**
( गीता ३.४३ )

इत्यत्र सात्त्विकस्य कामस्य इहामुत्रभोगाय क्रियमाणस्य काम्यस्य धर्मस्यापि घात उक्तः। नहि कामो द्रव्यमिति कामस्य घातेन काम्यस्य जगत एव घात उक्तः। एवं निस्त्रैगुण्ये आत्मधर्मे अवस्थानमुक्तम्। मोक्षोऽपि बद्धस्य दुःखितस्य सात्त्विकः काम एवेति तस्यापि परित्याग उक्तः। एवं त्रिविधो-

ऽपि कामः समूलघातं हत एव। एतेन तार्किकाणां धर्मार्थकाममोक्षाश्चतुर्विधाः पुरुषार्था भगवता समूलघातं घातिताः, वैदिकश्च धर्मधर्मि-सिद्धान्तः प्रस्थापित इति द्रष्टव्यम्।

कामो बुद्धिपर्यन्तमेवाऽवतिष्ठते। आत्मना साकं तस्य सम्बन्ध एव नास्तीति नात्मधर्मः। तथा हि ईश्वरगीतासु—

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।**
( गी० ३.४० )

इति आत्मैकत्ववादे कामस्य आत्मधर्मत्वाभावात् सुखदुःखकल्पना तद्धेतुत्वेन पुण्यापुण्यकल्पना ईश्वराभ्युपगमश्च नास्ति। वैषम्य-नैर्घृण्यदोषपरिहारार्थं च संसारस्य अनादित्वकल्पनमपि नास्ति, संसारस्य मिथ्यात्वाभ्युपगमात्। वैषम्यनैर्घृण्याधिकरणं सूत्रकारैरुपन्यस्तमपि अविद्यावद्विषयमिति यथासूत्रं व्याख्याय स्थानद्वये प्रत्याख्यातमाचार्यैः स्वकीये भाष्ये, वैदिकश्च सिद्धान्तः प्रस्थापितः। तथा हि—

हीनमध्यमोत्तमभावेन हि प्राणिभेदान् विदधत ईश्वरस्य रागद्वेषादि-दोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत। प्राणिकर्मापेक्षितत्वाददोष इति चेन्न। कर्मेश्वरयोः प्रवर्त्य - प्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। न अनादित्वादिति चेन्न। वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषाद् अन्ध-परम्परान्यायापत्तेः।
( शां० भा० २.२.३७ )

न ह्यात्मनः शरीरात्माभिमानलक्षणं मिथ्याज्ञानं मुक्त्वाऽन्यतः सशरीरत्वं शक्यं कल्पयितुम्। नित्यमशरीरत्वमकर्मनिमित्तत्वादित्यवोचाम। तत्कृतधर्माधर्मनिमित्तं सशरीरत्वमिति चेन्न शरीरसम्बन्धस्या-

सिद्धत्वाद् धर्माधर्मयोरात्मकृतत्वासिद्धेः। शरीरसम्बन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गादन्धपरम्परैषाऽनादित्वकल्पना। क्रियासमवायाभावाच्चात्मनः कर्तृत्वानुपपत्तेः। ( शां० भा० १.१.४ ) इति।

योगसूत्रेऽपि—

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः।**
( यो० सू०, २.१२ )

**सति मूले तद्विपाको जात्यायुर्भोगाः।**
( यो० सू०, २.१३ )

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्।**
( यो० सू०, २.१४ )

इति अविद्यादिक्लेशमूलः कर्माशयस्तद्विपाको जात्यायुर्भोगास्तेषां फलं ह्लादः परितापश्चेत्युक्तम्। अविद्याभावे कर्माशयाभावो भोगाभावः सुखःदुखाभावश्च। तस्माद्विद्यावतामात्मवादिनां धर्मधर्मिवादः। प्रतिपदार्थमधर्मनाशनं धर्मप्रतिष्ठा च। तथा चोक्तं योगशास्त्रे—**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः।** ( यो० सू० ४.२९ )। **ततः क्लेशकर्मनिवृत्तिः।** ( ४.३० )।

अनात्मवादे सात्त्विकः कामः इहामुत्रभोगार्थं क्रियमाणं कर्मैव धर्मः। स चाधर्मोऽपि धर्म इत्युपचर्यते। फलमिहामुत्र भोगः। मीमांसकैः काम्यं कर्म निषिद्धमेव। नित्यनैमित्तिकस्यापि कर्मणो न ममेति **प्रवृत्तिदोषजनितोऽर्थः फलम्** ( न्या० सू० १.१.२० ) इति कर्तृगामिफलत्याग एव विहितः।

वस्तुतस्तु क्रियायाः फलं कर्मगाम्येव, न कर्तृगामि। क्रियायाः कर्तृगामिफलस्य हेतुः काम एव, न क्रिया। अत एव कामुकानां क्रियायाः अपि स्वेष्टस्य फलस्य कर्तृगामित्वमिच्छतां कृते फल- ... फलप्राप्तिश्च क्रियाया

अभिसन्धिपूर्वको विनिमय एव न, क्रियायाः फलम्। अत एव गीताशास्त्रे ( १८.२. )—

**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः।**

इति नित्य-नैमित्तिकानामपि कर्मणां फलत्याग उक्तः। अत्र फलत्यागो नाम फलेच्छायास्त्यागः। क्रियाफलस्य कर्मगामित्वात् कर्तृगामित्वाभावात्। तथापि द्वैतिनां देहात्मवादिनां क्रियासु प्रवृत्तिर्न भवेदिति प्ररोचनार्थं नित्यनैमित्तिककर्मणामपि फलमर्थवादवाक्यैः श्रुत्या श्रावितम्।

तस्माद् धर्मस्य फलं धर्मिप्रतिष्ठैव। कर्मणः फलवत्त्वनियमात्। **फलयुक्तानि कर्माणि** ( का० श्रौ० सू० १.१.२ ) इति सूत्रेण निर्धारितः क्रियाफलयोरविनाभावः सम्बन्धः। स च कर्मणा साकमेव। फलाश्रयं कर्म, व्यापाराश्रयः कर्तेति सिद्धान्तात्। क्रियाफलस्य कर्त्रा सह सम्बन्धाभावात् कामुकैरेव क्रियाफलस्य कर्तृगामित्वसम्भावनात् कामनाशाय कर्मफलत्यागः सर्वत्र वैदिकानाम्। कर्म त्यागार्थं धर्मिप्रतिष्ठार्थमेव, नेष्टफलभोगार्थम्। गीताशास्त्रेऽपि पुरुषार्थरूपस्य धर्म इत्युपचर्यमाणस्य कामस्य निन्दैव कृता। तथाहि (गी० २.४२–४४)–

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम्।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति॥**
**भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम्।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते॥**

अत्र मीमांसकमतं दूषितं भगवतेति न भ्रमितव्यम्। धर्मवादिभिः मीमांसकैर्निषिद्धमेव काम्यं कर्म, न धर्म इति स्वीकृतम्। कामहतानामधर्मं धर्म इत्युपचरतां भोगापवर्गप्रतिष्ठापकानां पुरुषार्थवादिनां तार्किकाणामेव मतमत्र दूषितमित्यवगन्तव्यम्। ते हि भोगैश्वर्यप्रसक्ताः (गीता २.४४), त्यागिनो हि वैदिकाः धर्मप्रतिष्ठापकाः।

कामहतानाम् अनात्मवादिनामिह भोगः त्रैलोक्याधिपत्यप्राप्त्या सम्पद्यते। तथा हि—

**पुराशुम्भनिशुम्भाख्यामसुराभ्यां शचीपतेः।**
**त्रैलोक्यं यज्ञभागाश्च हृता मदबलाश्रयात्॥**
**मम त्रैलोक्यमखिलं मम देवा वशानुगाः।**
**यज्ञभागानहं सर्वानुपाश्नामि पृथक् पृथक्॥**
**सत्यमुक्तं त्वया नात्र मिथ्या किञ्चित् त्वयोदितम्।**
**त्रैलोक्याधिपतिः शुम्भो निशुम्भश्चापि तादृशः॥**
( सप्तशती ५. १, ५९, ६७ ) इति।

अमुत्र भोगश्च प्राजापत्यप्राप्त्या सम्पद्यते। कामहतानामिहामुत्र-भोगपरम्परा अकामहतानाम् आनन्दपरम्परा च बृहदारण्यके तैत्तिरीये च विस्पष्टं श्रूयते। तथा हि—

**स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः। स वै मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः॥ ३२॥**

**अथ ये शतं मनुष्याणामानन्दाः, स एकः पितॄणां जितलोकानामानन्दः॥ ३३॥**

**अथ ये शतं पितॄणां जितलोकानामानन्दाः, स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते॥ ३४॥**

**अथ ये शतं कर्मदेवानामानन्दाः, स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः॥ ३५॥**

**अथ ये शतमाजानदेवानामानन्दाः, स एको देवलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः॥ ३६॥**

**अथ ये शतं देवलोक आनन्दाः, स एको गन्धर्वलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः॥ ३७॥**

अथ ये शतं गन्धर्वलोक आनन्दाः, स एकः प्रजापतेरानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥३८॥

अथ ये शतं प्रजापतिलोक आनन्दाः, स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः। एष ब्रह्मलोकः सम्राडिति हैतमनुशशासैतदमृतम्। सोऽहं भगवते सहस्रं ददामि। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ ३९ ॥

(मा० बृ० उ० ४-१०-३२, ३९, का० बृ० ४.३.३३)

युवा स्यात् साधु युवाध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तेन पूर्णा स्यात्। स एको मानुष आनन्दः।

ते ये शतं मानुषा आनन्दाः, स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः, स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं देवगन्धर्वाणामानन्दाः, स एकः पितॄणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः, स एक आजानजानां देवानामानन्दाः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतमाजानजानां देवानामानन्दाः, स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपियन्ति। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं कर्मदेवानामनन्दाः, स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं देवानामानन्दाः, स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतमिन्द्रस्यानन्दाः, स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं बृहस्पतेरानन्दाः, स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य।

ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य।

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्।

( तैत्ति० उप० २.७ )

वेदान्तद्वयेऽपि कामहतानां तार्किकाणामासुरीं सम्पदमभिजातानाम् इहामुत्रभोगो भोगानन्दपरम्परा चा प्रदर्शिता। साऽऽनन्दपरम्परा ब्रह्मानन्दे पर्यवस्यति। अकामहतानां निस्त्रैगुण्यानां श्रोत्रियाणां तु ब्रह्मानन्द एव। श्रोत्रियाणामाजानदेवैः साम्यं बृहदारण्यके प्रदर्शितम्। अत एव श्रोत्रिया भूदेवाः। ब्रह्मनिष्ठानां श्रोत्रियाणामानन्दपरम्परा नास्ति, ब्रह्मानन्दस्य निरतिशयत्वात्। कामहतानामिह भोगस्य परिसमाप्तिः सर्वस्याः पृथिव्य आधिपत्यप्राप्त्या परिसमाप्यते। अमुत्र भोगः प्राजापत्यप्राप्त्या पर्यवस्यति। वैदिकानामकामहतत्वाद् भोगो नास्ति। सुखं दुःखं च देहधर्मो नात्मधर्म इत्यात्मैकत्ववादिनां वैदिकानां देहधर्मः सुखदुःखान्यतरसाक्षात्काररूपो भोगोऽपि नास्ति, अशरीरत्वात्। तथा चोक्तम् आचार्यैर्भाष्ये—'तस्मात् मिथ्याप्रत्ययनिमित्तत्वात् सशरीरस्य सिद्धम्, जीवतोऽपि विदुषोऽशरीरत्वात्। तथा च ब्रह्मविद्विषया श्रुतिः—'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते। अथाऽयमशरीरीऽमृतः प्राणो ब्रह्मैव तेज एव" ( बृ० ४.४.७ )। ( शां० भा० १.१.४ ) इति। केवलं धर्म एव स चानन्दः। आनन्दो हि ब्रह्मधर्मः। आनन्दमयं ब्रह्मेति निर्णीतम् आनन्दमयाधिकरणे ब्रह्मधर्मप्राकट्यात् श्रोत्रियस्य देहपरिच्छिन्नस्यापि आत्मनो ब्रह्मसम्पत्तिर्ब्रह्मभावापत्तिर्वा वेदान्तद्वयेऽपि प्रदर्शिता।

( क्रमशः )

# भाषा कदापि समस्या न भवति

—सुश्री कुसुम कालेकर, एम० ए०, शास्त्री—

भाषायाः प्रारम्भिकं स्वरूपं साङ्केतिकमासीदिति भाषाविज्ञानविदां मतम्। यथा यथा मानवसभ्यता समुल्ललास तथा तथा भाषाऽपि सौष्ठवं लेभे। तदा-तदा विशिष्ट-विपश्चिन्निकषायमाणायां प्रतिभायां परीक्षिता भाषा सुसंस्कृता बभूव। साम्प्रतिकीनां विभिन्नभाषाणां तद्भाषिणाञ्च अध्ययनेन स्फुटं प्रतीयते यदेतासां विविधभाषाणां मूलस्रोतोरूपा कापि भाषा नूनमासीत्। केचन तत्पदे गीर्वाणभाषामधिष्ठापयन्ति। अन्ये च विवादस्पदमेवेदमिति नाङ्गीकुर्वन्ति। भवतु, भाषाया उपादेयत्वे विचार्यमाणे भावाभिव्यक्तिरेव तत्र प्रधानकारणं स्फुटं भवति।

प्राञ्चैरपि शब्दद्वारा प्रकटितानां भावानां व्यङ्ग्यत्वं स्वीकृतम्। तत्र काव्यत्वं निराकर्तुश्च चमत्काराभाव उक्तः। यथा 'जलम्' इत्यत्र ज-ल-वर्णयोः न कोऽप्यर्थः, अपितु तद्वर्णाभ्यां तृषाशमन-प्रयोजक-द्रवपदार्थ एव व्यज्यते। स्वैरेव शब्दैः विचाराः व्यज्यन्ते। तत्तत्-पदार्थेषु सङ्केतितान् शब्दान् श्रुत्वा व्यज्यमानं भावं बुद्धयाऽनुभवामो वयम्। एवञ्च भाषया प्रकटितानां विचाराणामेव प्राधान्यमापतति।

एते विचाराः पुनर्ग्राम्याश्चेत्तदा सुललितैः शब्दैः संवलिता अपि मनःक्षोभाय एव जायन्ते। किञ्च वाक्पाटवाभावेऽपि मधुरा भावाः कथं हृदयमावर्जयन्तीति अनुभवैकगम्यमेव। अत एव कापि भवतु भाषा शब्दो वा, तेन स्फुटीकृतानां विचाराणामेव औचित्यानौचित्यं विचारणीयम्।

मानव-सभ्यतायाः सुसंस्कृतेश्च परिज्ञानं तदाचाराविचारेण, वेषभूषया च जायते। सुसंस्कृतानां प्रोज्ज्वलानां विचाराणां बाह्यप्रदर्शनकरी एवास्माकं वेषभूषा, भाषा च। नूनं शोभनानां भावानां श्लाघनीया अभिव्यक्तिरेव भाषायाः समुज्ज्वल आदर्शः!

परमधुना अस्माकं कृते भाषा-तत्त्वमिदं महतीं समस्यां गतमास्ते। नैके जनाः पृथक्-पृथक् स्वकीयान् विचारान् प्रकटयन्तः स्वस्य स्वातन्त्र्यप्रियतां द्योतयन्ति। प्रतिसमुदायं मतभेदात् भाषायाः विषये एकमतमसम्भवमेव संवृत्तम्।

मम तु इदं प्रतिभाति यद् भाषायाः कापि समस्यैव नास्ति। विचाराः शुद्धाश्चेद् भाषायाः शुद्धता पवित्रता च स्वभावसिद्धैव। कापि भवतु नाम भाषा, तया प्रकटितानां भावानामेव प्राधान्यम्। ते विचारा यदि श्रेष्ठाः पूर्णतया भारतीयाश्चेत्, तदैव वयं वस्तुतः स्वात्मानं भारतीयं वक्तुं शक्नुमः। यद्यस्माकं हृदये स्वराष्ट्रे गौरवान्वितानां पूर्वजेषु, पवित्रायाम्, हिन्दूसंस्कृतौ च कश्चित् आदरः स्नेहश्चेत्, निश्चितमेवास्माकं वेषभूषा भाषा च स्वत एव भारतीया स्यात्। किन्तु दैवस्य दुर्विलासेन वयं केवलं संविधानपञ्जिकायामेव भारतीयां संस्कृतिमधिष्ठापयितुं प्रयतामहे।

वस्तुतो यदि प्रत्येकस्य भारतीयस्य हृदये भारतीयसंस्कृति-विषये आग्रहः स्यात्, तदा भाषायाः समस्येयं खपुष्पायिता भवेत्। इत्थं राष्ट्रस्य भाविकर्णधाराणां हृदये भारतीयतायाः जागरणमेव राष्ट्रिय-भाषासमस्यायाः सुलभं समाधानम्।

# कुब्जानुग्रह-विलसितम्

— श्री हरिसूरिः —

२.

यदनया कृतमङ्गविलेपनं सकलभूमिसमर्पणमस्य मे ।
फलतया प्रतिमूल्यमिवोचितं प्रभुरधादिति पादयुगार्पणम् ॥ ३० ॥

तस्याः पादद्वये स्वीयपादद्वयसमर्पणात् ।
सम्पूर्णाङ्गीं ध्रुवमिमां करोमीति विबोधितम् ॥ ३१ ॥

अधोगतेरर्दनमेव पद्भ्यामनुग्रहं चोर्ध्वगतेः करेण ।
करोमि भूमाविति बोधयन्स द्वाभ्यां द्वयं तत्किमधात्सलीलम् ॥ ३२ ॥

नैतन्ममोपकृतितुल्यमतो ग्रहीष्ये
नेदं त्वृजूभवनमित्यनुचिन्त्य चेतः ।
नैवं कुरुष्व कुटिलं त्विति सूचयन्किं
वक्रत्वभङ्गकृदसौ चिबुकं दधार ॥ ३३ ॥

कंसस्यैव तदम्बराणि रजकोढान्यङ्गरागोऽप्ययं
तुल्यौ तत्परिचारकावपि युवां तुल्योऽहमर्थी द्वयोः ।
तत्रासीत् सुदुरुक्तिरत्रभवती सर्वाङ्गरागप्रदा
सारल्यं त्वयि सिद्धमेव चिबुकोद्धृत्या शशंसाच्युतः ॥ ३४ ॥

त्वद्रूपमोहितधिया हि मयाऽङ्गराग-
स्तुभ्यं ह्यदायि निखिलोऽपि तदेतदागः ।
ज्ञात्वा करिष्यति नृपः किमु वेति भीतिं
नैवावहेत्यभयदश्चिबुकं दधौ किम् ॥ ३५ ॥

द्विपत्पुरगतां पुरा प्रियतमामवापं क्षणा-
दहं हनुमदाश्रयादिति किमु स्मरन् श्रीपतिः ।
जिघृक्षुरचिराच्छ्रियं रिपुपुरस्थितामादधात्
तदा हनुमदाश्रयं तदधिकाननप्रेक्षकः ॥ ३६ ॥

वासः स्रगाभरणचन्दन - धारणेन
कृदङ् नवीनमतिसौष्ठवमागतं मे ।
द्रष्टुं तदास्यमुकुरे बिमलेऽब्जशोभे
तन्मूलदण्डचिबुकं करतो दधौ किम् ॥ ३७ ॥

मुख्याङ्गसेवनमृते परमङ्गजातं
स्वां वक्रतां त्यजति नेति विभाव्य नीतिम् ।
कर्तुं तदङ्गमखिलं सरलं परात्मा
तन्मुख्यमङ्गमभजच्चिबुकं करेण ॥ ३८ ॥

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते । धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम् । वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः ।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते । नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते । माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत ।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति । वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते । अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः ।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या । प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम् । अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते ।

. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् । तेन उत्तरलाभे मुधा विलम्बो न भवेत् ।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते । एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति । सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः ।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत । | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी ।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट ।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्



वर्षम् ४५



अङ्कः ३



सम्पादकः

गो० न० वैजापुरकरः



मार्च

१९६९



वार्षिक-मूल्यम्

५) रूप्यकाणि



प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्



## तस्मात् सत्यपरो भवेत्

सत्यमेवानृशंसं च राजवृत्तं सनातनम् ।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥
ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोकेऽस्मिन् परं गच्छति चाक्षयम् ॥
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः ।
धर्मः सत्यपरो लोके मूलं सर्वस्य चोच्यते ॥
सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥
दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानास्तस्मात् सत्यपरो भवेत् ॥

वाल्मीकीयरामायणम्
अयो० १०९, १०-१४ } — श्रीरामभद्रः

## संस्कृत-विद्यापीठस्य परीक्षा-सूचना

वाराणसी। भारतधर्म-महामण्डलद्वारा सञ्चालितस्य अखिलभारतीय-धार्मिकाध्यात्मिक-संस्कृत-विद्यापीठस्य परीक्षामन्त्रिणः श्रीरमाकान्त पाण्डेयाः सूचयन्ति यद् १९६९ मितेशवीयवर्षीयाः विद्यापीठस्य प्रथमाद्याः आचार्यान्ताश्च सर्वाः परीक्षाः आगामि-मईमासस्य ५ दिनाङ्कतः प्रारप्स्यन्ते, याश्च ८ मईदिनाङ्कपर्यन्तं प्रचलिष्यन्ति। अन्तिमदिने पत्रद्वयपरीक्षणेन परीक्षा समाप्येत। परीक्षार्थिभिः स्वस्व-केन्द्रव्यवस्थापकैः विशेषसूचनार्थं सम्पर्को विधेय इति।

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, फाल्गुनः २०२५ : मार्च, १९६९ ई० [ ३ अङ्कः

## राम-नाम हरिधाम राध्नुमः

कामनीयकगुणैकमन्दिरं कामकोटिपूतनातिसुन्दरम् ।
कामधेनुशतकातिशायि तद् रामनाम हरिधाम राध्नुमः ।। १ ।।
जानकीनयनहारि-कैरवोल्लास - शारदशशाङ्क - शोभनम् ।
दीनभक्तजन-कल्पशाखिनं रामभद्रमनिशं भजामहे ।। २ ।।
रत्नसानुमहितासनस्थितः पार्थिवी - परिगताङ्कपालिकः ।
छत्रचामरकरानुजत्रयाऽऽराधितो रघुपतिर्विभाव्यते ।। ३ ।।
इन्द्रनीलमणिकान्तिसन्तति - ह्रेपणापघनचारु - रोचिषम् ।
पावमानिमृदिताङ्घ्रिपङ्कजं रामचन्द्रमभयं वयं स्तुमः ।। ४ ।।
मैथिलीतनुतडिच्छटोत्कटः सौख्यसार - जलजाल - वर्षुकः ।
आर्द्रतां नयतु नोऽभितापितं रामचन्द्र - नवनीरदो मनः ।। ५ ।।
दुःखकण्टक - सहस्रसङ्कुले भीषणे भववने परिभ्रमन् ।
श्रान्तसंहनन आशु संश्रये राघवाख्यममरावनीरुहम् ।। ६ ।।
कारणं भुवि समस्तसम्पदां दारणं च विपदां शुभोद्भवम् ।
तारणं भवगभीरसागराद् रामचन्द्रचरणद्वयं नुमः ।। ७ ।।
जिह्विकेऽनृतपरापवाद - वाक्पारुषप्रणयिनि ! प्रतारिणि ।
क्षालनाय तव पापसन्तते रामनामसरसी विगाह्यताम् ।। ८ ।।
मानसाधम ! मम प्रमापिणीं संसृतिप्रवणतां परित्यजत् ।
जन्मवार्धकमृतीद्धसाध्वसोद्धारमेकमिह राममाश्रय ।। ९ ।।
एहि राम ! मम मानसाम्बुजं नित्यमावस सदा रसाप्लुतम् ।
एतदेव हि करिष्यति ध्रुवं सौख्यमत्र च परत्र चोर्जितम् ।। १० ।।

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसादशास्त्रिणः—

सर्वथा धनिजनैरुपेक्षिता भिक्षुकीं च निजवृत्तिमाश्रिताः ।
भूमिदेव-बटवो निरन्तरं संस्कृतां सुरगवीमधीयते ।। ११ ।।

१२. संस्कृतं विपुलवाङ्मयं हरे
नाशमैत् कठिनकाल-वैभवात् ।
यच्च साम्प्रत-मिहाऽवशिष्यते
ब्राह्मणा विदधतेऽस्य रक्षणम् ।।

१३. वस्तुतस्त्रिविध - लोकपावनं
प्रायशोऽद्य भुवनेषु दुर्लभम् ।
आर्यजाति - ललनासु दृश्यते
शीर्षमुग्रतपसां पतिव्रतम् ।।

१४. अन्न-सङ्कट-दिने भयावहे
सम्प्रदानमिह चान्न-वाससाम् ।
आर्यधर्म - मनुसत्य साम्प्रतं
विस्मरन्ति नहि हिन्दवो जनाः ।।

१५. भूरिशो नवनवाञ् जलाशयान्
दैवतानि भवनानि भूरिशः ।
अर्थसङ्ग्रहमपास्य हिन्दवः
कुर्वते जगति धर्मसिन्धवः ।।

१६. बाह्यलक्ष्यमपि चेन्द्रियान्वितं
सौख्य - मृद्ध-जडवाद - वैभवम् ।
दृश्यते प्रथितपाशवं बलं
सभ्यमानि-जनतासु भूतले ।।

१७. आर्यजातिषु तु लक्ष्यमान्तरं
जीवनं विरतिसंयुतं शुभम् ।
अर्हितं न विषयै - विगर्हितं
साम्प्रतं च परिलक्ष्यते जनैः ।।

१८. सत्यधर्म-परिपन्थि-दुःस्थिता-
दत्र सम्प्रति च हिन्दुजातिषु ।
धार्मिकस्तदनुकूल आर्थिको
ह्यधनीय इह भाव उत्तमः ।।

१९. अन्यथा-ऽऽर्यजन-पावनास्तिता
भाविसङ्कट-शतैः समाकुला ।
सम्भविष्यति भविष्यति ध्रुवं
भारतेऽपि परिभाव्यतां बुधैः ।।

आर्यशास्त्रविहितानुशासनं शान्तिदं त्रिविधमस्ति मानितम् ।
आत्मिकं च खलु शाब्दिकं तथा राजसम्मतमिति प्रकीर्तितम् ।। २० ।।

(क्रमशः)

सम्पादकीयम्

# संस्कृतभाषाज्ञान-प्रसारोपायाः, तदन्तरायाश्च

आसीत् कदाचन स स्वर्णिमः कालो यदाऽस्यां भारतभुवि संस्कृतभाषाया निरातङ्कं साम्राज्यं प्रतिष्ठितं यत्र तत्र परिदृश्यते स्म । साधारणोऽपि जनो दैवीं वाचमिमं जानाति स्म सविशेषम्, कामं तात्कालिकमान्यतानुसारं न तेन सा व्यवह्रियेत । सामाजिक-मर्यादानुसारं तदा नीच-मध्यमपात्रैः स्त्री-भृत्यादिभिः प्राकृतभाषैव तत्प्रतिनिधिभाषात्वेन व्यवह्रियते स्म । अस्माकं सर्वोऽपि अमूल्यतमो निधिरस्यामेव भाषायां निहित इति तद्भाषाध्ययनमविकल्पमेव वर्तते प्रत्येकस्य भारतीयस्य कृते । किन्तु गतः स स्वर्णिमः समयः । अधुना तु त्रिसूत्रपाठ्यक्रमेऽपि संस्कृतं परिवर्ज्यते भारतराज्यसङ्घशासनेन । तथापि महता गौरवेण समुद्घुष्यते आत्मनः संस्कृतरक्षा-धुर्वंहत्वं तेन !

संस्कृतस्य समुद्धाराय अहरहो विद्यापीठानि महत्तराणि विश्वविद्यालयाश्च सङ्घट्यन्ते । परं तत्र सर्वोच्चकक्षास्वपि पठतां छात्राणां संस्कृतज्ञानम् आंग्लप्रवेशिकापरीक्षापाठ्यग्रन्थस्तरेणापि तुलयितुं न शक्यते दौर्भाग्येण । यदि नाम भाषयैव संस्कृति-विचारवाहनभूतया अस्माकं नव्याः स्नातका आचार्या अपरिचिताः स्युस्तदा जनसाधारणस्य संस्कृतभाषापरिचयो गगनकुसुमायित एव भवेत् । व्याकरण-न्याय-वेदान्तादिशास्त्रेषु कृतभूमिश्रमा अपि भाषयाऽनया अलं परिचिताः प्रायो नावलोक्यन्ते तदा तेषां तदध्ययनं शुकरटनात् कथं नाम नातिरिच्येत ? किञ्चैवंस्थितौ एतद्भाषीयेषु अनधीतेषु ग्रन्थेषु निहितैः संस्कृतिविभूषणायितैः विचारैस्ते कथं परिचिता भवेयुः ? महदाश्चर्यमेतद् यद् संस्कृतपरीक्षा-पाठ्यक्रमनिर्धारकैः अपि विषयेऽत्र नावधीयते ये किल 'के के ग्रन्थास्तत्र तत्र परीक्षासु निर्धारणीयाः' इत्यस्य समुद्रमन्थनं समाचरन्तो दृश्यन्ते, स्व-स्व-लाभानुसारि-ग्रन्थानां निर्धारणाय लघुतममपि ग्रन्थं खण्डीकृत्य नैकासु परीक्षासु संस्थाप्य प्रश्नपत्रबाहुल्यकरणेन स्वार्थ-साधनाय अहमहमिकया प्रवर्त्तन्ते च ।

'गतं न शोच्यम्' इति दृष्ट्वा विचार्यमाणे निर्विचिकित्सितमस्माकं मतं यत् संस्कृतपरीक्षा-पाठ्यक्रमे माध्यमिकस्तरीयपरीक्षां यावत् अनिवार्यतः पञ्चवार्षिकेण संस्कृतभाषापरिचयाभिक्रमेण भाव्यम् । यावत् कक्षा-क्रमानुसारीणि पुस्तकानि नोपलभ्यन्ते, तावद् आंग्ल-विद्यालयीय-कक्षागतात् ग्रन्थानेव आदाय पञ्चभिर्वर्षैस्तेषां यथावदध्ययनं समपेक्षित-व्याकरणनियम-परिज्ञान-पूर्वकं शुद्धसंस्कृतलेखन-ज्ञानेन छात्राः समलङ्करणीयाः । ये छात्रास्तत्र प्रायोगिकं प्रावीण्यं नासादयेयुस्ते कथमप्यग्रे उपाधिपरीक्षायां न प्रवेष्टव्याः । यावदेतादृशः कठोरतमो निर्बन्धो न भवेत्, तावत्संस्कृतविद्याध्येतृभिः संस्कृत-भाषाप्रसारस्य आशा दुराशैव स्यात् । अद्यावधि प्रचलितेन एतद्विषयकेण उपेक्षणेनालम् । तावत् नैकेषां महाविद्यालयानां विश्वविद्यालयानां वासङ्घट्टनम्, परीक्षा-संस्थायाश्चालनम्, तदर्थं सुबहुधनव्ययश्च अधोमुखे घटे जलसहस्रधारापातनमिव नूनं व्यर्थतामेव गच्छति, निर्धनस्य राष्ट्रस्य जनधनस्य सर्वथाऽपव्यय एव जायते ।

सर्वैः संस्कृतशिक्षासञ्चालनैरत्र अप्रमदितैर्भूत्वा समपेक्षितोऽभिक्रमः प्रारम्भणीयः । स्वीयपाठ्यक्रमे प्रस्तावस्यानुरूपं संशोधनं विधाय आगामिशिक्षासत्रत एवेयं योजना कार्यरूपतां परिणेया । प्रादेशिकं सङ्घीयञ्च शासनमपि अस्माभिः साग्रहमनुरुद्ध्यते यत्तेन योजनामिमां सफलीकुर्वद्भ्य एव शासकीयानुदानपात्रता नियमतो निर्धारणीया, यथावत्परीक्ष्य अञ्जसा तादृशयोग्यतावते एव सघटनाय स्वीयमार्थिकं साहाय्यं देयम् । तदैव तस्य तत्त्वतः संस्कृतोन्नायकत्वं परिगण्येत । अन्यथा गड्डलिकाप्रवाह इव तदीयं साहाय्यमपि केवलं यशः-प्रसारणायैव भवेत् । संस्कृतस्य पुनः किमपि हितं न स्यात् । आशास्महे यदत्र विषये सम्बद्धाः सर्वाः संस्कृत-शिक्षासंस्थासञ्चालकाः शासनञ्च दृढमवधास्यन्ति, देव-वाण्या सह न्यायञ्च विधास्यन्तीति ।

समुपेक्ष्य उपर्युपरि क्रियमाणो बहुलोऽपि यत्नः संस्कृत-भाषा-प्रचारणविधौ वन्ध्य एव भवेत्। मूलभित्तिमन्तरा तेन तेन यत्नेन उन्नामितस्य संस्कृतप्रचार-प्रासादस्याऽपि अचिरादेव धराशायीभवनं बहुशः आशङ्कितं स्यात्। मूलभित्तेरस्याः सुदृढीकरणानन्तरमेव प्रासादाधारस्तम्भायितानामन्यासां योजनानां कार्यकारित्वं भवेत्।

मूलभित्तिसुदृढीकरणस्य प्रयत्नेऽस्मिन् आंग्लशिक्षा-क्षेत्रीयसंस्कृतशिक्षाक्रमोऽपि न समुपेक्ष्यः। तत्रापि सुबहु-परिष्करणीयमास्ते। साम्प्रतं स्कूल-हायरसेकेण्डरी पर्यायेषु आंग्लविद्यालयेषु संस्कृतभाषाविषयस्य अध्यापनं छात्राणां तत्र प्रगतिश्च यादृशी विलोक्यते, न सा सन्तोषावहा। प्राय आङ्लभाषा-हिन्दी-आधुनिकविषयाणां यावत् सुपुष्टमध्यापनं तत्र विधीयते, परीक्षाविधावपि तेषु विषयेषु यावदवधीयते, न तावत् संस्कृतभाषाविषये। प्रायः संस्कृतभाषाशिक्षका एव तत्र नाधिकृता विलोक्यन्ते। शिक्षासञ्चालकैरपि बहुत्र अन्यविषयाध्यापनेन सहैव संस्कृताध्यापनमपि कस्यचन शिक्षकस्य शिरसि निधीयते। प्रायस्तत्रस्थाः बहवः संस्कृताध्यापकाः 'प्रश्नोत्तरी'-नामिकया पुस्तिकयैव छात्रान् संस्कृतं पाठयन्ति। बालिका-विद्यालयेषु संक्रामकोऽयं व्याधिः बहुशः प्रवर्धितो दृश्यते, यदा किलाऽद्य वयं नारीजातित एव संस्कृतस्य विशेषप्रचारमाशास्महे, अस्माकं संस्कृतोन्नायका नेतारोऽपि यत्र तत्र विषयेऽत्र स्ववक्तव्यस्यभरं प्रददतो दरीदृश्यन्ते। अतस्तेष्वपि विद्यालयेषु सप्तमकक्षातो माध्यमिककक्षां यावत् संस्कृताध्यापने संस्कृतविद्यालयवत् दाढयमानेयम्, शासनेन च तेऽपि विद्यालया एतदर्थं विवशीकरणीया इत्यस्ति अस्माकं सुनिर्धारितं मतम्।

इत्थं सर्वतः संस्कृतशिक्षा-मूलभित्तेः सुदृढीकरणानन्तरं तस्या गगनचुम्बिनः प्रासादस्य उन्नयनाय समपेक्षिताः आधारस्तम्भा अपि सुदृढा विधेयाः। एतेषु आधारस्तम्भेषु संस्कृताध्येतॄणां संस्कृते वार्तालापकरणम्, संस्कृत-पत्र पत्रिकाणाम् आधुनिकविषय-शैली-विज्ञानोपबृंहितानां सामयिकवृत्त-सङ्कलन-समलङ्कृतानां बहुशः प्रचारणं संस्कृताध्येतृभिस्तद्वाचनञ्च, संस्कृतभाषामाध्यमानां सम्मेलनानां मनोरञ्जक-कार्यक्रमाणां संयोजनम्, प्रतिविद्यालयं संस्कृतच्छात्रगोष्ठीनामायोजनं संस्कृत-व्याख्यानञ्च—एवमादयः कार्यक्रमाः परिगण्यन्ते। प्रसङ्गेऽस्मिन् 'सार्वभौम-संस्कृत-प्रचार-संस्थाने' न साम्प्रतं प्रचालितं संस्कृतसम्मेलन-सङ्गीत-हास्यसम्मेलनादीनामभियानं सर्वथा प्रशंसनीयमभिनन्दनीयञ्चेति प्रामाणिकतया समुद्घोषयामः। संस्कृतमहाविद्यालय-विश्वविद्यालयेषु उच्चकक्षीयानां छात्राणामध्यापनमपि अनिवार्यतः संस्कृत-माध्यमेन करणं महत्तर आधारस्तम्भः संस्कृत-प्रासादस्य।

किन्तु विशेषतोऽत्रावधेयं यदेतत्सर्वं प्रदर्शनात्मकमेव न भवेत्। प्रत्युत सर्वत्र सूक्ष्मया दृशा निरीक्षणीयं यदनेन संस्कृतभाषाया कियान् प्रसारो जायते। संस्कृत-भाषाप्रसार-परिपन्थी कोऽप्याधुनिकः प्रकारः सर्वथाऽननुग्राह्यो भूयादस्माकं कृते। अन्यथा स एवास्माकं शिरसि भारभूतो भवेत्, संस्कृतस्य वास्तविकेन शास्त्रीयज्ञानेन चातितरां दूरवर्तिनश्च भवेम। अन्ततः संस्कृतभाषाज्ञानं साधनम्, तेन साध्यं किल महर्घतमस्य सकलसंस्कृतवाङ्मयरत्नाकरस्य परिशीलनम्, ततो रत्नान्यादाय संस्कृतिसम्भूषणम्, आत्मनश्च निरतिशयं विद्योतनं नाम। यदि साधनमेव साध्यमनादृत्य शिरांसि अभिभूयात्, तदा गतः सर्वोऽपि प्रयासः संस्कृतोन्नयनस्य रसातलम्। प्रायोऽनेनैव भयेन समाक्रान्ताः बहवः प्रामाणिका अपि विद्वांसः संस्कृतभाषाप्रचारविधि समुपेक्ष्य केवलं तत्तद्विषयाध्यापन एव भरं प्रददतो विलोक्यन्ते। परमेतद् वस्तुस्थितितः पलायनमिव भवेत्। कालोऽयं बहु प्रगतो वर्तते। गता अस्माकं सा प्राचीना अध्ययनाध्यापनशैली प्रत्ना परम्परा च। यत्र प्रथमं प्रविष्ट एवान्तेवासी शब्दरूपावली-समासचक्र - धातुरूपावली - पाणिनीयाष्टाध्यायीकोश-पदच्छेदान्वय - वाच्यपरिवर्तन - पदपदार्थव्याख्यानभावार्थसमलङ्कृतकाव्यपाठ-कौमुद्याध्ययनेन तर्क-छन्दनीत्यनुवादाद्यभ्यासेन सुनियोज्यते स्म तत्रस्थेन उपाध्यायेन। ततः परमेव स शास्त्राध्ययने प्रवेश्यते स्म तैः। सेयं मूलभित्तिरद्य गता कुत्रापि। नापि तदुद्धरणस्याशा समवलोक्यते। यतः सा परम्परा गुरुकुलपद्धतावेव फलतीति तथ्यम्। गुरुकुलपद्धतिः पुनरद्य कदा कथं वा केन प्रचाल्येत, इति विपश्चिद्भिः स्वयमेवोह्यं नाम। एवंस्थितौ उपरितनेन निरूपणेन प्रदर्शितोऽस्माकं पन्था एव परिशेषात् समाश्रयणीयो भवति संस्कृतभाषाप्रचारणाय।

आशास्यते चास्माकं समादरणीयाः विद्वांसोऽस्मिन् [illegible] अन्यदपि विचारयिष्यन्ति, संस्कृत-

भाषाज्ञान-प्रसारविषये स्वीयान्यभिमतानि अस्माकं सविधे प्रेषयिष्यन्ति च। वयं तेषामभिमतानि सादरं 'सूर्योदये' प्रकाशनाय प्रस्तुताः स्मः। अस्माकमिदमेवात्र पावनमुद्दिष्टं यद् यथाकथमपि संस्कृतभाषाज्ञानं बहुजनसंक्रान्तं भवेत्, तन्माध्यमेन च ते विशाले संस्कृत-वाङ्मयाम्भोधौ निमज्ज्य तलतो महार्घाणि रत्नान्यादाय संस्कृतिं राष्ट्रं स्वात्मानञ्च विभूषयन्तु।

अचिरादेव वृत्तपत्रेषु हिमाचलप्रदेशीयस्य 'वाताल'-स्थानस्य 'लघुकाशिका'ऽपरनामधेयस्य वृत्तं प्रकाशितमस्ति, यत्राद्यापि प्रतिशतं पञ्चाशीतिसंख्यकाः संस्कृतभाषाविद उपलभ्यन्ते। क्रमशो ह्रासमुपयाति तत्रापि स्थितिरियमित्यपि दौर्भाग्यपूर्णं वृत्तं तत्र निहितम्। तदर्थं केन्द्रीय-शासनं विशेषतस्तदीयः संस्कृतोन्नयनविभागश्च स्थानस्यास्य यथाकथमपि पूर्वगौरवरक्षणाय प्रयतितुं साग्रहं प्रार्थ्यते-ऽस्माभिः। अत्र तेन प्रमदितम्, तेन च विलयं गतश्चेत् स गौरवस्तदैतत् राष्ट्रस्य कृते नूनं कलङ्कास्पदं भवेत्। किन्तु अनेनैव प्रसङ्गेनास्माकं चेतसि संस्कृतभाषाज्ञान-प्रचारविषयिणी भावना स्फूर्तिमभजत्। अत एवात्रा-स्माभिः संस्कृतभाषाज्ञान-प्रसारोपायविषये तदन्तराय-विषये च यथाशक्ति प्रपञ्चितम्। विश्वसिमो यद् निरुपधि-देवत्राणी-प्रसारकाङ्क्षिणोऽत्र क्षणमवधास्यन्तीति।

## सेवानिवृत्ताध्यापकानामुपयोगः

अचिरादेव विश्वविद्यालयानुदानायोगेन सेवानिवृत्ता-ध्यापकानां विश्वविद्यालय-महाविद्यालयीय - शोधकार्ये विनियोजनस्य योजना द्वितीयवारं कार्यरूपतां नीता। तदनुसारं वर्षेऽस्मिन् सप्तदशाध्यापकानामेतदर्थं तेन मनोनयनं कृतमास्ते। प्रत्येकाध्यापकाय प्रतिवार्षिकं षट्सहस्ररूप्यकाणि मानदेयरूपेण ( आनरेरियम ) एकसहस्ररूप्यकाणि च आकस्मिकव्ययानुदानरूपेण दातुं निर्धारितमस्ति। सप्तदशसु अध्यापकेषु त्रयः संस्कृता-ध्यापकाः सन्ति। तेषां नामानि कार्यस्थलानि च निम्न-लिखितानि— १. डॉ० जी० वी० देवस्थली, पूना-विश्व-विद्यालये। २. श्री एस० सुब्रह्मण्यशास्त्री, वाराणसेय-संस्कृत-विश्वविद्यालये। ३. डॉ० बी० एन० के० शर्मा— मुम्बापुरीस्थे रूपारेल-महाविद्यालये। सेवानिवृतानां कार्यक्षमाणाञ्च अध्यापकानामनया योजनया जायमानं साहाय्यं तु स्पष्टमेव। तेषां दीर्घतरस्य अध्यापनाध्ययना-नुभवस्य परिपक्वस्य लाभोऽपि राष्ट्राय मिलेत्। कार्ये रतानामध्यापकानां प्रोत्साहनमपि भवेत् यदस्याभिस्तादृशं कार्यं करणीयं येन सेवानिवृत्तौ वयमपि अस्यां योज-नायां मनोनीताः स्याम। संस्कृताध्यापकाः सेवानिवृत्त्यु-त्तरकाले केवलं कालायैव समर्प्यन्ते शासनेन। संस्थातः प्रस्थापितानामेतेषां जीवननिर्वाहाय न कोऽपि रक्षण-निधिः ( प्राविडेण्ट फण्ड ) शासनेन संस्थया वा सेवा-ग्रहीत्र्या तेभ्यो न दीयते। सत्येवं ते कालायैव समर्प्यन्ते राष्ट्रेण, राष्ट्रिय कर्णधारैश्चेति कथनं कथमत्युक्तिं भजेत् ? अतितरां क्षुभ्यते चित्तमेतल्लेखनसमकालमेवास्माकम्। लज्जास्पदमेतत् अस्माकं कृते शासनस्यापि च कृते। अरण्य-रुदितं भवतीति शासनाय किं कथनीयं नाम ? एवं स्थितौ विश्वविद्यालययानुदानायोगास्यायमुपक्रमः सर्वथाऽभि-नन्दनीयो वक्तव्यो भवेत्। मनोनीताः संस्कृताध्यापका अपि अस्माकं सर्वथाऽभिनन्दनीयाः !

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

सांख्यरीत्या तु त्रिगुणात्मकस्य कामिन्यादेः मनसि प्रविष्टः सुखाकर एव स्थायिभावत्वं प्रतिपद्य रसो भवति। मध्यमपरिमाणं मनो विषययोगाद्विषयाकारं भवति। अत एव बाह्यपिण्डनाशेऽपि बाह्यपिण्डात् पृथगपि मनोमयो विषयस्तिष्ठति, स एव स्थायिभावः।

भगवद्गुणश्रवणजनित-द्रुतिरूपायां मनोवृत्तौ सर्वसाधनफलभूतायां गृहीतभगवदाकारायां विभावानुभावसञ्चारिसंयोगेन रसरूपतयाऽभिव्यक्तो भगवदाकारतारूपो रत्याख्यः स्थायिभावः परमानन्दसाक्षात्करात्मकः प्रादुर्भवति। स एव भक्तियोगः। तदुक्तम्—

> द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
> सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥

रतिर्नाम भक्तिस्थायिभावो द्रुतचित्तप्रविष्टभगवदाकारतारूपः संस्कारविशेषः। कामजन्यायां तु द्रुतौ चित्ते या श्रीकृष्णाकारता सा विभावादिसंयोगदशायां संयोगाख्या तद्वियोगदशायां विप्रलम्भाख्या रतिरुच्यते। तत्रालम्बनविभावो भगवान्। उद्दीपनविभावः तुलसीचन्द्रनादिः। अनुभावो नेत्रविक्रियादिः। व्यभिचारिणो निर्वेदादयः। तैर्व्यक्तो भगवदाकारतारूप-रसाख्यः स्थायिभावः परमानन्दसाक्षात्कारात्मकः प्रादुर्भवति। स एव भक्तियोगः, दुःखासम्भिन्नसुखरूपत्वेन पुरुषार्थः।

अत्र वस्त्वाकारोऽपि भगवानेव। स एव च भक्तियोगे स्थायिभावरूपो रसो बिम्बस्यैवोपाधिनिष्ठत्वेन प्रतीयामानस्य प्रतिबिम्बत्ववत्। तेनैव परमानन्दरूपताऽपि भक्तिरसस्य। न चैवमालम्बन-विभावस्थायिभावयोरैक्यापत्तिः; तथात्वेऽपि परमेशजीवयोरिव बिम्बप्रतिबिम्बभावेन भेदस्य व्यवहारसिद्धत्वात्। मनो नित्यं विभुं पूर्णबोधसुखात्मकं भगवन्तं गृह्णाति, तत्तदाकारश्च भवति। स चाकारः प्रतिबिम्बरूपो बिम्बरूपाद् भगवतोऽभिन्न एवेति तस्य परमान्दरसरूपता युज्यते।

इयांस्त्वत्र विशेषः—एतादृशेन भगवदाकारेण मनोगतेन अनादिकालप्रविष्टाऽसंख्याकाराणां कवलीकरणात् तन्मात्रस्फूर्त्या कृतकृत्यता भवति। विषयाकारतानिराकरणपूर्णकं चित्तस्य भगवदाकारतासम्पादनमेव सर्वशास्त्रोद्देश्यम्। चित्तस्य भगवदाकारता स्वाभाविकी, चित्तकारणीभूतसूक्ष्मभूतकारणानिर्वचनीय-विचित्रानेकशक्तिमन्मायाधिष्ठानस्य नित्यविभोः सर्वत्रानुगतत्वात्। आकाशपूर्णतेव घटस्य। विषयाकारता तु घटस्य जलपूर्णतेव कारणसाध्या। तथाप्यन्याकारताविरोधि-भगवदाकारतासम्पादनेन शास्त्राणां सार्थक्यम्। स्वाभाविकी भगवदाकारता तु विषयाकारता-सहचरितत्वात् साधकत्वाच्च न तद्विरोधिनी। तदुक्तम्—

> काठिन्यं विषये कुर्याद् द्रवत्वं भगवत्पदे।
> उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः॥
> यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि।
> स्थायिनो रसतां यान्ति विभावादिसमाश्रयात्॥ इति।

भावाश्चित्तवृत्तयो धारावाहिका भूत्वा स्थायिनः सन्तः विभावादिसमाश्रयात् समूहालम्बनात्मकैकज्ञानविषयत्वरूपसम्बन्धेन स्वसम्बन्धीकरणाद् रसतां यान्ति इत्यन्वयः।

(क्रमशः)

# गुहः--ललित-निबन्धः

आन्ध्रमूललेखकः—
श्री देवुलपल्लि वेङ्कटकृष्णशास्त्री



—अनुवादकः
श्री कालूरि हनुमन्तरावः

श्रीरामस्य वंशो रघुवंशः। पिता दशरथः। मातरः कौसल्या, कैकेयी, सुमित्रा च। भार्या सीताम्बा। गुरू वसिष्ठ-विश्वामित्रौ। अनुजाः लक्ष्मण-भरत-शत्रुघ्नाः। सेवकः आञ्जनेयः। भक्तिप्रपन्ना शबरी। शत्रुः रावणः। अशेषजनाः प्रजाः। मित्रं गुहः। एतेषु एकैक एकैकेन विधेन राममाह्वयति स्म—'रामेति, नाथेति, राघवेति, सीतानाथे''ति च।

सम्बोधनान्येतानि अस्माभिरितोऽपि दीर्घी-क्रियन्ते—'रामय्य, रामचन्द्रप्रभो, रामस्वामिन्, पट्टाभिराममूर्ते' इति इत्थमाह्वयन्तः अस्मज्जीवितेषु तत्तद्वेलासु विवशा व्याहरामः। अपरिमितभक्ति-प्रपत्तिभ्यामाह्वयामः। उन्मादिन इव हृदयभरितेन प्रेम्णा आह्वयामः।

रामोऽसौ प्रतिगृहं प्रतिव्यक्ति प्रत्यक्षो वर्तते। डोलिकायां शिशुरूपेण निद्रास्यन् स्वपन-गेयानि अस्माभिर्गापयति। पुनः स एव पिता भूत्वा क्षमादृढेन स्वहस्तेनास्माकं दुर्बलहस्तं गृहीत्वा मार्गं गमयति। विस्तृतरामायणगाथायां कदाचित् सूर्यमण्डलमिव तेजस्वी, कदाचित् चन्द्रमण्डलमिव प्रशान्तः, कदाचित् पर्वतप्रांशुः, कदाचिच्च अनु-रागेण अस्मदङ्के वर्तमान इवैको रामो बहुधा साक्षात्क्रियतेऽस्माभिः।

विश्वस्मिन् मानवानां मिथो यावन्ति बान्ध-व्यानि, यावन्तो बन्धाश्च सन्ति, सर्वेऽप्येते श्रीरामेण सहास्माकं सन्ति। 'भाग्यवान् स दशरथसदृशः पिता, अतिविशिष्टः... वदामः। एवमेव 'स आञ्जनेयतुल्यः सेवकः, लक्ष्मणसदृशः सोदरः, शबरीतुल्यो भक्तः' इत्य-स्माकं व्याहृतीरनुतिष्ठते खलु श्रीरामः। तत्तद्-बान्धव्येषु रामस्यापि बान्धव्यं स्फुरत्येव।

श्रीरामचन्द्रस्य बन्धुषु गुहो मुख्यः। को वा असौ गुहः, कीदृशं वा स्वामिना सहाऽस्य बान्धव्य-मिति किञ्चिदुद्भावयामः।

शृङ्गवेरपुरस्य प्रभुः गुहः। श्रीरामो भार्यया सीतया, सोदरेण लक्ष्मणेन च सहारण्यं प्रविशतीति श्रुतं गुहेन। तेषां शृङ्गवेरपुरसमीपागमनवेलापि आसन्ना वर्तते। गुहस्य हृदये उत्सुकता न माति।

'अद्य श्रीरामचन्द्रः अतिथिः। तपस्विना आत्मना उचितसत्कारनिर्वहणं कर्तुं शक्ष्यते किम् ?' किन्तु गुहो जानाति यादृग् वा रामस्य मन इति। कियान् नाम सुलभो रामः। कियन्मृदुलं रामस्य हृदयम्।

अपितु गुहस्य मनसि उत्कण्ठा क्षणे क्षणे एधते। अयोध्यातः शृङ्गवेरपुरमार्गे धूलिर्नोत्पततु इति स्वानुचरैर्गङ्गाजलेन सेचयति। सर्वाननुचरान् आहूय दृषदो मार्गादपनाययति। पुनराहूय निष्कण्टकं कारयति। पुनः पुनराहूय एकोऽपि प्रस्तरः, एकोऽपि कण्टकः पथि नास्तु, पुनरपनीयता-मित्याज्ञापयति। उत्कण्ठया उन्मादीव भ्रमति। मार्गं दरीदृश्यते। द्रोणिषु जम्बूफलानि, कपिला-गोक्षीरं मधु च पूरयति।

त्कण्ठितो न भवेत्। सीतामाता आगच्छति, लक्ष्मणोऽप्यागच्छति। अत एवाननुभूतपूर्वा महती उत्कण्ठा अनुभूयते तेन। अनुचरैः सह ग्रामाद् बहिः किञ्चिद् दूरं व्रजति सः।

एतस्मिन्नन्तरे सीता-राम-लक्ष्मणा रथादवतरन्ति। भ्रातृजायां समाश्वासयन्निव लक्ष्मणः 'मातः ! स एव शृङ्गवेरो यत्रास्मन्मित्रं तत्रभवान् गुहः प्रतिवसति। वृक्षश्रेणीनामन्तरा दृश्यते असावेव ग्रामः। पश्यतु भवती' इति वदति। 'हरितावगुण्ठनान्तरिता लज्जावतीव दृश्यते दूरादसौ ग्रामः' इति रामो वदति। 'मम सोदरी ऊर्मिलेव' इति दरहासेन वदन्त्यां सीतायां देवरो लक्ष्मणः अशृण्वन्निव 'अयमेवागच्छति गुहः। परिवारेण सहास्मान् प्रतीक्षते' इति वदति।

तदा गुहोऽपि तान् पश्यति। शरवेगेन धावन् आगत्य श्रीरामपादयोः पतति गुहे, रामचन्द्रः तमुन्नमय्य गाढं परिष्वजते। सीता-लक्ष्मणयोः नेत्राणि बाष्पसिक्तानि भवन्ति। अननुभूतारण्यनिवासानां तेषां तस्मिन् समये कियान्नामाऽऽप्तः कियान् वा बहुकालबान्धव इव दृश्यते गुह इति न पार्यते वक्तुम्।

'स्वागतं ते राम ! स्वागतं ते सीते ! स्वागतं ते लक्ष्मण ! आगच्छत, आगच्छत।

**आगतौ रघुकुलान्वयचन्द्रौ**
**आगता च जननी मम सीता।**
**धन्यमस्ति मम जीवितमद्य**
**तिष्ठतात्र परिपालयताऽस्मान्॥**

राम ! इतो यूयं मा गच्छत। चतुर्दशसहस्रेण मम परिवारेण युक्तो मम ग्रामं परिपालय। अहं सेविष्ये, मा मम वचनं प्रत्याख्यायाः' इति गुहो बहुविधैः प्रार्थयति।

'गुह ! भवान् मम मित्रम्, माननीयश्च। परन्तु पित्राज्ञा मया पालयितव्या। मातुः कैकेय्याः शासनं नोलङ्घनीयम्' इति पुनः वदति।

गुहः प्रतिवक्तुं न पारयति। 'नक्तं तावत् स्थीयतामत्र' इति तु कथञ्चिद् वदति।

जम्बूफलैः कपिलागोक्षीरेण, मधुना च गुहो तद्रात्रौ सीता-राम-लक्ष्मणानामातिथ्यं कृत्वा अद्यपर्यन्तमपि अस्माकमादरस्य पूजायाश्च पात्रं स वर्तते।

अपरस्मिन् दिने गुहं विसृज्य प्रस्थातव्यमस्ति रामस्य। ह्यः सायंकाले अन्योन्यदर्शनं कियदानन्ददायि आसीत् ! अद्य दिनारम्भवेलायां तद्-वियोगस्तावान् दुस्सहो बाधते तेषां चतुर्णां मनांसि।

[ दिने एव सीता-राम-लक्ष्मणाः शृङ्गवेरात् निष्क्रान्ता इति मे न प्रतिभाति। गुहनिर्बन्धात् तदप्यहस्तत्र ते स्थिताः। दिवसावसाने गुहस्तान् गङ्गामतारयदिति च मे प्रतिभाति। —लेखकः ]

सीता-राम-लक्ष्मणैः सह गुहो गङ्गातीरमागच्छति। वायुदेवोऽपि विषादेन बद्धश्वास इवास्ति। गङ्गानदी शोकरुद्धकण्ठा दुःखरसप्रवाह इव निश्शब्दं प्रवहति।

गुहो वदति—'राम ! तव पादौ प्रक्षालयिष्यामि। अप्रक्षालितपादा मम नावि पादन्यासं मा कार्षीः। तव पादरजःस्पर्शेन शिला स्त्री बभूवेति श्रुतम्। मा भूदेवं मम नौरपि' इति। गुहस्य मनसि वर्तमाना काङ्क्षा तु अन्या। श्रीरामस्वामिनः पादौ स्प्रष्टुम्, प्रक्षालयितुं च तस्य काङ्क्षा।

गुहः श्रीरामस्य पादौ गङ्गाजलेन प्रक्षालयति। कियन्नाम तस्यानन्दपारवश्यम् ! कम्पमानहस्ताभ्यां मृदु स्पृशति, बहुकालपर्यन्तं प्रक्षालयति। पुरा जनकेन सीताविवाहसमये तौ पादौ प्रक्षालितौ।

# वैदिकाऽवैदिक-दर्शन-मीमांसा

— श्री जगन्नाथ श्रीधरशास्त्री पदे —

'श्रोत्रिय'शब्देनात्र अधीतवेदा अश्रान्तश्रुतिपाठं कुर्वन्तो वेदानामखण्डं श्रवण-मनन-निदिध्यासनादिकं कुर्वाणा ब्राह्मण-क्षत्रिय-वैश्या गृह्यन्ते। तेषामेव श्रोत्रियत्वं सम्भवति। तथा च पाणिनिसूत्रम्—

**श्रोत्रियंश्छन्दोऽधीते।** ( ५.२.८४ )

इति। यच्छन्दोऽधीते स श्रोत्रियो भवति। ब्राह्मण-क्षत्रिय-वैश्यानां वेदाध्ययनं प्रत्यहं ब्रह्मयज्ञश्च विहित इति ते श्रोत्रिया भवन्ति। अकामहतत्वं श्रोत्रियधर्म उक्तः। कामश्च शरीरधर्मो नात्मधर्म इति प्रपञ्चितं प्राक्। श्रोत्रियाणां विद्यमानेऽपि देहोपाधौ शरीरात्माभिमानलक्षणस्य मिथ्याज्ञानस्याभावात् सशरीरत्वं नास्ति। नित्यमशरीरत्वमेव, सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वात्। तथा चोक्तम् आचार्यैर्गीताभाष्ये—**क्षेत्रक्षेत्रज्ञसंयोगात्** ( गी० १३.२६ ) इत्यस्य व्याख्याने।

कः पुनरयं क्षेत्र-क्षेत्रज्ञ-संयोगोऽभिमतः? न तावद् रज्ज्वेव घटस्य अवयवसंश्लेषद्वारकः; सम्बन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य सम्भवति, आकाशवन् निरवयवत्वात्। नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोः सम्बन्धः, इतरेतरकार्यकारणभावानभ्युपगमादिति।

अत्रोच्यते—क्षेत्र-क्षेत्रज्ञयोः विषय-विषयिणोः भिन्नस्वभावयोः इतरेतराध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेका-ऽभावनिबन्धनो रज्जु-शुक्तिकादीनां तद्विवेकज्ञानाभावाद् अध्यारोपित-सर्प-रजतादिसंयोगवत्। सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञ-संयोगो मिथ्याज्ञानलक्षणः। यथाशास्त्रं क्षेत्र-क्षेत्रज्ञलक्षण-भेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात् क्षेत्रात् गुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य—

**न सत् तन् न सदुच्यते।** ( गीता १३.१२ )

इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति, क्षेत्रं च मायानिर्मित-हस्तिस्वप्नदृष्ट-वस्तु-गन्धर्वनगरादिवद् असदेव सदिवाऽवभासत इत्येवं निश्चितविज्ञानो यस्तस्य यथोक्तं सम्यग्-दर्शनविरोधादपगच्छति मिथ्याज्ञानं तस्य जन्म-हेतोरपगमात्।

> 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' ( गीता १३.२३ ) इत्यनेन 'विद्वान् भूयो नाभिजायते' ( १३.२३ ) इति यदुक्तं तदुपपन्नमुक्तम्।' ( शां० भा० गी० १३.२६ )

मिथ्याज्ञानापायश्च श्रोत्रियाणाम् उपनयन-संस्कारेणैव भवति। तस्मादुपनयनसंस्कारेण मिथ्याज्ञानापाये मुक्तिः सम्प्राप्यते। मुक्तोपसृप्यं च ब्रह्म। तथा च सूत्रम्—

**मुक्तोपसृप्यव्यपदेशात्।** ( ब्र० सू० १.३.२ )

इति। उपनयनसंस्कारश्च ब्रह्मविद्याप्रदानार्थम्।

**ब्रह्मविद्याप्रतिपत्तेश्च । सोऽमृतो भवति मृत्युर्ह्य-स्यात्मा भवति** ( मा० श० भा० १०.५.२.२३ ) । **शुद्धः पूतोऽजरोऽमृतः सम्भवति** ( मा० बृ० उ० ५.१५.१२, का० बृ० उ० ५.१४.८ ) इति अमृतत्वफलश्रवणात् । तस्मात् उपनयनसंस्कार-समये सावित्रीमन्त्रोपदेशेन आत्मैकत्वविद्याप्रति-पत्त्या सद्य एव ब्रह्मभावापत्तिर्भवतीति अकाम-हतत्वमानन्दमयत्वं चेति ब्रह्मधर्माः प्रकटीभवन्ति । ब्रह्मसाक्षात्कारानन्तरं श्रवण-मनन-निदिध्यासनार्थं वेदाध्ययनम् । **आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः** ( बृ० २.४.५ ) इति श्रुतेः ।

पदार्थदर्शनानन्तरमेव तस्य सर्वधर्मज्ञानेन तत्त्वज्ञानं लभ्यत इति तत्त्वज्ञानार्थं वेदाध्ययनम् । श्रोत्रियाणां नित्यमशरीरत्वादेव अकामहतत्वमिति विशदीकरणाय अवृजिनत्वं धर्मो बृहदारण्यके उक्तः । अवृजिन इति श्रोत्रियो विशेषितः । वृजिन-शब्देनात्र देह एवोच्यते, तस्यैव वृजिनरूपत्वात्, विनाशित्वेन अधर्मरूपत्वाद् अशुचित्वाच्च । जड-त्वेन तमस्वभावत्वाद् दुःखरूपत्वाच्च । तस्माद-वृजिनो नाम अशरीरः ।

एतदुक्तं भवति—**यश्च श्रोत्रियोऽवृजिनोऽकाम-हतः** ( मा० बृ० उ० ४.१ ) इत्यत्र श्रोत्रियशब्देन उपनयनसंस्कारेण प्रतिपन्नब्रह्मविद्या अश्रान्तं वेदाध्ययनशीला ब्राह्मण-क्षत्रिय-वैश्या गृह्यन्ते । अवृजिनशब्देन तेषां ब्रह्मविद्याप्राप्त्या मिथ्याज्ञाना-पायेन नित्यमशरीत्वम् । तथा च श्रुतिः—

**अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ।**

( छा० ८. १२० )

इति । शरीरत्वाभावादेव अकामहतत्वम् । अत एव ब्रह्मधर्मस्य आनन्दस्य प्राकट्यम् । साधनत्रय-मेतत् ब्रह्मधर्मप्रतिपत्त्यर्थमुक्तम् । तथा हि भाष्ये—

'अत्रैतानि साधनानि श्रोत्रियत्वाऽवृजिनत्वा-ऽकामहतत्वानि तस्य तस्याऽऽनन्दस्य प्राप्तौ अर्थादभिहितानि ।' (बृ० उ० भा०४.३.३३)

वेदान्तद्वयेऽपि श्रोत्रियशब्देन धर्मप्रतिष्ठापनार्थं गृहीतसन्न्यासस्य वैदिकस्य ब्राह्मणपरिव्राजकस्य ग्रहणे किमपि लिङ्गं नास्ति । प्रयोजनमपि नास्ति । संन्यासस्तु सर्वथा देहात्मवादिनामवैदिकानां भोगिनामसुराणामेव ।

**यदहरेव विरजेत् तदहरेव प्रव्रजेत् ।**

( जाबा० ४, प० प० उ० २, नारदप० ३७७, याज्ञव० १ )

इति सन्न्यासश्रुतौ रागिणां कामुकानामेव वैराग्य-प्राप्तौ सन्न्यासोपदेशः, न निष्कामाणाम् वैदिकै-स्तु धर्मस्थापनार्थमेव पारिव्राज्यम् । तदपि ब्राह्मणानामेव ।

वैदिकैस्तु धर्मसंस्थापनार्थमेव पारिव्राज्यम्, तदपि ब्राह्मणानामेवाऽङ्गीकृतम् । पारिव्राज्यमन्तरा सर्वत्र धर्मस्थापनाया अशक्यत्वात् । क्षत्रियादीनां पारिव्राज्यमन्तराऽपि **अभयं वै जनक प्राप्तोऽसि** ( मा० बृ० ३.११.६ ) इत्यभयप्राप्तिदर्शनात् । भोगापवर्गवादस्य भोगसन्न्यासवादस्य वा अवैदिक-त्वात् । आत्मैकत्वविद्याया ब्रह्मविद्याया वा वेदान्ते-ष्वेव श्रवणात् ।

भोगापवर्गवादिभिश्च आत्मभेदाभ्युपगमाद वैदिकस्य दर्शनस्य प्रत्यासन्नमपि योगदर्शनम्—

**स्वरूपप्रतिष्ठा वा चितिशक्तेः ।**

( यो० सू० ४. ३४ )

इत्यात्मनः चितिशक्तिपर्यन्तमेव गच्छति । चित् ज्ञानमिति च पर्यायाः । ज्ञानपर्यन्तमेव गच्छति, नाऽऽनन्दांशपर्यन्तमिति यावत् । स्वरूपप्रतिष्ठायां वा चितिशक्तौ दर्शनेऽस्मिन् कर्मणोऽन्तो भवति । तथा हि भगवद्गीतासु—

**सर्वं कर्माऽखिलं पार्थ ज्ञाने परिसमाप्यते ।**
( ४.३३ ) ज्ञाने इति । यदा स्वरूपप्रतिष्ठा चितिशक्तिर्भवति तदा व्युत्थाने वृत्तिसारूप्ये क्रियाः प्रवर्तन्ते । अखिलमिति । आशयसहितम् कर्माशयोऽपि नावशिष्यते ।

अत एवेदं 'कृतान्तम्' इति व्यपदिश्यते । तथा हि गीताशास्त्रे—

**सांख्ये कृतान्ते प्रोक्तानि ।** ( ८.१३ )
कृतान्ते सांख्ये ज्ञानप्रतिपादकशास्त्रे प्रोक्तानि । यदा चितिशक्तेर्ज्ञानस्य वाऽऽम्नवेदस्य वाऽऽनन्दांशे लयो भवति, योगी चाऽऽनन्दमयः सम्पद्यते, तदा वेदस्य ज्ञानस्य चितिशक्तेर्वा अन्तो भवति । भूमिकायामस्यां वेदान्तो भवतीति ब्रह्मप्रतिपादकशास्त्रम् आत्मैकत्वप्रतिपादकशास्त्रं वा वेदान्तशास्त्रमिति व्यपदिश्यत इति दार्शनिकैरवगन्तव्यम् । आत्मैकत्वाभावाद् आनन्दांशस्य ब्रह्मधर्मस्य द्वैतिनां योगिनामपि समाधौ प्रतीतिर्न भवति ।

वेदान्तद्वयेऽपि श्रोत्रियस्य ब्रह्मानन्द उक्त इति वैदिकमेव दर्शनं तत्र प्रतिपादितम् । न द्वैतिनां भोगिनामपवर्गदर्शनं संन्यासदर्शनं वा । एवमत्र कामहतानामवैदिकं दर्शनम्, अकामहतानां च वैदिकं दर्शनमिति दर्शनद्वयं प्रतिपादितम् । न पुनरवैदिकानां भोगापवर्गवादिनां भोगसन्न्यासवादिनां वा भोगवादः सन्न्यासवादश्च । कामहतानां तार्किकाणामयं भोगवादो गीताशास्त्रेऽपि निन्दित एव । तथा हि—

**त्रैविद्या मां सोमपाः पूतपापा**
**यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोक-**
**मश्नन्ति दिव्यान् दिवि देवभोगान् ॥**
**ते तं भुक्त्वा स्वर्गलोकं विशालं**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना**
**गतागतं कामकामा लभन्ते ॥**
( ९.२०,२१ ) इति ।

किञ्चान्यत्—**करिष्ये वचनं तव** ( गी० १८.७३ ) इति गुरुपरिचर्या इहामुत्रभोगविरागमन्तरा न भवति । कर्मसन्न्यास एवाऽत्र विधीयते । गुरोराज्ञयैव कर्माण्यनुष्ठीयन्ते इति आत्मनः कामस्य कामाचारस्य च अवकाश एव नास्ति । योगशास्त्रप्रोक्तम्—

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम् ।** ( योग सू० १.१५ )
इति वशीकारसंज्ञावैराग्यम् ब्रह्मविद्याप्राप्त्या च पुरुषख्यातेः—

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ।**
( यो० सू० १.१६ )
इति परं वैराग्यं चेति वैराग्यद्वयम् आबाल्यादेव सिद्ध्यति । गुरुपरिचर्या च मन्त्रे एव श्रूयते । तथा हि—

**मम व्रते ते हृदयं दधामि**
**मम चित्तमनु चित्तं तेऽस्तु ।**
**मम वाचमेकमना जुषस्व**
**बृहस्पतिष्ट्वा नियुनक्तु मह्यम् ॥**
( पारस्कर-गृह्यसूत्रम् २.२.१६ )

अत्र मम चित्तमनु चित्तं तेऽस्तु इति गुरुशिष्ययोश्चिदंशेन मीलनं सम्पद्यते । अभ्यस्तेऽस्मिन् मीलने योगे वा—**मच्चित्तः सततं भव** ( गीता १८.५७ ), **मन्मना भव** (गी० ९ ३४; १८.६५) इति ब्रह्मणा साकं चिदंशेन मीलनं सरलं सम्पद्यते । अवैदिकेन **योगश्चित्तवृत्तिनिरोधः** ( यो० सू० १.२ ) इति वृत्तिनिरोधमार्गेण वैराग्यद्वयमनेकजन्मसाध्यमेव । का कथा पुरुषख्यातेः ?

( क्रमशः )

# मदीया द्वितीया अध्ययन-यात्रा

—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योग-तन्त्रविभागस्य वा० सं० वि० वि० ]

[ श्रीद्विवेदमहाभागा दर्शनागमशास्त्राणां विशिष्टा विद्वांसो गवेषकाश्च सन्ति। तैर्दक्षिणभारतस्य ईदृशी अध्ययन-यात्रा पूर्वमपि वारमेकं कृता यस्य विवरणं पाठकानां नापरिचितम्। सत्यमनेन उपक्रमेण तत्रस्थदर्शनीय-स्थानानां परिचयेण साकं किमपि विशिष्टं बौद्धिकं खाद्यमपि शोधसंलग्नानामाप्यायनाय समासाद्येत। 'सूर्योदयो'ऽस्याः कृपायाः कृते विदुषां तेषामतीव अनुगृहीत इति सादरं संसूच्यते।—सम्पादकेन ]

( २ )

बेजवाडातो श्रीमल्लिकार्जुनस्य भगवतो दर्शनाय श्रीशैलं प्रति गमनार्थं प्रातरेवास्माभिः गुण्टूरनगरं प्रति प्रस्थितं मृत्तैलयानेन। गुण्टूरनगरतः प्रातर्नववादवेलायां रात्रौ चापि नववादनवेलायामेव श्रीशैलं प्रति मृत्तैलयानं प्रचलति। एतच्च पूर्वं नैव परिज्ञातमासीदस्माकम्। अस्माभिर्गुण्टूरनगरं दशवादनवेलायामधिगतम्। रात्रौ नववादनं यावत् किं कर्तव्यमिति विचारपरा वयं समीप एव स्थितस्य अमरावतीस्तूपस्य अवलोकननिश्चयमकुर्म। पूर्वं 'धान्यकटक'नाम्ना प्रसिद्धायामस्याम् अमरावत्यां सुन्दरतमो बौद्धस्तूप आसीन्निर्मितः। तत्स्थलमद्यापि विलोकयितुं शक्यते, यत्र हि स्तूप एषोऽवस्थित आसीत्। मृत्तिकानिचयमात्रं तत्रावलोक्यते साम्प्रतम्। कीदृश आसीदत्रत्यस्य स्तूपस्याऽऽकारः, कथं च स प्रस्तरेषु उत्कीर्णया मूर्तिकलया स्थापत्यकलया चालङ्कृत आसीदिति सर्वमेतदत्रैव सङ्ग्रहालये स्थापितेषु भग्नावशेषेषु साधु द्रष्टुं शक्यते। तत्रत्या स्थापत्यकला विशेषतो मूर्तिकला 'नागार्जुन-कोण्डा'-स्थिता च कला प्रायः समानजातीयैव भूरि भूरि प्रशंसिता कलामर्मज्ञैः। बौद्धसंस्कृतेः प्रसिद्धं नागार्जुन-कोण्डा-नामकं स्थलं प्रसिद्धस्याचार्यस्य नागार्जुनस्य तपस्यया पूतं साम्प्रतं कृष्णाया नद्याः परिसरेषु निर्मितस्य नागार्जुनसागरस्य उदरे विलीनम्। अत्रत्याः सर्वे कलावशेषाः सङ्ग्रहालये संरक्षिताः। समयसङ्कोचात् तत्रास्माभिर्गन्तुं नापारि। अमरावत्यां कृष्णाया नद्या दक्षिणे तटे अमरेशस्य भगवतो मन्दिरं राजते। अत्र हि शिवरात्रिपर्वणि महानुत्सवो जनसंमर्दश्च भवति। नागार्जुनकोण्डा-अमरावतीपरिसरेषु कदाचन बौद्धधर्मस्य, संस्कृतेः, कलायाश्च महान् प्रचार आसीदिति स्थलानामेषां यात्रया स्फुटं परिज्ञायते। अमरावती पुरा सातवाहनवंश्यानां नृपतीनां राजधानी आसीत्। अत्रैव कश्चन प्राचीनो विश्वविद्यालयश्चासीत्। साम्प्रतं स्थलमेतदुपेक्षितमिव दृश्यते।

अमरावतीतः पुनरेव गुण्टूरनगरं परावृत्त्य रात्रौ नववादनवेलायां मृत्तैलयानमारुह्य प्रातश्चतुर्वादनवेलायां श्रीशैलमधिगतम्। रात्रावपि मृत्तैलयानानि प्रचलन्तीति वैशिष्ट्यमेतद् अवलोकितमान्ध्रप्रदेशस्य। अत्रापि मल्लिकार्जुनस्य भगवतो मन्दिरं निकषाऽवस्थिते शाङ्करे मठ एव स्थितमस्माभिः। अत्रत्या व्यवस्थापकाः श्रीमन्तो वेङ्कटेश्वर-अय्यरमहाभागा अतीव सरलस्वभावा अतिथिसत्कारप्रवणाश्चावलोकिताः। आवश्यककृत्यानि निर्वर्त्य पातालगङ्गायां स्नातम्। इतः सार्धैककोशदूरं प्रायः सहस्र-

परिमितानि सोपानान्यवरुह्यासाद्यते पातालगङ्गेति नाम्ना प्रसिद्धं स्थलम् । अत्रापि प्रवहति दक्षिणभारतस्य पवित्रतमा कृष्णा नाम नदी पर्वतोदरेषु, अत एव पातालगङ्गेति नाम्ना परिचीयते । कृष्णायाः पावने स्वच्छे च जले स्नात्वा जलं च गृहीत्वा द्वादशज्योतिर्लिङ्गेषु द्वितीयस्य मल्लिकार्जुनस्य भगवतो दर्शनार्थं तन्मन्दिरं समासादि । जनसंमर्दो मा भूदिति मनीषया एकान्तदर्शनार्थं निश्चितं सपादैकरूप्यकमितं शुल्कमर्पयित्वा देवाराधनार्थं गर्भमन्दिरं प्रावेशि, कृतार्थीकृतानि चेमानि चर्मचक्षूंषि ।

आन्ध्रप्रदेशे विशेषतो विजयवाड़ा-तिरुपति-प्रभृतिषु स्थानेषु ग्रीष्मर्तौ भगवान् सूर्यस्तथैव तपति, यथा हि उत्तरे भारते । यात्रामार्गे सर्वत्रैव पञ्चपणकमात्रव्ययेन 'सोडावाटर'-सीसककुतुपाः ( बोतल ) लभ्यन्ते । अनेन जलाभावः क्वापि नैवानुभूयते । भोजनानन्तरम् उच्छिष्टहस्तमुखादिप्रक्षालनमप्यनेनैव कुर्वन्तो जना दृश्येरंस्तत्र तत्र । आन्ध्रप्रदेशस्य पार्वतेषु स्थलेषु प्रायो मृत्तैलयानान्येव बाहुल्येन प्रचलन्ति । श्रीशैलतः तिरुपतितीर्थं प्रति यानमेकमेव प्रवर्तते प्रातश्चतुर्वादनवेलायाम् । तच्च द्वितीये दिन एवाधिगन्तुं शक्यत इति कालविलम्बमसहमानैरस्माभिः भोजनादिकं विधाय मृत्तैलयानमारुह्य नन्द्यालस्थानकं प्रति प्रस्थितम्, अधिगतं च तत् सायं पञ्चवादनवेलायाम् । किन्तु 'पातकं किमतः परम्' इति महेश्वरभट्टवचः प्रमाणयन्निव रात्रौ द्वादशवादनं यावदस्माभिर्नैव लौहयानं नापि च मृत्तैलयानं किमप्यधिगतम् । हैदराबाद-नगरतः प्रस्थाय तिरुपतितीर्थं प्रति प्रवर्तमानानि अनेकानि मृत्तैलयानानि तत्रागतानि, नैकस्मिन्नपि रिक्तमासीत् स्थानम् । शीघ्रमेव तिरुपतिगामि यानमुपलभ्येतेति धिया नैवावलोकितमितो नातिदूरं वर्तमानं महानन्दितीर्थमपि, यत्र हि गोमुखतोऽहर्निशं स्फटिकनिर्मलं जलं प्रवहति, पुरुषदघ्ने च तत्रत्ये जले पतितं सूचीसदृशं सूक्ष्ममपि वस्तु स्पष्टमवलोक्यते । अन्ततो रात्रौ द्वादशवादनवेलायां नन्द्यालस्थानकत[illegible] प्रस्थीयमाने मृत्तैलयाने कथं कथमपि स्थानमधिगत्य प्रातः सप्तवादनवेलायां वेङ्कटेशभगवतो नगरी समासादिता । तिरुपतितीर्थमागत्य रात्रिद्वयं यावन्मृत्तैलयानयात्रायां निद्राया अलाभात् जागरणेन क्लान्तेऽपि शरीरे मनः प्रसादपूर्णमासीत् ।

इयमासीदस्माकं तिरुपतितीर्थस्य द्वितीया यात्रा । प्रथमा यात्रा १९५५ तमे ईशवीयेवर्षे संस्कृतविश्वपरिषदश्चतुर्थाधिवेशनावसरे संपन्ना, यस्या हि विवरणं 'सारस्वतीसुषमा'-पत्रिकाया दशमवर्षीयाङ्के २११–२२४ तमपृष्ठेषु प्रकाशितम् । पूर्वपरिचितायां देवस्थानधर्मशालायां विश्रम्य स्नानादिकं नित्यकृत्यं च विधाय केन्द्रीयसंस्कृतविद्यापीठभवनं प्रति प्रास्थायि । अत्र ग्रन्थाध्यक्षपदे पूर्वपरिचितो वाराणसेय-संस्कृत-विश्वविद्यालयस्य-सरस्वतीभवनपुस्तकालये कृतसेवः सुहृत् श्रीमान् डी० सत्यनारायणशास्त्रिमहोदयो विराजते । विद्यापीठस्य सञ्चालकाः डा० वी० आर० शर्माणस्तदा तत्र नासन् । श्री डी० सत्यनारायणशास्त्रिणः कार्यालयस्य च सहयोगेन समीपस्थे तत्रत्ये छात्रावासे ग्रीष्मावकाशतया सावकाशे निवासादीनां समजायत शोभना व्यवस्था । छात्रावासप्रतिपालका बिहारराज्यवास्तव्याः श्री चौधरीमहोदयाः सारल्यमूर्तयोऽतिथिसत्कार-प्रवणास्तत्र सर्वविधसौविध्यप्रदानादिना अहरन्मनोऽस्मदीयम् । संस्कृतवाङ्मयसेवानिरतासु संस्थासु नवीनतम एष केन्द्रीयसंस्कृत-विद्यापीठः साम्प्रतं वैष्णवानामागमानां कोशनिर्माणकार्ये व्यापृतो वर्तते । पञ्चस्वेष्वेव वर्षेष्वत्र वैष्णवागमानां विशेषतः पाञ्चरात्रागमस्य शताधिकानां संहितानां विशेषतः पाञ्चरात्रागमस्यशताधिकानां संहितानां मातृकाः सङ्गृहीताः। पाञ्चरात्रागमसङ्ग्रहदृष्टया सर्वान् पुस्तकालयानातिशेते एष विद्यापीठपुस्तकालय इति निःसङ्कोचं वयं वचमः । अत्रास्माभिः कोशनिर्माणकार्ये व्यापृताः श्रीमन्त एम० डी० बालसुब्रह्मण्यशास्त्रि-बी० स्वामीनाथन्-आसुरि श्रीनिवास-[illegible] विद्वांसो दृष्टाः, तैः सह सुहृत्सम्बन्धश्च

स्थापितः। अनिरुद्धसंहितादि - पाञ्चरात्रसंहिताग्रन्थानां संपादकाः आसुरि-श्रीनिवासअायङ्गारमहोदयाः पाञ्चरात्रागमस्य मर्मज्ञा विद्वांसः। अधुनावधि ३५० संख्यापरिमितानां पाञ्चरात्रसंहिताग्रन्थानां नामान्येभिः संगृहातानि। एतेषां सहयोगेन मद्रपुरीतो रोमन-तमिललिपिमयो ग्रन्थ एकः प्रकाशितः 'पाञ्चरात्र फेनामोना' इत्याख्यः, यत्र बह्वीनां पाञ्चरात्रसंहितानां परिचयो वर्तते। सत्वरमेभिरपि कश्चन ग्रन्थः प्रकाशयिष्यते, यत्र विस्तरेण पाञ्चरात्रसंहितानां परिचयो भविष्यति। सव्याख्या ईश्वरसंहिता, नारदसंहिता च तत्र द्वाभ्यां विद्वद्भ्यां संपाद्यते। आशास्यते शीघ्रमेवानयोः प्रकाशनं भविष्यति। अत्र दिनत्रयं यावदस्माभिर्ग्रन्थावलोकनादिकमाचरितम्।

प्रातः सप्तवादनतो मध्याह्ने द्वादशवादनपर्यन्तमासीद्विद्यापीठस्य कार्यसमयः। प्रथमे दिने मध्याह्नोत्तरं पूर्वमस्माभिः श्री डी० सत्यनारायणशास्त्रिणां गृहे गतम्, तदनु च तैः सह वाराणस्यामेव गृहीतविद्यानां बिहारवास्तव्यानां श्रीहरिहरझाशर्मणाम्। एतेऽपि विद्यापीठ एव व्याख्यातृपदमलङ्कुर्वन्ति। रात्रौ गोविन्दराजभगवतो दर्शनं विधाय तत्रैव निवसतां वेङ्कटेश्वरशोधसंस्थान-संरक्षकाणां क्यूरेटर-पदभाजां श्रीमताम् एन० सुब्रह्मण्यशास्त्रिणां गृहे गतम्। एते हि महानुभावाः स्वर्गीय-महामहोपाध्यायानाम् अनन्तकृष्णशास्त्रिणां जामातरः सन्ति।

द्वितीयस्मिन् दिने प्रातःकाले विद्यापीठपुस्तकालये मध्याह्ने च वेङ्कटेश्वर-शोधसंस्थान-पुस्तकालये स्थित्वा ग्रन्थावलोकनादिकं विहितम्। अत्रापि वैष्णवागमानां शैवागमानां च नैका मातृका दृष्टाः। वेङ्कटेश्वर-शोधसंस्थानं वैखानसागमानां प्रकाशनविधाने प्रथितमिति जानन्ति विद्वांसः। तिरुपतिनगरतो नातिदूरं पर्वतशिखरे तिरुमलै-स्थाने कृतनिवासो भगवान् वेङ्कटेश्वरो वैखानसागमपद्धत्यैवार्च्यते। वेङ्कटेश्वर-शोधसंस्थानं साम्प्रतं वेङ्कटेश्वरविश्वविद्यालयपुस्तकालय-भवनस्यएकदेशेऽवस्थितम्। वेङ्कटेश्वरविश्वविद्यालय एव विशिष्टाद्वैतकोशादिग्रन्थानां निर्मातारो विशिष्टाद्वैतदर्शनस्य मूर्धन्या विद्वांसः श्री ताताचार्यमहोदया दृष्टाः। एते हि महानुभावाः साम्प्रतं तत्र दर्शनशास्त्राणां परिभाषिक-शब्दकोश-निर्माणे व्यापृताः।

अपराह्णेऽस्माभिः कालहस्ति-तीर्थस्य यात्रा मृत्तैलयानेन समाचरिता। शिवस्य भगवतो द्वादशज्योतिर्लिङ्गान्यस्माभिः पूर्वं चर्चितानि। दक्षिणे भारते पञ्चभूतलिङ्गानि प्रसिद्धानि। तद्यथा—

मृल्लिङ्गरूपमभवत् शिव आम्रनाथः,
अब्लिङ्गरूपमभवत् खलु जम्बुकेशः।
लिङ्गं च तैजसमभूत् त्वरुणाचलेशः,
श्रीकालहस्त्यधिपतिः खलु वायुलिङ्गम्॥
आकाशलिङ्गमभवत् स चिदम्बरेशः···

(कालहस्तीश्वर-सुप्रभातम्, १८-१९)

अत्र आम्रनाथः कृतकाञ्चीनिवासः! जम्बुकेशश्च त्रिचनापल्ली-समीपवर्ती शिवः। कालहस्तिमन्दिरं तिरुपतितो नातिदूरं स्वर्णमुखीनदीतटेऽवस्थितम्। तत्र भगवतोऽर्चनादिकं विधाय पुनरपि तिरुपतिनगरमेवागत्य रात्रौ तत्रैव उषित्वा प्रातर्नववादन-वेलायाम् आम्रनाथस्य भगवतो दिदृक्षया श्रीकाञ्चीपुरं प्रति प्रस्थितम्। तिरुपतितः प्रस्थानात् पूर्वं प्रायः सप्तवादने केन्द्रीय-संस्कृतविद्यापीठे प्रवाचकानां श्रीमताम् एस० डी० बालसुब्रह्मण्यशास्त्रिणां गृहे तैः सह वार्तालापादिप्रसङ्गः चिरस्मरणीय आसीत्।

मध्याह्ने एवास्माभिः सप्तसु पुरीषु प्रथिता काञ्चीपुरी समधिगता। अत्रास्माभिः कियत्कालं यावद्विश्रम्य काञ्चीकामकोटिपीठे देवदर्शनादिकं चतुर्वादनानन्तरमेव भवितेति ज्ञात्वा विद्वत्समागमाभिलाषेण विष्णुकाञ्च्यां निवसतां श्रीमतामण्णङ्गराचार्यमहोदयानां गृहं समासादि। दृष्टाश्च ते तत्र अशीत्युतरायुषोऽपि मध्याह्ने विश्रामवेलायां [illegible] महताऽऽयासेन धनव्ययेन चैभिः

'वैदिकमनोहरा' नाम्नी मासपत्रिका प्रकाश्यते । वैदिकमनोहरायामेभिः तमिलभाषामयः सम्पूर्ण आलवाराणां दिव्यप्रबन्धः संस्कृतगिराऽनूद्य प्रकाशितः । प्रायः षट्शताधिका ग्रन्था एभिर्विरचिता अनूदिताः संपादिताश्च । इतः परमप्यनवरतं कार्यव्यापृता एते वैष्णवेषु टेङ्कलैमतानुयायिनस्तमिलभाषामयानुपदेशान् संस्कृतवाण्या प्रचिचारयिषवो यूनोऽतिशेरते समुद्यमेन स्वेन । शास्त्रेषु कृतभूरिपरिश्रमाणां कृतीनामीदृशानां दर्शनेन जन्मसाफल्यं मन्वानेन मया तान् नमस्कृत्य वरदभगवतो दर्शनाय वरदराजमन्दिरं नातिदूरमवस्थितं प्रावेशि । प्रवेशानुकालमेव समजायत महती वृष्टिः प्रायो होरैककालव्यापिनी । गोपुरे एव गृहीतशरणोऽहं दृष्टवान् प्रभूतजलाप्लुतं मन्दिरप्राङ्गणं गोपुरं च । कथं कथमपि सञ्जाते वृष्टचवसानेजलाप्लुतेनैव पथा गर्भगृहं प्रावेशि, दृट्वा च वरदभगवतो मनोरमां प्रतिमां कृतार्थीकृतानि चक्षुंषि, अधिगतं च साफल्यं मनुष्यजनुषः ।

श्रीकाञ्चीपुरी साम्प्रतं 'कांजीवरम्' नाम्ना प्रथिता शिवकाञ्ची, विष्णुकाञ्चीति नामभ्यां द्विधा विभक्ताऽभूत् कदाचन, अद्यापि च तथैव परिचीयते । शिवकाञ्च्यां शिवस्य शक्तेश्च, विष्णुकाञ्च्यां च विष्णोः परश्शतानि मन्दिराणि विद्यन्ते । अस्माभिर्विष्णुकाञ्च्यां केवलं वरदराजमन्दिरम्, शिवकाञ्च्यां च एकाम्रेश्वरमन्दिरं कामाक्षीमन्दिरं चावालोकि । एतदेव स्थानं शक्तिपीठेषु एकाम्रनाम्ना प्रख्यातम् । भगवत एकाम्रनाथस्य, भगवत्याः कामाख्यायाश्च दर्शनेनात्मनं पावयित्वा रात्रौ काञ्चीकामकोटिशाङ्करमठे विश्रम्य प्रातर्मद्रपुरीं प्रति प्रस्थितम्, दशवादनं यावदधिगता च सा नगरी । प्रथमायां दक्षिणभारतयात्रायामस्माभिः धनुष्कोटि - रामेश्वर - मदुराश्रीरङ्गम् - तञ्जोर - चिदम्बर - मद्रपुरीस्थितानां तीर्थानां यात्राऽक्रियत । एवं पञ्चसु भूतलिङ्गेषु मृदबाकाशप्रतिनिधीनाम् आम्रनाथ-कालहस्ति-चिदम्बरतीर्थानां यात्रा सम्पन्ना । प्रथममायां-मद्रपुरीयात्रायां डा० वी०

महोदयानां गृहम्, कुप्पूस्वामि-शस्त्रिशोधसंस्थानम्, तत्रैव स्थितो मैलापुर-संस्कृतमहाविद्यालयः, अड्यार-पुस्तकालयः, मद्रपुरीविश्वविद्यालयश्च दृष्टा आसन् । स्थानस्य परिचितत्वात् संस्कृतमहाविद्यालय एव स्थितमस्माभिः । इतो नातिदूरमासीद् डा० वी० राघवमहोदयानाम्, पण्डितवर्य-श्रीरामचन्द्रदीक्षितमहोदयानां साम्प्रतं स्वर्गीयाणां च गृहम्, अड्यार-पुस्तकालयभवनं च ।

नित्यकृत्यादिकं संपाद्य वयं सर्वप्रथमम् अडयारपुस्तकालयमगच्छाम । यत्र यत्रास्यां यात्रायां गन्तव्यमासीत् तत्र तत्र पूर्वमेवास्माकं विभागाध्यक्षैः पत्राणि प्रेषितानि, तेषामुत्तरं चाधिगतम् । अडयार-पुस्तकालये तत्पत्रे प्रदर्शिते नातिविलम्बमावश्यकनियमानुकूलं सदस्यतापत्रादिकं प्रपूर्य तत्कक्षे प्रवेशोऽलम्भि, यत्रानुसन्धातारः स्वकार्यमेकान्ते शान्ते च स्थले स्थित्वा संपादयन्ति । एशियाटिक-सोसाइटी-पुस्तकालये यथा सर्वप्रथममस्माभिः काशीनाथभट्टरचितायाः 'शिवाद्वैतप्रकाशिका'याः पाठसङ्कलनमाचरितम्, तथैवात्र सर्वप्रथमं वयमादिनाथसिद्धरचितायाः 'परापञ्चाशिका'या देवनागरलिपिमय्याः पाठसङ्कलनमकुर्म । ग्रन्थ एषः 'अनुत्तर बोधपञ्चाशिका'-नाम्ना काश्मीरग्रन्थमालायां मुद्रितोऽपि अशुद्धिभूयिष्ठत्रुटितश्च विद्यते । अस्य ग्रन्थस्यान्या अपि तिस्रो मातृकास्तेलुगुलिपिमय्य आसंस्तत्र सङ्गृहीताः । यदाऽहं परापञ्चाशिकापाठ-सङ्कलने व्यापृत आसम्, तदैव सहसा पृष्ठभागतो मामाह्वयतः कर्णाटदेशलब्धजनुषोऽपि साम्प्रतं वाराणसीवास्तव्यान् श्रीमतो हेब्बारशास्त्रिणो दृष्टवान् । बहुश्रुताः शास्त्रार्थपारङ्गताः एते महानुभावा नानालिपिज्ञानवन्त इति पूर्वमेव परिचिता आसन् । बडोदास्थगायकवाड-शोधसंस्थानतः समागताया ग्रन्थलिपिमय्याः 'सात्वतसंहिता'याः पाठसङ्कलने साहाय्यमाचरितं पूर्वमेभिर्महानुभावैः । एतेषां दर्शनेन न केवलं परापञ्चाशिकातेलुगुमातृकापाठ-सङ्कलनसमस्या समाहिता, अपि तु भोजन[illegible]ना व्यवस्था समजायत । एते हि

पूर्वतोऽनुवृत्ता—अरण्यकाण्डम्

## मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए०, साहित्याचार्यः—

शून्यं दृष्ट्वा रावणस्तु यतिः सीतामुपाययौ।
यद्भीत्या जागरा नित्यं नादन्त्यन्नं सुरासुराः॥
चौर्याय निर्गतः सोऽद्य श्वेव पश्यन्नितस्ततः।
काकभूशुण्डिरवदत् खगेश! नियमोऽस्त्ययम्॥
न्यस्यतः कुत्सिते मार्गे पदं मर्त्यस्य तत्क्षणात्।
न तिष्ठति तनौ तेजोधीबलानां लवोऽप्यदः॥
श्रावयित्वा ततः सीतां सुरूपा विविधाः कथाः।
अदर्शयद् भियं प्रीतिं राजनीतिश्च रावणः॥

सीता प्राह यते मान्य! त्वं तु दुष्ट इवाऽवदः।
स ततोऽदर्शद् रूपं नाम चाश्रावयत् स्वकम्॥
भीता सीताऽपि धृत्वाऽपि धैर्यमूचे दशाननम्।
तिष्ठ दुष्ट क्षणं तिष्ठ प्रभुरत्रायमागतः॥
यथा वाञ्छन् हरेर्भार्यां शशः कालवशो भवेत्।
अद्य त्वमसि सज्जातस्तथा रक्षोगणेश्वर॥
तच्छ्रुत्वा रावणः क्रुद्धो नत्वा तुष्टस्तु तां हृदि।

**रथे समारोप्य तु तां रुषाक्तो**
**द्रुतं ययौ व्योमपथा तदा सः।**
**भीत्या महत्या त्वसमर्थ आसीद्**
**दशाननश्चालयितुं रथं स्वम्॥ २८॥**

आक्रन्दते ततः सीता हा नाथ रघुनायक।
कस्माद् दयाया व्यस्मार्षीरिकवीर ममागसः॥
हा विपन्नाश शरणसौख्यदायक नायक।
पाहि मां पाहि सर्वस्व रघुवंशाब्जभास्कर॥
हा सौमित्रे न ते दोषः कोपस्याप्तं फलं मया।
नाना विलपतीत्थं सा कृपा दूरैव मे प्रभोः॥
नित्यस्नेही मम प्राणनाथोऽप्यद्यास्ति दूरगः।
विपदं मे प्रभुं कोऽद्य विविक्ते श्रावयेत् पुनः॥
पुरोडाशं देवभोज्यं रासभो भोक्तुमिच्छति।
तस्या विलापं श्रुत्वेत्थं खिन्नं जातं चराचरम्॥

(क्रमशः)

---

महानुभावास्तत्र भास्कररायमखिनो 'मीमांसासूत्रपरिशिष्ट'भूतस्य 'सङ्कर्षणकाण्ड'स्य व्याख्यायाः 'चन्द्रिका'याः सम्पादनाय पाठसङ्कलनकर्मणि व्यापृताः सन्तोऽपि मामप्यन्वगृह्णन्निति सादरं हार्दं कार्तज्ञं प्रकाशयामि तेभ्यः।

प्रातरष्टवादनतः सायं पञ्चवादनं यावदासीद् अड्यार-पुस्तकालयस्य कार्यसमयः। अड्यार-पुस्तकालयो वर्तते 'थियासोफिकल सोसाइटी' इत्याख्यायाः संस्थाया अड्यार-नद्यास्तटे विस्तृतस्य उद्यानस्य नारिकेलाम्रादिनानाविधैः स्वादुफलैः परिपूर्णस्य मध्यभागे अष्टवादनतः पञ्चवादनं यावत् फलानि भक्षयित्वैव वयं शरीरस्थितिं निरवर्तामहि; स्फूर्तिदायकं स्वादु नारिकेलजलं प्रत्यहं श्रीहेब्बारशास्त्रिभिरस्माभिश्च पीयते स्म। श्रीहेब्बारशास्त्रिभिर्दात्रेण विच्छिद्य नारिकेलं निष्कासितं नवनीतकोमलं गाढतामापन्नारिकेलजलसारं दुग्धसार (मलाई) माधुर्यमप्यतिशेते स्म।

(क्रमशः)

पूर्वतोऽनुवृत्तम्—४९

# क्षत्रपति-महाकाव्यम्

— श्री उमाशङ्कर शर्मा त्रिपाठी —

[ आंग्लभाषा-प्राध्यापकः—काशी-विद्यापीठम्, वाराणसी ]

तृणं चरद्भिर्हरिणैरशङ्कं
द्रुमेषु रावैर्वयसां मनोज्ञैः ।
वियत्पथव्यापृत - धूमरेखै-
स्तपोवनैः सा शुशुभे धरित्री ॥ ४४ ॥

मेध्यासने वेदविदां समूहः
श्रुतिं सशाखामनुचिन्तयानः ।
मग्नः क्वचिद् ब्रह्मविचारसिन्धौ
समानयद् धातृसभामिवोर्व्याम् ॥ ४५ ॥

निसर्गकल्याण - परम्पराणां
दिव्याङ्गनानामिव सुन्दरीणाम् ।
पीयूषकण्ठस्तवमेव तन्वन्
माङ्गल्यगीतध्वनि - रुल्लास ॥ ४६ ॥

सर्वाः श्रियः सर्वकला मनोज्ञाः
शास्त्रावगाहप्रथिता बुधाश्च ।
राज्याभिषेक - क्रतवे नृपाय
समर्पयन् - नक्षयमात्महर्षम् ॥ ४७ ॥

पीताम्बरान् लोलशिखण्डभालान्
समानकण्ठ - स्वर - गीत - साम्नः ।
चेतो बटूनार्यपते - र्निरीक्ष्य
सस्मार पूर्वार्ययुगा - ऽनुभावम् ॥ ४८ ॥

अनारता - ऽभ्यासपथेन वेदाः
शास्त्राणि रम्यानुभवाः कलाश्च ।
चिरोज्झिता - ऽतीतपटुत्वमेव
लब्धुं पुना रागमिवाऽऽबबन्धुः ॥ ४९ ॥

कुलावतंसं कुलपर्वतास्तं
स्वांशैरिवानन्द्य बलप्रभावैः ।
धराभृदित्याप्तजनाऽभिशंसां
यथार्थसारां विदधु - र्विधिज्ञाः ॥ ५० ॥

यस्याश्चिरौत्सुक्यसमाकुलोऽपि
मनोरथो नोत्तरभारतोर्व्याम् ।
लेभे स्वतन्त्रावनिपाभिषेकं
सा नन्दिता देवनदी नृपेण ॥ ५१ ॥

भर्तुः प्रिया या धुरि वाहिनीनां
बिभर्ति तन्नाम तदेकभावा ।
सौभाग्यरागाय नृपश्रियः सा
तत्राऽऽजगामाम्बुमिषेण सिन्धुः ॥ ५२ ॥

सर्वाऽऽपगानां प्रियवल्लभेन
यागे समुद्रेण कृतः प्रवेशः ।
उपादिदेशेव पुरो जनानां
राष्ट्रौजसे नौबलमद्वितीयम् ॥ ५३ ॥

विभूतिमद्भि - र्निजदेशसारैः
सरिन्महीध्राऽम्बुधिभिः सयत्नम् ।
नृपाभिषेके सकुलाचलायाः
समुद्रनेम्याः प्रथितं महत्त्वम् ॥ ५४ ॥

सा प्रस्नुतस्तन्यभरैरिवास्त्रा
वात्सल्यधारैः सुतमापगेव ।
प्रस्नापयन्ती न शशाक सोढुं
निर्बन्धहर्षप्लव - माकुलाक्षी ॥ ५५ ॥

मनोरथाऽमर्त्यतरोर्निदेशाद्
गुरोः समर्थस्य विनीतसत्त्वः ।
अमोघ - पुण्यव्यवसायसन्धे
तीर्थाटनेऽसौ हृदयं ववन्ध ॥ ५६ ॥

अप्येनमल्पा - ऽनुचरानुजुष्टं
तीर्थेषु पुण्योपहतास्रवेषु ।
न क्वापि चित्तान्तरमोहजन्मा
बाधाऽपबाधं विधुरा बबाधे ॥ ५७ ॥

छायावितानैरपनीय खेदं
प्राणस्थितिं स्वादुफलैर्विधाय ।
आतिथ्यदीक्षाव्रतिनो वनान्ते
सिषेविरे तं तरवोऽवनीशम् ॥ ५८ ॥

विश्रब्धवृत्ति - व्यपनीतशङ्काः
तपस्वि - वात्सल्यजुष - श्चरन्तः ।
तपोवने बालकुरङ्गयूथाः
सदर्भहस्तं तरसा तमीयुः ॥ ५९ ॥

क्वचित् तमव्यक्तयथार्थभावं
सिद्धाः स्वरूपस्थितयः प्रसह्य ।
सस्नेहमार्यावनि - पालनाय
संवर्धयामासु - रमोघपुण्याः ॥ ६० ॥

दुरन्तभूपाल - बलावलेप-
प्रकाण्डदावानल - मूर्च्छितोर्वीम् ।
एकोऽपि योऽरक्षदवार्यधारै-
स्तं जामदग्न्यं नृपतिर्ववन्दे ॥ ६१ ॥

यस्याः प्रसादाश्चलमर्भकं तं
छत्रं यथाऽरक्षदशेषतापात् ।
प्रतापदुर्गं कुलमातरं तां

न केवलं तस्य पुरोऽसिपाणेः
रिपून् चिरोढाऽप्यजहाज्जयश्रीः ।
विडम्बनाऽप्यर्थभवाऽर्थिनां सा
जहौ जनैर्बन्धमवेक्षितैव ॥ ६३ ॥

प्रागेव तद्धस्तजलावपातात्
पपात भूदेव - वधूविषादः ।
समूषतु - र्मुक्तनिसर्गरोषं
तत् शारदा श्रीश्च मिथः सहर्षम् ॥ ६४ ॥

तं तीर्थपुण्योपचितप्रभावं
विश्वेश्वरः पात्रमवेक्ष्य विद्वान् ।
वेदोपदिष्ट - व्रतसाक्षिणेव
यज्ञोपवीतेन ववन्ध धाम्ना ॥ ६५ ॥

ज्ञानेन निर्धूतमलो यथात्मा
स्वरूपमाविन्दति निर्विकल्पम् ।
दीक्षाव्रतेनावनिपस्तथाऽसौ
स्वस्मिन् किमप्यन्वभवन्नवीनम् ॥ ६६ ॥

त्यागं नृपस्तं च महेन्द्रलक्ष्मी-
रबृंहयद् धर्मनिषेवितात्मा ।
किन्त्वर्थिनां तत्क्षणमात्तदोहो
न्यपूरयद् दुर्ललितोऽपि कामः ॥ ६७ ॥

गृहाच्चलन्तोऽप्यभिपारिजातं
तृप्ताः पथि स्वर्णमहीधरेण ।
यद्यर्थिनो रायगृहं प्रयाता-
स्तत्स्वर्गसौभाग्य - दिदृक्षयैव ॥ ६८ ॥

शिवेन्द्रकल्पद्रुमसम्भृताना-
मद्य द्विजानामवलोक्य दैन्यम् ।
निसर्गलोला कमलेति वादो
निमित्ततामर्हति निर्व्यलीकम् ॥ ६९ ॥

तदैव शङ्खानकदुन्दुभीना-
मुद्दामहर्ष - स्तनितावतारः ।
समन्ततो विष्णुपदं निपूर्य
नाकौकसां श्रोत्रपथं बभार ॥ ७० ॥

( क्रमशः )

# जैनधर्मः, तत्स्वरूपं च

—श्री 'अङ्गारः'—

जगति सर्वोऽपि जन्तुः सुखं कामयते। पांसुलपादो हालिकोऽपि वाञ्छति यत् सुखं मे भूयात्, दुःखञ्च मा भूदिति। तदर्थं प्रयतते जीवमात्रः। सत्यप्येवं केनापीह तादृशं सुखं नासाद्यते यच्च अवश्यम्भावि स्यात्, भूत्वा च पुनर्न नश्येत्। किमस्य निदानमित्यस्य मीमांसां कृत्वा यैरलौकिकः सफलः पन्थाः प्रदर्शितस्त एवास्माकं मान्या आचार्या दार्शनिकाश्च। देश-काल-व्यवस्था-पात्रादि-भेदेन समये समये आविर्भूय स्व-स्व-बुद्धिबलानुरूपं दुःख-निवारकं पन्थानं प्रदर्श्य नैकैराचार्यैः समनुगृहीताः संसा-रातपतप्ता जीवाः। तेषामस्मिन् कर्मणि सर्वथा करुणैव प्रमुख-प्रेरकशक्तिरूपेण जागर्ति। अतो नूनं ते सर्वै-र्भारतीयैर्विशेषतो नमस्याः।

एतेषु आचार्येषु सम्प्रदायप्रवर्तकेषु समाराध्या महावीरस्वामिनोऽपि विजयन्तेतराम्। तैः किल दुःख-तप्तानां जीवानां दुर्दशा विलोक्य परमया करुणया आगमानि अन्विष्यान्विष्य एको राजमार्गः प्रस्थापितः सांसारिकाणां पुरस्तात्। स एव 'जैनधर्म'-नाम्ना व्यपदिश्यते, यस्य परमं मङ्गलवचनमेतत्—

**णमो अरिहंताणं णमो सिद्धाणं**
**णमो आइरियाणम्।**
**णमो उवज्झायाणं**
**णमो लोए सव्वसाहूणम्॥'** इति।

अद्य वयमस्यैव जैनधर्मस्य संक्षिप्तं दर्शनं कर्तुं प्रवृत्ताः। तत्सन्दर्भे तत्प्रवर्तकानामपि महावीरस्वामिनां दर्शनमावश्यकमिति प्रथमतस्तदेव उपक्रम्यते।

## प्रवर्तका महावीरस्वामिनः

श्रीमहावीरस्वामिनामेतेषां जन्मकल्याणकम् ईशवीय-वत्सरतः ५९९ वर्षपूर्वं चैत्रशुक्लत्रयोदश्यां वैशाली-गणतन्त्रान्तर्गते कुण्डग्रामे वसिष्ठगोत्रीयस्य महाराजस्य सिद्धार्थस्य राजसदने सौभाग्यवत्याः त्रिशला-महिष्याः दक्षिणकुक्षितः समभवत्। वैशाली किल साम्प्रतिको बिहार-प्रदेशीय-मुजफ्फरपुरमण्डलान्तर्गतो 'बसाढ'नामा ग्रामोऽभिधीयते स्म। बाल्यकालत एव महावीरस्वामिषु वैराग्यदीपः प्रज्वलन् आसीत्। मातृपितृभ्यां तेषां विवाहोऽपि कृतः। तथापि सोऽपि तेषां वैराग्यदीप-शमनाय न प्राभवत्। अन्ततः पूर्णयौवन एव त्रिंशत्तमे वयसि गृहं त्यक्त्वा ते तपःसाधनाय निर्गताः। योग-साधनं कठोरं व्रताचरणञ्च कृत्वा तैः केवलज्ञानं समासादितम्। ततः परं ते जनान् अर्धमागध्या भाषया उपादिदिशुः। तेषामुपदेशे अहिंसासत्यास्तेयब्रह्मचर्या-परिग्रहाणां प्राधान्यमासीत्। त्रिंशद्वर्षाणि यावत् तैरियं धर्मदेशना कृता। ततः परं श्रमण-श्रमणी-श्रमणोपासक-श्रमणोपासिकानां चतुर्विधः सङ्घः स्थापितः। ते सम्यक्त्वं प्राप्य साम्ये प्रतितिष्ठन्तु इत्येव तेषामस्योपक्रमस्य लक्ष्यमासीत्, यच्च तदा सर्वथा मूर्तिमदभवत्। अन्ते ईशवीयवत्सरतः ५७७ मितवर्षपूर्वम् अपापापुर्याम् (पावा) आश्विनकृष्णामावास्यायां (अमान्तमानेन, पूर्णिमान्त-मानेन कार्तिककृष्णामायाम्) तैः निर्वाणकल्याणकं समासादितम्। महावीरस्वामिनो जैनधर्मस्य चतुर्विंशति-तमाः अन्तिमाः तीर्थङ्करा विराजन्ते। इतः पूर्वं त्रयो-विंशति-तीर्थङ्कराः समभवन् येषु आदिमास्तीर्थङ्करा ऋषभनाथस्वामिन आसन्।

महावीरस्वामिभिः प्रचालितस्य जैनधर्मस्य सम्प्र-दायद्वयं कालान्तरेण सम्पन्नम्—श्वेताम्बरसम्प्रदायो दिगम्बर-सम्प्रदायश्च। तेरापन्थिनः, स्थानकवासिनः एवमादयोऽवान्तरसम्प्रदाया अपि तत्राभवन्। परं मुख्यतमौ द्वावेव सम्प्रदायौ। उभावपि महावीरस्वामिनि अनेकान्तवादे च सममेव विश्वसतः।

काममवान्तरविषयेषु तयोः मतभेदः स्यात्। सम्प्रदाय-द्वयेन अनेन महावीरस्वामिनां कार्यं बहु विस्तारितम्, तत्रापि दिगम्बराणां दायो नूनं महत्तमो वक्तुं शक्यते।

## धर्मस्य रूपद्वयम्

इत्थं जैनधर्म-प्रवर्तन-प्रसारणस्य संक्षिप्तमैतिह्यं विलोक्य इदानीं जैनधर्मस्य स्वरूपदर्शनं प्रक्रम्यते। कस्यापि धर्मस्य रूपद्वयम्—१. विचारो २, आचारश्च। सत्येवं जैनधर्मस्यापि विचारेण आचारेण च भाव्यम्। विचार्यमाणे जैनधर्मस्य विचारस्य आधारभूमिः अनेकान्तवादः स्याद्वादो वा वर्तते, आचारस्य चाधारभूमिः अहिंसा। तदाश्रित एवायं निखिलोऽपि जैनधर्मः। अनयोर्विचार एव दर्शनकक्षायां प्रविशति। एवञ्च जैनदर्शनम्, जैनाचारश्च मिलितं सत् जैनधर्मस्य समग्रं रूपं भवति।

## जैन-दर्शनम्

तत्र जैनदर्शनं सर्वाणि दर्शनानि अतिशेते। यतो हि तत् सर्वेषां दार्शनिकानामभिमतानि मूलतत्त्वानि आदाय प्रवृत्तम्। कस्यापि विरोधस्तेन न कृतः। तन्मते एकमेव वस्तु अनेकधर्मात्मकं भवितुं शक्नोति। विभिन्नदृष्टिभिः कस्यचन वस्तुन अवलोकने तदनेकधर्मात्मकं दृश्यत एव। एकदृष्ट्या तदेव सत्, अपरया च असत् भवितुं न कापि बाधा। एक एव देवदत्तः कस्यचन पुत्रः, कस्यचन पिता, कस्यचन भ्राता, कस्यचन भागिनेयः, कस्यचन मित्रम्, कस्यचन शत्रुश्च जगति दृश्यते। अतः कस्मिन्नपि एक एव धर्मस्तिष्ठति इति कथनम् आग्रहग्रहिलमेव। तेन तस्य वस्तुनो वास्तविकं स्वरूपमेव बुद्धौ न प्रतितिष्ठति। इदमेव सरलतमरूपेण अनेकान्तवादस्य स्याद्वादापरपर्यायस्य संक्षिप्तं स्वरूपम्।

एतादृशज्ञानेन जीवो जीवन-मरणयोः संयोग-वियोगयोश्च सममेव तिष्ठति। सर्वमेव वस्तुजातं समं दृष्ट्वा तेन घृणां न करोति। विसदृशं च दृष्ट्वा आसक्तो न जायते। सर्वसंग्राहकोऽयं स्याद्वादो जैन-

स्याद्वादाधिष्ठितं जैनदर्शनमिदं संसारं जगच्च अनाद्यनन्तं मनुते। नास्ति कोऽपि जगतो निर्माता। 'जिनः' 'अर्हत्' वा केवलो परमात्मा। ईश्वराख्या अन्यवादिस्वीकृता कापि शक्तिरेव नास्ति, यया जगदिदं सञ्चाल्यते। षड्द्रव्यसिद्धान्तानुसारं सृष्टिरियम् अनादिनिधना तेषां मते। जैनमतानुसारं प्रत्येक आत्मा परमात्मा भवितुं शक्नोति।

जैनदर्शने रत्नत्रयं सप्त तत्त्वानि चाभिमतानि। रत्नत्रयमेतत् १. सम्यक् दर्शनम्, २. सम्यक् ज्ञानम्, ३. सम्यक् चारित्र्यञ्च निगद्यते। वास्तविकस्य सिद्धान्तस्य दर्शनम्, तदनुमोदनम्, तत्र श्रद्धा सम्यक्दर्शन-कक्षायां प्रविशति। देव-गुरु-शास्त्रेषु यथार्थश्रद्धा सप्ततत्त्वेषु श्रद्धा चापि विभागेऽस्मिन् अन्तर्गता। सम्यक्त्वपूर्वकं वस्तुनो यथार्थं ज्ञानं द्वितीयं रत्नम्। सम्यक्व्यवहार एव सम्यक्-चारित्रम्। त्रयमेतत् सहैव जायते। मिलिताश्चैव त्रयो 'मोक्षमार्ग'-पदेन व्यपदिश्यन्ते।

जैनदर्शनीयानि सप्त तत्त्वानि किल इत्थम्—१. जीवः, २. अजीवः, ३. आस्रवः, ४. बन्धः, ५. संवरः, ६. निर्जरा, ७. मोक्षश्चेति। केचन पाप-पुण्ये गृहीत्वा नव तत्त्वान्यपि स्वीकुर्वन्ति।

तत्र चेतनावन्तो वनस्पति-पशु-पक्षि-मनुष्यादयो जीवाः। चेतनाविरहिताः प्रस्तर-काष्ठादयः अजीवाः। आस्रवः किल बन्धनकारणानि। विषयभोगा इन्द्रियद्वारैः आत्मनि प्रविश्य तं विकृतं कुर्वन्ति। तेषु चतुर्विधा कषाया मुख्याः। जीवेन सह कर्मणो बन्धनं बन्धः। संवरः पुनः आस्रवस्य निरोधनम्, कर्मणामात्मानुगमनरोधो वा। बद्धानां कर्मणां जीवतो वियोजनं निर्जरा। सा च अविपाक-सविपाकभेदेन द्विधा। चरमं तत्त्वं मोक्षो हि आत्मनः सर्वकर्मबन्धनमुक्तिः। रत्नत्रयस्यात्र कर्मबन्धनशैथिल्यकरणे परमोपयोगो जायते।

**कर्मसिद्धान्तः**—जैनदर्शने कर्मसिद्धान्ते महान् भरो

तत्प्रकाशनं रुन्धन्ति। तेषां धारणेयं यत्सर्वे प्राणिनः स्वीयकर्मभिरेव दुःखानि उपभुञ्जते। कर्मबन्धनतो मुक्तिरेव मोक्षः। कर्मेदं न कर्तव्यविषया क्रिया। अपितु तादृशाः परमाणव एव, ये आत्मानं स्वस्मिन्नाकर्षन्ति।

कर्मबन्धनादस्मात् मोक्षस्य एक एव उपायो राग-द्वेषातीतता, विरक्तता च। अहिंसादिभिः आत्मा जीयते। विषयमताश्च दूरीकृत्य समता आसाद्यते। तदैव दुःखशान्ति-र्जायते। तदेव निर्वाणम्। समासत इदमेव जैनदर्शनम्।

## जैनाचार-स्वरूपम्

पूर्वमुक्तमेव यत् जैनधर्मस्य आचारशाखा एकमात्रा-ऽहिंसाधिष्ठिता। जैनधर्मेण अहिंसातत्त्वस्य यावान् विकासः कृतस्तावान् विकासः कुत्राऽपि न दृश्यते। जैनधर्मे तपस्यायाः परं महत्त्वं विद्यते। बाह्यतपसि जैनमुनीनां तपांसि सर्वथा अतुलनीयान्येव। तेषां द्वादशविधानि तपांसि शास्त्रे वर्णितानि। गृहस्थधर्मेषु पञ्च अणुव्रतानि, त्रीणि गुणव्रतानि चत्वारि शिक्षाव्रतानि च समाम्नातानि।

तपसो मूलभित्तिः सदाचारः। जैनधर्मे पञ्चव्रतेषु पञ्चसमितिषु गुप्तित्रये, भावनाचतुष्टये च महान् भरो दत्तः किल। अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाः व्रतानि। ईर्याभाषैषणाऽऽदान-निक्षेपोत्सर्गाः समितयः। मनोगुप्ति-वाग्गुप्ति-कायगुप्त्याख्याः त्रिविधा गुप्तयः। मैत्री-प्रमोद-कारुण्य-माध्यस्थरूपाः चतुर्विधा भावनाः। एतेषां स्वरूपं तत्र-तत्र शास्त्रतोऽवसेयम्। नेह विस्तर-भयाद् वितन्यते।

इत्थं आचार-विचारोभयशाखासमलङ्कृतस्य जैन-धर्मस्य अशेषतः परिपालनेन समस्तजागतिक-दुःखानां निवृत्तिः निर्वाणाख्यपरमसुखप्राप्तिर्जायत इति महावीर-स्वामिना उपदिष्टम्। सर्वसमन्वयकारिणोऽस्य धर्मस्य समन्वयोन्नायकेऽस्मिन् युगे समुत्कर्षः को नाम मतिमान् न काङ्क्षेत ? तत्करणं समस्तजैनानां परं कर्तव्यम्। परमिदं सावहितमवधेयं यत्तदुत्कर्षकरणे कथमपि जैनधर्मप्राणपदः समन्वयोऽनेकान्तसिद्धान्तो वा न [illegible]।

## मनोनुकूलम्

१. सुखं यदि प्रेप्ससि मित्र विश्वे,
पराकुरुष्वा - ऽलसतामपुण्याम्।
रमस्व भक्तौ जगदीश्वरस्य
कुरुष्व लोकं च मनोनुकूलम्॥

२. संसार एषोऽस्ति न सारहीनो
रत्नाकरोऽयं बहुरत्नपूर्णः।
अन्विष्य रत्नानि च वेदमूलं
कूलं समागच्छ मनोनुकूलम्॥

३. विनष्टवीर्यानिह रक्ष शक्त्या
सदैव सेवस्व गुरुंश्च भक्त्या।
विसृज्य लोभं कुविचारशूलं
शुभानि संयाहि मनोनुकूलम्॥

४. रूपाणि यो धारयते बहूनि
अव्यक्तरूप - श्चरतीष्टसिद्धौ।
मूढो जनोऽसौ नहि जीवनान्ते
सिद्धिं समाप्नोति मनोनुकूलाम्॥

५. आश्चर्यमेतज्जगति प्रवृत्तं
विद्वान् समायाति हिरण्यहीनः।
वित्ती परन्त्वाश्रितवित्तलाभः
भोग्यं बिभर्त्येष मनोनुकूलम्॥

६. बुधावमानं महिलाश्रुजालं
बुभुक्षितं चैव विलोक्य बालम्।
विचारयन्नाह कविः प्रशस्यः
न किञ्चिदत्रास्ति मनोनुकूलम्॥

—श्री प्रशस्यमित्र शास्त्री—

( ५६ पृष्ठस्य शेषांशः )

अनन्तरं गुहेन प्रक्षालितौ। तदाप्रभृति अद्यपर्यन्त-मसंख्याकजनानां हृदयानि द्रवीभूय अश्रुरूपेण परिप्लुतानि तौ पादौ प्रक्षालयन्ति।

अवतरणसुलभे तीरे नावं स्थापयति गुहः। पत्रैः पुष्पैश्च नावि आसनानि मृदुसुखानि सज्जयति। पुरस्तात् कर्णस्थाने गुह उपविशति। अनन्तरं रामः, अनन्तरं सीता, पश्चात् लक्ष्मणः।

नौः प्रचलितुं न शक्नुवन्ती कथञ्चित् प्रचलति। तस्मिन् सायंकाले गुहस्य हृदयमिव महता भारेण प्रचलति नौका।

आवर्तादिरहितेषु जलमार्गेषु नावं गुहः प्रचालयति। श्रीरामं गङ्गां तारयति।

'अपि न परिखिद्यसे नौकम्पनैः मातः ? अपि सुखमास्यते त्वया लक्ष्मण ?' इति मध्ये मध्ये मुहुर्मुहुरमायिकप्रश्नान् पृच्छन् नावं चालयति गुहः। शनैः शनैः तीरं गच्छति नौः।

दूरात् चित्रकूटोपान्तारण्येभ्यो ध्वान्तसमूहाः प्रसह्य बहिरपि निपतन्ति। सीता-राम-लक्ष्मणा नावः अवतरन्ति। स्वयमप्यवतरन् गुहो रामेण निरुद्धः।

'राम ! चतुर्दशवत्सराणामनन्तरं क्षण-मप्यालस्यं न करणीयम्। नो चेदहं जीवितुं नोत्सहिष्ये' इति गद्गदगलेन निश्श्वसन् कथञ्चिद्वदति गुहः।

'अथ किम्' इति दरहासेन रामो वदति।

त्रयश्चित्रकूटं प्रति प्रयान्ति। दूरात् चित्रकूटः सन्ध्यान्धकारे महान् हस्तीव, सान्द्रजीमूतसङ्घ इव च दृश्यते। गुहो नावं न प्रतिनिवर्तयति। पश्यन् तत्रैव तिष्ठति। सीता-राम-लक्ष्मणाः चित्रकूटं प्रविशन्ति। तीक्ष्णवीक्षणैरन्धकारं भेदयन् गुहस्तन्-मार्गं पश्यति। तस्मिन्नन्धकारे तरिताविव सीता लक्ष्मणश्च दृश्येते। तत्रैव रामेणापि भवितव्यमिति पश्यति गुहः।

**नष्टादित्या तिमिरमलिना शोकरूपेव सन्ध्या**
**वातो मन्दं चलति जगतो गाढनिश्श्वासतुल्यः।**
**गङ्गानद्याः सकरुणरवस्त्यक्तशून्या च नौका**
**तस्थावब्दान् दश च चतुरो तत्र रामाय दाशः॥**

इति मे प्रतिभाति।

'जनानां कोटीः यस्तारयति तं तारयति गुहः। सर्वस्यापि लोकस्य यः कर्णधारः तस्य रामस्य कर्णधारो गुहः। श्रूयतां भोः !' इति उच्चैर्व्याहरति तदाप्रभृति भारत-जगती।

सुग्रीवायापि या पदवी न दत्ता, गुहाय सा दत्ता रामेण। वालिवधानन्तरं यदा विषयलोलेन सुग्रीवेण रामकार्यं विस्मृतम्—

**न च सङ्कुचितः पन्था येन वाली हतो गतः।**
**समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः॥**

इति लक्ष्मणद्वारा सुग्रीवाय रामेण सन्दिष्टम्। केवलं गुहायैव मित्रपदवी प्रेम्णा करुणया च रामप्रभुणा दत्ता।

पट्टाभिषेकावसरे सर्वेष्वपि उपस्थितेषु सभायां कश्चिच्चामरं गृह्णाति, कश्चित् छत्रं धारयति, कश्चिद् द्वारि तिष्ठति, कश्चित् पादसमीपे उपविशति। सुग्रीव-जाम्बवदादयः सभ्यस्थानेषु उपविशन्ति। परम् एको गुहो मित्रस्थानमलङ्करोति।

**"छत्रग्राहकदूर्मिलारमण ! चञ्चच्चामरग्राहकत्**
**शत्रुध्वंसककैकयीतनुभव ! द्वास्सौविदद्वज्रभृत् !**
**पौत्र ! प्राकटपारिषद्यादिनज ! प्रैष्यद्हनूमन् सदा !**
**मित्रद्दाशकुलेश ! राज्यपदलक्ष्मीधूर्वहत्पादुक !"**

इति केनचिदान्ध्रकविना पट्टाभिषिक्तो रामचन्द्रः प्रकीर्तितः।

# कालिदास-साहित्ये गेयतत्त्वं सङ्गीततत्त्वं च

—श्री नन्दकिशोर पत्तरकिने—

कविकुलगुरोः कालिदासस्य साहित्यं रसिकजनान् तोषयति, मोदैः आपूरयति चेत्यत्र कः सन्देहः ? एतस्य काव्य-नाटकादीनां श्रवणमधुरत्वं कण्ठगेयत्वं न कोऽपि वारयितुं प्रभवेत् । न केवलं प्राच्याः, पाश्चात्त्याः 'गेटे'-सदृशाः शार्मण्यपुङ्गवा अपि कालिदासस्य विश्वविख्यातं शाकुन्तलं पठित्वा भावातिरेकैः ननर्तुः—

**वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्**
**यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम् ।**
**एकीभूतमभूतपूर्वमथवा स्वर्लोक-भूलोकयो-**
**रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम् ॥**

कालिदासस्य शाकुन्तलं विकसित-वासन्तम् ( Blu-the des fruhen ) इति पदेन गेटे-महोदयैः प्रशंसितम् । काव्यगताः स्वाभाविकसङ्गीतगुणा एवात्र तस्य प्रशंसाभाजनम् । अनेन लिखितं मेघदूतं खण्डकाव्य-मपि वैणिक-काव्यस्य गेयत्वं स्फुटीकरोति । अस्य गेयत्वे एकमेव कारणं कवेः भावानुकूला वर्णरचनैव । कालिदासस्य रुचिरवर्ण-पदविन्यासा कोमलकान्तपदावलिः काव्यस्य भावनां गीतरूपेण स्रावयतीति अहोभाग्यमेतत् । स्थाने खलु डॉ० राहूरकर-महोदयाः व्याहरन्ति—"सङ्गीत-वाद्यानि, सङ्गीतार्थः, मायूरी मार्जना, रागपरिवाहिनी गीतिः, कलाविशुद्धा गीतिः, वर्णपरिचयः, सङ्गीतस्य मानसिक प्रभावः, पक्षि-मधुरगानं लयतान-प्रदायित्वम्—एवमादयः सङ्गीतगुणाः कालिदासकाव्ये विद्यन्ते" इति ।

प्रथमं तावत् 'मालविकाग्निमित्रं' नाम नाटकमेव विमृशन्तु । अस्मिन् नाटके नृत्य-नाट्य-सङ्गीत-प्रकाराणां समुचितो निर्वाहोऽस्य सङ्गीतप्रधानत्वं सूचयति । नाट-कस्य नायिका गणदासस्य प्रियशिष्या मालविका नृत्य-गीतादिललितकलानां मूर्तिरेव आकारिता प्रेक्षकाणां पुरः-सरति । प्रथमाङ्के तस्याः नृत्यपाटवम् अग्निमित्रस्य उपस्थित्यां प्रस्तूयते । सङ्गीततत्त्वस्य सम्यक्तया निर्वाहः अत्रैव पूर्णरूपेण लभ्यते । यथा नृत्यावसाने गणदासो विविध-रागाणाम् आलापं करोति । उदाहरणरूपेण—**मायूरी मदयति मार्जना मनांसि** इति । अत्र 'मायूरी मार्जना' सङ्गीतशास्त्रीयो गीत-प्रकारः । मयूरस्य श्रुति-सुखदो रवो मनांसि संमोदयति खलु ।

नहि मालविकायाः नृत्यपाटवदर्शननिमित्तेन सङ्गीत-शास्त्रस्य नाट्ये समुचितं महत्त्वमेव कालिदासेन वर्णितम्, अपि तु गेयतायाः पुष्टीकरणार्थं समुचितवृत्तानां संयोजन-मपि सुष्ठु विहितम् । अग्निमित्रस्य कामावस्था-वर्णन-प्रसङ्गे उपयुक्तं शिखरिणी-वृत्तं ( **शरीरं क्षामं स्यात्** इति श्लोके ) तथैव **क्व रुजा हृदयप्रमाथिनी** इति वियोगिनी-वृत्ते च रचितः श्लोकस्तस्य हृदयस्य तन्त्रीं सारयति; सङ्गीतं च परिप्लावयति । संगीतस्य मानसिक-प्रभावो विशेषेण वर्तते, यश्च **आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानाम्** इति श्लोके वर्णितः । वसन्तर्तो-रागमनं हृदयानुरागं वर्धयति । अत्र लक्षितः 'सान्द्र-स्पर्शः' खलु चेतनतामापद्यते । मृदुव्यञ्जनबहुला शब्द-रचना श्लोकगत-गेयतां सूचयति ।

कालिदासस्य काव्यं ध्वन्यर्थप्रधानम्, अतः रसिकमते श्रेष्ठम् । अथाऽपि शब्दध्वनेः (Malopoeic words) अत्र नास्ति न्यूनता । ध्वन्यनुकरणात्मकशब्दानां प्रयोगे कालि-दासः सिद्धहस्त इव ज्ञायते । व्यञ्जनप्रचुराणां वर्णानां प्रयोजनेन ईप्सित-ध्वनेः निर्माणे सः सफलीभवति । यथा—

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।**
**गर्भाधान-क्षणपरिचयान् नूनमाबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥**

पवनस्य वहनक्रिया 'मन्दं मन्दं' शब्दाभ्यामभिव्यज्यते । चातकस्य पक्षिमधुरगानं श्रूयते । उत्तरमेघे पुनः पूर्णरूपेण सङ्गीतरसः समुपलभ्यते । यथा—

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**
**संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।**

कीचकानां घर्घरध्वनिः किन्नरीणां गायनम्, मुरजानां निर्ह्रादश्च—सगीते इतः किमधिकम्? तथैव च यक्षपत्न्याः विरहावस्थायां सहजतया प्रस्फुटितं गानमस्य काव्यस्य गेयत्वं लक्ष्यीकरोति । यथा—

**उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां**
**मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।**
**तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्**
**भूयो भूयः स्वयमपि कृतां 'मूर्च्छनां' विस्मरन्ती ॥**

अत्र शास्त्रीय-सङ्गीतस्य स्पष्टोल्लेखः प्रतीतिमुपयाति । गेयमुद्गातुकामा सा यक्षपत्नी वारं वारं स्वयमपि रचितां 'मूर्च्छनां' विस्मरति । 'मूर्च्छना' च सङ्गीतशास्त्रीयः स्वरावरोहक्रमः (Modulation of Voice) । यथा—

**स्वराणां स्थापना सान्ता मूर्च्छनाः सप्त सप्त हि ।**

कालिदासस्य साहित्यगुणानां पूर्णरूपेण आविष्कारः तस्य परिणतप्रज्ञायाः भाजने शाकुन्तले दृश्यते । पूते कण्वाश्रमे प्रस्फुटितं संवर्धितं दुष्यन्त-शकुन्तलयोः अन्योन्यं प्रेम कामपि शोभामावहति । तयोः भावनानां परिपाकस्तत्र विरचितेषु श्लोकेषु प्रपद्यते । जन्म-जन्मान्तराणां तेषां सङ्गतिः, एकं जीवनसङ्गीतं च मनसि अवधार्यते । कविना उपयोजिता वृत्तरचनैव श्लोकगतसङ्गीतं सुष्ठु परिचाययति । मन्दाक्रान्ता-द्रुतविलम्बित-शिखरिणी-प्रभृति-वृत्तानां परिशीलनादेतदेव ज्ञायते यद् भावनानां सङ्गीतरूपेण आविष्करणायैव तेषां व्यवहारः । कालिदासः शब्दसङ्गीतविज्ञः, सङ्गीत-शास्त्र-ज्ञाता च । शाकुन्तले स स्वीयां सङ्गीतज्ञतां परिचाययति । यदा पञ्चमाङ्के सङ्गीतशालायाः स्वरसंयोगः श्रूयते, तदा विदूषकोः भणति—**कलाविशुद्धायाः गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति** । अत्र कलाविशुद्धा गीतिः तथा समुद्भावना कृता । दृश्यतां तावत्, विशुद्धानाम्नी गीतिः ग्रामरागजनिका । अपरं तु गीताभ्यासे प्रथमतो वर्णपरिचयः कार्यः । एषा गीतिस्तु रागपरिवाहिनी एव दृश्यते ।

सङ्गीते कोऽपि अनिर्वचनीयो मानसिकः प्रभावो विद्यते । तच्छ्रवणेन कोऽपि अननुभूतः सन्तोषो मनसि जायते । उक्तं हि शाकुन्तले—

"**राजा**—किं नु खलु गीतम्, एवंविधार्थमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि । अथवा—

**रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्**
**पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं**
**भावस्थिराणि जननान्तर-सौहृदानि ॥**

श्लोकेनानेन सह आंग्लकविश्रेष्ठस्य 'द्वादशरात्रिः' (Twelfth Night) नाटके प्रारम्भे एव वर्णितायाः सङ्गीतस्य अनन्यसाधारणतायाः अत्र तुलना कार्या—

'If music be the food of love, play on; Give me excess of it, that, surfeiting, the appetite may sicken and so die. That strain again,' it had a dying falli O it came over my ear like a sweet sound.'

नूनं सङ्गीतगतं सुखदत्वम्, अनिर्वचनीयत्वं च न कोऽपि निवारयितुं क्षमः । विशेषतः काव्ये एतस्य परिष्कारोऽपरिहार्य एव । विना सङ्गीतेन काव्यं काव्यत्वमेव न भजेत् । आंग्ल-काव्यसमीक्षकः काव्यं व्याख्याति—

To exist as poetry emotions must be translated into music. भावनायाः सङ्गीताविष्कार एव काव्यम् । सङ्गीतप्रतिपादितं रमणीयभावनायाः वर्णनमेव काव्यम् । अत्र कालिदासोल्लिखितं गीतेः रागपरिवाहित्वं सुष्ठु लभ्यते ।—'संस्कृत-

## 'सूर्योदय'स्य स्वामित्वादिविषयकं विवरणम्

**प्रपत्रम् : ४ ( द्रष्टव्यो नियमः ८ )**

| | | |
|---|---|---|
| १. प्रकाशनस्थलम् | : | वाराणसी |
| २. प्रकाशनावधिः | : | मासिकम् |
| ३. मुद्रक-नाम | : | गोविन्द नरहरि वैजापुरकरः |
| राष्ट्रियता | : | भारतीयः |
| पत्र-सङ्केतः | : | ३०।४० घासीटोला वाराणसी |
| ४. प्रकाशक-नाम | : | गो० न० वैजापुरकरः |
| राष्ट्रियता | : | भारतीयः |
| पत्र-सङ्केतः | : | वाराणसी |
| ५. सम्पादक-नाम | : | गो० न० वैजापुरकरः |
| राष्ट्रियता | : | भारतीयः |
| पत्र-सङ्केतः | : | वाराणसी |
| ६. तेषां व्यक्तीनामंश-भागीनां वा नामानि पत्रसङ्केताश्च येषां सविधे समग्रस्य मूल-धनस्यैकप्रतिशततो-ऽधिको भागो वर्तते | : | श्रीभारतधर्ममहामण्डलम् जगतगंज, वाराणसी कैण्ट वाराणसी |

अहं गोविन्द नरहरि वैजापुरकर एतद्द्वारा। घोषयामि यदुपरिलिखितं विवरणं मदीयज्ञानविश्वासानुसारं सत्यमस्ति ।

दिनाङ्कः १-३-'६९

**( ह० ) गोविन्द नरहरि वैजापुरकरः**

प्रकाशकः

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते । धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम् । वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः ।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते । नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते । माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत ।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति । वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते । अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः ।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या । प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम् । अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते ।

. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् । तेन उत्तरलाभे मुधा विलम्बो न भवेत् ।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते । एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति । सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः ।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६० ) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत । | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी ।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट ।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० [illegible], वाराणसी ।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

❀

वर्षम् ४५

❀

अङ्कः ४

❀

सम्पादकः

गो० न० वैजापुरकरः

❀

अप्रैल

१९६९

❀

वार्षिक-मूल्यम

५) रूप्यकाणि

❀

प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्

❀


## सत्त्व-संशुद्धिः

सत्त्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः ।
सत्त्वेनाऽन्यतमौ हन्यात् सत्त्वं सत्त्वेन चैव हि ॥
आगमोऽपः प्रजा देशः कालः कर्म च जन्म च ।
ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः ॥
सात्त्विकान्येव सेवेत पुमान् सत्त्वविवृद्धये ।
ततो धर्मस्ततो ज्ञानं यावत् स्मृतिरपोहनम् ॥
रजस्तमोभ्यां यदपि विद्वान् विक्षिप्तधीः पुनः ।
अतन्द्रितो मनो युञ्जन् दोषदृष्टिर्न सज्जते ॥
यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्त्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव वा ॥
मदर्पणं निष्फलं वा सात्त्विकं निजकर्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥
एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणां च रजसि तमस्युद्धव रक्षसाम् ॥

एकादशस्कन्धे
१३,२५ अध्यायाभ्याम् } —श्रीमद्भागवततः

# आवश्यकं निवेदनम्

'सूर्योदय'स्यायं नूतनपञ्चचत्वारिंशद्वर्षीयस्तुरीयोऽङ्कः। अद्यावधि नैकैः ग्राहकैरस्य वार्षिकं शुल्कं पञ्चमुद्रात्मकं न प्रेषितम्। अतस्ते प्रार्थ्यन्ते यद् एतदङ्कप्राप्तेः समनन्तरमेव तत्प्रेष्य अनुग्राह्या वयमिति।

एवं संस्कृत-पाठशाला अपि विनिवेद्यन्ते यद् अद्यावधि नैकैर्वर्षैः सूर्योदयो भवतां सेवासु अमूल्यं प्रेष्यते। प्रतिदिनवर्धमान-महर्घतया समुल्लेख्यशासकीयानुदानालाभेन च विवशा वयमद्य ताः प्रार्थयामो यत् भवत्योऽस्य अङ्कस्य प्राप्तेः समनन्तरं रूप्यकपञ्चकमितं पत्रस्य वार्षिकं शुल्कमितः परं नियमतः संप्रेष्य संवर्धयन्तु पत्रमिदम्। आशास्महे यत् संस्कृत-पाठशाला अस्माकमिदं निवेदनं नूनं सफलयिष्यन्तीति।

—व्यवस्थापकस्य

# अ नु क्र मः

•



•

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, चैत्रः २०२६ : अप्रैल, १९६९ ई० [ ४ अङ्कः


## श्री ताराऽक्षरमाला

—श्री सरयूप्रसादशास्त्री 'द्विजेन्द्रः'—

मूलाधार-निवासिनीं गुणमयीं रक्तोत्पलोद्भासिनीम्,
नाभिस्थां कुलकुण्डलीं मधुमयीं पद्मोद्भवस्य प्रियाम् ।
हृद्देशेऽब्जसुधामयीं सुखमयीं लक्ष्मीशपूज्यां पराम्,
शीर्षस्थाञ्च सदा सदाशिवमयीं चिन्मातरं सन्दधे ॥ १ ॥

यद्ध्यानेन प्रकाशपुञ्जमनिशं देदीप्यते स्वे हृदि,
यज्ज्ञानेन तमो निरस्तमगमन्मिथ्याभिभूतं किल ।
यच्छ्रुत्वा श्रुतिगूहितं प्रकटितं श्रीसद्गुरूणां स्तवैः,
तत्सद्-ब्रह्म-विलासिनीं सजननीं स्तौति द्विजेन्द्रो नतः ॥ २ ॥

वर्णानुक्रम - योगेन तारा - रत्न - पदावली ।
गुम्फिता स्वर्णसूत्रेण मालेयं भुक्ति - मुक्तिदा ॥ ३ ॥

अजाऽपराऽम्बिका देवी अजपा चार्णमालिनी ।
आद्यादित्यविभाऽऽराध्या आदिशक्तिः स्मृता कलौ ॥ ४ ॥

इडेष्टदेन्दुरूपा या ईश्वरीश्वरवल्लभा ।
उभोषा चोग्रतारा साऽप्यूर्ध्वकेशीति संज्ञिता ॥ ५ ॥

ऋषिदेवाभिनन्द्या या ऋजुधर्मा ऋतुप्रदा ।
ऋकारा ऋद्धिदा सैव ऋग्वेद - निलया तथा ॥ ६ ॥

लृतुदन्ता लृप्तधर्मा लृकारा लृस्वरोद्भवा ।
एकाक्षरा तथा चैका एकैकस्वर - रञ्जिता ॥ ७ ॥

ऐन्द्री चैरावती देवी ऐँ बीजाक्षर - भूषिता ।
ओजा ओङ्काररूपा या औषधौपासनस्तथा ॥ ८ ॥
अंडमध्यास्थिता सैव अः सुमन्त्राभिपूजिता ।
ततो व्यञ्जनवर्णेषु तारानामानि गीयताम् ॥ ९ ॥
कला कालप्रिया काली कौलिनी केतकीप्रिया ।
खञ्जनाक्षी खलघ्नी च खर्वाङ्गी खड्गभूषिता ॥ १० ॥
गदाप्रिया च गायत्री गगनाधार - रूपिणी ।
घनाली घर्घराध्वाना घोर - दानव - दारिणी
ङाक्षरा पञ्चवर्णा या तां तारां प्रणयाम्यहम् ॥ ११ ॥
चपलां चतुरां चण्डीं चतुर्वेदमयीं तथा ।
छलिनीं छिन्नमस्ताञ्च छत्रच्छाया-समन्विताम् ॥ १२ ॥
जरादेवीं जगन्नाथप्रियां जीमूतवाहिनीम् ।
झरीं झर्झरिकां झिल्लीं ञाक्षरां तां नमाम्यहम् ॥ १३ ॥
टङ्कारकारिणी टीका - टिप्पणी - रूपिणी तथा ।
ठठंठठंठं सङ्गीती ठक्कुरी - नामधारिणी ॥ १४ ॥
डमरूप्रिया डियादेवी डण्डुभी डिम्भदायिनी ।
ढक्कारवा च ढक्काख्या णप्रियायै नमोनमः ॥ १५ ॥
तन्त्रज्ञा तारिका तारा तन्त्रकार्य - परायणा ।
थाक्षराद्या च थान्ता च थकाराक्षर - मालिनी ॥ १६ ॥
दयावती दयासिन्धु - द्विजेन्द्राऽनन्ददायिनी ।
धनधान्यप्रदा धीरा धात्री धन्या धरावती ॥ १७ ॥
नगराज-सुता नन्द - नन्दिनी नामभूषणा ।
पयः-पानप्रिया देवी पुराणा पिङ्गलप्रिया ॥ १८ ॥
फलदात्री फलज्ञात्री फाल्गुनी फणिभूषिता ।
बल - बुद्धिप्रदा बाला बोध-विद्या विधायिनी ॥ १९ ॥
भवभीतिहरा भीमा भयदा या भयङ्करी ।
महती महिमाधारा महामाया महेश्वरी ॥ २० ॥
यज्ञेश्वरी यशोविद्या योगानन्दा च योगिनी ।
रमणी रामदयिता राजराजेश्वरी रमा ॥ २१ ॥
लक्ष्मीरूपा तथा लीला - लवङ्ग - कुसमस्रजा ।
वरानना वसुमती विद्या वाणी विभूतिदा ॥ २२ ॥
शरण्या शबला शल्या शारदा च शिवङ्करी ।
षट्कोणचक्रमध्यस्था षड्वर्ग - फल - दायिनी ॥ २३ ॥
सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी सुरा ।
हकारवर्णनिलया ह्रींकार - प्रणवालिका ॥ २४ ॥
क्षमा क्षेमकरी क्षोणी-शान्तिदा तारिका च या ।
अक्षमाला स्मृता लोके सा चैव वर्णमातृका ॥ २५ ॥

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसादशास्त्रिणः—

आत्मिकं जगति यौगिकं स्मृतं शाब्दिकं किल समाजसंज्ञितम् ।
शास्त्रिकं च गदितं तदेव वै दाण्डिकं भवति राजसम्मतम् ॥ २१ ॥

२२. आत्मिकं परमदुष्करं मतं
सेवनीयमिह राजयोगिभिः ।
शाब्दिकं किल समाजशासनं
दण्डभृन्निगदितं नृपाश्रितम् ॥

२३. भूपतिस्तु परधर्म-संरतो
न स्वधर्मनिरतो विलोक्यते ।
एषकः कथमिमं हि रक्षताद्
धर्ममार्यजनता - निषेवितम् ॥

२४. दुःखदं भुवि विजेतृशासनं
प्रायशस्तु परधर्ममाश्रितान् ।
लक्षशो निजकृतात् प्रयत्नतो
हन्त तद्धि कवलीकरोति तान् ॥

२५. अस्ति चैतदितिहाससम्मतं
न प्रमाणमिह किञ्चिदीप्सितम् ।
ज्ञायते तदितिवृत्तकोविदै-
श्चिन्तनीयमधुनाऽऽत्मरक्षणम् ॥

२६. रक्षितान्निजसमाजशासनाद्
आत्मरक्षणमिहास्ति सम्भवम् ।
एधनीयमपि तद्विपश्चिता
जातिधर्म - परिपोषमिच्छता ॥

२७. सर्ववर्णमहितास्तु भूसुरा
न्यासिनस्तु निखिलाश्रमस्तुताः ।
सन्ति धर्मविमुखा बतोभये
हिन्दवोऽवनतिमाश्रिता यतः ॥

२८. सर्वथा प्रयतनीयमीदृशं
येन तूर्णमुभयेषु संह्लसेत् ।
स्वार्थसिद्धिरिह भोगलालसा
स्वेन्द्रियेषु निरतिर्दुरत्यया ॥

२९. कर्मयोगमिममाश्रयन्तु ते
कामनारहित - मात्मुक्तिदम् ।
संयमं विदधतो हृदोऽनिशं
साधयन्तु निजभूसमुन्नतिम् ॥

ब्राह्मणेषु तु तपः प्रवर्धतां श्रौतबोधजनिता परारतिः ।
साधवो विषयरागवर्जिताः सन्तु धर्मभुवनोपकारकाः ॥ ३० ॥

( क्रमशः )

सम्पादकीयम्

# विश्वहिन्दू-सम्मेलनस्य प्रगताः क्रमाः

विगतमार्चमासस्य अन्तिमदिवसेषु भगवतो गौतमबुद्धस्य लीलाभूम्यां विहारप्रदेशस्य राजधान्यां पाटलीपुत्रनगरे ( पटना नगरे ) विश्वहिन्दूसम्मेलनस्य द्वितीयं महाधिवेशनं श्री नित्यनारायण वन्द्योपाध्यायानामाध्यक्ष्ये तदन्तर्गतं विश्वहिन्दूधर्मसम्मेलनञ्च काशिराजानां डाक्टर विभूतिनारायणसिंहदेवानां साभापत्ये महता समारोहेण सम्पन्नम्। सम्मेलनस्य उद्घाटनं केन्द्रीयपर्यटन-मन्त्रिभिः डाक्टर कर्णसिंह महाभागैः ( काश्मीरनरेशैः ) कृतम्। जगद्गुरुशङ्कराचार्याः पुरीपीठाधीश्वराः अनन्तश्री निरञ्जनदेवतीर्थ-महाराजाः, पद्मभूषण पण्डितराज राजेश्वरशास्त्रि-द्राविडपादाः अन्ये च बहवो मान्या आचार्या विद्वांसो हिन्दूधर्म-संस्कृति प्रणयिनो नेतारश्च सम्मेलनेऽस्मिन् सम्मिलिता आसन्। सम्मेलनेनानेन विश्वज्ञान समितेः आयोजनं विशेषरूपेण कृतमासीत्। समित्याः द्विदिवसीय-विचारगोष्ठीषु बहवो महत्त्वपूर्णाः सङ्कल्पाः पारिता अभवन्।

विश्वहिन्दू-सम्मेलनस्य प्रथमाधिवेशनसमये एवास्माभिः अस्मिन्नेव स्तम्भे लिखितमासीत् यद् यदि नाम कश्चिद्धर्मो 'विश्वधर्म'-पदवीमधिरोढुं तात्त्विकीं योग्यतां धारयति, स केवलं 'हिन्दूधर्म' एव। त्यागप्रधान-मोक्षसंस्कृतेः परिपोषकोऽयं धर्मः एकत्र व्यक्तेरहङ्कारस्य सर्वथा निकृन्तनाय प्रयतते, अपरत्र च प्रतिव्यक्ति प्रतिपदार्थम् एकमेवाद्वितीयस्य सच्चिदानन्दस्य ब्रह्मण रूपं दिदृक्षते। सनातनेन परमात्मना सनातन-जीवानां सनातन-रक्षणाय समुद्धाराय च सनातन-विधान-रूपेण यद्विधिजातं सृष्ट्यादौ समुद्भासितं स एव हिन्दूधर्मः। अनेन विश्वतोमुखत्वमस्य अर्थत एवाऽऽयाति। नास्ति तदर्थं 'विश्व' विशेषणस्यावश्यकता। एतादृशस्य धर्मस्य अपलाप उपेक्षा वा जगन्नियन्तुः शासनस्य अनादर एवेति धर्मतत्त्वविदां मतम्।

एतादृशेन धर्मेण सह कस्य नाम मतिमतो विरोधः स्यात्? नूनमत्रैव धर्मस्य धरा-धाम-धारकत्वमन्वर्थं जायते। किन्तु दौर्भाग्याद् वैदेशिकानां भारतद्वेषिणां कूटनीत्या सोऽयं धर्म-विशेषणो 'हिन्दू'शब्दोऽतितरां सङ्कोचं प्रापितोऽद्य कामपि विलक्षणां वैरस्याधायिकां सङ्कुचिततामभिभावयति साम्प्रतिकानां वैदेशिककूटनीत्यभिभूतानां चेतांसि। अत एव हिन्दूधर्मविचारो हिन्दूराष्ट्रविचारश्चाद्य तथाकथित-साम्प्रदायिकतायां परिगण्यते। फलतो हिन्दूधर्मापेक्षयाऽतितरां सङ्कुचिततां बिभ्रतां धर्माणामपि सम्मेलनानि अस्माकं भारतशासनेन समायोज्यन्ते पुरस्क्रियन्ते च, परं हिन्दूधर्म-सम्मेलनस्य समायोजनं तस्य कृते महानभिशाप इव प्रतिभाति। अत एव तत्र सहयोगस्तु दूरे तिष्ठतु, पदे पदे अन्तराया यथा स्युस्तथैव तस्य प्रयासः परिणमते। अतो विश्व-हिन्दूधर्म-संस्कृति - प्रणयिनां प्रजाजनानामेवेदमनुपेक्ष्यं कर्तव्यं यद् विश्वहिन्दू-सम्मेलनादिरूपं सुदृढं सङ्घटनं विधाय तन्माध्यमेन विश्वहिताधायकस्य धर्मस्यास्य विश्वस्मिन्

महता आटोपेण प्रचारः प्रसारश्च विधेय इति। इत्थमेवास्माकं भारतराष्ट्रं भौतिकताभीषणे वैज्ञानिकेऽस्मिन् युगे विश्वशान्तिं विधातुं स्वस्य सनातनं जगद्गुरुत्वमन्वर्थयेदित्यस्माकं द्रढीयान् विश्वासः।

इत्थं विश्वहिन्दू-सम्मेलनस्य औचित्यमनिवार्यत्वं च समुपस्थाप्य तस्मिन्नेव प्रकाशे ऐषम सम्मेलनेन यत्किमपि कृतम्, तत्सम्मेलनाध्यक्षाणां काशिराजानां काशिक-वृत्तपत्रप्रतिनिधि-गोष्ठ्यां प्रदत्तेन वक्तव्येनात्र परिशीलयामः। काशिराजैस्तत्रोक्तम्—

"सम्मेलनेनानेन सङ्कल्पितं यत् जागतिकेषु सर्वेषु देशेषु निवसतो हिन्दून् एकस्मिन् मञ्चे समासादयितुम् एको 'हिन्दू-संयुक्त राष्ट्रसङ्घः' सङ्घटनीय इति। सम्मेलनावसरे पण्डितराजराजेश्वरशास्त्रिणामाध्यक्ष्ये एकस्याः पण्डितपरिषद आयोजनमभवत्। तत्र 'हिन्दू'-शब्दस्य परिभाषा निश्चीयत। सम्मेलनेन साऽनुमता तदनुसारञ्च सङ्कल्पितं यद् वैश्विकैर्हिन्दुभिः सम्पर्कं विधाय ते एकस्मिन् मञ्चे समासादनीया इति।

"पण्डित परिषदि वैदिकवाङ्मये पारम्परीणविधिविधानानुसारं शिक्षित-दीक्षिताः निष्णातवेदमूर्तिनः पण्डितप्रकाण्डा वैदिक-साहित्यस्य विविधशाखामर्मज्ञा विदुषाश्च सम्मिलिता आसन्। परिषदः पुरतो हिन्दू-जगतः आधुनिक-सामाजिकधार्मिकादिस्थितीः आधृत्य निर्णयार्थं प्रत्येकशो नैके प्रश्नाः समुपस्थापिताः येषु विश्वहिन्दूसम्मेलनस्य विधाने समुट्टङ्किता 'हिन्दू' शब्दपरिभाषा विशेषतः सम्मिलिताऽऽसीत्। परिषदा द्विदिवसीयाधिवेशने समुल्लिखितेषु प्रश्नेषु गभीरो विचारविनिमयः कृतः, प्रत्येक प्रश्ने च स्वीयमभिमतं कप्रटीकृत्यानुगृहीतम्।

## हिन्दू-संयुक्त-राष्ट्रसङ्घः

'हिन्दू'-शब्दस्य यत् परिभाषा-लक्षणं सम्मेलनस्य विधाने वर्णितम्, विद्वज्जनानां सम्मेलनेनानेन प्रायस्तत् स्वीकृतं यच्च निम्नलिखितमस्ति—

'ऐतिहासिकदृष्ट्या अवगतेन हिन्दूशब्देन भारते प्रचलितानां सर्वेषां तेषां मतमतान्तराणां विश्वासानाञ्च बोधो भवेत् ये तथाकथितहिन्दूनां व्यक्तिगत-परम्पराणां प्रथानाञ्च आधारं मन्वते। यथा—सनातन-वैदिकधर्मावलम्बिनः, तेषां शाखाः प्रशाखाश्च, जैना, बौद्धाः, सिखाः, लिङ्गायताः, आर्यसमाजीयाः, ब्रह्मसमाजीयाः, भारते वसन्त्यो वनवासिजातयश्चेत्यादयः। एतेषु तेऽपि सम्मिलिताः ये किल अधिकांशतः शासनद्वारा शासकीय-परिभाषायां 'परिगणित'-नाम्ना वर्णिताः। तथा 'हिन्दू'-शब्देन तेऽपि गृहीताः स्युः ये केनापि हेतुना तथाकथितस्वीय-मतानुकूलनियमैः पतिताः संवृत्ताः, परं यैर्यवनधर्मः खिष्टीयादिधर्मो वा व्यक्तिगतरूपेण न स्वीकृतोऽस्ति।

अयमपि पणस्तत्र वर्तते यद् यो वर्गविशेषो जनसमुदायो व यवनः खिष्टीयो वा सञ्जातः, परम् एतादृशधर्म-परिवर्तनानन्तरमपि तेन स्वीयधर्मः समुदायस्य नीति नियमाः प्रथाः जीवनपद्धतिः एवमादिकं न त्यक्तं चेत् तथापि सो वर्गस्य समुदायस्य वा उचितवैधानिकनियमैः हिन्दूधर्मीय दीक्षामन्तरा सम्मेलनस्य सदस्यताया अर्हो न भवेदिति।"

## 'हिन्दू'-शब्द-परिभाषा

काशिराजैः स्वीये वक्तव्येऽग्रे उक्तं यद्—

'अवसरेऽस्मिन् सम्मेलनाध्यक्षैः श्रीनित्यनारायण

वन्द्योपाध्यायैरुक्तं यदद्य जगति हिन्दूनां पञ्चमांशा जनसंख्या वर्तते। सम्मेलनस्य मुख्यतम उद्देश्यो नाम हिन्दूनाम् अन्ताराष्ट्रिय-मञ्चनिर्माणमस्ति। अत एव हिन्दू-संयुक्त-राष्ट्रसङ्घटनं सम्मेलनेन निश्चितम्। तैरुक्तं यद् 'वेस्ट इण्डीज' द्वीपसमूहस्य अष्टसु द्वीपेषु हिन्दुभिः एतादृशमेकं सङ्घटनं निर्मितमस्ति यस्याध्यक्षाः गायनादेशस्थाः (दक्षिण-अमेरिका) श्रीनारायणप्रसादशर्माणः सन्ति। सम्मेलनेन वैश्विका हिन्दवः समनुरुद्धा यत्तेऽपि विश्वहिन्दू-सम्मेलनस्य तत्त्वावधाने एतादृशमेव सङ्घटनं सङ्घट्टयन्त्विति।"

काशिराजै इदमप्युक्तं यद् "वयं गायना-मारीशस-यवद्वीप-नयपालैंग्लैण्डा-ऽफ्रीकासुमात्रा-मलयैशियादिदेशेभ्यः सम्पर्कं कामयामहे। सम्मेलनेन ये किल पञ्चदश उपाध्यक्षा निर्वाचिता-स्तेषु पञ्च मलयैशिया-गायना-नयपालैंग्लेण्ड-दक्षिणाफ्रीकाभिजना वर्तन्ते। सम्मेलनस्य अग्रिम-मधिवेशनम् आगामिनि दिसम्बरमासि मल-यैशियादेशे समाहूतमास्ते।

प्रसङ्गेऽस्मिन् गायनाभिजनैः श्रीनारायण-प्रसादशर्मभिरुक्तं यद् गायनादेशे प्रतिशतं ४० चत्वारिंशत् हिन्दवो वर्तन्ते। 'ट्रिनीडाड'देशे प्रतिशतं ३३ त्रयस्त्रिंशत् हिन्दवो वसन्ति। जमैका-देशे ५० पञ्चाशत्सहस्रमिताः, सुरेनामदेशे प्रतिशतं १५ पञ्चदश जिनेत-द्वीपे च १२ द्वादश-सहस्रमिताः भारतीया निवसन्ति। नारायण-शर्मभिरिदमप्युक्तं यत् ममेदं व्यक्तिशोऽभिमतं यद् भारतं स्वात्मानं हिन्दूराष्ट्रं घोषयेत् येन वैश्विका हिन्दवोऽनुभूयेरन् यदस्माकमपि कश्चिद् देशोऽस्ति यत्र ते निराबाधं गमनागमनं कर्तुं प्रभवेरन्, यस्मिंश्च तेषामात्मीयत्वं प्रस्फुरेत्।

सम्मेलनेन मध्यप्रदेशशासनेन उत्कलप्रदेश-शासनेन च स्वीकृतस्य तद्विधानस्य स्वागतं कृतं यत्र वैदेशिक-खिष्टीय-धर्मपरिवर्तनकारिणां चिरात् सन्दिग्धाश्चेष्टाः निरोद्ध्यन्ते। अन्यान्यपि राज्य-शासनानि तावनुकर्तुं साग्रहं समनुरुद्धानि सम्मेलनेने"ति।

पारितेषु प्रस्तावेषु प्रमुखतमानां विवरण-मुपस्थापयद्भिः काशिराजैः उक्तं यत् "सम्मेलनेनानेन एकेन प्रस्तावेन अखिले भारते गवां गोवंशस्य च वधं सर्वथा निरुध्दुं शासनं साग्रहं प्रार्थितम्। अपरेण प्रस्तावेन योगशास्त्रस्य प्रचार-विस्ताराय सम्मेलनद्वारा विशेषस्य अङ्गस्य व्यवस्था सङ्कल्पिता। अन्यस्मिन् प्रस्तावे सम्मेलनेन जैनाः, बौद्धाः, लिङ्गायताः, सनातनवैदिकधर्मानुयायिनः, आर्यसमाजीयाः, ब्रह्मसमाजीया अन्यजातयश्च प्रार्थिता यत्ताः सर्वाः सम्भूय हिन्दूनामेकतां सुदृढां कुर्युः। यदि ते सर्वे एवं न करिष्यन्ति तदा आधुनिक-वैज्ञानिक-प्रौद्योगिकप्रभावैः हिन्दूधर्मविषये जनाना-मास्था सर्वथा विलुप्येत" इति।

समादरणीयैः काशिराजैः स्ववक्तव्ये समुल्लि-खितस्य विश्वहिन्दूसम्मेलनस्यास्य विस्तृत-विवरणस्य पठनेन सुस्पष्टमिदं जायते यत्सम्मेलनेन स्वीये द्वितीयेऽस्मिन् अधिवेशने नैकानि महत्त्व-पूर्णानि पदानि समाक्रान्तानि। हिन्दूसंयुक्त-राष्ट्रसङ्घ-गठनस्य प्रस्तावो वस्तुतः क्रान्तिकारी भवेत् यदि नाम सोऽञ्जसा विधिवत् कार्यान्वितो भूत्वा सुनियोजनया परिचाल्येत। ब्रिटिशानां राष्ट्रकुलं अमेरिकाभिजनानां संयुक्त राष्ट्रसङ्घः, अरबाभिजनानां वा अरबसङ्घः सङ्घट्यते, तदा किं कारणं स्यात् हिन्दूनां संयुक्त-राष्ट्रसङ्घस्य सङ्घटनस्य? अतो यथाशीघ्रमयं प्रस्तावः कार्यान्वयीकरणीयः, कार्यक्षेत्रे च भारते पूर्णतो

(शेषांशः ८४ पृष्ठे)

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

सात्त्विकी सुखमय्येव द्रुतिः रतिशब्दव्यपदेश्या—

रजस्तमोविहीना या भगवद्विषया मतिः।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते॥

तत एव—

ईर्ष्याज-भयजद्वेषौ भगवद्विषयावपि।
न भक्तिरसतां यातः साक्षाद्रतिविरोधतः॥

कालान्तरे प्रतिबन्धक्षये प्रचण्ड-तमोरजश्शान्तौ चित्तद्रुतिर्भक्तिरसतां याति।

भगवदविषयकत्वमिव स्थायिनः प्रीतिविरोधित्वमपि भक्तिरसत्वाभावे तन्त्रम्, प्रीतेरेव तत्रास्वादनीयत्वात्। तदुक्तम्——

आत्मोचितैर्विभावाद्यैः प्रीतिरास्वादनीयताम्।
नीता चेतसि भक्तानां प्रीतिभक्तिरसो यतः॥
अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
सुराजेव विराजेत स स्थायीभाव उच्यते॥
स्थायिभावोऽत्र सम्प्रोक्तः श्रीकृष्णविषया मतिः।

अत्र श्रीकृष्णविषया रतिरेव प्रेमस्नेहादिशब्देन व्यपदिश्यते। तदुक्तं भक्तिरसामृतसिन्धौ——

ह्रासशङ्काच्युताबद्धमूला प्रेमेयमुच्यते।
सान्द्रश्चित्तद्रवं कुर्वन् प्रेमा स्नेह इतीर्यते॥
क्षणिकस्यापि नेह स्याद्विश्लेषस्य सहिष्णुता।
स्नेहः सरागो येन स्यात् सुखं दुःखमपि स्फुटम्।
तत्सम्बन्धलवेऽप्यत्र प्रीतिः प्राणव्ययैरपि॥

तेन इष्टसाधनता-वासनैव भक्तिरित्यपि सम्यक्।

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥

इति वचनमूलकमेव——

द्रुतस्य भगवद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥

इति वचनमपि। तेन भगवन्निष्ठेष्टसाधनताविषयकत्वमेव भक्तेः प्राणाः, तस्यैव भगवद्गुणाश्रयणनिबन्धनत्वसम्भवात्। अत एव भगवदालम्बनस्य रोमाञ्चाश्रुपातादिभिरनुभावितस्य हर्षादिभिः परिपोषितस्य श्रीभागवतादिश्रवणसमये भक्तैरनुभूयमानस्य भक्तिरसस्य न रसान्तरेऽन्तर्भावः सम्भवति। भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः।

न च भक्तिरसस्य शान्तरसेऽन्तर्भावः; अनुरागस्य निर्वेदविरुद्धत्वादिति रसगङ्गाधरः। तदुक्तं भक्तिरसायने——

हर्षश्चित्तसमुल्लासः कथ्यते स चतुर्विधः।
एकः परानन्दमयः श्रीशमाहात्म्यकारणम्॥
तज्जन्यायां द्रुतौ शुद्धा रतिर्गोविन्दगोचरा।
एतदान्तं हि शास्त्रेषु साधनास्नानमिष्यते॥

शुद्धा रतिरेव सात्त्विकभक्तिः। तत्रानुपाधिः शुद्धा स्यात्। तदुक्तम्—

अनुपाधिः परानन्दमहिमैकनिबन्धना। इति।

तन्निष्ठा भगवदभिन्नतत्प्रतिबिम्बरूपा भगवदाकारता तु स्वाभाविकी, न कारणजन्या, इत्युक्तमेव। अत्र तु अन्याकारतानिरसनपूर्वकं भगवदाकारतासम्पादने शास्त्रोपयोगः स्यादेव, संसारविरोधित्वादित्यस्यापि उक्तत्वात्।

( क्रमशः )

# ऋषिकल्पः कालिदासः

—श्रीमन्तः पट्टाभिरामशास्त्रिणः—

[ साहित्यविभागाध्यक्षाः—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

वीणावादननिपुणा वेणीभरविजित-मधुकरश्रेणी ।
एणीशावकनयना वाणी मे नटतु झटिति मुखरङ्गे ॥

## प्रास्ताविकम्

शरीराणि पोषयितुं मानवा विविधानि यथा भोज्यद्रव्याण्यपेक्षन्ते तथैव चक्षुरादीनामिन्द्रियाणां मनसो बुद्धितत्त्वस्य च संवर्धनाय साधनानि कामयन्ते । जगन्नियन्ता परमेश्वरोऽपि तांस्तान् प्राणीन् सिसृक्षुर्नैकविधानि दुग्धप्रभृतीनि जीवनधारणौपयिकानि वस्तूनि प्रथमं संसृज्य अनन्तरं प्राणिनः सृजति । तत्राहाराय जीवनं प्रतिपद्यमानाः केचिदवतिष्ठन्ते । जीवनाय आहार इत्यपरे । उभयेषामपि परिणामे भूयान् फलभेदः । प्रथमां कोटिमनुप्रविष्टास्तु शरीरमिन्द्रियाणि च प्राधान्येन समेधयन्तो भौतिकस्य फलस्य लाभाय चेष्टन्ते, द्वितीयाश्च कोटिमनुप्रविष्टा मनोबुद्धिञ्च प्राधान्येन पोषयन्त आध्यात्मिकस्य फलस्य लाभाय । प्रथमस्य जडविज्ञानाविष्कारः फलम्, द्वितीयस्य च चेतनविज्ञानाविष्कारः । प्रथमपक्ष रसावसानः सातिशयश्च । प्रथमपक्षे जननं मरणञ्च भवतः, द्वितीये च न मरणं, न वा जननम् । प्रथमस्तु पुरः पश्यन्नग्रे गच्छति, परं प्रत्यावर्तते । द्वितीयस्त्वन्तः पश्यन्नग्रे याति, न प्रत्यावर्तते । प्रथमो मरणाद्बिभेति, द्वितीयस्तस्मान्न बिभेति । प्रतिबिम्वं श्लाघते प्रथमः, बिम्बञ्च द्वितीयः । रागद्वेषादयः प्रथमस्यालम्बः, द्वितीयस्य च शमदमादयः । क्रूरकर्मा हिंसकः प्रथमः, अहिंसकः साधुकर्मा द्वितीयः । प्रवृत्त्युन्मुखो गच्छन् प्रथमः स्खलति, निवृत्त्युन्मुखश्च द्वितीयः स्थिरस्तिष्ठति । अशान्तचेताः प्रथमः, द्वितीयः परमां शान्तिमधिगच्छति । स्वस्व-मतिकौशलेन सातिशयेष्वाणविकेषु पदार्थेषूत्पाद्यमानेषु प्रथमः शान्तिं कथं लभताम् ! रागद्वेषादेः समुद्भवस्तस्य नैसर्गिकः खलु । नित्यनिरतिशयस्य पदार्थस्याविष्कारे द्वितीयस्य शमदमादि-सम्पत्समृद्धिः स्वाभाविक्येव ।

प्राक्तना अस्माकं महामानसाः अनवरतं देशसमाजाहितचिन्तनैकतानमतयो भारतीया जीवनधारणाय कन्दमूलादीनेव अभ्यवहरन्तो विश्वस्य जीवातून् वेदान् निर्मथ्य स्वस्वबुद्धिवैशद्येन नानादर्शनानि शास्त्राणि च प्रवर्तयन्त ऋषयोऽभवन् । तैः प्रवर्तितान्येव तानि बुद्धेः पोषकाणि तत्त्वानि । एतेषु सेव्यमानेषु परमां मनसः शान्तिं तानि जनयन्तीत्यनुभवः प्राचाम् । एकैकस्याऽपि जनिमतस्थुषो मानवस्य मनसः शान्तिरावश्यकीत्यत्र मन्ये न कोऽपि विप्रतिपद्येत । प्रकृतिरपि रात्रिरित्येकं वस्तु परिकल्पयामास शान्तिमवाप्तुम् । यदि दिवा नक्तमिति प्रविभागो नाभविष्यत् तर्हि जगदेव नावर्त्स्यत् । अनवरतं नैकविधेषु सांसारिकेषु कर्मसु व्यापृतानां शरीरेन्द्रियाणां क्वचिद्विश्रामः खल्वावश्यकः । अत एव नक्तम्, तत्र च निद्रेति प्रविभागः । निद्रावस्थायां काममिन्द्रियाणि न व्याप्रियन्ते, किन्तु मनो न जोषमास्ते । तस्याप्युपरमाय सुषुप्तिः ।

( शेषांशः ९१ पृष्ठे )

# वैदिकाऽवैदिक-दर्शन-मीमांसा

—श्री जगन्नाथ श्रीधरशास्त्री पदे—

अत्रैके प्रत्यवतिष्ठन्ते—

**यश्च श्रोत्रियोऽवृजिनोऽकामहतः।**

( बृ० ४.३.३३, मा बृ० ४.१.३५ )

**श्रोत्रियस्य चाकामहतस्य।**

( वै० उ० २.७ )

इति वेदान्तद्वयेऽपि श्रोत्रियः 'अकामहत' इति विशेषितः। विशेषणं भेदकं भवतीति कामहतोऽपि श्रोत्रियो भवति। कामहतानां श्रोत्रियाणां मनुष्यानन्दादारभ्य आनन्दपरम्परोक्ता। कामहता अपि श्रोत्रिया उपनयनसंस्कारेण संस्कृता एव। उपनयनसंस्कारश्च अविद्यानिवृत्त्यर्थमात्मैकत्वप्रतिपत्त्यर्थमेवोक्तः। तथापि कामहतानां तेन मिथ्याज्ञानापायो न भवति। इहामुत्र भोगरागस्तथैव अवतिष्ठत इति वेदान्तद्वयेऽपि स्पष्टम्। तेन एषामुपनयनसंस्कारेणाऽपि मिथ्याज्ञाननिवृत्तिर्नैव भवतीति गम्यत इति।

तत्रोच्यते—एते कामहता भोगापवर्गवादिनस्तार्किकाः तर्केणैव शास्त्रार्थं व्यवस्थापयन्ति। तर्कानुकूलञ्च वेदं प्रमापयन्ति। वेदाः प्रत्यक्षं प्रमाणमिति नातिष्ठन्ते। ईश्वरोक्तत्वात् शब्दप्रमाणत्वेन ग्रन्थप्रामाण्यमाद्रियन्ते। अविद्यावस्थायां व्याख्यानविपर्ययञ्च कुर्वन्ति। भोगापवर्गवादिभिस्तार्किकै उपनयनसंस्कार आत्मैकत्वविद्याप्रतिपत्त्यर्थं नैवाऽङ्गीकृतः। अपितु वेदाध्ययनाधिकारसिद्ध्यर्थमेव उपनयनमित्येव एषामभ्युपगमः। वेदाश्च त्रैगुण्यविषयाः। त्रैगुण्यं सुख-दुःख-मोहात्मकं जगत् तत्कारणं प्रधानञ्च भोग्यमिति इह भोगोऽमुत्र भोगाश्च वेदानां विषयः।

ईश्वरगीतास्वपि—**त्रैगुण्यविषया वेदाः** ( गीता २.४५ ) इति कामहतानाम् अवैदिकानामसुराणां मतमुपन्यस्तम्। उपनयनं विना न वेदाध्ययनम्। अत एव आत्मैकत्वप्रतिपत्त्यर्थमुपनयनाभ्युपगमे आत्मैकत्वप्रतिपत्त्यनन्तरं त्रैगुण्यविषयक-वेदाध्ययनं वृथैवेति आत्मैकत्वप्रतिपत्त्यर्थमुपनयनं नास्ति। अपि तु वेदाध्ययनाधिकारसिद्धचर्थमेव। एवमुपनयनं वेदाध्ययनाधिकारसिद्धचर्थम्। वेदाश्च भोगप्रतिपत्त्युपायप्रदर्शनमित्येवैषां दर्शनमिति तामसानां भोगैकप्रवणानामेषां मिथ्याज्ञानापाय उपनयनेन न भवतीति तैः दुःखत्रयाभिघातानन्तरं पृथक् सन्न्यासो गुरुपसदनं गुरूपदेशश्च उपदिष्टः। विभिन्नानि मोक्षशास्त्राणि प्रणीतानि। मोक्षोऽपि काम एव भोग एव वा इति वेदाश्च भोगप्रतिपादनपरा इति व्यवस्थाप्य भोगशास्त्रं वेदा इत्येव सिद्धान्तितम्। इत्थमेते अवैदिका वेदधर्मपरा इति वैदिकमतविरुद्धं वेदा भोगपरा इति मतं प्रतिष्ठापयन्ति। वेदविरुद्धानि वेदनिन्दकानि च तन्त्राणि प्रमाणयन्ति।

वैदिकानां तु निस्त्रैगुण्यविषयाः वेदाः। आत्मविषया इति यावत्। अत एव **चोदनालक्षणोऽर्थो धर्मः** ( पू० मी० १.१.२ ) इति धर्मरूपस्य आत्मनो लक्षणं सङ्गच्छते। वेदा ब्रह्मविषयाश्च। आत्मैकत्वं ब्रह्म निस्त्रैगुण्यमेव। तस्मादुपनयनमपि

निस्त्रैगुण्यस्यात्मनो ब्रह्मणश्च प्रतिपत्तिपरमेवेति वैदिकाऽवैदिकव्याख्याने महान् भेदः। आत्मैकत्वप्रतिपत्तेः ब्रह्मप्रतिपत्तेर्वा उपनयनेन तत्र च सावित्र्युपदेशेन सिद्धत्वात् दर्शनेऽस्मिन् सार्ववर्णिकः संन्यासो नास्ति। अत एव गीताशास्त्रे—

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।**
( १८.२ )

इति संन्यासशब्देन काम्यानां कर्मणां न्यास एवोक्तः। धर्मप्रतिष्ठापकानां कर्मगामिफलानां कर्मणां विधिश्चोक्तः। मीमांसकैः काम्यानि कर्माणि निषिद्धान्येवेति मीमांसकमतमेव उपन्यस्तं भगवता। अवैदिकः संन्यासः प्रत्याख्यातश्च।

इत्थं वेदान्तद्वयेऽपि कामहतानामवैदिकानां भोगापवर्गवादिनां श्रोत्रियाणामानन्दपरम्परा धर्मवादिनामकामहतानां श्रोत्रियाणां ब्रह्मानन्दः प्रतिपादितो वैलक्षण्यप्रदर्शनार्थमित्येव सिद्धान्तः। कामहतानां भोगिनामकामहतानामपवर्गवतां संन्यासिनां वैलक्षण्यमत्रोपन्यस्य भोगापवर्गवाद एव प्रस्थापित इति व्याख्यानमविद्याविलास इति तत् नादर्तव्यम्।

यत्तु—उच्यते श्रोत्रियपदेन संन्यासी ग्राह्य इत्यत्र अकामहत इति विशेषेणमेव गमकमिति। तत्रोच्यते; अकामहतत्वं सन्न्यासमन्तराऽपि व्रतबन्धादारभ्यैव प्रकटीभवतीति तदर्थं सन्न्यासो नापेक्ष्यत इति निरूपितं प्राक्। श्रोत्रियपदेन संन्यासी ग्राह्य इति विवक्षाऽभविष्यत् तर्हि श्रोत्रियपदस्थाने संन्यासिनः परिव्राजकस्य वेति पदमश्रोष्यत्। तस्माद् वैदिकानां भोगापवर्गवादिनां व्याख्यानमसमञ्जसमेव।

अवसितः प्रासङ्गिको विचारः। प्रकृतमनुसरामः। धर्मार्थकामस्वरूपस्त्रिविधोऽप्ययं कामो भोगफलो भूतानामुपघातायैव। तथा चोक्तं योगशास्त्रे—

**नानुपहत्य भूतान्युपभोगः संभवतीति।**
( यो० भा० २.१५ )

ईश्वरगीतास्वपि भोगवादिनामसुराणां सविस्तरवर्णनप्रसङ्गे षोडशाध्याये ( ६.२० )—

**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः।**
( १६.९ )

इति प्रतिपादितम्। भोगवादे चैवं जगतो विनाश एव, न प्रतिष्ठा। भोगवादिनो जगतः शत्रवो जगतः क्षयायैव भोगार्थं प्रवर्तन्ते। तस्मात् जगतः प्रतिष्ठार्थं भोगवादः सर्वथा परिहर्तव्य एव।

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः॥**
( गी० २.२२ )

इति गीताशास्त्रे भोगा दुःखयोनय एवेत्युक्तम्।

योगशास्त्रेऽपि—

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुखमेव सर्वं विवेकिनः।** (यो० सू० २.१५)

इति संसारो दुःखबहुल इत्युक्तम्। त्रिविधं सुखमपि परिणाम-तापसंस्कार-दुःखसम्भिन्नमिति दुःख-मेव। अल्पदुःखस्य प्रहाणाय अपवर्गवादः प्रवर्तितः। तथा च योगसूत्रम्—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवगार्थं दृश्यम्।** ( यो० सू० २.१८ )

इदं सर्वं दृश्यं जगद् भोग्यं भोगार्थम्। भोगाश्च दुःखयोनय इतीदं सर्वं दृश्यं जगदेव दुःखकारणम्। तस्योपादाने भोगो दुःखं च। तस्यैवापवर्जने सन्न्यासे वा दुःखस्य आत्यन्तिकी निवृत्तिः।

सांख्यशास्त्रप्रवृत्तिरपि दुःखत्रयाभिघातायैव। तथा हि—

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्॥
(सां० का० १)

दुखं च शरीरधर्मो नात्मधर्म इति प्रतिपादितं प्राक्। एवं देहात्मवादिनां कृते एव सर्वेषां मोक्षशास्त्राणां प्रवृत्तिः।

दृष्टवदानुश्रविकः स ह्यविशुद्धिः क्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥

इति वेदनिन्दाश्रवणात् आत्मैकत्वप्रतिपत्तेरभावात् सांख्यानामवैदिकत्वम्। दर्शनेऽस्मिन् प्रकृतिपर्यन्तमपवर्गेण देहात्मवादविवृत्तिरात्मबोधश्च। ततो मोक्षः। अपवर्गप्रतिपादकमेतच्छास्त्रम्।

यथा जगदुत्पत्तिवादे तार्किकाणामैकमत्यं नास्ति तथा मोक्षेऽपि तेषां नैकमत्यम्। प्रतिदर्शनं मोक्षकल्पना भिद्यते। मोक्षकल्पनाभेदात् प्रतिदर्शनं तत्त्वज्ञानमपि भिद्यते। एवं द्वैतिनां तार्किकाणां दर्शनेषु पराऽनवस्था सम्पद्यते। सर्वेऽप्येते वादिनः परसिद्धान्तान् दूषयित्वा स्वसिद्धान्तान् प्रस्थापयन्तीति सर्वाण्येतानि दर्शनानि खण्डितानि सम्पद्यते।

वस्तुतस्तु—तत्त्वज्ञानमेकरूपमेव भवितुमर्हति, वस्तुतन्त्रत्वात्। तथापि प्रतितन्त्रं भिद्यत इति अप्रमाणमेव भवति द्वैतिनाम्। सांख्यसिद्धान्ते आत्मनः शुद्धावस्थैव मोक्षः। न्याय-वैशेषिकसिद्धान्ते जीवस्य अदृष्टकारितात् परमाणुरूपमनःसम्बन्धरूपाद् बन्धनात् मोक्षो जीवस्य। मनस्तस्मिन् समये जडतां धारयति। तस्मात् मनसो जडतैव मोक्षः। तथा चोक्तमाचार्यपादैर्भाष्ये—

सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानस्तदुपकरणानि चाणूनि मनांस्यचेतनानि। तत्र आत्मद्रव्याणां मनोद्रव्याणां च संयोगात् नवेच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते। ते चाव्यतिरेकेण प्रत्येकमात्मसु समवयन्ति स संसारः। तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः।

—( ब्रह्मसूत्र शां० भा० २.३.५० )

वैष्णव-शैव-शाक्त-गाणपत-सौराणां तत्तल्लोकप्राप्तिर्मोक्षः। तत्र मुक्तेश्चातुर्विध्यम्—सलोकता, सरूपता, समीपता, सायुज्यता चेति। भोगः कामचारश्च फलम्। ब्रह्मत्वेनाभिमतस्य पदार्थस्यापि भेदः।

इत्थं प्रतिदर्शनं मोक्षकल्पनाभेदात् मोक्ष एवाप्रमाणम्। यथा बन्धो नात्मधर्मस्तथा मोक्षोऽपि। मोक्षकल्पना चैत्रमविद्यावतां तामसानामसुराणाम्। तमोगुणेन ते नीयन्त इति मोक्षं कल्पयन्ति। पञ्चपर्वणो विपर्ययस्य स्वरूपं नीतिः। सा च नीतिरित्थं त्रिविधा—सात्त्विकी, राजसी, तामसी चेतिभेदात्। सामान्यतः सर्वेषामपवर्गवादिनां मतेन मोक्षो नाम एकविंशतिप्रभेदभिन्नस्य दुःखस्य आत्यन्तिकी निवृत्तिरेव। दुःखस्य एकविंशतिप्रभेदाः। शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं दुःखं चेति। सुखं दुःखमेव, दुःखसम्भिन्नत्वात्। एकविंशतिप्रभेदभिन्नस्य दुःखस्य आत्यन्तिकी निवृत्तिस्तु सर्वस्यास्य दृश्यस्य विषयीभूतस्य प्रकृतिपर्यन्तस्य जगतः संन्यासेन अपवर्गेण वा भवतीति सन्न्यास एव मोक्षहेतुः। इत्थं जगतः सन्न्यासाद् अपवर्गवादोऽपि न जगतः प्रतिष्ठायाः कारणं भवति। प्रत्युत जगतः परित्यागेन तस्य विनाशायैव कारणं भवति। एवमवैदिकानामसुराणां भोगापवर्गवाद उक्तः।

( क्रमशः )

पूर्वतोऽनुवृत्ता

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

गृध्रराजस्त्वार्तवाचा ज्ञात्वा राघववल्लभाम्।
दृष्ट्वा रक्षोनीयमानां म्लेच्छगां कपिलामिव ॥
उवाच पुत्रि मा भैषी राक्षसं नाशयाम्यमुम्।
इत्युक्त्वा स खगोऽधावद् यथा वज्रं गिरिं प्रति ॥
किं न तिष्ठसि रे दुष्ट यासि निर्भीर्न वेत्सि माम्।
इत्थं वदन्तं तं दृष्ट्वा कालकल्पं दशाननः ॥
पराक् चिचिन्त किं सोऽयं मैनाको वा खगाधिपः।
किन्तु जानाति मे शक्तिं खगेशः स्वामिना सह ॥
ततो ज्ञात्वा तमूचे स जटायुर्जरठोऽस्त्ययम्।
देहं त्यक्ष्यति मे हस्ततीर्थे सम्प्रति निश्चितम् ॥
इति तस्य वचः श्रुत्वाऽऽधावद् गृध्रः क्रुधातुरः।
ऊचे स रावण मम शिक्षां बहुभुज श्रृणु ॥

त्यक्त्वा सीतां गृहान् याहि सुखं नो चेदिदं भवेत्।
यद् घोरे रामशेषाग्नौ कुलं ते शलभायते ॥
निरुत्तरं रावणं तु गृध्रोऽधावत् तदा रुषा।
धृत्वा केशेषु तं कृत्वा विरथं पतितं क्षितौ ॥
सीतां निधाय चैकान्ते पुनर्योद्धुं समागतः।
अस्य चञ्च्वा विदीर्णः स क्षुब्धः क्रुद्धो निशाचरः ॥
खड्गेनाऽतिकरालेन पक्षौ गृध्रस्य सोऽच्छिनत्।
अतिभीतस्ततः सीतां यानमारोप्य रावणः ॥
द्रुतं विहायसा यातो गच्छन्ती विललाप सा।
व्याधग्रस्ताऽतीव दीना नूनं काचिन्मृगी वने ॥
गिरिस्थान् सा कपीन् वीक्ष्य स्मृत्वेशं पटमक्षिपत्।
इत्थं नीत्वा स तां लङ्कामशोकविपिने न्यधात् ॥

**भीतिं खलः प्रीतिमपि प्रदर्श्य नानाविधां ग्राहयितुं न शक्तः।**
**अधस्ततोऽशोकमहीरुहस्य तां स्थापयामास तदा स यत्नैः ॥ २९ ॥ (क)**
**येनैव रूपेण रघूत्तमोऽसौ मायामृगं त्वन्वगमद् वनान्ते।**
**तदेव चित्ते विनिधाय रूपं सीता जपन्ती हरिनाम तस्थौ ॥ २९ ॥ (ख)**

(क्रमशः)

---

( ७८ पृष्ठस्य शेषांशः )

**गोवधनिरोधस्य दृढेन कार्यकारिणा चाग्रहेण तेन पदार्पणं विधेयमित्यस्माकं हार्दिकी शुभकामना। वैश्विक-हिन्दुषु ऐक्यभावस्य प्रचार-प्रसारः पुनरस्य युगस्य अनुपेक्ष्यः सन्देशो नाम। महतः प्रमोदस्यायं विषयो यत्सम्मेलनेन व्यापकतमाया अस्या हिन्दूभावनायाः प्रचार-प्रसारस्य दायित्वं समादरणीय-काशिराजेषु न्यस्तमास्ते। आशास्महे च ते स्वौग.वानुरूपं कार्यमिदमतिशीघ्रं सफलतां नेष्यन्तीति। अन्ते वयं सम्मेलनमभिनन्दमाना भगवन्तं विश्वनाथं प्रार्थयामो यत्स स्वीयेन कर्तुमकर्तुमन्यथाकर्तुं समर्थेन सामर्थ्येन हिन्दूनामिमां कामनां शीघ्रं पूरयत्विति।**

# मदीया द्वितीया अध्ययन-यात्रा

—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योग-तन्त्रविभागस्य वा० सं० वि० वि० ]

२.

'परापञ्चाशिका' देवनागरमातृकायामेवा आसी-दन्ते 'पादसूत्र'नामा ग्रन्थः। महेश्वरानन्देन 'महार्थ-मञ्जरीपरिमले' समुद्धृतात् चरणसूत्रादभिन्नः स्यादेष ग्रन्थ इति धिया तत्रत्याधिकारिणामनुज्ञया प्रतिलिपीकृतोऽसौ मया। किन्तु चरणसूत्रस्थाः श्लोका अत्र न दृश्यन्त इति भिन्न एवैषस्ततो ग्रन्थ इत्यन्ते निश्चितमस्माभिः।

मद्रपुर्यां मया जूनमासस्य सप्तमदिनाङ्कतस्त्रयो-दशदिनाङ्कं यावत् तिष्ठता अडयारपुस्तकालये स्थितायाः सात्त्वतसंहिताया देवनागलिपिमातृकातः पाठसङ्कलनं कृतम्, दिनद्वयं यावद् मद्रपुरीविश्व-विद्यालयभवनेषु स्थिते राजकीयपुस्तकालयेऽपि च गतम्। तत्रत्याः क्यूरेटर-पदभाजः श्रीमन्तः पार्थ-सारथिशास्त्रि-महाभागा सारल्यमूर्तयोऽधिकारमद-लेशमपि नैव धारयन्ति स्म। निर्विशङ्कमेभिः महा-नुभावैर्मह्यं मुद्रितं पुस्तकद्वयम्, आगमग्रन्थानां महताऽऽयासेन निर्मिता सूची च प्रादायि। तस्मिन् पुस्तकालये सङ्गृहीतानां विशिष्टानां प्रायः पञ्च-शतमातृकाणां सैषा सूची मदीयाया मद्रपुरीयात्राया विशिष्टोपलब्धिरिति निर्विचिकित्सितम्। अस्याः प्रतिलिपीकरणाय दत्ता तेषामनुज्ञा विशालहृदय-ताया उदाहरणं मन्ये। अत्रैव दृष्टा अस्माभिः श्रीमन्तो बी० एस० राघवमहोदयाः। एते हि आगमशास्त्रा-नुरागिणः सङ्गृह्णन्ति दुर्लभान् मुद्रितचरानागम-ग्रन्थान्, विक्रीणन्ति च तानुचितेन मूल्येन। एभि-र्मह्यं 'पाञ्चरात्र फेनामोना' इत्याख्यो ग्रन्थो विनैव मूल्यमर्पितः, यस्य हि पाञ्चरात्रसंहिता-परिचयापादकस्य ग्रन्थस्य चर्चा पूर्वं तिरुपतियात्रा-वर्णनावसरे कृता। अन्यश्च 'पाञ्चरात्रप्रासाद-मण्डना'ख्यो ग्रन्थो मूल्येन क्रीतोऽस्माभिः।

जूनमासस्य दशमे दिनाङ्के मद्रासराज्ये तमिल-वाङ्मयवाल्मीकेस्तिरुक्कुरलशास्त्रनिर्मातुस्तिरुवल्लु-वर्महर्षेः जयन्तीप्रयुक्तमवकाशदिनमासीत्। सर्वत्र मद्रासराज्यीयमृत्तैलयानेषु महात्मनोऽस्य चित्राण्यवलोकितान्यस्माभिः। मैलापुरसंस्कृतमहा-विद्यालयस्य पार्श्वे पुस्तकहस्ता प्रस्तरप्रतिकृतिरेका राजते भावपूर्णा। महात्मनोऽस्य साध्वी धर्मपत्नी भोजनपर्यवेषणसमये लघुना पानीयपात्रेण साकं सूत्रप्रोतां सूचीमेकां प्रत्यहं स्थापयति स्म भर्तुः निदेशमनुपालयन्ती। कालक्रमेण जर्जरशरीरया मृत्युमुखे पतन्त्याऽपि तया साध्व्या नैकस्मिन्नपि दिने लघुपात्रस्य सूत्रप्रोतायाः सूच्याश्च कोऽप्युपयोगो-ऽवालोकि। मृत्युवेलायां जिज्ञासाशान्तये तस्याः साध्व्यास्तेषामुपयोगमेवमाह स मुनिः—'भोजन-समये यदि पतेद् ओदनकणस्तदपसारणाय सूत्रप्रोता सूची, सूची-प्रक्षालनाय च पानीयमेतत्प्रत्यहमपेक्ष्यते मया।' यावज्जीवं नैकोऽपि कण उच्छिष्टः पतितः, इत्येषा सावधानता कं जनं मुनिपदवीं न दापयेत्? आगमशास्त्राणि मुक्तिलाभाय **सम्बन्धे सावधानता** इत्यादिना तमिमं प्रधानतममुपायमामनन्ति।

अस्ये मुनेर्जयन्त्युत्सवः सम्पाद्यते यै-र्जनैस्त एव साम्प्रतमांग्लशासकैर्निष्पादिते

द्राविडाऽऽर्यद्रोहगर्ते निपतिताः कलहायन्ते, देवगिरं तदुपासकांश्च विहेठयन्तीत्यहो कालविपर्ययः। संस्कृतज्ञानां संस्कृतपाठशालानां च दशाऽस्मिन् राज्ये साम्प्रतं शोचनीयतामापन्ना। राजकीययपुस्तकालयतः प्रकाश्यमाना संस्कृतग्रन्थमाला राजकीयार्थसाहाय्यमन्तरा निरुद्धव्यापारेति अहो कष्टम्।

प्रातः सप्तवादनतः पञ्चवादनं यावद् अडचारपुस्तकालये कार्यव्यापृततया नाधुनावधि नगरभ्रमणस्यावसरो लब्ध इत्यवकाशदिनस्य भ्रमणायोपयोगः स्यादिति विचार्य मद्रासनगरतः प्रायो विंशतिक्रोशमिते दूरेऽवस्थितं समुद्रपरिसरवर्तिनं महाबलिपुराख्यं प्राचीनं स्थलं दिदृक्षुकामोऽहं मृत्तैलयानेन तत्र प्रातरेवागच्छम्। पल्लवनृपतीनां राजधानी पुरातनी नगरमेतदासीत्। सागरपरिसरवर्तिन्यस्मिन् स्थले इतस्ततः प्रसृतानि प्राकृतानि पाषाणखण्डानि शिल्पिभिः संतक्ष्य मूर्तिकलायाः स्थापत्यकलायाश्च निदर्शनरूपेण स्थापितानि। अत्रेदृशानि विंशतिपरिमितानि स्थानानि दर्शनार्हाणि विद्यन्ते। यत्र क्वचन तपस्यन्नर्जुनः, कुत्रचिद् गोवर्धनधरः श्रीकृष्णः, क्वचिन्महिषासुरमर्दिनी दुर्गा, अपरत्र च क्रीडानिरता वानरा आखचिताः। पञ्चपाण्डवमण्डप - कृष्णमण्डप - वराहमण्डप - गणेशरथ-पञ्चरथव्याघ्रगुहाप्रभृतीनि स्थानान्यत्र प्रायः क्रोशैकदूरप्रसृतायां भूमौ यत्र यत्र शिलाखण्डा अवादृश्यन्त, शिल्पिभिस्तत्रैवोत्कीर्णानि। पञ्चरथस्थले पाण्डवानां प्रत्येकं रथमत्र निर्मितम्। अत्रोत्कीर्णा गजप्रतिमाः प्रतिकृतयश्च भारते वर्षे उपलब्धासु गजप्रतिमासु सुन्दरतमाः परिगण्यन्ते। समुद्रतटे वर्ततेऽत्र सहस्राधिकवर्षप्राचीनं शिवमन्दिरम्। उदधिलहरीणामाघातेन, क्षारेण जलेन, पवनवेगेन च त्रासितमपि तदेतन्मन्दिरं कथं कथमपि रक्षत्येव स्वकीयं कायः। मन्दिरस्याधारशिलासु प्रतिहताः सागरलहर्यः पुरुषत्रयदघ्नमुच्छ्रिताः क्षारमिश्रितान् जलसीकरान् मुञ्चन्त्योऽन्धीकुर्वन्ति उपनेत्राणीत्यत्र कन्याकुमारी-सागरपरिसरे चानुभूतमस्माभिः। झञ्झावातादिषु महावृष्टौ चोपनेत्रं धारितं दुःखाधायकमित्यनुभूतमेवासीत्, साम्प्रतं शीतलपवनमिश्रितोदधिलहरीसीकराणामनुभवोऽपि सानन्दं कर्तुं नैव पार्यत इत्युपनेत्रधारणं प्राचीनापुण्यविलसितप्रायमेवेति पुनरपि तत्र स्मरणपदवीमारूढम्।

इतः पुनरपि मद्रपुरीमागत्यात्रत्यं पशुपक्ष्युद्यानमुच्यन्यायालयभवनं चावलोकितम्। तत्रैव स्थितं प्रकाशगृहं तु समयातिपाताद् द्रष्टुं नापारि। तदनु तत्रत्यस्य समुद्रतटस्य 'मरीन बीच' इत्याख्यस्य भ्रमणमकारि। अद्यैव मैलापुरसंस्कृतमहाविद्यालयभवने काञ्चीकामकोटिपीठाधीश्वराणां वर्तमानानां शङ्कराचार्याणां श्रीमतां चन्द्रशेखरभगवत्पादानां जन्मदिवसोत्सव आसीदायोजितः। तत्र कालातिपातो मा भूदिति विचार्य षड्वादने तत्रागतम्। अत्रासीदायोजितः सङ्गीतसमारोहः। तत्र कर्णाटकसंगीतस्य सुमधुरो ध्वनिः प्रवहन्नासीत्। डा० वे० राघवसदृशा विद्वांसोऽपि तत्र समारोहे जनसंमर्दबहुले आस्तरणादिरहितायां वालुकामय्यां भूमावेव उपविष्टा दृष्टाः। एतेन दक्षिणभारतीयजनतायाः प्रबुद्धजनस्य च सारल्यप्रवृत्तिः गर्वाभावश्चाभिव्यज्यते। सरलोऽयं जनवर्गो विपथगामिभिः कतिभिश्चन राजनीतिविद्भी राष्ट्रभाषादिविषयानाश्रित्य मार्गात् प्रच्याव्यत इति खेदस्यायं विषयः।

मैलापुरसंस्कृतमहाविद्यालयतः अडचारपुस्तकालयस्य मध्येमार्गमासीत् श्रीमतां रामचन्द्रदीक्षितमहोदयानां गृहम्। अडचारपुस्तकालयत आगमन-

वेलायां प्रायः प्रत्यहं तेषां दर्शनालापादिलाभो मया लब्धो यावदहं मद्रपुरीं न्यवसम्। दीक्षितमहोदयाः पूर्वं मैलापुरसंस्कृतमहाविद्यालय एव प्रधानाचार्या आसन्। तदनु वाराणसीस्थे हिन्दूविश्वविद्यालयस्य संस्कृतमहाविद्यालये वेदान्ताध्यापकाः, ततो विश्रामवेलायां च तत्रानुसन्धानसञ्चालकपदवीमलङ्कृतवन्तः। तदनु वाराणसेयसंस्कृतविश्वविद्यालये अनुसन्धानविभागसदस्या अभूवन्। अत्रैवास्माकमेभिः प्रत्यहं सम्पर्कः समजायत, परिज्ञातं चैषां विशिष्टं पाण्डित्यम्। ग्रन्थसम्पादनकर्मणि विषयग्रन्थिमोचिका युक्ततमपाठसंयोजिका च प्रतिभा महानुभावानामेतेषां वाराणसेयानखिलानपि विदुषोऽतिशेते स्मेति निःसङ्कोचं वयं वदामः। मईमासस्य त्रयोदशे दिनाङ्के यदा वयं तञ्जापुरीं प्रति गमनाय समुत्सुका आस्म, चतुर्वादनवेलायामेतेषां महनीयचरितानामन्तिमं दर्शनमस्माभिरकारि। ततः परं जुलाईमासस्य पञ्चविंशे दिनाङ्के नश्वरमेतत्कलेवरं परित्यज्य ब्रह्मीभूता इमे महानुभावा इति वाराणस्यामेव श्रुत्वा सीदामो वयं साम्प्रतमपि विषमासु दुःसमाधेयग्रन्थिषु ग्रन्थाध्ययनावसरे उपस्थितासु। एभिरेव शब्दैः श्रद्धाञ्जलिरेष प्रविकीर्यते गुरुपादुकारूपेण आश्रितयोरेतयोश्चरणयोः। साम्प्रतमेते वाराणसेयसंस्कृतमहाविद्यालयस्य सम्मानिताः प्राध्यापका आसन्। विगते वर्षे च संस्कृतविद्वद्भ्यः प्रदीयमानो राष्ट्रपतिसत्कार उपलब्ध एभिर्महानुभावैः। सरस्वतीभवनग्रन्थमालायां प्रकाशितस्य पार्थसारथिमिश्रविरचितस्य 'टुप्टीका'व्याख्यानस्य 'तन्त्ररत्न'स्य संपादितौ तृतीय-चतुर्थभागौ महानुभावानामेतेषां विद्वत्ताया उत्कृष्टं निदर्शनम्।

प्रथमायां मद्रपुरीयात्रायां विशिष्टाद्वैतदर्शनस्य पाञ्चरात्रागमानां च विशिष्टा विद्वांसः श्रीमन्तो वी० कृष्णमाचार्यमहोदया अड्यारपुस्तकालय एव कार्यव्यापृता दृष्टा आसन्नस्माभिः। साम्प्रतमेते वार्धक्यवशाद् गृहीतावकाशाः स्वगृह एव निवसन्ति। एकस्यां सन्ध्यायामस्माभिर्महानुभावानामेतेषां दर्शनाय तद्गृहमधिगतम्। ग्रीष्मावकाशवशात्तदा तेषां पुत्रा वेङ्कटेश्वरविश्वविद्यालये संस्कृताध्यापकाः श्रीवरदाचार्यमहोदया अपि तत्रैव आसन्। श्रीमन्तः कृष्णमाचार्यमहोदया वार्धक्यवशात् श्रोत्रेन्द्रियापाटवेन पीडिता अपि 'सभाष्यायाः सात्त्वतसंहितायाः सम्पादनकर्मण्यपेक्षितं साहाय्यं पत्राचारादिद्वारा नूनं प्रदास्येत एवे'ति प्रतिश्रुतवन्तः। तेन मेनेऽहमात्मानं कृतकृत्यम्।

जूनमासस्य द्वादशे दिनाङ्के सात्त्वतसंहितायाः कार्यमवसितमिति त्रयोदशे दिनाङ्के केवलं राजकीयपुस्तकालय एव गन्तव्यमासीत्। तत्रत्यः कार्यसमयो दशवादनानन्तरं प्रवर्तते। अतः प्रातःकालेऽस्माभिः मद्रासपत्तनावलोकनाय गतम्, यतो हि बृहदाकाराणां समुद्रपोतानां गमनागमनादिकं भवति। सपादरूप्यकं शुल्कं दत्त्वा तद्दृष्टमस्माभिः, यद्यपि निश्चितेषु दिवसेषु तत् पञ्चविंशतिपणक-शुल्केन द्रष्टुं शक्यते। लौहयानस्थानकेषु 'प्लेटफार्म'-भूमिर्यथा विरच्यते, तथैवोच्चैस्तनायां भूमिकायां बृहदाकारेषु पोतेषु यातायातसौविध्यलाभाय विरच्यत एतत्। अत्र निश्चितभूमिकापर्यन्तमेव दर्शकानां प्रवेशो भवति। ततः परं यात्रिणो निश्चिता भारवाहाश्चैव गन्तुं पारयन्ति। इतः प्रस्थाय समीप एवोच्चन्यायालयभवनेष्ववस्थितं विद्युत्स्तम्भमस्माभिरवलोकितम्। विद्युत्स्तम्भमेतद् रात्रौ विचरतां पोतानां मार्गदर्शनायातीवोच्चैस्तने स्तम्भसदृशे गृहेऽवस्थापितम्। तादृशमेवैतत् स्तम्भगृहमासीत्। उपरितनोऽस्य भागो दर्पणमयो यन्त्रसज्जितश्चास्ते। अयमेव भागो रात्रौ अतीव उज्ज्वलं प्रकाशते।

भवनादस्मात् सम्पूर्णा मद्रपुरी दूरं दूरतरं प्रसृताऽतीव मनोहरा विस्मयावहा च प्रतिभाति ।

मद्रपुर्याः पूर्वयात्रापेक्षया वैशिष्ट्यमिदमवालोकि यदत्र राष्ट्रभाषाया विरोधे जागरूकेऽपि तस्याः प्रचारः प्रसारश्च अवर्धतेतराम् । संस्कृतभाषा तु विरलप्रचारेव दृष्टा । महाविद्यालयस्था विद्यार्थिनोऽपि न तादृशा वावदूका आसन् संस्कृतभाषणे, यथा हि प्रथमयात्रायामस्माभिर्दृष्टा । जीविकाप्रधानोऽयं कालः । संस्कृतविद्वांसः स्वबालकान् जीविकादौर्लभ्यादेव संस्कृतं नाध्यापयन्ति, जीविकाऽलाभभियैव मद्रपुरीया जनाः सार्वजनिकेषु स्थलेषु विरुद्धं भाषमाणा अपि स्वबालकान् राष्ट्रभाषामध्यापयन्ति । अधुना तत्रत्याः संस्कृत-पण्डिता आङ्गलकलाशालासु नियुक्ता हिन्दीभाषामध्यापयन्ति, न संस्कृतम् । यतो हि संस्कृताध्येतारस्तत्र विरला एव ।

रात्रौ मद्रपुरीतः प्रस्थाय प्रातश्चतुर्वादनवेलायां तञ्जापुरी समधिगता । अत्रत्यः पुस्तकालयः पूर्वत एव विदित आसीदस्माकम् । पूर्वापेक्षया वैशिष्ट्यमत्र यत् पुस्तकालयभवनसमीप एवात्र आयुर्वेदमहाविद्यालयः स्थापितः । सङ्ग्रहालयोऽप्यत्रत्यो न पूर्वयात्रायामस्माभिरवलोकितः । अत्र सङ्गृहीतेषु वस्तुषु प्रायः पञ्चाशद्धस्तपरिणाहस्तिमिङ्गलोऽस्मद्दृष्टेषु सङ्ग्रहालयान्तरेषु न क्वाप्यवलोकितः । सरस्वतीमहलपुस्तकालये नूतने सङ्ग्रहे शिवानन्दरचितस्य सौभाग्यहृदयस्तोत्रस्य सुभगोदयस्य च मातृके उपलब्धे । अत्रापि केवलं सुभगोदय एव विद्यते, न मद्रपुरीमातृकावत् सुभगोदयवासनाऽत्र सन्निविष्टा । सौभाग्यहृदयमातृका तत्रत्या नित्याषोडशिकार्णवपरिशिष्टे मुद्रितं रूपमेवानुकरोति । सुभगोदयमातृकायां तु तदपेक्षया वर्तते पाठभेदेषु किञ्चिद् वैशिष्ट्यम् । अत्रत्या ग्रन्थाध्यक्षाः श्रीमन्तो वी० गोपाल आयङ्गारमहोदया दन्तपीडयासीदन्तः पुस्तकालये आगन्तुं नापारयन्निति तत्सहायकैः श्रीदेवनाथाचार्यमहोदयैः साकमहं तेषां गृहमगमम् । वार्तालापादिना च सन्तोषित आत्मा । श्रीमन्तो देवनाथाचार्यमहोदया मदीयं साहाय्यमेव कुर्वाणास्तस्मिन् दिने आसन् । नाधिकमत्रावलोकनीयमासीत् । यद् द्रष्टव्यं तच्च वाराणस्यामपि प्रेषयितुं शक्यत इत्याश्वासनमधिगत्य तस्यामेव रात्रौ त्रिवेन्द्रं नगरीं प्रति गमनाय मतिः सञ्जाता, किन्तु 'श्वोऽत्र प्रातः काले गरुडमहोत्सवो भविता, तदत्रागतैर्भवद्भिरवश्यमेव स द्रष्टव्यः' इति श्रीदेवनाथाचार्यमहोदयानां वचो निशम्य रात्रौ तत्रैव न्यवसमहम् । अस्मिन् महोत्सवे नगराद् बहिः कस्मिंश्चिदुद्याने स्थितो भगवान् विष्णुर्गरुडासनः प्रातःकाले राजवीथीषु महता उत्साहेन समर्च्यते । एषां गरुडानां द्वादशकं भक्तैरुह्यमानं तत्रासीत् ।

प्रातर्नववादनवेलायां तञ्जापुरीतस्त्रिवेन्द्रं नगरस्य यात्रा प्रारब्धा । तञ्जापुरीत पूर्वमेव वर्तते कुम्भघोणं नाम तीर्थम्, ततः परं च वर्तते श्रीरङ्गदेवस्थली त्रिचनापल्ली । त्रिवेन्द्रं मार्गे एव मदुरानगरमपि समापतितम्, यत्र भगवत्या मीनाक्षीदेव्या भव्यं दाक्षिणात्यस्थापत्यकलामुकुटायमानं मन्दिरं गोपुरचतुष्टयविराजितं भ्राजते । एतच्च सर्वमस्माभिः पूर्वस्यां यात्रायामेवावलोकितमासीत् । मदुरासमीप एव भारतवर्षस्य सर्वाङ्गपूर्णा वेधशाला विलसति 'कोदइ कनाल' इत्याख्ये पार्वत्ये स्थाने । समयसङ्कोचात् सा द्रष्टुं नाशक्यत ।

( क्रमशः )

# क्षत्रपति-महाकाव्यम्

— श्री उमाशङ्करशर्मा त्रिपाठी —

[ आंग्लभाषा-प्राध्यापकः—काशी-विद्यापीठम्, वाराणसी ]

ऊर्ध्वस्थिताः नूनमवेक्ष्य भूमेः
भाग्यं जहर्षुः त्रिदशाः सरामाः ।
सतां प्रसादो निरवग्रहात्मा
धर्मव्रतानां ननु भागधेयम् ॥ ७१ ॥

स्वराष्ट्रसौभाग्यमदोन्मदानां
पुंसां महाराष्ट्रधरा सवित्री ।
भास्वन्नवानन्दगृहेषु तेने
नृपाभिषेकोत्सव - मङ्गलानि ॥ ७२ ॥

अमर्त्यशक्तेरधिरोढुमीशा
तुलां न यस्य स्थिरकीर्तयोऽपि ।
सोऽसौ तुलादानमिषेण देवो
धर्मोपदिष्टं विनतो ननन्द ॥ ७३ ॥

त्रिविक्रमाब्जाङ्घ्रिजने - स्तटिन्याः
पातोऽभिषिक्तः सलिलामृतेन ।
अनुष्ठिताऽङ्ग्र्याद्विजदेवतार्चः
फलैरसौ लोकमनो ननन्द ॥ ७४ ॥

समं जयन्तेन पुलोमपुत्र्या
यथाऽनुजुष्टो वसुभिर्महेन्द्रः ।
सुतेन राज्ञ्या सहितस्तथाऽसा-
वष्टप्रधाना-ऽनुगताङ्घ्रिपङ्क्तिः ॥ ७५ ॥

श्वेताम्बरः पूतचरित्रवासाः
विमण्डिताङ्गो द्विजबन्धुकीर्तिः ।
निबद्धचामीकरचारुपीठां
नृपोऽभिषेकावनि - माजगाम ॥ ७६ ॥

तं श्रोत्रियाः शास्त्रविधिप्रतिष्ठं
मन्त्रोपचारैरभिनन्द्य हृष्टाः ।
वधूदुकूलेन समं तदीयं
धृतोत्तरीयाञ्चल - मावबन्धुः ॥ ७७ ॥

श्रद्धेव धर्मस्य रवेः प्रभेव
भर्तुः समाराधित - वामभागा ।
सा वीरपत्नी जगदङ्गनाना-
मशेषसौभाग्यधुरं बभार ॥ ७८ ॥

अथ ध्वनन्मङ्गलवाद्यगीत-
श्रुतिस्वरोद्घोषभरे मुहूर्ते ।
हरिद्गजेन्द्रा इव कुम्भहस्ता
नृपाभिषेकं विदधुः प्रधानाः ॥ ७९ ॥

ग्रामेषु दुर्गेषु पुरेषु सद्यो
हर्षापगाः लङ्घितकूलबन्धाः ।
निपूर्य भूमिं हरितोऽन्तरिक्षं
प्रोचुर्महाराष्ट्र - नृपाभिषेकम् ॥ ८० ॥

तदागताः षोडशमातृकाभाः
सुमण्डिताः षोडशविप्रवध्वः ।
सुवर्णपात्रोदित - रत्नदीपै-
र्नीराजनामारचयन् नृपस्य ॥ ८१ ॥

प्रमोदसिन्धूच्चलदूर्मिहस्ता-
ऽपनीतनिद्राऽऽकुलितत्रियामाः ।

---

१. मन्त्रिपरिषदि नियुक्ताः शिवनृपेण अष्टौ अमात्याः । त एव 'अष्टप्रधान'संज्ञकाः इतिहासे ।

२ 'क्लृप्तश्रियोः' इति पाठान्तरम् ।

यामान्तवातोपचितानुरागां
प्रातश्श्रियं राजजनाः ननन्दुः ॥ ८२ ॥

एकावलीमौक्तिकमुग्धशैत्य-
स्पर्शाश्चितोरोज - दिशद्विभातैः ।
अजस्रनृत्याऽऽकुलशोणनेत्रै-
र्वैश्याजनैर्निस्सह - मालुलोके ॥ ८३॥

विच्छिन्नताराभरणा श्लथार्ता
व्यस्ताम्बरा मृष्टमुखेन्दुलक्ष्मीः ।
शिवार्कभीता भुवनाभिसारं
रात्रिर्जहौ वैरिमनोरमेव ॥ ८४ ॥

मनोज्ञपुष्पोत्कचगन्धकुम्भा-
दनारतं प्रत्ययनं समीरः ।
भूभृद्यशस्सौरभमेव यच्छन्
राज्योत्सव - ज्ञप्तिमिवाऽऽततान ॥ ८५ ॥

लसत्पताकैरुपनद्धमाल्यै-
र्द्वारे समारोपितपूर्णकुम्भैः ।
जनैरिव कल्पनवप्रबन्धै-
र्गृहैः पठत्स्वस्त्ययनैश्चकासे ॥ ८६ ॥

कुतूहलोत्फुल्लसरोजनेत्रै-
र्वरेण्यवेषैः पथि सञ्चरद्भिः ।
परस्पर - स्वागतघोषपूर्वं
लोकैः प्रतस्थेऽभिमहीपधाम ॥ ८७ ॥

पूर्वाद्रिमौलौ दधदंशुमालः
स्ववंशसौभाग्यमहो दिदृक्षुः ।
अनूरुसञ्चालित - सप्तसप्ति
रुरोह रागात् सविता शताङ्गम् ॥ ८८ ॥

विलोभ्यरागोदितरत्नगुच्छ-
च्छायासमाक्रान्तमनोज्ञकान्तिम् ।
नृपस्तमुष्णीषमविभ्रतार्यं
द्रष्टुं क्षमा यं न किरीटिनोऽपि ॥ ८९ ॥

विभ्रत्सुजातोत्तमकान्तिकान्त-
रत्नोरसस्तस्य गभीरधाम्नः ।
रत्नाकरस्येव यशो वितेने
निसर्गलक्ष्मी - प्रभवप्रतिष्ठाम् ॥ ९० ॥

तदङ्गसंसक्त - मनल्पपुण्यं
चन्द्रांशुकीर्णाम्बर - तुल्यमेव ।
उवाह कान्तिं सुषमासवित्रीं
नवाम्बरं स्यूतमणिप्रकाशम् ॥ ९१ ॥

यदेकसङ्गेन पदातिनैव
हतो जितेन्द्रोऽपि रणे दशास्यः ।
यशो यथाऽऽनर्च मनोऽभिरामं
शरासनं तत् सशरं नरेन्द्रः ॥ ९२ ॥

अजस्रमावर्षति योऽपवाधं
सौभाग्यसिन्दूरमिवाऽऽजिलक्ष्म्याः ।
प्रतीपवर्त्मान्तक - मार्यनाथ-
स्तं खड्गमभ्यर्च्य भृशं ननन्द ॥ ९३ ॥

एवं व्रती पूर्णमनोरथाग्र-
जातप्रसादा - ऽभिमतप्रसादः ।
प्रणम्य राजोचितलक्ष्मजातं
सिंहासनागार - मपश्यदैन्द्रम् ॥ ९४ ॥

अहो ध्रुवं वर्णयितुर्मनो मे
हतोपमा हन्ति निरुद्धसीमा ।
बिभर्ति यस्यामुपमानबन्धाद्
वरेण्यकल्प्यूनपदं हि वर्ण्यम् ॥ ९५ ॥

प्रतीपभावेऽपि हठानुरब्धे
यस्ताः पदालङ्कृतयो जयन्ति ।
तत्रापि याथार्थ्यमसंशयैव
विपर्य्युपात्ता सुषमाऽभिरक्तिः ॥ ९६ ॥

स्वान्तस्थितिव्यक्तिविधौ क शक्तः
शब्दः स्वयम्भूरपि नित्यवृत्तिः ।
चेष्टादिभिर्व्यक्तिसमुद्यमैः किं
निरूप्यतेऽव्यक्त - परोऽपदेशैः॥ ९७ ॥

( क्रमशः )

# ऋषिकल्पः कालिदासः [ ८० पृष्ठतः अग्रे ]

तामिमां प्रकृतिसिद्धां निर्मितिं लक्षीकृत्य लक्ष्यैकचक्षुषो महर्षयः जाग्रदवस्थायामपि परमं सुखमवाप्तुं प्रभुसम्मितैः शब्दैः दर्शनानि, सुहृत्सम्मितैः शब्दैः अनल्पानि पुराणानि, कान्तासम्मितैश्च तैः सङ्ख्यातीतानि काव्यानि नाटकानि च प्रवर्तयाम्बभूवुः। ऋषयः कवयश्चैकामेव तुलामधिरोहन्ति। दर्शनात्खलु ऋषयो भवन्ति। विचित्राणां भावानां संस्कृतेस्तत्त्वस्य च प्रख्या दर्शनं नाम। तदस्य प्रवर्तनाय श्रवणं मननं निदिध्यासनञ्चेति भवन्ति कारणानि। तानीमानि यथर्षिभिराश्रितानि तथैव कविभिरपीति साधनं न दुष्करम्। तथा हि—

अपि च, भगवतः परमेष्ठिनः प्रथमायाः सृष्टे आचैतन्निमेषात् प्रभुतेव नितान्तं दुरवगाहा किल कवीनां कविता अमृतधारेवास्माकं श्रवणविवरं सम्प्रविश्य तदा तदा चेतः शीतलयति चेतयते च भृशं सन्तप्तेऽपि सहृदयानां हृदये प्राचां गौरवम्। कविताया भगवत्याः किलोत्सङ्गमधिशयाना वयमिदानीं पुरातनमस्मदीयं गौरवमनुभवामः। का प्रबोधयति प्रसुप्तानस्मान्? का वा जनयति नितान्तं क्लिन्नानामस्माकमानन्दसन्दोहम्? का वा प्रापयति वैभवशिखरमस्मान्? का वा ग्राहयति साध्वीं संस्कृतिम्? का वा तनोति समीचीनां जीवनपद्धतिमस्माकम्? इत्यादीनां सहस्रशः प्रश्नानां इदमेकमेवोत्तरं भवितुमर्हति यत्कवीनां कविता नाम।

यथा हि कश्चन चित्रकारः चित्रपटे हावभावविन्यासपुरस्सरं द्रष्टॄणां हृदयाकर्षकाणि समुट्टङ्कयति चित्राणि, यानि चाऽवलोक्य सुवर्णरञ्जितानि मुग्धोऽपि सामयिकं भावमवबुद्ध्य प्रसन्नश्चित्रकारं प्रशंसति, एवमेव सुकविरपि सुवर्णघटितां कवितां निबध्नाति, यामधीत्य रसिकः कर्तारं श्लाघते। अत एव योग्यैर्वर्णविन्यासैः परिकलिता चित्रकला कविताकला चैकामेव तुलामधिरोहत इति जनसामान्यं व्यवहरति। परं कलातत्त्वपरिशीलनपरिपक्वमतिवैभवा विचक्षणाः चित्रकलायाः कविताकलां भित्तिस्थानीयामाचक्षते। सन्तापपरीतं जनस्य हृदयमावर्ज्य तत्र किमपि नूतनं वैभवमातन्वतोरपि, अनन्यसाधारणीं योग्यतां प्रकटयतोरपि, विलक्षणं भावं श्रोतॄणां द्रष्टॄणाञ्च मनसि सम्पादयतोरपि पुरातनीं शैलीं प्रबोधयतोरपि चित्र-कवित्वयोर्विद्यमानः कश्चिद्विशेषो विवेकिनां न निगूढः। रामकृष्णाद्यवतारपुरुषाणां चरितं खलु कविभिश्चिरात् स्वतन्त्रया स्थिरया कवितया चित्रीक्रियते।

एवं प्रवृत्तेषु कविषु सङ्ख्यातीतेषु द्वित्रा एव महाकविपदं भूषयाम्बभूवुः। तत्राऽपि कवितल्लजः कालिदास एव कनिष्ठिकामूलपातमनुभवन् कविसम्राट्पदमलमकार्षीत्। कविसम्राडयं केवलमनितरसाधारणेन वाक्पाटवेन न मुखरायते, किन्तु अधरितसुधारसमाधुर्यं वर्णनातीतम् अवाङ्मनसगोचरं कमपि रसं वर्षितुमेव सधीरं गर्जन् योग्यतमान् विषयान् ग्राहयत्यस्माभिः, विचारवैचित्र्येण अक्षाल्यशासनीयानां हृदयं पवित्रं शुद्धं कोमलञ्च कुरुते। न केवलमयं बुद्धिमत्तामुदारताञ्च स्वीयां प्रकटितुं प्रयतते, परं ताभ्यां साकम् अविचारकर्दमस्खलितानुद्दिधीर्षुः ग्राहयति सन्तं विचारम्।

कविकौस्तुभोऽयं स्वीयामुच्चैस्तरां योग्यतामुदारताञ्च न वाचा, किन्तु कार्येण; ते च न केवलं, परं साकं ताभ्यां धर्मप्रपञ्चपटुताम् उपनिषत्तत्त्वविज्ञानञ्च; ते च न केवलं परेषामुपदेशाय, किन्तु आचरणाय च व्याहृत्य सह

कविसम्राट्त्वोपाधिना महर्षित्वोपाधिमप्यभजतेति कथने मन्ये नातिशयोक्तिरिति। ऋषिः महर्षिरिति यथा भेदेन व्यवहारः, तथैव कविः महाकविः कविसम्राट् इत्यादयो व्यवहाराः।

ऋषि-कव्यादयः शब्दा न जातिप्रवृत्ति-निमित्तकाः। ऋषेः कवेर्वा पुत्रो न ऋषिः कविर्वा भवति, किन्तु एते अनितरसाधारण-कार्योपाधिका एष्टव्याः। प्रत्यक्षादिलौकिकप्रमाणाविषयाणां नैक-विधानां भावानां सूक्ष्मतमानां धर्मांशानां निगूढानाञ्च तत्त्वानामाविष्कारान् निमित्तीकृत्य पूर्वजा ऋषयः कवयश्चाभवन्। तत्र ये प्रभुसम्मितै-रेव शब्दैः पूर्वोक्तान् पदार्थानाविरकार्षुस्ते ऋषयः, ये च कान्तासम्मितशब्दैस्ते कवय इति व्यवह्रियन्त।

नियतिकृतनियमपरिपालनमावश्यकमृषीणाम्, कवीनान्तु तन्नावश्यकम्। कवीनां प्रतिभानप्रयुक्तं तत्त्वदर्शनम्। अपरोक्षानुभूत्या यत्कवयः पश्यन्ति तदेव ते प्रकटयन्ति, वर्णयन्ति च कान्तासम्मितै-र्वचोभिः। कवीनां तत्त्वदर्शनस्य तत्प्रकाशनस्य च पन्था अनितरसाधारणः। अत एव महर्षीनप्यतिशय्य वर्तन्ते कवय इति कथनं नायुक्तियुक्तं भवेत्। तदिदमाह भट्टतौतः—

**नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।,**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥**
**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥**
**तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।**
**नोदिता कविता लोके यावज्जाता न वर्णना॥**

कवितल्लजोऽयं दृश्य-श्रव्यभेदेन काव्यानि रचयंस्तत्र न केवलं कथाविशेषमेव प्रतिपादयति, किन्तु सारिष्ठान् ऐहलौकिकस्य परत्रस्य च श्रेयस उपायान् सुबहूनाविष्करोति। ललिततमया शैल्या आख्यायिकारूपेण वर्ण्यमाना एतेऽर्थाः भावुकानां हृदयङ्गमा अनुष्ठानपर्यवसायिनः श्रेयसे स्युरित्यभिसन्धायैव तान् स्वकाव्येषु निबबन्ध। तथा हि—

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः।... श्रद्धया देयम्।... अथ यदि ते कर्मविचिकित्सा वा वृत्त-विचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः संमर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तेषु वर्तेरन्। तथा तेषु वर्तेथाः।** इत्यादिभिः प्रभु-स्मितैः शब्दैः बोधितमर्थं संवादप्रदर्शनपुरस्सरं स्वीये काव्ये कवितल्लजः प्रदर्शयति। वरतन्तोर्महर्षेरन्ते-वासी कौत्सः दानशौण्डं रघुं तादृशं, गुरुदक्षिणायै चतुर्दशकोटीः सुवर्णानां ययाचे, यश्च तदात्वे प्रत्यग्र-निर्वर्तित-विश्वजिदध्वरो मृण्मयपात्रावशेषः। स च 'कुबेरं जित्वाऽप्यर्थिनो मनोरथं पूरयिष्यामी'ति समकल्पयत्। निश्चिकाय च परेद्यवि प्रातः प्रयाणम्। तद्विक्रमादमानुषाद् भीतभीतः कुबेरः निशि तत्कोशगृहे हेमवर्षमवर्षत्। 'सर्वं त्वयैव स्वीकर्तव्यमि'ति निर्बध्नाति दाता, प्रतिग्रहीता च प्रवदति 'गुरुप्रदेयादधिकं किञ्चिदपि नादास्य' इति-

**जनस्य साकेतनिवासिनस्तौ**
**द्वावप्यभूतामभिनन्द्यसत्त्वौ।**
**गुरुप्रदेयाधिकनिःस्पृहोऽर्थी**
**नृपोऽर्थिकामादधिकप्रदश्च॥**

**सत्यान्न प्रमदितव्यम्** इतीमं श्रौतं प्रमेयं **सत्याय मितभाषिणाम्** इति; **प्रजातन्तुं मा व्यवच्छेत्सीः** इतीमं श्रौतमर्थम् **प्रजायै गृहमेधिनाम्** इति; **स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्** इति वैदिक-मनुशासनं **शैशवेऽभ्यस्तविद्यानाम्** इति च सन्दर्भः सूत्ररूपेणाऽवद्योतयति।

**यौवने विषयैषिणाम्, प्रजायै गृहमेधिनाम्**

इत्याभ्यां सूत्रकल्पाभ्यां विरुद्धवदवभासमानाभ्यां धर्माविरोधेन तृतीयः पुरुषार्थो निषेवणीय इत्यभिसन्दधानः सप्तदशे सर्गे विषयमेनमुपबृंहयति भगवतो रामभद्रस्य स्वभावविशेषवर्णनव्याजेन—

**न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ।**
**नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु॥**

अत्रान्वयमुखेन प्रतिपादितमेवार्थम् अजस्य अग्निवर्णस्य च चेष्टितेन व्यतिरेकमुखेन विशदयति। अजः किल इन्दुमतीं परिणीय साकं तया नैकविधान् भोगाननुभूय कुसुमपातेन व्यसुं तामनुगन्तुं व्यवस्यन्नपि लोकापवादाद् बिभ्यदिव तथा नान्वतिष्ठत्, अन्ते च तच्चिन्तयैवाभैषज्येनाऽभ्यसूयत, पातयामास च स्वीयं शरीरं पवित्रतमे गङ्गासरय्वोः सङ्गमे। एवं सवितृकुलप्रसूतस्य अग्निवर्णस्य सर्वतोमुखं स्त्रीषु चापलं विस्तरेण वर्णयन् अतिप्रसङ्गात् व्याधिना कालधर्ममुपेयिवानिति च वर्णयन्नयमतिप्रसङ्गः कामादिष्वनर्थायेति इन्द्रियसंयमः सर्वथा कार्य इति च वेदसारमिममर्थं साधु प्रकाशयति।

विवाहप्रकरणे वधूनिश्चयाय वरपक्षीया वरान् ब्राह्मणान् सम्प्रेष्य निश्चितसमागतेभ्यस्तेभ्योऽवगत्य वरो वध्वा दर्शनाय समीक्षणाय च गच्छेत्। तत्र दर्शनार्थं मन्त्रमेकम्, समीक्षणार्थञ्च द्वितीयं मन्त्रं विनियुञ्जान आपस्तम्बाचार्यः सूत्रयति—**स्वयं दृष्ट्वा तृतीयां जपेत्, चतुर्थ्या समीक्षेत** इति। मन्त्रौ च ताविमौ—

**अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते।**
**इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितस्सुव॥**
**अघोरचक्षु - रपतिघ्न्येधि**
**शिवापतिभ्यः सुमनास्सुवर्चाः।**
**जीवसूर्देवकामा स्योना**
**शन्नो भव द्विपदे शञ्चतुष्पदे॥**

प्रथममन्त्रेण वरुणं बृहस्पतिमिन्द्रं सवितारञ्च सम्बोध्य प्रार्थयते वरः—'हे देवाः! यूयमस्यै वध्वै अभ्रातृघ्नीम् अपतिघ्नीम् अपुत्रघ्नीञ्च लक्ष्मीं प्रदायाऽनुगृह्णन्त्वि'ति। द्वितीयमन्त्रेण 'च हे वधु, त्वम् अघोरचक्षुः शिवासुमनाः जीवसूश्च भूत्वा सर्वात्मना सर्वेषां सुखकरी भवे'ति कथयते वरः। अनेन सन्दर्भेण चिरन्तनोऽयं सम्प्रदायः प्रवृत्त इत्यवगम्यते यद्वधूवरयोर्मिथः परीक्षणं नाम। तमिमं सम्प्रदायं कवितल्लजः कालिदासः—

**अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥**

इति निबध्नन् विवाहात् पूर्वमेव दम्पत्योरन्योन्यहृदयपरीक्षणस्या आवश्यकतां निरूपयन् द्रढयति।

एवं मेनाया हिमवतश्च विवाहं वर्णयन् तद्व्याजेन विवाहसंस्कारस्याऽभ्यर्हितत्वं तदनुबन्धिनश्च कांश्चन विशेषान् निर्दिशन् स्वस्य वैदिकश्रेष्ठत्वं ऋषिकल्पत्वञ्च सुस्पष्टमवद्योतयति। इत्थं हि स उपश्लोक्यते—

**स मानसीं मेरुसखः पितॄणां**
**कन्यां कुलस्य स्थितये स्थितिज्ञः।**
**मेनां मुनीनामपि माननीया-**
**मात्मानुरूपां विधिनोपयेमे॥**

अत्र मुनीनामपि माननीयामिति विशेषणेन न केवलं शारीरं रामणीयकं विवक्षायदम्, किन्तु आन्तरं सौशील्यादिकमेवोपपादयति। 'विधिनोपयेमे' इत्यनेन पाणिग्रहणविधेरावश्यकतामुपनिबध्नाति। 'कुलस्य स्थितये' इति वदन् पाणिग्रहणं नामेदं न भोगायैव, किन्तु 'प्रजायै गृहमेधिनाम्' 'अभ्यर्थकामौ तस्यास्ताम्' 'धर्म एव मनीषिणः' इत्यन्यत्र स्पष्टमभिहितमाशयं स्मृतिपथमुपनयति। 'कन्याम्' इति प्रथमतो निर्दिशन् 'कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे' इति च प्रतिपादयन् कविवरः परिणयानन्तरं कालक्रमेण

मेनकाया यौवनप्रादुर्भावस्तया च साकं तदनु हिमवतः सङ्गम इति चोपवर्णयन् **प्रदानं प्राग्ऋतोः** इति इति गौतमीयस्य वचनस्य स्मारयतीव । न केवलमिदमेव, किन्तु समाजपरिष्कर्तॄणां गौतमापस्तम्बादीनां महर्षीणां मितव्ययशीलतां 'परिवार-नियोजन'-पद्धतिश्चानुसरन् कुलस्य स्थितये केवलं मैनाकमुमाञ्चेति अपत्यद्वयमेव हिमवतः प्रदर्शयति ।

**दशास्यां पुत्रानाधेहि पतिमेकादशं वृधि** इति सत्यपि वैदिकाशीर्मन्त्रे कविसार्वभौमोऽयं—

**ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।**
**सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥**

इत्यत्र 'सुतम्' इत्येकवचनं प्रयुञ्जानः पश्वेकत्वाधिकरणन्यायं स्मारयन् परिवारवर्धनं नाभिप्रेतीति प्रतीयते । 'परिवार-नियोजनाय' साम्प्रतं वयं महान्तं यत्नमाचरामः, किन्तु महर्षिभिः प्रवर्तितानां नियमानामनुसरणेन कवितल्लजाशयस्य परिज्ञानेन च मन्येऽस्माकं न भ्रूणहत्यापातकस्य लेपः, नापि भोज्याभावकृतः क्लेशः, न चाऽपि प्राचीनसंस्कृतेः मर्यादायाश्च समुल्लङ्घनं स्यादिति ।

कविसम्राडयं गार्हकर्मसु वैचक्षण्यमाबिभ्राणो यथा तत्रत्यान् विशेषान् स्वीये काव्ये निबध्नाति तथैव दुरूहान् श्रौतान् पदार्थान् औपनिषदं तत्त्वञ्च हेलयैव सन्निवेशयति । शाकुन्तलस्य द्वितीयेऽङ्के **रक्षांसि न इष्टिविघ्नमुत्पादयन्ति** इत्यत्र इष्टिशब्दम्, तृतीयेऽङ्के 'सायन्तने सवनकर्मणि सम्प्रवृत्ते' इत्यत्र 'सवनकर्म' शब्दम्, पुनश्चतुर्थेऽङ्के 'अद्यैव न इष्टिं परिसमाप्य' इत्यत्र 'इष्टि'शब्द'ञ्च प्रयुञ्जानः कालिदासः कुलपतेः कण्वस्याश्रमे पञ्चदिनसाध्यस्य सोमयागस्य अनुष्ठानमभवदित्यवबोधयति । 'सवनकर्म'पदं यत्र सोमलताया अभिषवादिकं भवति तत्रैव याज्ञिकैः प्रयुज्यते । तच्च कर्म सोमयाग एव । इष्टिशब्दश्च ओषधिप्रभवद्रव्यके कर्मणि दर्शपूर्णमासादौ व्यवह्रियते । सोमयागे च प्रधानयागात्पूर्वं परञ्चाङ्गतया बह्व्य इष्टयोऽनुष्ठीयन्ते । द्वितीयाङ्कगतेष्टिशब्दः सोमयागाङ्गदीक्षणीयेष्टेः चतुर्थाङ्कगतेष्टिशब्दश्च अवभृथेष्टेर्वाचकः ।

वेदेषु सोमयज्ञाः एकाहमारभ्य सहस्रदिनसाध्या आम्नाताः । तत्र पञ्चदिनसाध्यः सोमयागो ज्योतिष्टोमाभिध एव तदानीं कण्वाश्रमेऽनुष्ठीयमान आसीदिति कालिदासोऽभिप्रैति । अत एव द्वितीयाङ्के दुष्यन्तः 'आगमिनि चतुर्थे दिवसे प्रवृत्तपारणो मे उपवासो भविष्यति' इति करभकानीतं मातुः पत्रमधीत्य विदूषकं वदति—**इतस्तवास्तिकार्यम्, इतो गुरुजनाज्ञा, द्वयमप्यनतिक्रमणीयम् । किमत्र प्रतिविधेयम्?** इति । विदूषकश्च तमुपहसति—'त्रिशङ्कुरिवान्तराले तिष्ठे'ति । कण्वाश्रमे तावद्दिनव्यापि कर्म यदि नाभविष्यत् तर्हि विदूषकं दुष्यन्तः कथमेवमवक्ष्यत्?

**कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।**
**पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥**

किञ्च—**यात्येकतोऽस्तशिखरं पतिरोषधीनाम्** इति पद्ये विमृश्यमाने पूर्णिमायां सवनकर्म परिसमाप्य अवभृथेष्टिस्नानञ्च रात्रौ विधाय प्रातरेव स्वनगरं त्वरितं प्रतस्थे इति **अद्यैव नः इष्टिं परिसमाप्य ऋषिभिर्विसर्जित**...' इति सखीवचनमानुकूल्यमावहति । एतेन शुक्लपक्षदशम्यां मृगयार्थं वनमागत्य कृष्णपक्षप्रतिपदि दुष्यन्तो नगरं प्रतस्थे इति निर्णयेन कविसार्वभौमस्य श्रौतकर्माभिनिविष्टत्वमनुमातुं शक्यते । एवमनुमानेन नायकस्य दुष्यन्तस्य चारित्रमपि संरक्षितं भवति ।

नायकचारित्र-परिरक्षणं नाम कवेः कालिदासस्य मुख्यः प्रणवः । तद्गते चारित्रे संरक्षिते नाट्ये सहृदयेषु तत्प्रतिबिम्बं फलवद्भवेत् । सांख्यन्यायमीमांसादयो यथा शास्त्रसंज्ञामलभन्त तथैव

नाट्यं साहित्यमपि शास्त्रसंज्ञामलभत। 'हितेन सह वर्तते इति सहितम्, तस्य भावः साहित्यं नाम।' हितश्च वस्तु सर्वस्यात्मैव भवति, स हि निरतिशयप्रेमास्पदः। **आत्मनस्तु कामाय सर्वं प्रियं भवति** इति खलु कण्वाः समामनन्ति। एतादृशं निरतिशयप्रेमास्पदं वस्तु प्रतिपादयितुं यथा शास्त्रान्तराणि प्रवृत्तानि, तथैव साहित्यमपि। इयांस्तु विशेषः—शास्त्रान्तराणि वस्तुनस्तस्य प्राप्तये मार्गमङ्गुल्या निर्दिश्य निवृत्तव्यापाराणि, निर्दिष्टे च पथि गन्तुं यत्नोऽस्माभिरेव विधेयः। साहित्यशास्त्रन्तु तदधिगमाय क्लृप्ते मार्गे सहृदयानां करं परिगृह्य तान् बहुदूरं न केवलं प्रापयति, किन्तु रसाम्भोनिधौ अवमज्जयत्यपि।

साध्वी काचन प्रेयसी आच प्रातः आच सायं क्लेशसाध्येषूच्चावचं कर्मसु सुभृशं परिश्रम्य गृहान् समागतं क्लान्त्या च समन्वितं प्रेयांसं सरससरसैः सुधाबिन्दुसमन्वितैः वचोनिचयैः परिसान्त्वयति, विविधैरातिथ्यैश्च सन्तर्पयति, कुमार्गगामिनञ्च तं तस्मान्निवर्तयति, सुशीतलैरपाङ्गैः आवर्तनोद्वर्तन-कम्पितगात्रयष्ट्या भुजोत्क्षेपणेन आकुञ्चितेन भ्रूविक्षेपेण अन्यैश्च नैकविधैर्हावैर्भावैश्च वशीकरोति, तथैव कालिदास-कविता-वनितेयम् अनवरतं दुःखबहुलैर्नश्वरैश्च सांसारिकैः क्लेशैः परीतं सहृदयं समाकृष्य तस्य श्रवयोर्नयनयोश्च कान्तासम्मितशब्दार्थद्वारा सुधाबिन्दूनासिच्य सन्मार्गगामिनं विधाय पराञ्च निर्वृतिं प्रापयति। तदस्य महाफलस्य देशसमाजहितङ्करस्य सम्पिपादयिषया यथा आपस्तम्ब-गौतमादयो महर्षयः प्रवृत्ताः, तथैव कालिदासोऽपि।

किञ्च—**असंशयं क्षत्रपरिग्रहक्षमा**
**यदार्यमस्यामभिलाषि मे मनः।**

इतिपद्ये विमृश्यमाने कविकुलललामः कालिदासः दुष्यन्तस्य नायकस्य चारित्रसंरक्षणं यथाशास्त्रमर्यादं करोतीति विज्ञायते। अहं हि नायको 'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः' इतिलक्षणलक्षितो धीरोदात्तः। अत्र च पद्ये विकत्थनत्वं प्रतीयत इव प्रतिभाति। किन्तु पूर्वमीमांसायां विधिमन्त्राऽधिकरणे 'यद् यदी'त्यादिशब्दानां विधिप्रतिबन्धकत्वमवस्थापितम्। मन उद्दिश्य आर्यत्वं चेद्विधीयेत तर्हि विकत्थनत्वं नायकस्य स्यात्। आर्यत्वस्य विधाने यच्छब्दः प्रतिबन्धकः। यच्छब्दस्तावत् स्वसमभिव्याहृतार्थस्य आर्यत्वस्य सिद्धान्तमवद्योतयति। दुष्यन्तस्यार्यत्वं प्रथममेव सिद्धम्, अतस्तदत्र न विधेयम्। अस्यां शकुन्तलायां यदार्यं मे मनोऽभिलाषि, तस्मादियं क्षत्रपरिग्रहक्षमा इत्यनुवाद्यकोटौ आर्यत्वस्य निवेशे सति न विकत्थनत्वदोषस्यावसर इति कवेराशयः।

किञ्च—अयं महाभागो जगन्नियन्तार परमपुरुषं तत्र तत्र काव्येषु वर्णयन् स्वस्यालौकिकाद्वैतत्वावलम्बित्वं प्रकटयतीति व्यक्तमेव तद्विरचितकाव्यरसास्वादजुषां सहृदयानाम्।

**रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।**
**देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः॥**

इति रघुवंशीये पद्ये विमृश्यमाने परस्मिन् ब्रह्मणि प्रयुज्यमानस्य सत्यशब्दस्यार्थं महाकविरनेन निर्वक्तीति विज्ञायते। यथा हि मधुरैकरसमम्भः तत्तद्देशभेदसम्बन्धेषु यथापूर्वमेवाऽवतिष्ठते, तथैव निर्गुणं परं ब्रह्मापि त्रिभिर्गुणैः सत्त्वप्रभृतिभिरुपरञ्जितं सत्सगुणमिव भासते, निर्गच्छत्सु च तेषु तन्निर्गुणमेवाऽवतिष्ठते। अनया चोपमया नैकप्रकारानुपाधीन् अनुप्रविष्ट ईश्वर उपाधिसमवधानेऽपि तदीयैर्धर्मैर्न लिप्यत इति ध्वन्यते। एवम्—

**हृदयस्थमनासन्नमकामं त्वां तपस्विनम्।**
**दयालुमनघस्पृष्टं पुराणमजरं विदुः॥**

# कवि-भारती-परिषदः तृतीयमधिवेशनम्

वाराणसी । विगत-मार्चमासीये एकत्रिंशद्-दिनाङ्के श्रीदक्षिणामूर्ति - संस्कृत - महाविद्यालय-भवने कविभारती - परिषदः तृतीयमधिवेशनं महता समारोहेण सम्पन्नम् । अधिवेशनस्य सभापतिपदं विहारप्रदेशे सुख्यातविचक्षणैः, पद्मश्री विष्णुकान्त झा महाभागैरलङ्कृतमासीत् । नैकैः कविवरैः स्वीयाः सरसाः भावानुषक्ताः, ललिता अपि गभीरार्थाः कविताः श्राविताः ।

परिषदो मन्त्रिवरैः श्री लीलाधर पन्त, एम० ए० साहित्याचार्यैः कादम्बरीकल्पं वार्षिकं विवरणं पठितम् । [ स्थानाभावेन तदक्षरशोऽत्र दातुमसमर्था वयं स्पष्टमनुभवामो यत्साधारणमपि रसानुषङ्गि वृत्तं नाम कविलेखनीसङ्गमेन कियत् सहृदयहृदयाह्लादकरं भवतीति । तदर्थं लेखकाः पन्तमहोदया नूनमभिनन्दनीयाः !—सम्पादकः ] तैरस्मिन् कार्यविवरणे उक्तं यद् कविभारती-परिषदियं द्वाविंशत्युत्तरद्विसहस्रमिते वैक्रमाद्वे जनिमभजत । तस्मिन् वत्सरे चित्रकवयः श्री रामरूप पाठक महोदयाः अस्या आध्यक्ष्यमलङ्कुर्वन् । श्रीवाणीपरिवस्याविधो अनिर्वेदाः शिवदत्त

---

इति पद्ये विमृश्यमाने यथा हि वेदान्तानि विरुद्धवदवभासैरपि वचननिचयैः **पश्यत्यचक्षुः स शृणोत्यकर्णः** इत्यादिभिः परब्रह्मणः स्वरूपमवबोधयन्ति, तथाऽयमपि अद्वैताभिमत-तत्त्वप्रतिपादने तामेव सरणिं यथायथमनुसरन् स्वस्य निगमान्तवचस्सु अपरिमितां श्रद्धामाविष्करोतीति विज्ञायते ।

एवमयं कविसम्राट् सरससरलैः पद्यैः काव्यानि विरचयन् तत्र च वेदवेदान्तधर्ममीमांसाद्यभ्यासैकसमधिगम्यं गहनतरविचारसम्प्रधारणीयमलौकिकमौपनिषदं तत्त्वं साध्वीं चिरन्तनीं संस्कृतिम्, अनेका नीतीः, भूयसः श्रौतांश्च पदार्थानुपदिशन् स्वस्य ऋषिकल्पत्वं प्रतिपादयत्यहो कौशलं कालिदासस्य !

अत एव बोधपरेभ्योऽपि ग्रन्थेभ्यः काव्यस्याधिक्यं कान्तासम्मिततयोपदेशयुजे इत्यादिना वर्णयन्ति मम्मटभट्टाः ।

कवितल्लजोऽयं स्वतन्त्रोऽपि कदाचिद् रसवशो भूत्वा विचित्रेण प्रकारेण विविच्य विषयान् सुलभमाकर्षति शासनीयान् । यथा हि मालिको मनोहरैरेव सुमनोभिर्बन्धानुबन्धसरणिमाहृत्य विचित्रां मालां ग्रथ्नाति, तथैवायं मनोहरैः पदैः गरीयसीं कवितां सम्पादयति, अलङ्करोति च तया रसिकानां कण्ठतलं मनांसि च । किञ्चायं साकल्येन आलङ्कारिकमर्यादां परिपालयन् सतीञ्च कामपि शिक्षापद्धतिमौपनिषदञ्च तत्त्वमुपदिशन् दिगन्तविश्रान्तयशा अधुनाप्यस्माकं हृदयसरोजेषु मधुकर इव गुञ्जारवं कुर्वाणो वर्तत इत्यहो धन्या वयम् । तस्येयं कविता शरदिव सरोहृदयं विमलं कुर्वाणा सम्प्रति रसिकशिरोमणिभिः सानन्दमाद्रियते, एनामेव कवितां कलां चन्द्रकलामिवा आस्वाद्यास्वाद्य रसिकानां चेतःकुवलयमुत्फुल्लं सगन्धञ्च भवति । महाकविरयं स्वैरं कविताविपण्यां व्यवहारमाचरन् ग्राहकाणां शासनीयानाञ्च चञ्चलं मनः स्वकरे कृत्वा अक्षयमक्षयं बोधरूपं तेभ्यः प्रदाय इदानीमप्यस्माकं मार्गप्रदर्शको वर्तत इत्यभिधाय विरमामि ।

चतुर्वेद महाभागाश्च मन्त्रिणोऽभवन्। द्वितीयवत्सरे कविताकान्तान्तःप्रसादने सर्वथाऽसममर्मज्ञाः श्रीवटुकनाथशास्त्रि खिस्ते महाभागा अस्याः साभापत्यमकुर्वन्, कविकुलकुमुदकौमुदीनाथाः श्री रतिनाथ झा महोदयाश्च मन्त्रिपदमभूषयन्। ऐषमोऽपि कविताकामिनी कपोल - लोल - कर्णावतंसाः डॉक्टर प्रियव्रत महाभागा वार्षिकं सदसस्पतित्वमस्याः सभाजितवन्तः। अपरिहार्यमार्यवचः सर्वथाऽविचार्य शिरसा स्वीकार्यमिति मन्त्रिकार्यञ्च एष जनो निर्वहति।

कविभारत्या प्रथमवार्षिकोत्सवस्य आध्यक्ष्यं स्वर्गीयैः डॉ० उमेश मिश्र महाभागैः कृतम्। द्वितीयवार्षिकाधिवेशनस्य अध्यक्षतायै डॉ० चन्द्रधरशर्माणो मनोनीता आसन्। परमकस्मात् स्वास्थ्यवैमुख्येन ते यथासमयमुपस्थातुं नाशक्नुवन् इति डॉ० प्रियव्रतशर्मभिरेव तत्कार्यं निर्व्यूढम्।

प्रस्तुतमालोच्यरचनाकौशलं तदुज्जृम्भणाय सञ्चालिता कविभारती कानिचिद् उद्देश्यानि पुरस्कृतवती। यथा—१. संस्कृते नूतनकाव्यरचनाप्रोत्साहनम्, तदर्थं व्युत्पित्सूनां कवयतां व्युत्पन्नकविभिर्मार्ग-निर्देशनम्, समये नवनवानां समस्यानामापूरणम्, स्वतन्त्ररूपेण रचनाविधावपि समीप्सित - सहयोगप्रदानञ्च। २. नवविरचितकाव्यानां समास्वादनार्थं प्रतिमासञ्च कविगोष्ठ्या आयोजनम्। तत्रैव चागामिन्यां गोष्ठ्यां पूर्तिसापेक्ष - समस्यानामुपन्यासः। ३. वर्षान्ते चैकं विशिष्टं वार्षिकमायोजनम्। सति सम्भवेऽन्यत्रापि कविगोष्ठीनां प्रवर्तनम्। ४. वर्षाभ्यन्तरपठितानां काव्यानां वर्षान्ते पुस्तिकाकारेण यथाशक्ति प्रकाशनम्। ५. राष्ट्रियेषु विशेषावसरेषु तथा विशिष्टतिथीनां च शुभागमनेषु कविभारत्या विशेषोपवेशनस्यायोजनम्।

अस्मिन् वत्सरेऽपि तेषु तेषु स्थानेषु कविभारत्या मासिकान्यायोजनान्यभवन्। मईमासस्य प्रथमे रविवासरे तथा अगस्त-अक्तूबर-नवम्बर-मासानां प्रथमेषु रविवासरेषु च कविभारत्याः स्थायिकार्यालय - स्थाने श्री रणवीर - विद्यालयच्छात्रावास-भवने कविगोष्ठ्यः समायोजिताः। पश्चात् नवम्बरस्यैव सप्तदशतारिकायां 'खोजवाँ' स्थे आदर्श - पुस्तकालये कविगोष्ठी आयोजिताऽऽसीत्। तदनु दिसम्बरस्य प्रथमरविवासरे तथा च जनवरीमासस्यापि प्रथमादिने कार्यालयकक्षे, तृतीये रविदिने श्री रणवीर-संस्कृत-विद्यालयस्य वार्षिक - समारोहावसरे 'कमच्छा'-स्थाने चायोजनान्यभवन्। मार्चस्य तृतीये सूर्यवासरे पुनः श्रीकेदारनाथमिश्राणामावासे कविगोष्ठी जाता। इत्थमैषम संहत्य नववारं कविभारत्या उपवेशनमभवत्। वसुन्धरा, वदन्तु धीराः, प्रणामाञ्जलिः, कादम्बिनी, कथेयम्, वसन्तः, एवमादिकाः समस्याः कविभिः समाहितास्तथा स्वतन्त्रतया विविधविषयेषु रचितानां कवितानां पाठञ्च समये समये तत्तद्गोष्ठीषु कवयोऽकुर्वन्।

सैषाऽत्यल्पीयसाऽपि कालेन मृद्नन्ती विघ्नकण्टकान्, निरस्यन्ती नैराश्यतमोनिवहान् असंख्यसंख्यावतां सहयोगसौहार्दालवालवलयिताऽऽनन्दोपवने समुत्पाद्य समारोपिता जङ्गमा सेयं कविभारती लता पल्लविता पुष्पिता फलिता सती लोकवलयं रञ्जयन्ती स्वसौभाग्यचन्द्रोदयदर्शनप्रमोदमधिगच्छत्वित्येव दृढमाशास्महे—

अद्य स्वजन्मदिवसावसरे समोदा साऽऽशीर्वचांसि भवतामभिकामयाना।
बाला त्रिहायनमिता विनतेन मूर्ध्ना सर्वान् मुदा प्रणमते कविभारती वः॥

# सूर्योदयस्य नियमाः

**पत्र-संहिता**

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापन-शुल्कम्**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६० ) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्त्रम्

वर्षम् ४८

❀

अङ्कः ७

❀

सम्पादकः
गो० न० वैजापुरकरः

❀

जुलाई
१९७२

❀

वार्षिक-मूल्यम्
५) रूप्यकाणि

❀

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्

❀

## प्रभात-वेला !

●

आगच्छतु सा प्रभात-वेला !
भवतु सकल-सुखमूला यस्याम्, उषसो मङ्गल-खेला ॥ १ ॥

वातु शीतलो मलयसमीरो नीत्वा कुसुम-सुवासम् ।
काननेषु नृत्यन्तु मञ्जुला वल्लर्यः सविलासम् ॥ २ ॥

लुप्यतु निखिल-विरोधभावना प्रवहतु दया-प्रवाहः ।
ज्ञानारुण उदयतु महीतले यातु वृद्धिमुत्साहः ॥ ३ ॥

मोह-तिमिर-निद्राऽऽलस्यानाम्, अचिरं नश्यतु सत्ता ।
तेजोमयी जयतु कल्याणी कर्मरता मानवता ॥ ४ ॥

प्रसरतु समताया आलोको विलसतु सौख्य-समूहः ।
जने जने विकसतु बन्धुत्वं कणे कणे सुस्नेहः ॥ ५ ॥

—कविवरः डॉ० शिवशरण शर्माणः

# गुरु-पूर्णिमा-महोत्सवः

वाराणसी । महामण्डलस्य श्रीगायत्रीमन्दिरे २६ जुलाई दिनाङ्के पूज्यपादानां महर्षिवर्याणां श्री ज्ञानानन्द स्वामिपादानां सद्गुरूणां समाराधनात्मको गुरुपूर्णिमा-महोत्सवो महता समारोहेण सम्पन्नोऽभवत् । तेषां तैलचित्रस्य प्रतिमायाश्च प्रातः विधिवत् षोडशोपचारपूजनमभूत् । सायं श्री कविराज व्रजमोहन दीक्षित पादानामाध्यक्षे श्रद्धाञ्जलि-समाऽभवत् यत्र नैकैर्विद्वद्भिः गुरुतत्त्वं वर्णितम् । पूज्यश्री विद्यादेवी महोदयाभिश्च सद्गुरुचरणयोः श्रद्धाञ्जलिः समर्पितः ।

## अ नु क्र मः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
स्त्रज्ञातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

४८ वर्ष ] वाराणसी, आषाढः २०२९ वै० : जुलाई १९७२ ई० [ ७ अङ्कः

## श्री व्यासाष्टकम्

अस्माज्जनोध्दृतिकृते भवसागराद्यः, श्रीभारताख्यतरणिं रचयाम्बभूव।
व्यासाय शस्तमतये करुणाऽऽलयाय, तस्मै नमो भगवते मुनितल्लजाय॥ १॥
यच्चित्तबोध-सुसुधाजलधौ प्रमोदाद् वाग्देवता सलिलकेलिमियं विधत्ते।
तस्मै नमोऽखिलजगज्जनवल्लभाय, द्वैपायनाय भव-दाव-घनाघनाय॥ २॥
यत्पादरेणुकणिकाभिरपि क्षणेन, सोऽयं भवाब्धिरपि संश्रयते विशोषम्।
श्रीमत्पराशर-सुताय नमोऽस्तु तस्मै, व्यासाय सेव्यचरणाय सुधाशनानाम्॥ ३॥
यत्पादयुग्म - नखरांशु - विशुद्धकायः, को भुक्ति - मुक्तियुगलं लभते न मर्त्यः।
कृष्णाय धीरधिषणाय गुणाऽऽकराय, तस्मै नमः सकलसाधु - मनःस्थिताय॥ ४॥
यद् भारताऽमृतनिपानपरा धरायां, नैवाऽमृताशनजुषां स्पृहयन्ति धाम्ने।
तस्मै विमुक्ति - ललना - परिलोभिबोध-दात्रे पराशरसुताय मुहुर्नमोऽस्तु॥ ५॥
देवी गिरां वदनवारिरुहं यदीय - माधाय संश्रितवती रसनास्वरूपम्।
तस्मै नमो जलदकान्तिजुषे मुरारिरूपाय पौरुषतनू - मतनुं श्रिताय॥ ६॥
योऽयं धिया विरहितानवधार्य लोकानेकं विभज्य निगमं कृतवान् चतुर्धा।
तस्मै प्रबोधनिधये मुनयेऽस्तु वेदव्यासाय दाशतनयाजनुषे नमो मे॥ ७॥
यद्-भारती सुरधुनीव जगत्त्रयस्य, सभ्यावनी प्रवहति प्रसभं क्षमायाम्।
सोऽत्यप्रमेयमहिमाऽथ हिमालयाभः, श्रीवासवीजठरजो जयतात् सदैव॥ ८॥

— श्री वनमालीशास्त्री चतुर्वेदः, माथुरः —

# श्रीमहर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

## —स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

### ( अष्टादशो सर्ग )

७१. काशीरामः स्मार्तविद्वद्धुरीणो भट्टाचार्यो वङ्गदेश - प्रसिद्धः ।
अब्धिं गत्वा पापिनां दुष्कृतीनां प्राणत्यागं ह्यब्धियानेन मेने ॥
७२. भृगोर्निपाताच्च तुषानलादिषु प्रवेशतो हैमगिरौ गमादपि ।
समुद्रयानादथवाऽन्यतो विधेः शरीरपातोऽत्र कलौ निषिद्ध्यते ॥
७३. प्रायश्चित्तं सर्वमेतादृशं वै कश्चिद् विद्वान् नाचरेद् दोषमिच्छन् ।
सर्वैः कालज्ञैः कलेरादिकाले विद्वद्धुर्यैरब्धियात्रा निरुद्धा ॥
७४. अध्यात्मविद्यानिरता विपश्चितो महीसुरा यान्तु न केऽपि भारतात् ।
पयोधिकारं य इहाऽऽत्मतत्त्वकं बुभुत्सवस्ते भुवमाश्रयन्त्विमाम् ॥
७५. अध्येतुकामा किल शिष्यमण्डली पुरा गुरूणां सुधियां गृहाण्यगात् ।
गुरुः प्रयाति स्म न शिष्यमन्दिरं यतश्च तद्गौरवरक्षणं भवेत् ॥
७६. इति स्म मत्त्वाऽऽर्यभुवो बहिर्गमा निवारिताः सन्ति सदग्रजन्मनाम् ।
वदन्ति केचित् प्रथमे विपश्चितां तपस्विनो वैदिकबोधवित्तमाः ॥
७७. मनुर्महर्षि - र्ह्यनुशास्ति स स्वयं धरातले ये मनुजा वसन्ति ते ।
उत्पद्यमानाद् भरतस्य भूतले चरित्रशिक्षामधियन्तु भूसुरात् ॥
७८. अतः परात्मज्ञ-सुभूसुरोत्तमः समुज्झ्य नैजं परिपूतभारतम् ।
समुद्रपारं नहि गन्तुमहता दिदं समाज्ञायि विपश्चिदीश्वरैः ॥
७९. यदस्तु सत्यं नहि कश्चिदाग्रहो, मदीय आस्ते विषयेऽत्र धीधनाः ।
भवद्भिरालोच्यमितीहया मया निवेदितं सम्प्रति तद् भवत्पुरः ॥
८०. समुन्नतिं जीवततेः करोति यत् कर्मैव धर्मो भुवि मन्यते बुधैः ।
तज्जैवमैशं सहजं त्रिधा मतं महर्षिभिस्तैः श्रुतितत्त्वदर्शिभिः ॥

( क्रमशः )

सम्पादकीयम्

# शिमला-सन्धि-विषये किञ्चित् !

यथा यथा सकलभौतिकाभिक्रमकेन्द्रं विज्ञानमुत्तरोत्तरं वर्धत् जगतोऽस्तित्वं शान्तिञ्च जलबुद्बुदायमानां विदधद् दरीदृश्यते, तथैव शान्तिसहास्तित्व-वाञ्छाऽपि विस्मयावहां स्वीयां व्याप्तिं वितन्वती विश्वशान्तिकामुकेषु कमपि आशाबिन्दु जनयितुं प्रवर्तत इति महानयो वक्तुं शक्यते। विश्वस्य स्पर्धमानं सर्वोच्चराष्ट्र-शक्तिद्वयमपि अमेरिका-रूसाख्यं सर्वसामान्य - विश्वशान्तिस्थापनाय सन्धिकरणाय प्रवृत्तं सत् संयुक्तविज्ञप्तिद्वारा जगति तादृशः स्वीय आशयः समुद्घोषयतीति मानवेन दृष्टं श्रुतञ्च। तद्धि अस्यैव शुभारम्भस्य निदर्शनम् । ततः परं चिरात् परस्परसङ्घर्षरतमपि अमेरिका - नवचीनराष्ट्रयुगलम् एतादृशसन्धिकरणाय प्रवृत्तमिति वैश्विकराष्ट्रजनानामक्षणोर्विषयीभूतम् । सर्वथा अन्याय्यं विपुलनिरागसजनक्षयं कुर्वता, अन्ते च पराजितेन पाकिस्तानराष्ट्रेण सह न्याय्यपक्षपातिनो विजेतुर्भारतराष्ट्रस्य शिमला - सन्धिरपि प्रकृति - प्रवाहितस्यास्य शुभावह-प्रवाहस्य अन्यतरा धारा वक्तुं शक्या। अतः 'स्वयं सुखेन जीव, परञ्च तथा जीवितुं संभावये'ति साधुभावनाप्रेरितं समुपक्रममम्मुं को नाम विवेकशीलस्तटस्थो मानवो विरोद्धुं प्रवर्तेत ? तत्रापि सम्पूर्णलोकशक्तिकेन्द्रं किमपि राष्ट्रं तमुपक्रमं सामादिनीतिचतुष्टयेन कार्यरूपतां परिणमयितुं यदा प्रवर्तेत, तदा तस्य व्यापकसमर्थनविषये किमु वक्तव्यं भवेत् ? अत एव अचिरात्सम्पन्नस्य शिमला-सन्धेः देशे विदेशे च व्यापकं समर्थनं दृश्यते चेन्न तत्र कापि विस्मयावहा स्थितिः। वयमपि दृशाऽनया अमुं सन्धिं समर्थयितुं जातुचित् कञ्चन सङ्कोचं नानुभवामः।

सत्यमेतद् यद् युद्धं किल लोकव्यवहारस्य विनाशपदम्। तेन हि कस्यापि प्रश्नस्य शाश्वतिकं समाधानं न जायते। यदा मानवः सर्वविधप्रयत्नजातेन निराशो भवति, तदैव विवशतः स प्रश्नस्य तस्य निर्णयाय अन्तिमोपायं युद्धं वृणुते। युद्धजन्यकुलक्षयादिकृतानां दोषाणां भीषणं चित्रं पार्थेन गीतायामादित एव चित्रितम्। अतो भारतराष्ट्रं स्वप्नेऽपि कैश्चित्, तत्रापि स्वीयबन्धुभिः पाकवासिभिस्तु सार्धं कथमपि युद्धं न कामयते। वस्तुतः अखण्डभारतावनौ सम्भूतानां तेषामखण्डे राष्ट्रे सुखेन अवस्थानं पराविरोधिना समुदार - स्वीयाचार - पालनेन स्वस्थं सर्वविधोन्नयनं नातीते केनापि मतिमता भारतराष्ट्रभक्तेन वारितम्, नाप्यद्य वार्यते, न च भविष्यति वारयिष्यते। अद्यापि भारताभिजनाः कोटिशो मुहम्मदीयाः सुखेनात्र उषन्ति, राष्ट्रस्य प्रथमनागरिकसदृशमपि सर्वोच्चपदं बिभ्रति। किन्तु कूटनीतिज्ञानामाङ्ग्लानां दुरभिसन्धिवशीभूतैः स्वकीयास्मिताभिनिवेश - स्वार्थादिसाधनलोलुपैः मुष्टिमेयैर्नेतृभिस्तेषां वैदेशिकानां सङ्केतेन भीषणतममातङ्कं समुत्पाद्य प्रसार्य च, स्वसम्प्रदायीयजनमनस्सु बुद्धिभेदं जनयित्वा सर्वाङ्गपरिपूर्णम्, अत एव सर्वथा आत्मनिर्भरं चिरन्तनविश्वसंस्कृतिसमुपासकं 'शुनि चैव श्वपाके विद्याविनयसम्पन्ने ब्राह्मणे च समवस्थितमात्मानं समं पश्यन्तं' भारतराष्ट्रं निर्ममतया विभाजितम्। भारतराष्ट्रनेतृभिरपि धर्मसम्प्रदायानुसारि राष्ट्रविभाजनमेतत् शाश्वत-शान्तिकामनया विवशतः समनुमोदितम्। किन्तु क्षुधाशान्तये लशुनभक्षणन्यायेनेव विभाजनमेतत् समस्यासमाधाने विफलं सद् उत्तरोत्तरमहरहो

नूत्नाः समस्या एव जनयति। विभाजनोत्तरं वारत्रयं सोऽस्माकं प्रतिवेशी भ्राता युद्धाय प्रावर्तत, भीषणं जन - धननाशञ्चाकरोत्। अस्माकं विभक्तराष्ट्रस्य शिरोमुकुटं काश्मीरदेशं लुण्ठितुं प्रावर्तत। तदीयो भूयान् भागश्च 'आजाद काश्मीर'-नाम्ना शस्त्रबलेन स्वायत्तीचकार। 'कच्छ-रन'स्यापि कियान् भागोऽस्माकं गृहीतः। अचिरादेव सम्पन्ने पाक-बांगला-देश-भारत - सङ्घर्षेऽपि भूयान् भागस्तेनाधिकृतः। न केवलं तेनास्माकं भागे बलाद् अधिकारः कृतः, प्रत्युत अस्माकं शत्रवे नवचीन-राष्ट्राय ततः सामरिकमहत्त्वपूर्णं भूभागमपि प्रदाय अस्माकमुपरि नव्यं सङ्कटं प्रसारितवान्। 'लियाकतअली - सन्धि' - 'ताशकन्द-सन्ध्यादयो नैके सन्धयोऽद्यावधि तेन कृताः, परं कदापि यथार्थतस्तेषां परिपालनं न कृतम्। कतिपयैरेव अहोभिस्तेषां सन्धीनामुल्लङ्घनं तेन कृतं क्रियते च। नैकैः कुचक्रैरहरहो भारताभिजनानां मुहम्मदीयानामपि अद्यापि बुद्धिभेदस्तेन समातन्यते। समासतो भारतेन सह घोरतमं द्वेषभावं प्रसार्य पाक-राष्ट्रेण स्वीयमेतद् रूपं समासादितम्। ततः परमपि सर्वविधो द्वेष एव भारतस्य कृते पाकिस्तानस्य दाय इति हि वस्तुस्थितिः।

एतादृशे सन्दर्भे यदा नेतृत्वकामुकैः कतिपयैः पाक-कर्णधारैः सम्प्रदायाधारेण देशं विभज्यापि विभक्ते तस्मिन् देशे स्वीयसम्प्रदायान्तर्गतानामेव दूरवर्तिनां बान्धवानां मानवता - परिपन्थि शोषणं प्रारब्धम्, तदा साम्प्रतिक - लोकतन्त्रधाराभिभूतास्ते शोषिताः परस्परं संयुज्य विभक्तमपि तद्राष्ट्रं भाषाधारेण पुनर्विभाजयितुं प्रावर्तन्त। तदर्थञ्च आत्मोत्सर्गायापि कटिबद्धास्ते समभूवन्। नेतृत्वलोलुपाः स्वार्थसाधका मुष्टिमेयाश्च पाकाधिनायकास्तेषां यादृशं दानवता-त्रपाकरं संहननमकुर्वन्, सैव 'बांगला-देशस्य' प्रसूतिव्यथा-कथा सर्वेषां सुप्रथितैव। स्वभावतो दयालुना भारतराष्ट्रेण यदा तेषामेतदुत्पीडनं सीमातिगं विलोकितम्, स्वयमपि राष्ट्रमेतत्स्वीयया तत्कृतोत्पीडनप्रभूतया असीम-शरणार्थिसमस्यया समाक्रान्तम्, तदाऽनेन शस्त्राणि पाणौ समारोप्य बांगला - देशाभिजनैः सह कुकृत्यस्यास्य सफलः प्रतीकारः कृतः। इदमेव पाकभारत-वङ्गयुद्धम्। अपेक्षित-परप्रतीकारमात्रप्रयोजनकं तद्युद्धं यदा स्वलक्ष्यसिद्धौ पदं न्यधात्, तदा भारतराष्ट्रेण सपद्येव एकपक्षीयं युद्धविरामघोषणं कृत्वा तन्निरोधितमपि। अयमपि तस्य महानुभाव उदारता च। पाकराष्ट्रमपि सुबुद्धिलेशसंवलितं तदनुमत्य वृथा नररक्त - प्रवहणमवरुरोधेति भगवत एव निरुपाधिकी कृपा। तस्मिन्नेवावसरे युद्धे पाकराष्ट्रेण यावान् भूभागो भारतस्याधिकृतः, ततो भूयान् भागः पाकदेशीयो भारतराष्ट्राधीनः समभवत्।

तदनन्तरमुभयोर्देशयोः सौमनस्याय महान् प्रयासः समभवत्। अस्यैव प्रयासस्य एकं फलं 'शिमला-सन्धिवार्ता'। प्रायः सर्वत्र विजित एव विजेत्रा सन्धातुं समुत्सुको भवति, प्रयतते च। परं भारतराष्ट्रेण विजयिनैव विजितेन सह सन्धानाय महानौत्सुक्यं प्रकटीकृतम्। महतोऽन्तरायान् समतीत्य तेन वार्ताया अस्या आयोजनं साफल्येन कृतम्। तत्रापि प्रथमतो बहून्यन्तरायाणि समापतितानि, वार्ताभङ्गस्याशङ्का पदे पदे पदं कृतवती। किन्तु पर्यन्ते अकस्मात् किञ्चिदिन्द्रजालं तां सफलीचकार प्रधानमन्त्रि इन्दिरागान्धि - पाकराष्ट्रपति भुट्टो - राष्ट्रनायकयोः संक्षिप्तवार्तामुखेन। सन्धिवार्तायामस्यां मुख्यत 'उभयराष्ट्रयोः सर्वे प्रश्नाः उभाभ्यामेव राष्ट्राभ्यां वार्ताक्रमेणैव समाधेयाः, न जातु तत्र शस्त्रबलं तृतीयार्वा शक्तिमाध्यस्थाय प्रसरेत्' इत्यस्मिन् तत्त्वे उभय-राष्ट्रनायकयोः संयुक्तमुद्घोषण मभवत्। कोऽपि विवेकी मतिमान् इमामुपलब्धिं निर्विचिकित्सं साधीयसीं वक्तुं प्रभवेत्। किन्तु तेनैव सह परस्परेण अचिरान्निर्वर्तिते युद्धे अधिकृतयोः पर-

स्वरस्य भू-भागयोः परस्पर-प्रत्यावर्तनमपि सन्धिवार्तायामस्यां भारतराष्ट्र-प्रधानमन्त्रिणा समनुमतमिदमेवास्ति महतो विवादस्य पदम्। कामं विषयमेतं गृहीत्वा कान्यपि शासनविरोधिदलानि कथमपि विरोधं समाचरन्तु। तटस्थानां तत्र न कोऽप्यभिनिवेशः, नापि च ते तेषामुद्घोषान् (नारे) आदाय विषयममुं दलगत-राजनीतिपङ्के निमज्जयितुं वाञ्छन्ति। सर्वथा तीव्रतरोऽयं राष्ट्रिय एव विषयः परिशुद्धया राजनीत्यैव विवेचनीयः। भारतीय-राजनीतौ पुनः साम-दान-भेद-दण्डानां तत्र तत्र प्रसङ्गे सममेव माहात्म्यमित्यपि विवेचनेऽस्मिन् न विस्मरणीयम्।

आलोकेऽस्मिन् विचार्यमाणे पाश्चात्यकूटनीतिज्ञा एवास्माकं तत्त्वतः परिपन्थिनः। तैरेव चिरात् कामधेनुरिदं राष्ट्रं निर्ममं दुग्धम्। यदा च उद्बुद्धजनमतेन तथा दोग्धुं न प्राभवन्, तदा स्वर्णभूमेरस्याः शकलानि विधाय प्रत्येकशो भारतीयाय राष्ट्रमिदं विभाजितम्। मुहम्मदीय-नेतृवर्गेभ्यः शकलद्वयम्, स्वातन्त्र्यसमरनेतृभ्यो महत्तरमेकं शकलम्, देशीराजेभ्यश्च नैकानि स्वल्पतमानि शकलानि प्रदत्तानि। 'विभज्य शासन'-रूपायास्तेषा नीतेश्चरमः परिपाकोऽयम्। सौभाग्यात् सरदार पटेल सदृशो राष्ट्रभक्तो लौहपुरुषस्तदा स्वातन्त्र्यसमरनेतॄणां मध्ये विद्यमान आसीत्। तेन महात्मना देशीयराज्याध्यक्षास्तथा प्रबोधिताः यथा तेषां प्रसुप्ता राष्ट्रभक्तिः सर्वतः स्फूर्तिमाससाद। तस्यैव प्रभावेण सर्वाणि देशीयराज्यानि भारतसङ्घराज्य-सागरं स्वात्मदायदानेन समुल्लासयामासुः। तैः किल विषयेऽत्र स्वीयराज्यीय-प्रजाजनानां पूर्णः समादरः कृतः। अत्रान्तरे नवोदित-पाकराष्ट्रेण बलप्रयोगेण भारतभूमेर्मुकुटायमाणं काश्मीरदेशमधिकर्तुं प्रयतितम्। काश्मीरराज्याधिपतिना प्रजाजनमतमादृत्य भारतराष्ट्रसागरे स्वात्मानमपि विलाप्य प्रदेशस्यास्य रक्षणस्य भारस्तस्मै समर्पितः। एवञ्च सर्वथा वैधानिकदृष्ट्या काश्मीरप्रदेशे भारत-सङ्घराज्यस्यैव स्वामित्वम्। पाकराष्ट्रेण बलात्तदीयः कियान् भागोऽपहृतः। तदर्थं भारतेन युद्धमपि समाचरितम्। पाश्चात्यानां माध्यस्थ्यमोहाक्रान्तैरस्मन्नेतृभिः सर्वथा विजयावसरेऽकस्माद् युद्धविरामः कारितः। नैतावदेव, समस्याया अस्याः समाधानं 'संयुक्त राष्ट्रसङ्घ'तः समाशंसितम्। किन्तु पाश्चात्यराजनयिकानां तेषां भारतराष्ट्रलाभमोहो मनागपि शान्तो नाभवत्। अत एव तैरद्यावधि पञ्चविंशतिवर्षपर्यन्तं प्रश्नोऽयं नैकैरन्तरायैः असमाहित एव प्रस्थापितः। कदाप्यावयोरैक्यं स्वप्नेऽपि साधयितुं तैः नाभिलषितम्। प्रत्युत तत्र विघ्नान्येव समापादितानि। एवंस्थितौ शिमला-वार्तया यदि आवयोः प्रश्नसमाहितौ तृतीयपक्षस्य माध्यस्थं निवार्यते चेत्, नासाधारणो उपलब्धिस्तस्या वक्तुं शक्या। शिमला-सन्धिमेव पुरस्कृत्य भारतं राष्ट्रसङ्घं वक्तुं शक्नुयाद् यत्त्वया अचिरादेव तथाकथित-युद्धविरामरेखातः स्वकीयाः पर्यवेक्षकाः प्रत्यावर्तनीयाः। राष्ट्रसङ्घे विचारणीय-प्रश्नावलीतः काश्मीरप्रश्नो व्यवकलनीय इति च।

यदि वस्तुतः पाकिस्तानराष्ट्रं तदीया राष्ट्रनायकाश्च तथ्यमिदं बुद्ध्येरन् यद् भारतराष्ट्रेण सह मैत्रीसम्बन्ध इतरेषां राष्ट्राणामपेक्षया स्वराष्ट्रस्य कृते नितरां लाभप्रदो भवेत्, तदा उभयो राष्ट्रयोः निसर्गदत्तमनन्यसाधारणं सर्वमपि वस्तुजातं तयोरुन्नयनपुरस्सरं विश्वस्य शान्त्यै अपि सुनियोजितं स्यात्। यतो हि भारतराष्ट्रस्य प्रत्यङ्गं भावोऽयं सततं परिस्फुरन्नास्ते यत्सर्वे किल मानवा अमृतस्य पुत्राः। अत एव सर्वेषां सहजं भ्रातृत्वम्। किन्तु तथ्यमिदं नावगतं जागतिकैर्भौतिकताप्राणैः महाराष्ट्रैः। भ्रातृव्येण पाकिस्तानराष्ट्रेणापि स्वातन्त्र्यं लब्ध्वाप्ययमाशयो नादृतः। अत एव भारतीयस्वातन्त्र्यस्य यावान्

लाभो भारताय विश्वस्मै च समपेक्षित आसीत् स तैर्न लब्धः। सौभाग्यात् दौर्भाग्याद्वा बांगला-देशीयघटनोत्तरं पाकिस्तानकर्णधाराणां विशेषतो राष्ट्रपतीनां श्री भुट्टो महोदयानां चेतसि भावोऽयं मनाक् स्फुरितः। तस्यैव लाभो भारतराष्ट्रेण गृह्यते चेन्नात्र किमपि विप्रतिपत्त्यास्पदं वस्तु।

किन्तु पाकराष्ट्र - शासकानां विगतमाचरणजातं नात्र सहजतो विश्वासं जनयति यत्तेषां हृदयं सर्वथा परिवर्तितमिति। भ्रातृव्येणानेन अतीते भारतराष्ट्रस्य यावदपकृतं तावत्तदीय - सहजवैरी अपि न कर्तुं पारयेत्। नैतादेव, अस्मिन्नपि प्रसङ्गे एकत्र पाकराष्ट्रपतिः शान्ति-सौमनस्य-सन्धीनां वार्ताः वदति अपरत्र च पाकराष्ट्र-संसदि भारतीय-काश्मीरप्रदेशमधिकृत्य भारतविरुद्धं शेख अब्दुला-फारूकादि तथाकथितनेतॄन् काश्मीरदेशे प्रस्थापितां शान्तिं भङ्क्तुं समुत्साहयति। वदति च—'स्वात्मनिर्णयाय काश्मीराभिजना यदि विग्रहमाचरिष्यन्ति तदा पाकराष्ट्रं तेभ्यः सर्वविधं साहाय्यं प्रदास्यती'ति। इतोऽप्यन्यदपि भारतराष्ट्र - विप्रतीपं तेन प्रसङ्गेऽस्मिन्नपि बहु प्रलपितम्। अपरत्र च भारतराष्ट्रहितपक्षीयमपि वदति। सोऽयं तस्य भाषणे सुस्पष्टो विराजते वदतो व्याघातः। स हि हृदयत इदमद्यापि स्वीकर्तुं न वाञ्छति, यत्काश्मीरप्रदेशः काश्मीरनरेशेण भारतराष्ट्राय सर्वथा समर्पितः। भारतराष्ट्रेण तत्र विगत - पञ्चविंशतिवर्षेभ्यः काश्मीराभिजनानां यावद्धितं कृतम्, तावत्तदीय-बहुसंख्यक-जात्यभिमान्यपि किमपि राष्ट्रं स्वप्नेऽपि कर्तुं न पारयेत्। प्रायस्तत्रस्थाः सर्वे विवेकिनो देशभक्ताः भारतराष्ट्रेण सहाङ्गभावमेव भूरिशो घोषितवन्तः। सत्येवं तत्र स्थितां सुस्थितिं भङ्क्त्वा आतङ्काय प्रेरयता राष्ट्रेण राष्ट्रनायकेन सहवा कथं सन्धिचर्चा साधीयसीति सामान्यबुद्धिरपि मानवोऽवगन्तुं शक्नोति। एवंस्थितौ भारतीयविरोधिदलैर्यदस्य सन्धेरुग्रो विरोधः समाचर्यते, न खलु सोऽस्थाने वक्तुं शक्यते।

सत्यमेतत्, भारतीय - लोकसमायां भारतराष्ट्रप्रधानमन्त्रिणा श्री इन्दिरा गान्धि महाभागया स्पष्टमुद्घोषितं यद्वयं सद्भावनया सन्धिममुं कुर्मः, न च भयेन, कदापि पराजयकल्पनया वा। यदि पाकराष्ट्रमस्य यथार्थतः पालनं न कुर्यात्, अस्माकमुपरि आक्रमणाय प्रवर्तेत, तदाऽस्मद्राष्ट्रं तस्य सगौरवं सफलं प्रत्युत्तरं दातुं सर्वथा सन्नद्धमास्ते' इति। किन्तु विषस्य परीक्षणं तदपि भूयोभूयः केनाप्याकस्मिकेनानवधानेन कदाचन स्वात्मघातकमपि भवतीति नियमः।

अन्यच्च, युद्धे सर्वस्वं समर्पयद्भिः सैनिकैर्या गौरवावहा समुपलब्धिः कृता, तस्याः क्रयणमेतादृशकालनिकाशाभावेन करणं तेषां सैनिकानां मनोबलं ह्रासयति। नूनं भारतराष्ट्रं कस्यापि देशस्य न्याय्यं भूभागं स्वप्नेऽप्यधिकर्तुं न वाञ्छति। परमिदमपि वाञ्छति यदस्माकमपि न्याय्यो भागः केनापि चिरादधिकृतश्चेत्, समुचिते तद्ग्रहणप्रसङ्गे भावनाभिभवसमालिङ्गनं कदापि न भाव्यम्। यदि नाम सन्धिवार्तायां तस्यां काश्मीरप्रश्नस्य अशेषतो निर्णयो भवति यद् "इतः परं पाकराष्ट्रं तद्देशविषये कीदृशमपि हस्तक्षेपं न करिष्यति, अन्यायतो गृहीतमस्मदीयभागम् 'आजाद' काश्मीरा'भिधं प्रत्यावर्तयति, तदाऽस्माभिरपि युद्धेन पौरुषेण समर्पितस्तदीयो भागः प्रत्यावर्तयिष्यते" इति निर्णयः प्रधानमन्त्रिणां कृते करणीय आसीत्। सोऽयं निर्णयः कथमपि अन्याय्यः केनापि वक्तुं न शक्यते। प्रधानमन्त्रिभिरेतदकृत्वा यत्कृतं तन्नूनं भूयो विषपरीक्षणमेव। भगवानेव हालाहलेनानेन प्रधानमन्त्रिणं नीलकण्ठं विधाय राष्ट्रञ्च सर्वतः पात्वित्येव वयं भगवन्तं प्रार्थयामः।

प्रधानमन्त्रिणा प्रसङ्गेऽस्मिन् यादृशमात्मनोऽचिन्तायकत्वं प्रदर्शितम्, यच्च वार्तापूर्वं विरोधिपक्षीयैः

# श्रीगुरोः पादयोरेष भक्ति-पुष्पाञ्जलिः

## — पूज्याः श्री विद्यादेवी महाभागाः —

**[ श्री भारतधर्म-महामण्डल-सञ्चालिकाः ]**

जगति साधारणतमोऽपि विषयः शिक्षणमन्तरा न ज्ञायते चेत् सूक्ष्मातिसूक्ष्ममतीन्द्रियञ्च तत्त्वं कथङ्कारं स्वतो ज्ञायेत ? नूनं तदवगन्तुं ब्राह्मीस्थिति-परिनिष्ठितो गुरुरेव समपेक्ष्यः। सद्गुरोरस्य प्राप्तये मानवे यथार्थतो जिज्ञासुत्वं शिष्यत्वभावश्च नितान्त-मावश्यकः। अत एव भारतीयसंस्कृतौ अनादिकालतो गुरु-शिष्यपरम्परा प्रसृता, याऽद्यापि सगौरवं विद्योतते। शास्त्रेषु गुरोरलौकिकमहिमवर्णनं तत्र-तत्र विस्तरशो दृश्यते। तथा च स्मृतिः—

**गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।**
**गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः॥**

इति। नैतावदेव, अभियुक्तानामिदमपि वचोऽत्र विषये जागर्ति—

**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।** इति।

सत्यं गुरोः गौरवः सर्वानतिशेते। यतो हि स शिष्याय तत्सर्वोत्कृष्टं प्रयच्छति यल्लाभात् अनन्त-कालिकी सुखाशा आनन्दपिपासा च शाम्यति। तदा तस्य कृते किमपि प्राप्तव्यं नावशिष्यते। अत एव शास्त्रेषु गुरोर्लोकोत्तरो महिमा विजृम्भते। गुरु-शिष्ययोः लक्षण-स्वरूपं निगूढञ्च रहस्यं विशेषतो ज्ञातुं 'गुरुगीता'नामा ग्रन्थराजो विराजते योऽस्माकं भारतधर्ममहामण्डलतः प्रकाशितोऽस्ति।

---

सह परामर्शीकरणम्, संसदि निर्णयस्यास्य उपस्थाप-नात्पूर्वमेव राष्ट्रपतिद्वारा तस्य स्वीकृतिः एवमादि-रूपमास्ते, नहि तत्कस्यापि लोकतान्त्रिकदेशस्य प्रधान-मन्त्रिणे शोभते। कामं तैः साम्प्रतं स्वकीयं संख्याबलं साधितमास्ते। तेन च सर्वत्र तैः यथाथञ्चन स्वमनोनुकूलं सर्वेभ्यः कार्यते। किन्तु स्थितिरियं लोक-तन्त्रस्य कृते न हितावहा। कामं तथाकथितप्रक्रियया एते लोकप्रतिनिधिनः सन्तु, परं प्रत्यक्षं बहुसंख्यको लोकः शासनबहिःस्थितः कथमपि न वाञ्छति यद् यावत् पाक-राष्ट्रं भारतस्य बलादधिकृतं काश्मीरप्रदेशं न प्रत्यावर्त-यति तावद् भारतेन विजितो भूयान् तदीयो भागः प्रत्यावर्तनीय इति। राजनीत्यनुगृहीतमप्येदं मतम्।

अतोऽस्माभिः प्रधानमन्त्रिणो भूयोभूयः प्रार्थ्यन्ते यत्तैः निर्णयोत्तरमपि यावत् पाकराष्ट्रं स्वाधिकृतं भारत-राष्ट्रियं काश्मीरभागं न प्रत्यावर्तयति, तावत् तैः विजितस्य तदीयभागस्य प्रत्यावर्तनमपि न जातु कार्यम्। तस्मिन् विधौ केनापि कारणेन विलम्बः समा-श्रमणीयः। एवंसत्येव तैर्यदत्र प्रसङ्गे यद्यत् लोक-तान्त्रिक-प्रधानमन्त्रि-कर्तव्य विधेः प्रतीपमाचरितं तस्य शोधनं स्यात्। तेषां तदा तथाकरणमेकया दृष्ट्या-ऽनिवार्यमासीदित्यपि क्षणं स्वीकुर्मः। तथापि यदि काश्मीरभागप्रत्यावर्तनमन्तरा विजितो भागो दीयेत, दौर्भाग्यात् पुनस्तद्राष्ट्रं स्वीयप्राचीनदुर्भावसंवलितं सदस्माकमुपरि आक्रमेत, तदाऽस्माकं प्रधानमन्त्रिणो यस्याः सेनायाः बलमात्मनि गृहीत्वा वीरं वचो व्याहरन्ति, तेषां सैनिकानां सेनायाश्च नैतिकं बलं ह्रसितं स्यात्। ह्रसितबला सेना कथङ्कारं विपदं निवारयेत् ? को नाम तदा प्रधानमन्त्रिणामाधारः स्यात् ? अतोऽस्माभिः प्रधामनन्त्रिणः सप्रश्रयं प्रार्थ्यन्ते यद् भवद्भिर्यावत् काश्मीराधिकृतो भागः पाकेन न प्रत्यावर्त्यते, तावत् कथमपि भारतेन विजितभागं न दास्यामीति निर्णेयम्। भगवन्तं प्रधानमन्त्रिणमेतादृश-सद्बुद्धा योजयितुं प्रार्थनमन्तरा किमस्ति अस्माकं सविधे बलमिति तदेव हार्दिकेन भावेन वयमनु-तिष्ठाम इति। ●

प्राचीनकाले आर्याणां जीवनस्य चरमं लक्ष्यं परात्मनो भगवतः प्राप्तिरेवाऽऽसीत् । अत एव तदा वास्तविका जिज्ञासवः सुलभा आसन् ये किल तदुपलब्धये सद्गुरोः शरणं गच्छन्ति स्म । इत्थं तदा सद्गुरोः सच्छिष्यस्य च अभावस्य चर्चैव न श्रूयते स्म । किन्त्वस्मिन् भौतिकवादाकुलितयुगे सर्वमेवैतत् वैपरीत्यं गतम् । मानवस्य लक्ष्यमेव अर्थकामौ सञ्जातौ । सर्वोऽपि तस्य प्रयासस्तदर्थमेव जायते । आत्मानं परमात्मानं परलोकं मोक्षादिकञ्च ज्ञातुं न च कश्चिद् वाञ्छति, नापि तदावश्यकं कोऽपि मनुते । यदा शिष्यस्यैव दुष्कालस्तदा गुरुः कथं दृग्गोचरो भवेत् ?

तथापि सौभाग्यदत्र प्राचीनतमेयं गुरु-शिष्य-परिपाटी द्वितीयाचन्द्र इव कार्श्येन वर्षस्य एकस्मिन् दिने आषाढपौर्णिमास्यामक्ष्णोर्विषयीभवति । भारतस्य नैकेषु भागेषु अस्मिन् दिने शिष्याः स्वस्वगुरुमर्चन्ति । विद्यार्थिनः स्वस्वाचार्यमर्चन्ति । मन्त्रदीक्षिताश्च स्वस्वमन्त्रोपादेष्टारं गुरुं पूजयन्ति । अन्यथा अहरहो विद्यालयेषु गुरूणां यादृशो गौरवः शिष्यैः क्रियते, न स सर्वेषामपरिचितो विषयः । साम्प्रतिकः शिष्यः स्वपरीक्षोत्तीर्णतासदृश - क्षुद्रलाभाय गुरुं हन्तुमपि मनाक् न संकुचति । सत्येवं कथं नाम तेन समधीता विद्या तेजस्विनी स्यात् ? अस्यैव दुष्प्रभावोऽयमद्य सहस्रशो लक्षशश्च पदवीधराः शिक्षिता निरुद्योगिनो भूत्वा आजीविकायै यत्र तत्र भ्रमन्तोऽपि तां नासादयन्ति । सूक्ष्मतमातीन्द्रियतत्त्वस्यावगमस्तु दूरे आस्ताम् । अस्माकं राष्ट्रस्य वास्तविकसमुत्कर्षाय स्थितिरियं महानभिशाप एव । अस्माकं सविधे अस्याः परिहारायापि भगवानेव शरण्यः । तमेव वयं सप्रश्रयं प्रार्थयामो यदचिरादेव स भारते तां प्राच्यां गुरुशिष्य-भावभरितां परिपाटीमञ्जसा परिचालयित्वा भारतं समुद्धरत्विति ।

यतो हि अतीते तेनैव भगवता श्रीकृष्णेन भगवता मर्यादापुरुषोत्तमेन रामभद्रेण च गुरोरयं गौरवः स्वाचरणेन यथावत् प्रतिष्ठापित आसीत् । भगवता श्रीकृष्णेन सान्दीपनी-गुरुतः सविनयं विद्या समधीता, तच्छुश्रूषणं कृतम्, गुरुदक्षिणारूपेण मृतो गुरुपुत्रो यमसदनादानीय गुरवे समर्पितश्च । भगवता रामभद्रेण गुरोर्वशिष्ठात् सविनयं यज्ज्ञानमधीतं तस्य डिण्डिमघोषं कुर्वन् अद्यापि योगवासिष्ठं जिज्ञासूनां कल्पवृक्षायितं विराजते । भगवता आद्यशङ्कराचार्येणापि भगवत्पादाचार्याः श्रीगोविन्दाचार्याः परिसेविताः । अन्ततो भगवान् एव परमोऽस्माकं गुरुः । योगाचार्याः पतञ्जलिपादाः स्पष्टमाहुः—

**स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।**

अद्य यदा परमपावनी विश्वकल्याणसाधिका गुरुपरम्परा ह्रासमुपेयुषी दृश्यते, तदाऽस्माभिः भगवानेव सप्रश्रयं प्रार्थ्यते यत्तेनैन पुनरपि स्वयमेवाविर्भूय गुरोर्गौरवः परिरक्षणीयः ।

नास्माकमयमाग्रहोऽभूतपूर्वो नाम । नूनं स एव भगवान् समये - समये पुरुषविशेषरूपेण स्वकीयां विभूतिमत्रावतार्य गुरुतत्त्वस्य रक्षणं चिरात् कुर्वन्नास्ते । अस्माकं पूज्यपादाः परमगुरवो महर्षिवर्याः श्री ज्ञानानन्दस्वामिपादा अपि तस्यैव भगवतोऽन्यतमा विभूतिरासन् यैः किल भारतावनौ आविर्भूय ह्रासपथं गच्छन्तं गुरुगौरवं पुनः प्रतिष्ठाप्य सनातनवैदिकधर्मः सर्वाङ्गैः संरक्षितः । गुरुपूर्णिमा-पावनपर्वावसरे वयमपि तेषां विधेयास्तान् गुरुवरान् पूतया स्मृत्या हृत्पुण्डरीके विनिवेश्य तेषां पावनचरणयोरिमं श्रद्धासुमनाञ्जलिं समर्प्य स्वात्मानं कृतार्थयाम इति ।

# प्रभोः वेदैकवेद्यत्वम्!

— वेददर्शनाचार्याः श्री गङ्गेश्वरानन्द स्वामिपादाः —

( २ )

## परोद्भावितानां हेत्वाभासानां निरसनम्

इतः परं कुसुमाञ्जलौ अनुमाने परोद्भावितानां हेत्वाभासानां निरासाय प्रयत्यते। आस्तिकानां दार्शनिकानां कोपनिर्भरं वचोनिकरमाकर्णयन्नपि स्वस्वान्ततान्तध्वान्तजभ्रान्तप्रत्ययः परः पुनः प्रत्यवतिष्ठते—अत्रानुमाने पञ्च षड् वा दोषाः। यथा—
१. बाधः, २. सत्प्रतिपक्षः, ३. साध्याप्रसिद्धिः, ४. विशेषविरोधः ५. व्याप्यत्वासिद्धिः, ६. अनैकान्तिकत्वञ्च। तथा हि—

१. घटादि - दृष्टान्तानुरोधेन शरीरविशिष्टस्यैव कर्तृत्वमायाति। तस्य च क्षित्यादौ पक्षे बाधः।

२. ईश्वरस्य शरीराभावेन विशेषणाभावप्रयुक्तशरीरविशिष्ट-कर्तृजन्यत्वलक्षण-विशिष्टसाध्याऽभावात्। 'क्षित्यादिकं कर्मजन्यं शरीराजन्यत्वात्' इति, 'ईश्वरः कर्ता न भवति अशरीरत्वात्' इति च सत्प्रतिपक्षः।

३. कर्तृत्व-शरीरित्वयोः सहचारदर्शनगृहीतया 'यत्र यत्र कर्तृत्वं तत्र तत्र शरीरित्वम्' इति व्याप्त्या कर्तृत्वावच्छिन्ने कर्तृमात्रे शरीरित्वसिद्ध्या अशरीरीकर्तृजन्यत्वस्य साध्यस्याऽप्रसिद्धिः।

४. निरुक्तव्याप्त्या शरीरी कर्ता उपस्थाप्यः। पक्षधर्मताबलाच्च क्षित्यादौ पक्षे अशरीरी कर्ता समुपस्थाप्यते। ततश्च व्याप्ति-पक्षधर्मतोपस्थाप्ययोः विशेषयोर्विरोधः।

५. क्षित्यादौ कार्यत्वेन कर्तृजन्यत्वसाधने शरीरजन्यत्वमुपाधिः, सोपाधिको हेतुर्व्याप्यत्वासिद्ध इति लक्षणानुसारेण व्याप्यत्वासिद्धिश्च।

६. व्यभिचारोऽपि, उपाधिना हेतौ साध्यव्यभिचारोपस्थापनात्।

तानेतान् दोषान् कारिकया परिहरति आचार्यः—
**न बाधोऽस्योपजीव्यत्वात् प्रतिबन्धो न दुर्बलैः।**
**सिद्ध्यसिद्ध्योर्विरोधो न नासिद्धिरनिबन्धना॥**
—कुसुमा० ५. २

अस्य विवरणमिदम्—ईश्वरे शरीराभावेन त्वदुक्तबाधो न, अधिकरणज्ञानं विना अभावज्ञानं न सम्भवति। अतो धर्मिसाधकस्य कार्यत्वस्य अधिकरणज्ञानजनकतया अवश्यापेक्षणीयत्वेन प्रबलत्वात्।

सत्प्रतिपक्षोऽपि न प्रसज्यते, शरीराजन्यत्वप्रतिपक्षहेतोः शरीरांश-वैयर्थ्याद् व्याप्यत्वासिद्ध्या दुर्बलत्वादित्याह—प्रतिबन्धो न दुर्बलैरिति। हीनबलैः प्रतिहेतुभिः, प्रतिबन्धः = प्रतिरोधः सद्धेतोर्न सम्भवति। एतेन—'ईश्वरो न कर्ता शरीरित्वात्' इति सत्प्रतिपक्षोऽपि निरस्तः।

साध्याप्रसिद्धिरपि नाशङ्कनीया; तदापादिकां पूर्वोक्तां 'यत्र यत्र कर्तृत्वं तत्र तत्र शरीरित्वमि'ति कर्तृत्वावच्छिन्ने शरीरित्वसाधिकां व्याप्तिमपेक्ष्य पक्षधर्मतासहकारात् विपक्षबाधक - तर्कावताराच्च कार्यत्वव्याप्तेर्बलवत्त्वेन तया व्याप्त्या कार्यत्वव्याप्तेः प्रतिबन्धः = प्रतिरोधोऽशक्यः। अत एव 'दुर्बलैः' इति मूले बहुवचनप्रयोगः। बहूनां बाध - सत्प्रतिपक्षप्रतिव्याप्तीनां दुर्बलत्वस्याऽभिप्रेतत्वात्।

अपि च—विशेषविरोधाऽसम्भव एव, शरीरित्वकर्तृत्वव्याप्त्युपस्थापितस्य शरीरिकर्तृत्वस्य विशेषस्य

पक्षधर्मतोपस्थापितेन अशरीरिकर्तृत्वेन विरोधो वाच्यः। तत्र पृष्टो भवान् व्याचष्टाम्—स विशेष उपस्थितोऽनुपस्थितो वा ? आद्ये तस्य शरीरकर्तृत्वसमानाधिकरणस्य उपलब्धेर्न विरोधः, असहोपलब्धयोरेव विरोधदर्शनात्। द्वितीये येन विशेषेण विरोधमुद्भावयसि तस्य विशेषस्याऽनुपस्थापनात्। स्वाश्रयस्यैव विरहेण विरोधः कुतस्त्य इत्यभिप्रेत्याह—सिद्ध्यसिद्ध्योर्विरोध इति। सिद्ध्यसिद्ध्योः विशेषोपस्थितौ तदनुपस्थितौ च उपाधिं निराकरोति—नासिद्धिरिति। उपाधिप्रयुक्ता व्याप्यत्वासिद्धिरपि न; शरीरजन्यत्वोपाधिना क्षित्यादौ पक्षे स्वाभावेन कर्तृजन्यत्वाभावसाधने विपक्षबाधकस्य तर्कस्याऽभावात्। क्षित्यादिकं न कर्तृजन्यं शरीरजन्यत्वात् इत्यनुमानस्य अप्रयोजकत्वेन उपाधेरकिञ्चित्करत्वात्।

अयमभिसन्धिः—उपाधिर्हि स्वव्यभिचारेण हेतौ साध्यव्यभिचारं स्वाभावेन वा साध्याभावमनुमापयति। तथा च 'कार्यत्वहेतुः सकर्तृकत्वव्यभिचारी तद्व्यापकशरीरजन्यत्वव्यभिचारित्वात्' इति, 'क्षित्यादिकं न सकर्तृकं शरीराजन्यत्वात्' इति वाऽनुमानप्रयोगः पर्यवसेत। तद्द्वयमपि अकिञ्चित्करम्; विपक्षबाधकतर्काभावेन अप्रयोजकत्वात्। व्यभिचारादिशङ्कानिवर्तकतर्को हि विपक्षबाधकतर्कः, तस्य अत्राऽभावात्। विपक्षबाधकतर्कशून्यत्वमेव अप्रयोजकत्वम्। तस्माद् असिद्धिः, उपाधिसमुद्भावितव्याप्यत्वासिद्धिर्वा नाऽऽशङ्कनीया। यतोऽनिबन्धनानिबन्धनं विपक्षबाधकतर्कस्तद्रहिता। तस्माद् विपक्षबाधकतर्काभावेन छिन्नमूलोपाधिसमुद्भावितव्याप्यत्वासिद्धिः कथं स्यादिति।

न च कृषीबल-बीजवपन-हलकर्षणादि-व्यापारमन्तरा स्वतः समुत्पन्ने अकृष्टजाततृणादौ कर्त्रदर्शनेन कार्यत्वहेतुर्व्यभिचारीति वाच्यम्; तस्य पक्षसमत्वेन पक्षकक्षानिक्षिप्ततया पक्षे व्यभिचारोद्भावनस्य अदोषत्वात्। प्रकारान्तरेण व्यभिचारापादनं तन्निरसनञ्च विशेष-विरोधः, सत्प्रतिपक्ष-कालात्ययापदिष्टानां हेत्वाभासानां च निरसनं न्यायमञ्जरीतः (पृ० १९८-९९) अवसेयम्।

तत्रैते विद्वन्मनःप्रसादकाः व्यभिचारोत्सादकाः श्लोकाः—

१. तेनाऽनुमानगम्यत्वान्न कर्तुर्नास्तिताग्रहः।
तदभावाद् विपक्षत्वं क्षित्यादेरपि दुर्भणम्॥

२. लिङ्गात् पूर्वं तु सन्देहो दहनेऽपि न वार्यते।
तथा सति प्रपद्येत धूमोऽप्यननुमानताम्॥

३. अथाऽस्य लिङ्गाभासत्वं क्षित्यादौ कर्त्रदर्शनात्।
धूमेऽपि लिङ्गाभासत्वं तत्र देशेऽन्यदर्शनात्॥

४. ननु तं देशमासाद्य गृह्यते धूमलाञ्छनः।
अनयैव धिया साधो चरस्व शरदः शतम्॥

५. यत्पश्चाद् दर्शनं तेन किं लिङ्गस्य प्रमाणता।
अनर्थित्वाददृष्टे वा कृशानौ किं करिष्यति॥

आचार्याः प्रार्थयन्ते—

इत्येवं श्रुतिनीतिसंप्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः॥
—कुसुमा० ५.१८

अस्माकं तु निसर्गसुन्दरचिराच्चेतो निमग्नं त्वयी-
त्यद्धाऽऽनन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुयाम शतशो याम्याः पुनर्यातनाः॥
—कुसुमा० ५.१९

## वेदान्तिनय-प्रदर्शनम्

आस्ताम् आस्तिकचक्रचूडामणिः, तार्किकानां भगवत्प्रणयविजृम्भिता—ऽनल्पानुमानप्रयोगादिकल्पनाऽऽयासः। सम्प्रति प्रतिज्ञातपूर्वं वेदान्तिनये वेदैकवेद्यत्वं भगवतः उपपादयामः। तथाहि—त्रिलोकालङ्कार ब्रह्मसूत्रव्याख्यकाराः विद्वद्वृन्दारकवृन्द-वन्दितचरणाः

श्रीशङ्कर-भास्कर-रामानुज-माध्व-निम्बार्क-वल्लभ-रामानन्द-श्रीचन्द्रप्रमुखाः परमेशस्य शास्त्रैकगम्यत्वं प्रतिपादयामासुः । अत एव शुद्धाद्वैतमार्तण्डः श्री-पुरुषोत्तम-पण्डितप्रवरः अणुभाष्यस्य स्वकीय-'प्रकाश'-व्याख्याने ( पृ० ७० ) द्वितीयसूत्रभाष्ये बभाषेरे—

'एवं सिद्धान्तमुक्त्वा आधुनिकानामन्येषां भाष्यकृतां ब्रह्मणः कर्तृत्वस्य शास्त्रैकप्रमाणकत्वांशे विप्रतिपत्त्यभावात्, तन्मतानुवादमकृत्वा केषाञ्चिद् वैशेषिकाद्यनुसारिणां मतमनुवदन्ति —'केचिद्' इत्यादिना परपक्षतक्षणविचक्षणाः श्री वल्लभाचार्याः—

'केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति । अन्ये पुनः श्रुत्यनुवादकत्वमाहुः । सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानं च ब्रह्मणि प्रमाणमिति । तत्तु 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति केवलोपनिषद्वेद्यत्वादुपेक्ष्यम्, अनधिगतार्थगन्तृत्वात् प्रमाणस्य ।'

ते हि **जन्माद्यस्य यतः, शास्त्रयोनित्वात्** इत्यनयोः सूत्रयोरैक्यं मन्वते । तदवलोकनेन तन्नये वेदैकगम्यत्वस्य स्फुटप्रतिपत्तिरेव विचित्रशेमुषीजुषां विदुषाम् ।

वेदबाह्यनिराकरणचातुरीचणाः परमेशसमर्थनैकजीवितव्रताः श्री रामानुजाचार्याः तृतीये **शास्त्रयोनित्वात्** इति सूत्रे प्रतिजज्ञिरे—

अतः प्रमाणान्तरगोचरत्वेन शास्त्रैकविषयत्वात् 'यतो वा इमानि···' इत्यादिवाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ।'

—श्रीभाष्ये, पृ० ६७७

## भास्करमत-मननम्

वैशेषिकाः 'जगत् कार्यं सावयवत्वात्, महत्त्वे सति क्रियावत्त्वात्, महत्त्वे सति मूर्तत्वाच्च घटवत्' इति कार्यत्वं संसाध्य 'जगद् बुद्धिमत्पूर्वकं कार्यत्वात्' इति निखिलजगत्कर्तारं परमेश्वरमनुमिन्वन्ति । तन्मतेन ईश्वरानुमेयत्वमाशङ्क्य साधकस्य कार्यत्वहेतोः हेत्वाभासत्वेन तन्मतं निरस्य शास्त्रैकगम्यत्वमुपपादयाञ्चक्रिरे भास्कराचार्याः ।

तेषामयमाशयः—'जगत् न बुद्धिमत्कारणपूर्वकं कार्यत्वाद् बीजोत्पन्नाङ्कुरवदि'ति साधारणो हेतुः । किञ्च—जगता सह ईश्वरसम्बन्धस्य अत्यन्तापरिदृष्टत्वेन साध्यस्य पक्षधर्मत्वाभावादयं विरुद्धोऽपि । यस्य कस्यापि बुद्धिमतः साधने सिद्धसाधनत्वञ्च । तथा घटादिदृष्टान्तबलेन कार्यत्वसमानाधिकरणस्य अनीश्वराऽसर्वज्ञ-शरीरेन्द्रियादिमत्कर्तृकत्वस्य सिद्ध्या विवक्षितेश्वरासिद्धिश्च । तादृशजीवसिद्ध्या अर्थान्तरत्वेनापि तदसिद्धिश्च ।

नचैवं घटादिदृष्टान्तेन शब्दे कृतकत्वादनित्यत्वसाधने दृष्टान्तीयानां पाक्यत्वादीनामापत्त्या अनुमानोच्छेदप्रसङ्गः । लिङ्गिनः शब्दस्य प्रमाणान्तरगोचरत्वेन शब्दे पाक्यत्वादीनां निवृत्त्या तदनुच्छेदात् ।

अत्यन्तापरिदृष्टे ब्रह्मणि तु अन्वय-व्यतिरेकपरिशुद्धानां तेषां निवर्तकस्याभावेन तादृशधर्मापत्तेरनिवार्यत्वात् । अतः शास्त्रैकसमधिगम्यं ब्रह्म इति ।

## भास्कर-नय-निरासः

श्री रामानुजाचार्याः भास्करदर्शितदूषणेषु शैथिल्यं प्रदर्श्य 'विवादाध्यासितं भू-भूधरादिकं स्वनिर्माणसमर्थकर्तृपूर्वकं कार्यत्वात् सार्वभौम-सदनवत्', 'धर्माऽधर्मौ चेतनाधिष्ठितत्वेन फलोपधायकौ अचेतनत्वाद् वास्यादिवत्' इत्यादीनि भूयांसि चान्यानि अनुमानानि समुपन्यस्य प्रचण्डतर्कदण्डेन तान्यपि अपसार्य लोकोत्तरप्रकारेण शास्त्रैकसमधिगम्यत्वं भगवतः स्थापितवन्तः । स च प्रकारस्तृतीयसूत्रीय-श्रीभाष्यादेव अवसेयः । विस्तरभयात् नेह प्रतन्यते ।

किं बहुना, हेत्वाभासप्रतिभास - राहुग्रासत्रास-निर्[illegible] प्रमाणं नालमीश्वरसंसाधनाय

इति शास्त्रैकसमधिगम्यत्वं निष्प्रत्यूहं सिद्ध्यसि। आचार्यान्तरवचांसि तु समानार्थकानीति प्रयोजनाभावात् नोपन्यस्तानीति सर्वमवदातम्।

## सर्वदर्शनेषु ईश्वराभ्युपगमः

वेदोपजीवीनि न्याय-वैशेषिक-योग - साङ्ख्य-कर्म-मीमांसा - ब्रह्ममीमांसा - नामधेयानि षड्दर्शनानि सुप्रख्यातान्येव। सप्तमं शाण्डिल्यादिनिर्मितं भक्तिदर्शनम्। तेषां क्रमेण सप्त भूमिकाः—१. ज्ञानदा, २. संन्यासदा, ३. योगदा, ४. लीलोन्मुक्तिः, ५. तत्पदा, ६. आनन्दपदा, ७. परात्परा चेति। एतेषां लक्षणादिकं 'गङ्गेश्वरग्रन्थमालायाः' - श्चतुर्थे पुष्पे 'दर्शन-समन्वय'-मूर्ध्नि निबन्धे द्रष्टव्यम्।

## दर्शन-समन्वय-समर्थनम्

अतिथिस्वागत - न्यायेन विषयविशेषाध्यापन-न्यायेन च विषयान्तरस्य अनिरूपणेऽपि न सार्वज्ञ्य-हानिः, न वा तदनभ्युपगमप्रसङ्गः। महर्षयः सर्वपदार्थाभिज्ञा अपि स्व-स्वभूमिकानुसारेण पदार्थनिरूपणाय भगवता विनियुक्ताः। यथा सप्तकक्षगृहे विभिन्नद्वारेषु पित्रादिविनियुक्ताः पुत्राः। तेषु यस्मिन् द्वारि यः स्थितः, स तत्रैव अतिथि-स्वागतं कुरुते, नान्यत्र। यद्यप्यसौ स्वगृहस्य सर्वाणि द्वाराणि वेत्त्येव। नहि द्वारविशेषे स्वागतकरणेन द्वारान्तरानभिज्ञता तेषां तत्र दृश्यते। को नु नाम जनः स्याद् यः स्वगृहवृत्तान्तं न विजानीयात्? यथा च विद्यालये विभिन्नासु कक्षासु विषयेषु विशेषाध्यापनाय नियुक्ताः शिक्षकास्तमेव विषयमध्यापयन्ति, न विषयान्तरम्। नैतावता तेषां विषयान्तरानभिज्ञता समापतति। दृश्यते हि लोके गणितेतिहास-भूगोल-विज्ञान-दर्शनादि-बहुविषयनिपुणोऽपि शिक्षकस्तमेव विषयविशेषं पाठयति यत्र स नियुक्तः, न च विषयान्तरम्। एवं स्व - स्वदर्शन - भूमिकानुसारेण पदार्थनिरूपणाय अस्माकं महर्षयः स्व-स्वभूमिकानुपयुक्तपदार्थं यदि न जानन्ति, न वाऽभ्युपगच्छन्तीति। स्वभूमिकानुपयोग एव तद्दर्शने तत्पदार्थाऽनिरूपणे कारणम्। नाज्ञानं, न वा तदनङ्गीकरणञ्च।

एवं साङ्ख्य-मीमांसकावपि स्वभूमिकानुपयोगात् परमेश्वरं न निरूपितवन्तः। न तावता तेषामीश्वराऽनङ्गीकारः शक्याशङ्क्यः।

## सांख्यसूत्राणां गूढतात्पर्यवर्णनम्

न च साङ्ख्यप्रवचनाख्ये साङ्ख्यदर्शने ईश्वराऽसिद्धेः इत्यादीनि सूत्राणि स्पष्टमेव ईश्वरं निराकुर्वते। व्याचक्षन्ते च तथैव तानि विज्ञानभिक्षुमहोदयास्तद्भाष्यकारा इति वाच्यम्; भावानवबोधात्। गूढार्थानि हि तानि सूत्राणि। नूनं वत्स! अर्वाचीनभाष्यकृतां व्याख्यानदर्शनात् भ्रान्तोऽसि। अवधत्स्व मनाक्। प्रदर्शयते साम्प्रतं गूढमाकूतम्—

**योगिनामबाह्यप्रत्यक्षत्वान्न दोषः।**

—सांख्यद० १.९०

चान्द्रभाष्यम्—योगिनां लौकिक-प्रत्यक्षातिरिक्तम् अलौकिकं प्रत्यक्षं योगबलात् सम्पद्यते तदेव 'अबाह्यप्रत्यक्षम्' इत्याख्यायते। तस्य साङ्ख्यज्ञानभूमौ अनुपयुक्तस्यापि अङ्गीकारे न कश्चिद् दोषः।

**लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः।**

—सां० द० १.९१

ननु निष्प्रयोजनस्य अङ्गीकरणमेव दोष इत्याशङ्क्याऽऽह—लीनेति। लीनपदम् अनागतादेरुपलक्षकम्। लीनादिवस्तुभिः अतीन्द्रियाऽनागत - सूक्ष्म - व्यवहित-विप्रकृष्टपदार्थैन समं लब्धातिशयस्य योगबलावाप्तालौऽकिकप्रत्यक्षविशेषस्य सम्बन्धात्। अतीन्द्रियाऽतीतादिवस्तुजातावगाहनात् निष्प्रयोजनाङ्गीकारलक्षणदोषाभावः। न तत्सर्वथा निष्फलम्, यतोऽतीन्द्रियपरमेश्वरादिसिद्धिरेव तत्प्रयोजनमिति भावः।

**ईश्वरासिद्धेः।**

—सां० द० १.९२

ननु लौकिकप्रमाणादेव परमेश्वरसिद्धौ किं तेन ? इत्याशङ्क्याह—ईश्वरेति । लौकिकप्रमाणेन ईश्वरस्य सिद्धिविरहात् न निष्प्रयोजनत्वं तस्येत्यर्थः ।

**मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः ।**

—सां० द० १.९३

तथा हि—ईश्वरो मुक्तो बद्धो वा ? बद्धश्चेत् कथं जगत् स्रष्टुं क्षमेत । अथ मुक्तस्तदा शान्तसङ्कल्पतया अभिमानविरहात् न जगत् कुर्यादित्युभयथाऽपि जगत्कर्तृत्वासम्भवात् न कार्यलिङ्गकानुमानलक्षणलौकिकप्रमाणेन जगत्कर्तृतया तत्सिद्धिः । प्रत्यक्षप्रमाणं तु रूपादिहीनत्वात् न तत्र पदमादधातीत्याह—मुक्तबद्धयोरिति । बद्ध-मुक्तयोरन्यतरस्य बद्धो मुक्तो वा इत्यनयोः पक्षयोः कस्यापि युक्तिसहत्वाभावात् तस्येश्वरस्य न सिद्धिः ।

**उभयथाऽप्यसत्करत्वम् ।**

—सां० द० १.९४

उभयथाऽपि बद्धत्वे मुक्तत्वे वा निरुक्तयुक्तिबलाद् असत्करत्वं सत्, सत्त्वेन उपलभ्यमानं जगत् तत्कर्तृत्वाभावः अनुमानात् जगत्कर्तृत्वेन नेश्वरस्य सिद्धिरिति यावत् ।

**मुक्तात्मनः प्रशंसोपासासिद्धस्य वा ।**

—सां० द० १.९५

ननु तर्हि अप्रामाणिकत्वात् नास्त्येव परमेश्वर इत्याशङ्क्याह—मुक्तात्मेति । मुक्तात्मा—वामदेवादिः । उपासासिद्धः, उपासो=उपासना, तया समासादिताऽणिमादि - दिव्यैश्वर्य - जैगीषव्यादि - योगविशेषः । तथा च लोके दृष्टमहिमैव स्तूयते । ईश्वरश्च स्तुतो मुक्तैः सिद्धैश्च । तस्मात् लौकिकप्रमाणाविरहेऽप्यसौ तैरलौकिकप्रत्यक्षबलतः जगदीश्वरसाधनात् साङ्ख्यदर्शनस्य परमास्तिकत्वं सिद्ध्यति । एवं च उपर्युक्तसूत्रतात्पर्यम् अनवबुद्ध्यमानानां केषाञ्चिद् विज्ञानभिक्षुप्रमुखटीकाकृतां साङ्ख्यदर्शने ईश्वरानङ्गीकारकलङ्काङ्कलेपनमज्ञानविजृम्भितम् ।

भगवति मीमांसकस्य श्रद्धातिरेकः

मीमांसादर्शनेऽपि यज्ञप्रधानं तद्दर्शनं स्वपदाख्यभूमिकानुसारेण प्रयोजनाभाव एव ईश्वराऽनिरूपणे हेतुः, न तदनभ्युपगमः । तथा हि—**ब्रह्मदानेऽविशिष्टमिति चेत्** ( ब्र० सू० १०.३.७० ), **यदि तु ब्रह्मणस्तद्दानं तद्विकारः स्यात्** ( १०.३.७२ ), **ब्रह्माऽपीति चेत्** ( १२.१.३६ ) इत्यादिसूत्रेषु श्लिष्टं ब्रह्मशब्दं प्रयुङ्क्ते । यो हि अनेकार्थः शब्दः, स श्लिष्ट इति मन्यन्ते रसिकशिरोमणयः । तस्य शब्दस्य चैष निसर्गो यत् प्रकरणप्रतिपन्नमर्थं शक्त्या अर्थान्तरञ्च व्यञ्जनयाऽवगमयति, इति । तदित्थमुत्पश्यामः—चतुर्वेदवपारदृश्वानम् ऋत्विक्विशेषं बोधयितुं श्लिष्टं ब्रह्मशब्दं प्रयुञ्जानो महर्षिः स्वदर्शनभूमिकानुसारेण अनपेक्षितत्वेऽपि तच्छब्दप्रयोगेन जगन्नियन्तारं परमाराध्यं परमेशानं व्यञ्जयन् तदस्तित्वे दृढं तत्र स्वकीयां महतीं श्रद्धां च प्रकटयाञ्चक्रे ।

अलङ्कारमुकुटमणेर्विश्वनाथस्य वाच्यातिशायिनि **व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्’** ( साहित्यदर्पणे ४.५४ ) इति वचोऽनुसृत्य आलङ्कारिकनये वाच्यमपेक्ष्य व्यञ्जनस्य विशिष्टं स्थानं वरीवृत्यते । शक्त्या बोध्योऽर्थो वाच्यः, व्यञ्जनया च बोध्योऽर्थो व्यङ्ग्यः । श्रद्धातिरेकादेव वाच्यतया जैमिनिमुनिना जगदीश्वरो न निर्दिष्टः । अत एव तेषां भगवति विश्वासातिरेकोऽन्यान् दर्शनकृतोऽपेक्ष्य महीयानिति गम्यते ।

तदीयं भक्तहृदयमनयाऽऽशङ्कया वेपते स्म यद् यदि श्रद्धेयं समर्चनीयचरणं जगदीश्वरं वाच्यतया निर्दिशेयम्, तदा वाच्य-यागादिसमकक्षतया भगवतो महती अवधीरणा स्यात् । अतो मन्ये स्वदर्शने वाच्याद् धर्माद् उच्चसिंहासने समासीनं जगदीश्वरं विधातु-

मनाः महर्षिर्व्यञ्जनया तं निर्देष्टुं विवशो बभूव। अत एव प्राचीना अर्वाचीनाः लघीयांसो महीयांश्च मीमांसाचार्याः स्व-स्वग्रन्थारम्भे ईश्वरस्य मङ्गलं समाचेरुः। तेष्वत्र अनवद्यानि कतिपयानि मङ्गलाचरणपद्यानि उद्ध्रीयन्ते—

सूर्यनारायणं वन्दे देवीं त्रिपुरसुन्दरीम्।
गुरूनधिगतार्थांश्च निरन्तरमहं भजे॥

—मीमांसापरिभाषा : कृष्णयज्वकृता

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः।
कुरुते जैमिनिनये प्रवेशायाऽर्थसङ्ग्रहम्॥

—अर्थसंग्रहः, लौगाक्षिभास्करकृतः।

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम्।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम्॥

—न्यायप्रकाशः, आपदेवकृतः

नत्वा श्रीत्रिपुरामम्बां तत्पुत्रं श्रीगणाधिपम्।
जैमिनीं भाष्यकारं च कुर्वे वृत्तिं सुबोधिनीम्॥

—जैमिनीयसूत्रवृत्तिः, रामेश्वरसूरिकृता

यद् ब्रह्म प्रतिपाद्यते प्रगुणयत् तत्पञ्च मूर्तिप्रथां
तत्रायं स्थितमूर्तिमाकलयति श्रीबुक्क···क्ष्मापतिः।
विद्यातीर्थमुनिस्तदात्मनि लसन्मूर्तिस्त्वनुग्राहिका
तेनास्य स्वगुणैरखण्डितपदं सार्वज्ञमुद्योतते॥

—जैमिनीयन्यायमाला : माधवकृता, ११.३

लक्ष्मी-कौस्तुभवक्षसं मुररिपुं शङ्खासिकौमोदकी-
हस्तं पद्मपलाशताम्रनयनं पीताम्बरं शार्ङ्गिणम्।
मेघश्याममुदारपीवरचतुर्बाहुं प्रधानात् परं
श्रीवत्साङ्कमनाथनाथममृतं वन्दे मुकुन्दं मुदा॥

—शास्त्रदीपिका : पार्थसारथिकृता

विशुद्धज्ञानदेहाय त्रिवेदी - दिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥

—श्लोकवार्तिकम् : भट्टकुमारिलकृतम्

अत एव च मीमांसक-मानसराजहंसः सकलदर्शन-कानन-पञ्चाननः श्री खण्डदेवः क्षमां ययाचे 'भाट्टदीपिका'यां देवताधिकरणे स्वदर्शनभूमिकामनुसृत्य—देवविग्रहादिकं निराकृत्यान्ते मम तु वदतो दुष्यति वाणी, हरिस्मरणमेव शरणम् इति वाक्यसन्दर्भेण।

## शिष्टदर्शनेषु ईश्वरस्य स्फुट-निर्देशः

सप्तमं भक्तिदर्शनं कृत्स्नमेव भगवन्निरूपणैकनिष्ठमिति तत्रत्य-कतिपयवाक्योपन्यासायासो निष्प्रयोजन एव। न्याय-वैशेषिक-योग-वेदान्तदर्शनानां कानिचित् वचांसि समुपन्यस्यन्ते।

ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्।

—न्या० द० ४.१.१९

पुरुषोऽयं समीहमानो नावश्यं समीहाफलमाप्नोति। तेनाऽनुमीयते, पराधीनं पुरुषकर्मफलाराधनमिति। यदधीनं स ईश्वरः। तस्मादीश्वरः कारणमिति।

संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्।
प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः।

—वैशे० सू० २.१.१८-१९

संज्ञा = नाम, कर्म = कार्यं क्षित्यादि, तदुभयम्। अस्मद्विशिष्टानाम् = ईश्वर-महर्षीणां सत्त्वेऽपि लिङ्गम्। घट—पटादिसंज्ञानिवेशनमपि ईश्वरसङ्केताधीनमेव। यः शब्दो यत्रेश्वरेण सङ्केतितः, स तत्र साधुः। तथा च सिद्धं संज्ञाया ईश्वरलिङ्गत्वम्। एवं कर्म कार्यमपि ईश्वरे लिङ्गम्। तथा हि—क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति उपस्कारे शङ्करमिश्रः।

वैशेषिकदर्शन - भाष्यकाराः श्रीप्रशस्तपादाचार्या अपि मुक्तिसाधन-तत्त्वज्ञानावसरे तच्चेश्वरनोदनाभिव्यक्ताद्धर्मादेव इत्याहुः। ते च सृष्टि - प्रलयहेतुपरमाणुस्पन्दनमपि त्रिभुवनस्वामीश्वराऽलौकिकेच्छाविलसितमेव इत्यपि मेनिरे।

क्लेश - कर्म-विपाका - ऽऽशयैरपरामृष्टः पुरुषविशेष ईश्वरः इति योगदर्शनसूत्रं (१.२४) तु सुप्रथितमेव।

ब्रह्मसूत्रकारा अप्याहुः—**फलमत उपपत्तेः** ( वे० द० ३.२. ३८ ) । **अतः**=जगदीश्वरात् । **फलम्**=कर्मणः फलम् । **उपपत्तेः**=अचेतनात् चेतनाधिष्ठितादेव फलजनसम्भवात्, तत्प्रदाता जगदीश्वर एवेति तात्पर्यम् ।

## ईश्वरसाधका वेदमन्त्राः

प्रभोर्वेदैकवेद्यतासाधनोपक्रमे वेदातिरिक्तावेद्यत्वं प्रदर्श्य सम्प्रति वेदवेद्यत्वं मन्त्रैः कतिपयैः साध्यते । अत्रैते वेदमन्त्रा भवन्ति—

**य इमा विश्वा भुवनानि जुह्व-**
**दृषिर्होता न्यसीदत् पिता नः ।**
**स आशिषा द्रविणमिच्छमानः**
**प्रथमच्छदवराँ आ विवेश ॥**

—ऋ० १०.८१.१; तै० सं० ४.६.२.१; शु० य० माध्य० १७. १७

( चान्द्रभाष्यम् )—अस्यार्थः, **जुह्वत्**=प्रलयकाले संहरत् । **ऋषिः**=अतीन्द्रियद्रष्टा । **होता**=स्वात्मनि जगल्लक्षणाहुतिप्रक्षेप्ता । **न्यसीदत**=सृष्टेः पूर्वमेक एव निषण्णः । **आशिषा**=सिसृक्षया । **द्रविणम्**=धनम् तदुपलक्षितप्रपञ्चभोगजातम् । **कुर्वाणाः**=सृजनं जीवानां कर्मफलभोगायेति । **प्रथमच्छदवराम्**—स्वकीयं पारमार्थिकं स्वरूपमाच्छादयन् अवरान् स्वस्रष्टृविविधप्राण्यन्तःकरणप्रदेशानित्यर्थः ।

**किं स्विदासीदधिष्ठानमारम्भणं**
**कतमत् स्वित् कथासीत् ।**
**यतो भूमिं जनयन् विश्वकर्मा**
**विद्यामौर्णोन्महिना विश्वचक्षताः ॥**

—ऋ० १०.८१.२.; तै० सं० ४.६.२.४; वाज. शु० य० १७.१८

अत्र सायणः—पूर्वमन्त्रे जगत्प्रलयकाले संहृत्य पश्चात् सिसृक्षायां सर्वं सृष्ट्वा तत्र प्रविष्टा इत्युक्तम् । अत्र तस्याऽद्वितीयस्य अधिष्ठानं जगदुपादानकारणाद्यसम्भवात् सृष्टिरचनाऽनुपयन्नेत्याक्षिपति । लोके हि घटं चिकीर्षुः कुलालो गृहादिकं किञ्चित्स्थानमधिष्ठाय मृद्रूपेण आरम्भकद्रव्येण चक्रादिरूपैरुपकरणैर्घटं निष्पादयति, तद्वदीश्वरस्य जगदाश्रय-द्यावापृथिव्यो-रुत्पादनवेलायामधिष्ठानं किं स्विदासीत्, किं नामाऽभूत्, न किञ्चिदित्यर्थः ।

तथा तयोरारम्भणं कतमस्वित् । आरभ्यते अनेनेति आरम्भणम्, उपादान-कारणं तदपि कतमद् भवेत्-तदपि नेत्यर्थः । यद्यपि संभवेदारम्भणं कथमासीत्—कथमभूत्, किं स्वयं सदसद्वा भवेदित्यथेः । उभयमपि नोपपद्यते । सच्चेद् अद्वैतभङ्ग-प्रसङ्गः । असच्चेत् सदात्मकयो-र्द्यावापृथिव्योरुपादानानर्हत्वात् 'नान्यत् किञ्चन मिषत्' इत्यादि ( ऐ० उ० १.१ ) श्रुतेश्चेत्यभिप्रायः । यतो यस्मादधिष्ठानाद् आरम्भणाच्च । **विश्वचक्षाः**—सर्वंद्रष्टा विश्वकर्मा परमेश्वरो भूमिं जनयन् वर्तते । तथा **द्याम्**=दिवम् । **व्यौर्णोत्**=व्यवृणोत्, सृष्टवान् । **महिना**=स्वमहत्त्वेन किं स्विदासीदिति ।

**विश्वतश्चक्षुरुत विश्वतो मुखो**
**विश्वतो बाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां धमति सं पतत्रै-**
**र्द्यावाभूमी जनयन् देव एकः ॥**

—ऋ० १०.८१.१.३; अथ० १३.२.२६; वा० यजु० १७.१९; तै० सं० ४.६.२४; तै० आ० १०.१.३ ।

चान्द्रभाष्यम्—पूर्वमन्त्रेण जगत्सृजनमाक्षिप्य अनेन समाधत्ते—विश्वत इति । **विश्वतश्चक्षुः**=सर्वतो व्याप्तलोचनः । **उत**=अपि च । विश्वतो मुखः, एवमग्रेऽपि । एतेन सर्वमात्मकत्वात् कुलालादिवैलक्षण्येन अधिष्ठानाद्यभावेऽपि स क्षमते जगत्स्रष्टुमित्यभिप्रायः । स एवंविधः परमेश्वरः । बाहुभ्यां सं धमति=सम्यक् व्याप्नोति । धमतिरत्र व्याप्तिकर्मा । द्यां **पतत्रैः**=गमनशीलैः पादैः संधमति इत्यनुषङ्गः । तथा च बाहुभ्यां

दिवं पादैश्च पृथिवीं संव्याप्नोतीत्यर्थः। द्यावाभूमीति पदं समस्तं सं धमति इत्यनेन कस्य सम्बध्यते। 'जनयन्' इत्यन्वयाय तदनुवर्तते। अपि वा देहली-दीपक-न्यायेन तत्पदमुभयत्राऽन्वेति। द्यावाभूमी द्यां पृथिवीं च। जनयन् उत्पादयन्। देवः=द्योतमानः। एकः=असहायः असहायात्। परमात्मनः सृष्टि समर्थ-यामास भगवान् बादरायणः—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (२.१.२४), 'देवादिवदपि लोके' (२.१.५) इति सूत्राभ्यां दृष्टं क्षीराद् असहायाद् दध्यादिकं श्रुतञ्च। शास्त्रे देवादिभ्यः साधनान्तरं विनैव सङ्कल्पमात्रेण विविधपदार्थसृजनमिति तदभि-प्रायः।

महीधरस्तु—बाहुभ्याम्=बाहुस्थानीयाभ्यां धर्मा-धर्माभ्यां सं धमति। धमति गत्यर्थः। सङ्गच्छते, संयोगं प्राप्नोति। पतत्रैः पतनशीलैः अनित्यैः पञ्च-भूतैश्च सङ्गच्छते धर्माधर्मरूपैर्निमित्तैः पञ्चभूतरूपै-रुपादानैश्च। साधनान्तरं विनैव सर्वं सृजतीत्यर्थः। यद्वा—धर्माधर्माभ्यां भूतैश्च सं धमति सङ्गमयति जीवान्, णिजन्तत्वं ज्ञेयमित्याह।

**किं स्विद् वनं क उ स वृक्ष आस**
**यतो द्यावापृथिवी निष्टतक्षुः।**
**मनीषिणो मनसा पृच्छतेदु तद**
**यदध्यतिष्ठद् भुवनानि धारयन्॥**

—ऋ० १०.८१.४; वा० य० १७.२०;
तै० सं० ४.६.२.५; तै० ब्रा० २.८.९.६

अत्र उव्वटः—किं स्वित्। अयमपि मन्त्रः प्रश्न-रूपः। किं पुनस्तद्वनम्, कश्च सवृक्ष आस अभूत्। यतः द्यावापृथिवी। निष्टतक्षुः=तक्षति करोतिकर्मा। बहुवचनं पूजार्थम्। यस्माद् वृक्षाद् द्यां च पृथिवीं च निष्कृष्य चकार। यदि हि वनं वृक्षो वा भवेत्, तदा एवमप्याशङ्क्येत। तक्षाणो हि वृक्षात् चमसादीन् निष्कर्षयन्ति। अयं त्वात्मा आरम्भण ऊर्णनाभिव-दित्यभिप्रायः। विस्मितः ऋषिः द्वितीयं प्रश्नं करोति। हे मनीषिणो मेधाविनः, मनसा पर्यालोच्य पृच्छत् इत, उ तत, एतदपीति पदत्रयस्यार्थः। यदत्र यद्यर्थः। यदि अध्यतिष्ठत् यत् भुवनानि भूतजातानि सह द्यावा-पृथिवीभ्यां धारयन् उपरिष्टादास्ते।

सायणस्तु—बहुवचनव्यत्ययमन्वानः परमेश्वर-प्रेरिता जगत्स्रष्टारो यतो यस्माद् वनात् यं वृक्षमादाय द्यावापृथिवीं निष्टतक्षुः, तक्षणेन द्यावापृथिव्यौ निष्पा-दितवन्तः, तद्वनं किं स्वित् किं नाम स्यात्। तथा क उ स वृक्ष आस—कस्तादृशो महान् वृक्षोऽभूत्' इति व्याख्यातवान्। अस्य सूक्तस्य (ऋ० १०.८१) शिष्टा-स्त्रयो मन्त्रापि भगवत्परा एव। विस्तरभयात् नेह लिख्यन्ते।

न केवलं वेदाः, वेदमाताऽपि आह—

**तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।**
**धियो यो नः प्रचोदयात्।**

—ऋ० ३.६२.१०; वा० य० ३.३५; २२.९, ३०.२,
३६.३; तै० सं० १.५.६.४; ४.१.११.१; तै० आ०
१.११.३; सा० प्र० ६ अर्ध ३, सू० १० मं० १

सायणभाष्यम्—यः सविता देवो नोऽस्माकं धियः= कर्माणि, धर्मादिविषया वा बुद्धीः प्रचोदयात्—प्रेरयेत्। तत्=तस्य सर्वासु श्रुतिषु प्रसिद्धस्य। देवस्य= द्योतमानस्य। सवितुः=सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य। आत्मभूतं वरेण्यम्= सर्वैरुपास्यतया ज्ञेयतया च संभजनीयम्। भर्गः= अविद्या-तत्कार्ययोः भर्जनाद्‌ः भर्गः स्वयंज्योतिः परब्रह्मात्मकं तेजः। धीमहि=तद्योऽहं सोऽसौ सोऽहमिति वयं ध्यायेम। यद्वा—तदिति भर्गो विशेषणम्। सवितुर्देवस्य तत्, तादृशं भर्गो धीमहि। किं तदित्य-पेक्षायामाह—य इति। लिङ्गव्यत्ययः, यद् भर्गो धियः प्रचोदयादिति तद्ध्यायेम इति समन्वयः।

यद्वा—यः सविता=सूर्यः, धियः=कर्माणि,

प्रचोदयात्=प्रेरयति, तस्य सवितुः, सर्वस्य प्रसवितुः, देवस्य=द्योतमानस्य सूर्यस्य, तत्=सर्वैः दृश्यमानतया प्रसिद्धम्, वरेण्यम्=सर्वैः संभजनीयम्, भर्गः=पापानां तापकं तेजोमण्डलम्, धीमहि - ध्येयतया मनसा धारयेम।

यद्वा—भर्गशब्देन अन्नमभिधीयते। यः सविता देवो धियः प्रचोदयति, तस्य प्रसादाद्, भर्गोऽन्नादिलक्षणं फलं धीमहि=धारयामः, तस्याऽऽधारभूता भवेमेत्यर्थः। पुरुषसूक्तम् ऋग्वेदे अथर्ववेदे च षोडशर्चम्, सामनि आरण्यकाण्ड - चतुर्थखण्डान्तर्गतं पञ्चर्चम्, शुक्लयजुषि च द्वाविंशत्यृचम्। ( ऋ० १०.९०; अथ० १९.६; यजु० ३१, साम - आरण्यकाण्ड, खण्ड ४, मन्त्र ३-७ ) अस्यवामीयं सूक्तं द्वापञ्चाशतर्चं ( ०ऋ १०.१६४ ) सजनीयं सूक्तं पञ्चदशर्चम् अन्तिमवर्जं च प्रतिमन्त्रमन्ते 'सजनास इन्द्र' इति वाक्यमलङ्कृतम् ( ऋ० २.१२ ) नासदीयं सूक्तं ( ऋ० १०.१२९ ) सप्तर्चम्, प्रतिमन्त्रं 'महद्देवानामसुरत्वमेकम्' इति चतुर्थपादोपेतं महद्देवीयं द्वाविंशत्यृचं सूक्तं ( ऋ० ३.५५ ) अन्यानि च सूक्तानि ( ऋ० १५४ तः १५६. ४. ४०. १०. ८२. १०. १८६ सूक्तानि ) ईश्वरेन्द्रशब्दयोः ऐश्वर्यार्थक-धातुनिष्पन्नत्वेन समानार्थकत्वात्। सामनि ऐन्द्रपर्वणि ( २. ३. ४ ) त्रयोऽध्यायाः अथर्ववेदस्य कृत्स्नानि त्रीणि काण्डानि ( १३. १५. १६ ) क्रमशः चतुःसूक्ताऽष्टादशसूक्त - नवसूक्तात्मकानि सम्भूय एकत्रिंशतिसूक्तकानि द्वादश - चतुर्दश - सप्तदश - ऽष्टादश - विंशवर्जमन्येषां काण्डाना - मेकसप्तति ( ७१ ) सूक्तानि च परमेश्वरपराण्येव यथा—

| काण्डम् | सूक्तम् |
| --- | --- |
| १. | १३.२०.३२। |
| २. | १. २. ११. १६. ३४। |
| ३. | १६। |
| ४. | १. २. ११. १४. १६. २०। |
| ५. | १. २. ६. ९. १०. ११। |
| ६. | १. २. ३१. ३३. ३४. ३५. ३६. ८०. १११. १२३। |
| ७. | १. २. ३. ४. ५. ९. १४. १५. १७. २१. २१. २४. २५. २६. ४०. ४१. ४४. ६३. ६७. ७१. ८३. ८७. १०२. १०५. १०६। |
| ८. | १। |
| ९. | ९. १०। |
| १०. | २. ७. ८। |
| ११. | ७. ८। |
| १९. | ३. ५. ६. ४३. ५१. ७२। |

किं बहुना—एकं सद्विप्रा बहुधा वदन्ति। ( ऋ० १.१६४.४६ ) सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति ( ऋ० १०.११४.५ ) यो देवानां नामधा एक एव। ( ऋ० १०.८२.३ ) यत्र देवाः समगच्छन्त विश्वे। ( ऋ० १०.८२.६ ) रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्। ( ऋ० ३.५३.८ ) इत्यादिमन्त्रवर्णेभ्यः परमेश्वर एव इन्द्रादिनामधेयं धारयति, वज्रहस्त-पाशहस्त - दण्डहस्तविविधविग्रहं गृह्णातीत्यतः १६० इन्द्रादिदेवानां स्तावकाः चतुर्वेदीय-शाकलमाध्यन्दिन-कौथुम-शौनकसंहिताचतुष्टयस्य पुनरुक्तसंख्याविरहिताः १८२१४ मन्त्राः सर्वज्ञत्वादिसंवलितानवधिकातिशय-कल्याणगुणसागरे निखिलहेयप्रत्यनीकस्वरूपे जगन्नियन्तरि श्रुतिनीतिसंप्लवसलिलप्रक्षालन-निरस्तसमस्ता-शङ्कातङ्ककलङ्काङ्के स्वभावति भगवति पर्यवस्यन्ति।

अत एव श्रूयते—सर्वे वेदा यत्पदमामनन्ति। ( कठोप० २.१५ )। स्मर्यते च—वेदैश्च सर्वैरहमेव वेद्यः ( गीता १५.१५ )।

निरस्तान्यनुमानानि वेदैकवेद्यताऽऽस्थिता।
[illegible] ॥

# अहो मनस्विता !

— श्री साधुराम शास्त्री, एम० ए० एम० ओ० एल० —

[ प्राध्यापकः—कुरुक्षेत्र-विश्वविद्यालयस्य, कुरुक्षेत्रम् । ]

[ गहने वने नद्याः पुलिने क्रीडन्तौ महाराणा-प्रतापस्य एकादश-वर्षीया कन्या 'चम्पा', चतुरब्दावस्थो बालः 'सुन्दर'श्च ]

**सुन्दरः**—भगिनि ! क्षुधार्तोऽस्मि, देहि मे किमपि भोक्तुम् !

**चम्पा**—( स्वगतम् ) दिन-द्वयाद् अनशितोऽयम् । तद् यावद् अन्यत एनमपक्षिपामि । ( प्रकाशम् ) सुन्दर ! कथां श्रोष्यसि ?

**सुन्दरः**—आम् ।

**चम्पा**—शृणु तावत् । राज्याद् भ्रष्टः कश्चित् नृपो वनं वनं बभ्राम । एकदा नितरां श्रान्तः क्षुधार्तश्च स यावद् भोक्तुमारभते, तावत् तस्यान्नं कुक्कुरेण केनाप्यपहृतम् ।

**सुन्दरः**—( सदयम् ) तदा तु स नितरां रुदितो भवेत् ?

**चम्पा**—( बाष्प-वेगम् उपरुद्ध्य ) नहि । स त्वत्-सदृशो भोजनस्य कृते कथं रुद्यात् ?

**सुन्दरः**—कुतो मया रुद्यते ?

**चम्पा**—अयि, प्रियोऽसि मे ( इति सस्नेहं कण्ठे गृह्णाति ) ।

( इत्यामुखम् )

[ ततः प्रविशति तरूणामधः कुटीरक-मुखे शिलायाम् उपविष्ट उद्विग्नमना राणा-प्रतापः । ]

**प्रतापः**—अहो, महति सङ्कटे पतितोऽस्मि ।

**चम्पा**—( प्रविश्य ) तात, कथम् उद्विग्न इव लक्ष्यसे ?

---

नानुमानानि साधूनि हेत्वाभासत्वदर्शनात् ।
तस्माद् विद्वद्भिरास्थेया वेदैकवेद्यता प्रभोः ॥

आह च स्वयमेव भगवान् वेदो वेदैकप्रामाणिकतां परमेशितुः—

यस्माद् केशाद्‌दुदभराम वेदं
तस्मिननन्तरवदहम एवम् ।
कृतमिष्टं ब्रह्मणो वीर्येण
तेन मा देवास्तपसावते ह ॥

( अथर्व १९.७२.१ )

सफलोपसंहारः

तद्विप्रासो विदपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ।

( ऋ० १.२२.२१ )

विपन्यवः = स्तोतारो भक्तिमन्तः । जागृवांसः = विगतनिद्राः । दर्शननिवृत्ताविद्यास्तत्त्वदर्शिनः । एतेन भक्ति-ज्ञानसमुच्चयात् मोक्षावाप्तिरिति सूचितम् ।

नानानिबन्धसिन्धोर्यद् रत्नं यत्नसमाहृतम् ।
उपहृतं हृते तेन प्रीयतां भगवन्मुनिः ॥

**प्रतापः**—( सस्नेहम् ) वत्से ! अतिथिरेकः समायातो भोजनं काङ्क्षति । परं स न जानाति यत् प्रतापस्य सकलोऽपि परिजनोऽद्य द्वाभ्यां दिवसाभ्यां निराहारस्तिष्ठति ।

**चम्पा**—तात ! अलमेतया चिन्तया । नास्मद्द्वाराद् भग्नाशो निवर्तिष्यतेऽतिथिः । इयमहं भोजनमानयामि ।

[ इति सत्वरं निर्गत्य शिला-तलात् कोद्रवमण्ड-द्वयं गृहीत्वा, पुनः प्रविश्य ]

**चम्पा**—तात ! इदं भोजनम् । सत्क्रियताम् अनेनाभ्यागतः ।

**प्रतापः**—( साश्चर्यम् ) वत्से ! कुत एतत् ?

**चम्पा**—तात ! इदानीमेव ये द्वे मण्डे मात्रा मे प्रदत्ते, ते मया क्षुधाभावात् स्वयमनुपभुज्य सुन्दराय संरक्षिते । सुन्दरस्तु इदानीं प्रसुप्तः । तद् उभे अप्येते अतिथये ददातु तातः । ( इति मण्डे दत्त्वा निष्क्रामति । )

**प्रतापः**—( अतिथिम् आहूय, सादरम् ) भो महाभाग ! सनाथय आतिथ्यस्वीकारेण । अस्मिन् आसन उपविश्य स्वीक्रियतामिदं यथोपलब्धमन्नम् ।

**अतिथिः**—भद्र, चिरं जीव !

( उपविश्याऽन्नं भुक्त्वा निष्क्रामति । )

**महिषी**—( ससंभ्रमं प्रविश्य ) आर्यपुत्र, त्रायस्व त्रायस्व ! अनाहारेण क्षुत्क्षाम-शरीरा चम्पाऽऽत्मानं धारयितुम् अक्षमा निर्गच्छन्त्येव भूमौ निपत्य मूर्छिता ।

**प्रतापः**—( सोद्वेगम् ) क्व सा ?

**महिषी**—बहिः स्थण्डिले । गत्वा पश्यत्वार्यपुत्रः ।

( इत्युभौ निष्क्रामतः )

[ ततः प्रविशति भूमौ मूर्च्छामापन्ना चम्पा ]

**प्रतापः**—( उपेत्य ) हा पुत्रि ! कथम्, इदमपि कृच्छ्रं मया प्रेक्षितव्यमासीत् ?

( इति बाष्पम् उत्सृजति )

**महिषी**—वत्से ! समाश्वसिहि । अयं तव तातो रोदिति ।

**प्रतापः**—( दीर्घमुष्णं च निःश्वस्य, राज्ञीम् उद्दिश्य ) देवि, सर्वमन्यच्छक्यते सोढुम्, न पुनर्मिषतो मे क्षुधार्तस्य अस्यापत्यस्य प्राणविच्छेदः । तद् गच्छाम्यहं यवनेश्वरेण अकबरेण सन्धातुम् ।

**चम्पा**—( समाश्वस्य ) किं भणितं तात ! 'यवनेश्वरेण सन्धास्ये' इति ? वरं समूल-नाशोऽस्मत्-कुलस्य, न पुनर् म्लेच्छेन सहाभिसन्धिः । अनेन जीवन्त एव मरिष्यामो वयम् ।

[ प्रतापः सलज्जं तूष्णीमास्ते ]

**चम्पा**—तद् ममाङ्गानि स्पृष्ट्वा प्रतिजानातु तातः, 'नाहम् ईदृशं सङ्कल्पं भूयो मनसि करिष्यामीति ।'

**प्रतापः**—( चम्पामाश्लिष्य सबाष्प-गद्गदम् ) वत्से ! अवत्सलस्ते जनको नैवं भूयो वक्ष्यतीति ।

**चम्पा**—( प्रतिज्ञामाकर्ण्य, सक्षीण-स्मितम् ) तात ! साम्प्रतम् अमराः खलु वयं संवृत्ताः । ( मातरम् उद्दिश्य ) अम्ब ! अपि सुखं शेते सुन्दरः ? ( मरणवेदनां नाटयन्ती ) स······क्षुधा······आर्······त··· एव······सुप्······तः ।

( इति पितुरङ्क एव प्राणांस्त्यजति । )

**प्रतापः** ( जडवत् निर्निमेषं तां पश्यन्, क्षणं बाष्प-वेगम् उपरुद्ध्य ) वत्से ! योऽयं तातः स्व-जीवित-दानेन त्वया पतनाद् रक्षितस्तमेव परित्यज्य संप्रति क्व प्रस्थिताऽसि ? ( इति मुक्त-कण्ठं रोदिति )

[ पटाक्षेपः ]

# ध्वनि-वैभवम्

— श्री रवीन्द्रकुमार सिद्धान्तशास्त्री —

[ पञ्चतीर्थः, एम्० ए०, पी० आर० एस्० ]

( २ )

## ध्वने-र्वैशिष्ट्यम्

नन्वेवंविधस्य ध्वनेः किन्नाम लोकातीतं वैशिष्ट्यं येन तस्यैव काव्यप्राणत्वमङ्गीक्रियते, किं वा वैचित्र्यमपेक्ष्य तस्यैवं चित्ताह्लादकता लोकोत्तरता च स्वीक्रियेते ध्वनिवादिभिरिति चेत् ? उच्यते—विद्यते हि ध्वनौ काचिदनिर्वचनीया चित्तचमत्कारिता। तथा हि—

**कदली - कदली करभः करभः**
**करिराजकरः करिराजकरः।**
**भुवन - त्रितयेऽपि बिभर्तितुला-**
**मिदमूरुयुगं न चमूरुदृशः ॥**[1]

इति श्लोकस्योच्चारणानन्तरं समाप्ते वाच्यार्थबोधे यो ध्वन्यर्थो ज्ञायते श्रोतुश्चेतसि तस्य चित्ताह्लादकता, सहृदयमात्रसंवेद्यता, लोकोत्तरता चानुभूयन्ते सुधीभिः। श्लोकस्यास्य ध्वन्यर्थो यथा—

तथा हि—युवतेरस्या नयनयुगलं चमूरुमृग-नयन-युगलमिव लोचनाभिरामम्, तथैवास्याः ऊरुयुगलमपि लोकातीत - लावण्य - विभूषितम्। एवं नयनाभिरामं युवतेरूरुयुगलं स्वभावत एव शीते सुखोष्णसर्वाङ्गं ग्रीष्मे च सुख-शीतलं तप्तकाञ्चनवर्णाभञ्च भवेत। पुष्टतया शैत्येन च कदलीवृक्षसदृशमिदमूरुयुगं सचेतनं लावण्य-मण्डितञ्चेति जडप्रकृतेर्लावण्यविहीनायाः कदल्याः अतिरिच्यते गुणैः। करभादीनामप्येवमेव अचेतनतया लावण्यहीनतया कामोन्मादकता-रहिततया च न खलु तेऽपि मृगनयनाया अस्या ऊरुयुगस्य तुल्यतां यातुमर्हन्तीति।

अनुधावन्तु श्रीमन्तश्चिन्तापरिशीलकाः अर्थेऽस्मिन् चित्ताह्लादकता, लोकोत्तरता, विचित्रता च विद्यते न वेति। अस्माभिस्तु सम्यगुपलभ्यते, 'चमूरुदृश - करभोरुयुगमि'त्येतावन्मात्रकथनेऽपि जायते काचित् चित्ताह्लादकता शृङ्गारिणो युवजनस्य सहृदयस्य च चेतसि इति। कदल्यादीनां शब्दानां सन्निवेशात्तु सैव चित्ताह्लादकता नितरां पुष्टि-मादधाति। वाच्यार्थबोधानन्तरमेव कदल्यादीनां द्वितीयोऽर्थ आगच्छतीति वाच्यार्थादस्य पार्थक्यमव-गम्यते। लक्ष्यार्थश्च गुणवृत्तिमात्रमासाद्य वर्तत इति तस्मादपि विद्यते पार्थक्यमेतस्य। एवंस्थिते भूतार्थे, समुल्लिखितार्थस्य व्यञ्जनावृत्तिलभ्यतया नितरां चित्तचमत्कारितया च, कदल्यादीनां शब्दानां ध्वनिनिर्वाहकता सुष्ठु सम्यगवगम्यते।

**शयिता सविधेऽप्यनीश्वरा**
**सफलीकर्तुमहो मनोरथान्।**
**दयिता दयिताननाम्बुजं**
**दरमीलन्नयना निरीक्षते ॥**[1]

इत्यत्र समाप्ते वाच्यार्थज्ञाने समुज्जृम्भते यो द्वितीयोऽर्थः, स एव नितरां चित्ताह्लादकतां जनयति। अस्मिन् श्लोके नायकं प्रति नायिकाया यः शृङ्गारा-

१. साहित्यदर्पणस्य चतुर्थपरिच्छेदे उद्धृतोऽयं श्लोकः।

१. रसगङ्गाधरग्रन्थे प्रथमानने धृतोऽयं श्लोकः।

त्मको रतिनामा स्थायिभावो व्यज्यते, तस्यैव ध्वनित्वं वेदितव्यम् । एवंविधायाः रतेश्चित्ताह्लादकता, लोकोत्तर-चमत्कारिता च केनाप्यन्यथाकर्तुं न शक्यते । यः खलु नानुभवितुमर्हति तादृशमर्थमसहृदय एव सः । एवंविधस्य रतिरूपस्य ध्वनेर्लोकोत्तर - चमत्कारितां मनोऽभिरामताञ्च सम्यगनुभूय तत्रभवन्तो जगन्नाथ-पण्डितराजपादाः श्लोकमिमम् उत्तमोत्तमकाव्यस्य उदाहरणरूपेण प्रदर्शितवन्तः ।[1]

**सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥**

इति श्लोके समुच्चारिते वाच्यार्थबोधादनन्तरं यदा 'सर्वत्र सुलभा विभूतयः शूरादीनाम्" इत्यर्थः समुपलभ्यते, तदा तस्य वाच्य-व्यतिरिक्तत्वमिति नास्ति सन्देहावकाशः । तत्रभवतां महिमभट्टपादानां मते तु द्वितीयार्थोऽयमनुमानतोऽवगम्यते ।[2] वस्तुतस्तु न तथेति प्रदर्शितमस्माभिर्ध्वनिविचाराभिधे निबन्धेऽन्यत्र । एष खलु द्वितीयोऽर्थो व्यञ्जनावृत्तिमात्र-लभ्यश्चित्तचमत्कारकश्चेति तस्य ध्वनिमध्य एव गणना कार्या ।

ननु भवदुक्तस्यास्य द्वितीयार्थस्य व्यञ्जनावृत्ति-लभ्यत्वेऽपि चमत्कारातिशयाभावाद् गुणीभूतव्यङ्ग्य एव गणना युक्ता, इति चेद् ? विचारणीयः खल्वेष विषयः । केषाञ्चिन्मतेन विद्यतेऽत्र चमत्काराधिक्यम्, अन्येषां मतेन तु न तथेति । ये नाम चमत्कारितातिशयमस्य स्वीकुर्वन्ति, भवतु तेषां सविधे ध्वनित्वमेतस्य । ये तु तथाऽङ्गीकर्तुं नेच्छन्ति, स्वीकुर्वन्तु ते गुणीभूतव्यङ्ग्यत्वमिहेति नास्त्यस्माकं कापि हानिः । यदा तु समुल्लिखितस्य द्वितीयार्थस्य बोधादनन्तरं 'शूरो वा कृतविद्यो वा सम्यक् सेवको वा भव' इत्येवं

१. रसगङ्गाधरः, प्रथममाननम् ।
२. व्यक्तिविवेकः ।

तृतीयोऽर्थोऽवगम्यते; यदा च 'शूरत्वादिकं चेल्लब्धुं नार्हसि, सदा विभूतिं लब्धुं नैव शक्ष्यसि' इत्येवमपरः कश्चन वाऽर्थः समुपलभ्यते, तदा तथाभूतस्यार्थस्य ध्वनित्वमनङ्गीकर्तुं कथमपि न शक्ष्यन्ति भवन्तः ।

ननु भवदुक्तोऽयं तृतीयार्थोऽपि गुणीभूतव्यङ्ग्यमध्य एव निपततु इति चेत् ? उच्यते—शूरशब्दस्योच्चारणानन्तरमेव भासते सहृदयानां चेतसि काचित् सामर्थ्यव्यञ्जिकाऽऽकृतिः,

**व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः ।**
**आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥**[1]

इत्यादिवत् । तेन सार्धञ्च जायते ज्ञानं लोकोत्तराणां केषाञ्चिद् गुणानां येषां प्रभावात् श्रीरामचन्द्रो दुर्वृत्तान् राक्षसान् विनिहत्य निरपराधां सीतादेवी-मुद्धरयामास; यैश्च गुणैः समुल्लसितो महर्षिर्दधीचि-रात्मानमपि परहितार्थे तत्याज; राजर्षिविश्वामित्रो वा पुत्रदारसहितमखिलं साम्राज्यं मुनये प्रादात्, स्वयञ्च भृशं क्लेशं वरयामास; यानासाद्य राजर्षि-रौशीनरः कपोतार्थे स्वदेहमदात्, जीमूतवाहनश्च तथैव चकार ।

उच्चारिते च 'कृतविद्य'शब्दे सहसैव आविर्भवति श्रोतॄणां चेतसि लोकोत्तराणां विद्यानां काचिदभिनवा स्थितिः । ताभिर्विद्याभिर्विभूषितस्य कस्यचिज्जनस्य स्थितिरपि समुत्पद्यते तेनैवोच्चारणेन । 'यश्च जानाति सेवितुम्' इत्यंशमाश्रित्य यदा 'सुसेवको जनः सर्वत्र विभूतिं लभते' इत्येवं वा 'सुसेवको भव' इति वाऽर्थो विज्ञायते, तदापि सेवाधर्मस्य कश्चन विपुलः सम्भारश्चिन्त्यते मनसा श्रोतृवर्गः ।

यथा खलु विद्यार्थिपुङ्गवः श्रीमान् उपमन्यु गुरुं सेवमानः प्रथमं विपुलं क्लेशराशिमवाप्य पश्चात् लोकातीतं पाण्डित्यं यशश्च लेभे; यथा वा पितरं सेवित्वा कश्चन ब्राह्मणबालको बकविनाशकं मुनिं

१. रघुवंशम् १.१३ ।

जाजलिं विजित्य सेवामाहात्म्यं प्रकटयामास; यथा वा राजसुता सुकन्या वृद्धं पतिं सेवमाना सेवापुण्यप्रभावेणैव पत्युः पुनर्यौवनं स्वकीयं सौभाग्यराशिञ्च अर्जयामास, सर्वेषामेतेषां सेवाधर्मस्मृतिर्यदा सञ्जायते चेतसि, कथन्नाम तदा तादृशस्यार्थस्य लोकोत्तरचमत्कारिता हृदयाह्लादकता च स्वीकरणीये न स्याताम् ? एतच्चेत् स्वीक्रियते, तदा ध्वनिमध्य एव तादृशस्यार्थस्य गणना कार्येति नास्ति सन्देहावकाशः ।

ननु—

हरस्तु किञ्चित् परिवृत्तधैर्य-
श्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥[1]

इत्यत्र यथा वाच्यार्थस्य विलोचनव्यापारस्य व्यङ्ग्यार्थस्य च चुम्बनस्य तुल्यप्राधान्यतया गुणीभूतव्यङ्ग्यत्वमङ्गीक्रियते सुधीभिः, तथैवात्रापि 'सुवर्णपुष्पामि'-त्यादिश्लोके कथं वाच्यार्थ-व्यङ्ग्यार्थयोस्तुल्यप्राधान्यमङ्गीकृत्य गुणीभूतव्यङ्ग्यत्वं न स्वीकरणीयं स्यात् ? अत्र वदामः—विलोचन-व्यापारे चुम्बनादि-व्यापारे च विद्यते सामर्थ्यमुभयत्रैव हरस्येति कथञ्चित् सङ्गच्छते तत्र तुल्यप्राधान्याङ्गीकारः। अत्र तु पृथिव्यां चयनधर्मत्वस्य सर्वथाऽसम्भवात् न खलु व्यङ्ग्यार्थो वाच्यार्थेन सह कथमपि समतां यातुमर्हेत् ।

रविसंक्रान्तसौभाग्यस्तुषाराविलमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥[2]

इति श्लोके समुच्चारिते वाच्यार्थबोधादनन्तरमेव कथञ्चित् चमत्कारितामावहति गुणीभूते व्यङ्ग्ये उपमालङ्काररूपे प्रतिभासमाने यदा समुल्लसति कश्चनापरोऽर्थः, येन च ज्ञायते—निःश्वासैराविलीभूते दर्पणे यथा स्वभावसिद्धापि तदीया स्वच्छता तिरस्कृता भवेत्, यथा च तथाभूतस्य दर्पणस्य जनगणमनःप्रीतिविधायित्री प्रतिफलनशक्तिरपि तदानीं विदूरीभवति, तथैव तुषारैराविलीभूते चन्द्रमण्डले तदानीमपनीयते शशधरस्य लोकललामभूता लोकातीता कमनीयता, प्रच्छाद्यते च तदानीन्तनस्य प्रकाशनविभूतिः, स एव ध्वनिरिति विज्ञेयम् । एतस्मिन् ध्वनौ स्फुटमेव विद्यते तावदुपमालङ्कारादपि नितरामधिकतरा चित्तचमत्कारिता । उपमालङ्कारप्रकाशितोऽर्थः खलु सादृश्यमात्रं बोधयित्वा विरमति, अत्र तु विद्यते तस्मादपि सुदूरप्रसारी हृदयाह्लादकः कश्चिदपरोऽर्थः । उक्तञ्च तत्रभवता विश्वनाथेन—अत्र अन्धत्वाप्रकाशत्वयोरतिशय एव व्यङ्ग्य इति । वाच्यार्थाल्लक्ष्यार्थाद् गुणीभूतव्यङ्ग्यरूपादलङ्काराच्च विद्यते सुमहद् वैशिष्ट्यं नितरां चमत्कारितातिशयश्चात्र ध्वनाविति अस्माभिरप्यनुभूयते।

अत्ता एत्थ णिमज्जइ
एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ रत्तिअन्धअ
सेज्जाए मह णिमज्जहिसि ॥[1]

इत्यत्रापि यदा 'मम शय्यायामागमिष्यसि गभीरायां रजन्याम्' इत्येवंविधस्य विपरीतार्थस्य बोधस्तदा तादृशस्य ध्वनेर्नितरामनिर्वचनीयं वैभवं निह्नोतुं न शक्यते । नन्वत्र कीदृशी लोकोत्तर-चित्ताह्लादजनकतेति चेत् ? उच्यते; ईदृशः शृङ्गाराभास एवात्र लोकोत्तरचित्ताह्लादकतां जनयतीति ।

( क्रमशः )

१. कुमारसम्भवः ३.६७ ।

२. वाल्मीकि-रामायणम्; आरण्यकाण्डम् १६.१३ ( हेमन्तवर्णने रामस्योक्तिः ) ।

१. साहित्यदर्पणम्; तृतीय-परिच्छेदः; कारिका—३२६।

# फल-व्यापार-मीमांसा

—आचार्य डॉ० भोलानाथ झा, मुजफ्फरपुर—

ननु फल - व्यापारयोरर्थयोरावश्यकत्वेऽपि फलं धात्वर्थः, व्यापारस्तु भावनापरपर्यायः आख्यातस्यैवार्थः। व्यापारस्य धात्वर्थत्वे तु 'प्रकृतिप्रत्यययार्थयोः प्रत्ययार्थस्य प्राधान्यमि'ति व्युत्पत्तिभङ्गः स्यात्। एवं "पशुना यजेत' इति श्रुतौ तृतीयाविभक्त्युपस्थाप्यमेकत्वम् क्वाऽन्वेति यजनक्रियायां पश्वर्थे वा ?" इति विचारे 'प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वमि'ति व्युत्पत्त्या समानशब्दोपात्तत्वाच्च पश्वर्थान्वये तस्य यज्ञाङ्गत्वं न स्यादिति शङ्कायाम्, **शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथाऽन्येषाम्** इति जैमिनीयसूत्रेण प्रत्ययार्थस्य स्वतन्त्रतया यज्ञाङ्गत्वम्, प्रत्ययेन पृथगुपस्थितेः इति दृष्टान्तेन 'पचति' इत्यादौ आख्यातस्य सत्त्वे एव व्यापारबोधात् आख्यातार्थ एव व्यापार इति मीमांसायाम्, आख्यातार्थ - व्यापारव्यधिकरण - फलवाचकत्वं सकर्मकत्वम्। आख्यातार्थ - व्यापाराश्रयत्वञ्च कर्तृत्वं मीमांसका मन्यन्ते इति चेन्न।

फलमात्रस्य धात्वर्थत्वे गमधात्वर्थ - संयोगरूप फलस्य ग्रामे सत्त्वेन 'ग्रामो गमनवान्' इति प्रयोगापत्तेः। फूत्काराधिश्रयणावस्थायां विक्लित्तिरूपफलासत्त्वे फलजनकव्यापारमात्रविवक्षायां 'पचति' इति भविष्यतः प्रयोगस्यानापत्तेः। पाके जाते ओदनावस्थायां 'पाको भवति विद्यते' इति प्रयोगापत्तेश्च।

न च 'भावे' इति सूत्रविहित - घञो अनुकूलव्यापारवाचकत्वेन व्यापारविगमे 'पाको विद्यते' इति प्रयोगो न स्यात् इति अन्विताभिधानवादिमीमांसकमते न कश्चिदोष इति वाच्यम्; एवं सति 'कर्तरि कृत्' इति सूत्रत एव कर्तृपदस्य व्यापारार्थकत्वेन व्यापारे घञः सिद्धौ 'भावे' इति सूत्रस्य वैयर्थ्यापत्तेः।

न चैवं व्यापारोऽपि धात्वर्थः स्वीकार्यं इति वाच्यम्; तथा सति धातुत एव सकलव्यापारलाभसिद्धौ आख्यातस्य पृथग् भावनायां शक्तिकल्पने गौरवात्। एवञ्च 'पचति' इत्यत्र 'पाकं करोति' इति विवरणे करोतिः। धातोरेव विवरणं न तु तिङामितिह तदा—**तस्मात्करोतिर्धातोः स्यात् व्याख्यानं न त्वसौ तिङामिति**। यदि तिङां विवरणं स्वीक्रियते तदा 'पक्ववान्' इत्यत्र 'पाकं कृतवान्' इति विवरणस्य अन्वयानापत्त्या असङ्गत्यापत्तेः।

न च कर्मीभूतपाकस्य कर्तृभूतप्रत्ययार्थे स्वजनकाश्रयत्वसम्बन्धेनान्वयात् नासङ्गतिरिति वाच्यम्; खले पतन्तः कपोता यथा भोजनक्रियायामेवान्विता भवन्ति तथैव अमी पदार्था परस्परं क्रियायामेवान्वीयन्ति इति रीत्या सर्वकारकाणां क्रियायामेवान्वय इति सिद्धान्तेन क्रियामन्तरा प्रकृति-प्रत्ययार्थयोः कर्मकर्त्रोः परस्परान्वयासङ्गतेः।

न च 'ज्योतिष्टोमेन यजेत' इति श्रुतौ धात्वर्थभावनयोः यथा सम्बन्धसामान्यं प्रतिपाद्यते, तयोः क्रियाकारकभावसम्बन्धे तु उक्तश्रुतेः कश्चिदभिधाव्यापारो न स्यादिति, तथैव 'पक्ववान्' इत्यत्रापि धात्वर्थप्रत्यार्थयोः सम्बन्धसामान्येन अन्वये 'पाकसम्बन्धी कर्ता' इति बोधः स्यादिति वाच्यम्; क्रियान्वयित्वरूपकारकान्वयितावच्छेदकत्वरूपयोग्यताविरहात्।

न चैवं प्रकृति - प्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायेन व्यापारमुख्यविशेषाकः शाब्द-

# विनोद-बिन्दवः

**बालक-पिता**—( शिक्षकम् ) 'महोदया: ! मोहनोऽसौ धूर्ततरोऽस्ति, न किमपि पठति ।'

**शिक्षकः**—( सावेगम् ) 'का नाम तावदस्य मात्रा ? मया नैके वैशाखनन्दना अपि नन्दनाः कृताः ।'

**बालक-पिता**—'भवन्त एव प्रमाणम् ।'

इत्युक्त्वा गतः । अन्येद्युः पाठनालये कक्षायां बहवो रासभा आनीय स्थापिता बालकैः ।

**शिक्षकः**—( प्रविशन् किमिति चकित इव बालकान् ) 'किमिदं भोः ?'

**बालकाः**—'नेदं चित्रम् ! इमे वैशाखनन्दना अपि नन्दना भवितुमीहन्ते ।'

× × ×

**विद्याबिन्दुः**—'भो मित्र ! कोऽयं तुन्दिलो दीर्घकूर्चो विशालशिखो भोजनभट्टोऽस्माकमग्रे पदे-पदे लुण्ठन् तरसा समुपसर्पति ?'

**विद्यावारिधिः**—( तस्मै चपेटं दत्त्वा ) 'रे मूर्ख ! मैवं वद । नायं भोजनभट्टः । इमेतु महामान्याः भविष्यत्पद्मभूषणाः सर्वतन्त्रस्वतन्त्राः परमऽद्धेयाः परमपूज्याः विद्यावाचस्पतयः अज्ञानानन्दशास्त्रिणः सन्ति ।'

**विद्याबिन्दुः**—'कथमस्य उदरदरी पत्रकार्यालयीय-पत्राधानीव दीर्घा ?'

**वि० वा०**—'रे मूर्ख ! नातिशयभोजनेन । किन्तु एतेषां हृदये कोऽपि निहितो विद्यते ज्ञानराशिः । विद्यानामधिकतया इमे तुन्दिलाः सञ्जाताः ।'

**वि० बि०**—'कथमयं दीर्घकूर्चः ?'

**वि० वा०**—'समाक्रान्तेऽपि जरसा सततं विद्याभ्यसनान् केशकर्तनचिन्तारहितत्वात् नापितानामभावाद् वा दीर्घकूर्चा इमे ।'

**वि० बि०**—'कथमयं वेगेन गच्छति ?'

**वि० वा०**—'त्वं न जीनासि । अद्यैव श्रीमतां श्री श्री श्री १०००८ महाप्रभूणाममरावतीश्वराणां प्रासादे एका सभा । तत्रैव सभापतित्वेन सन्ति निमन्त्रिता इमे ।'

---

बोधो न स्यादिति वाच्यम् ; अस्य न्यायस्य 'अजा अश्वा छागी' इत्यादौ व्यभिचारित्वेन क्वाचित्कत्वेनाप्रवृत्तेः । विशेष्यविशेषणभावात्तु **यथा व्युत्पत्तिर्लोकानां भवति** इति सिद्धान्तः अत एव न प्रधानप्रत्ययार्थवचनम्, अर्थस्यान्यप्रमाणत्वादिति पाणिनिसूत्रं सङ्गच्छते । न चैवमपि व्यापारार्थस्य प्राधान्ये किं बीजमिति वाच्यम् ; भावप्रधानमाख्यातमितिवचनस्यैव मानत्वात् । एवम् 'कार्यम्, पचनीयम्' अग्निष्टोमयाजीः' इत्यादिप्रयोगेषु क्रियायोगमन्तरेण भवन्तः प्रत्ययाः धातोः क्रियावाचकतां ध्वनयन्ति ।

किञ्च भावनायास्तिङर्थत्वे' भावयति घटमितिवत् 'भवति घटमि'ति स्यात् ; धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात् । न च आख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् ; आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे 'पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्रस्या अकर्तृत्वापत्तौ तृतीयानापत्तेः । एवम् 'ग्रामं गमयति देवदत्तो विष्णुमित्रम्' इत्यत्र विष्णुमित्रस्य अकर्तृत्वेन ग्रामस्य गमिकर्मकत्वानापत्तेश्च । एवम् 'ग्रामाय गमयति देवदत्तो विष्णुमित्रम्' इत्यादौ गत्यर्थकर्मणीत्यादिना चतुर्थी अपि न स्यात् । अतो न तिङर्थो भावना, किन्तु धात्वर्थ एवेति संक्षेपः ।

# विक्रेयाणि बहुमूल्यानि पुस्तकरत्नानि

**गृहं स्वर्गं कर्तुं मानवजीवनञ्च सफलयितुं वाणीपुस्तकमालातः महापरिषदः महामण्डलसंस्थानतश्च प्रकाशितानि निम्नलिखितपुस्तकानि विक्रयार्थं प्रस्तुतानि। विशेषविवरणाय सूचीपत्रं नियमाश्च पत्रप्रेषणेन समासादनीयाः।**

१. भारतधर्म-समन्वय ... १-५०
२. परलोक-तत्त्व ... २-५०
३. कठोपनिषद् ... ३-००
४. धर्मतत्त्व ... २-५०
५. वेदान्तदर्शन ... १-५०
६. हिन्दूधर्मका स्वरूप ... ०-३७
७. तत्त्वबोध, सजिल्द ... १-००
बिना जिल्दका ... ०-७५
८. आदर्श देवियाँ प्रथम भाग ... २-२५
,, ,, द्वितीय भाग ... २-५०
९. सती सदाचार ... १-५०
१०. कर्म-रहस्य ... २-५०
११. केनोपनिषद् ... १-५०
१२. ईशावास्योपनिषद् ... १-००
१३. सप्तशती ( दुर्गा ) गीता, सजिल्द ... ३-००
,, दफ्ती जिल्द ... २-२५
१४. सदाचार-प्रश्नोत्तरी ... ०-३७
१५. व्रतोत्सव-कौमुदी ... १-३७
१६. हिन्दू-संस्कृति-समीक्षा ... ०-५०
१७. धर्म-प्रवेशिका ... ०-७५
१८. पूजा-प्रार्थना ... ०-६२
१९. गायत्रीमंत्र-टीका ... ०-२५
२०. आचार-चन्द्रिका ... १-००
२१. कन्या-शिक्षा-सोपान ... ०-२५
२२. गजेन्द्र-मोक्ष ... ०-३७
२३. महिला-प्रश्नोत्तरी ... ०-५०
२४. व्रतोत्सव-चन्द्रिका ... ५-००
२५. धर्माधर्म-प्रश्नोत्तरी ... ०-२५
२६. सुलोचना ... ०-६२
२७. तीर्थ और देवपूजन-प्रश्नोत्तरी ... ०-२५
२८. स्मरणी ... ०-६२
२९. स्त्री-पुरुष विज्ञान ... ०-३७
३०. श्राद्ध और परलोक-विचार ... ०-३७
३१. धर्म-विज्ञान प्रथम, द्वितीय, तृतीय, ५) ४) ४-००
३२. श्रीमद्भागवत, एकादश स्कन्ध ... ३-५०
३३. सती धर्म और योगशक्ति ... ०-३७
३४. अन्तःकरण-विज्ञान ... ०-७५
३५. निर्मूल आक्षेपोंका उत्तर ... ०-३७
३६. परलोक-प्रश्नोत्तरी ... ०-२५
३७. श्रीमद्भगवद्गीता प्रथम भाग ... ४-००
,, ,, द्वितीय भाग ... ३-५०
३८. मनुष्य-धर्म ... ०-३७
३९. धर्मकल्पद्रुम प्रथम खण्ड ... ६-००
,, द्वितीय खण्ड ... ३-००
,, तृतीय ,, ... ३-५०
,, चतुर्थ ,, ... ५-००
,, पञ्चम ,, ... ३-५०
,, षष्ठ ,, ... ४-००
,, सप्तम ,, ... ३-५०
,, अष्टम ,, ... ४-००
४०. प्रवीण दृष्टिमें नवीन भारत ( प्रथम खण्ड ) २-००
,, ,, ( द्वितीय खण्ड ) २-००
४१. नवीन दृष्टिमें प्रवीण भारत ... १-२५
४२. साधन-चन्द्रिका ... १-७५
४३. शास्त्र-चन्द्रिका ... १-७५
४४. धर्म-चन्द्रिका ... १-६५
४५. पातञ्जल-योगदर्शन ( हिन्दी भाष्य ) ... ३-००
४६. कर्ममीमांसा-दर्शन ( सम्पूर्ण ) ... १२-००

**व्यवस्थापक : वाणी-पुस्तकमाला, आर्यमहिला हितकारिणी महापरिषद्, जगतगंज, वाराणसी**

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश (मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः (जनवरी-अङ्कतः) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका (टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५ सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ४८

❀

अङ्कः ९

❀

सम्पादकः
गो० न० वैजापुरकरः

❀

सितम्बर
१९७२

❀

वार्षिक-मूल्यम्
५) रूप्यकाणि

❀

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्

❀



## जय कालिके !

•

जय विश्वसर्ग - कवलीक्रियाकृते
जय कालिके प्रणतलोकपालिके ।
जय दग्धमारधृतनेमिविग्रहे
जय कार्तिकेयकृत - सर्गशोभते ॥ १ ॥
जय कुण्डलीकृत - करालकार्मुके
जय तोमर - व्यसनवीत - वैरिके ।
जय चन्द्र - चामर - सुचारुमूर्धजे,
जय तिग्मरश्मिविधुवह्निलोचने ॥ २ ॥
जय कालिके ! कृत-करालतालिके,
जय नृत्त-वृत्त-परिवृत्तशालिके ।
जय भीत - भक्तनिकुरम्बपालिके
जय शस्त्रशस्त-बहुशास्त्रचालिके ॥ ३ ॥
जय धाव धावदरिवार - वारिके
श्रित - भूमि-भूमिधरदारदारिके ।
जय पञ्जराश्रितकिशोरशारिके
जय विद्विषद् - दहरदेहदारिके ॥ ४ ॥

—पण्डित श्री रघुनाथ शर्माणः

# अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

४८ वर्षे ] वाराणसी, भाद्रपदः २०२९ वै० : सितम्बर १९७२ ई० [ ९ अङ्कः

## गीर्वाण-वाणी

शाणीभूता निगमकनकाऽनर्घ्य - भाव - प्रमाणी-
कारे वाणी भवति विदुषां या विवादाहवेषु।
पाणिन्यस्ता प्रभवति परं सा तथा नो कृपाणी,
पाणिन्यस्ता वशयति यथा चारुगीर्वाणवाणी॥

—श्री बटुकनाथशास्त्री खिस्ते

विद्यास्थानानि याष्टादशसलिलनिधीन् भूरिवाधाय मन्थात्,
तेषां साहित्यविद्यामृतमपि निखिलार्थप्रदं संबिभर्ति।
सेतुर्भूत्वा ततोऽस्मिन्नपुरुषपुरुषद्वन्द्वतीर्थे स्थितात्मा,
सा काचित् कल्पवल्ली जयति बत नृणां धाम्नि गीर्वाणवाणी॥ १॥
केचिज्जातिपरायणाः कतिपये क्षेत्रीयताकश्मला,
द्रव्यं ब्रह्म परे जपन्ति हहहा केचिद् वयोवीक्षकाः।
इत्येवं च्युतसंस्क्रिया हृदि परं क्षुद्रा यदाधीतिनः,
कं वा सम्प्रति या तु शेवधिरसौ गीर्वाणवाणीवपुः॥ २॥
बालान् प्राथमिकानपि द्विजवराः सर्पिष्टमार्थं भृशं,
केचिट्टोः किमितीत्यनेकदिवसानध्यापयन्तेऽद्य ये।
तेभ्यः पाटलकण्टकानपि समं पुष्पैर्गणेशोपरि,
क्षिप्नुभ्यो गिरिजेव किं न कुरुतां गीर्वाणवाणी घृणाम्॥ ३॥

—श्री रेवाप्रसादो द्विवेदः

भाषाप्रश्नानुरोधा - दुपहतहृदयोद्गार - सौरस्यसारं,
प्रागुज्झित्वैकतायाः प्रबलगुणगणाबद्ध - सख्यप्रसारम्।
दाक्षिण्यं वामतायाः प्रकटितमसकृद् विप्लवात् सौमनस्यं,
हत्वा दुर्ललसं तं ग्रथयतु परमे प्रेम्णि गीर्वाणवाणी॥ १॥
अन्योऽन्यं जातवैरं नयनिपुणजनस्वार्थसम्पादयित्र्या,
वाचा हिंसा-व्यलीकव्यवहृतिविषये व्यक्तसौजन्यरीतिम्।
निर्लज्जं नीचकार्येष्वनुरतिमनिशं सर्वथोद्बोधयन्तं,
देशं क्लेशप्रवेशादवतु भगवती कापि गीर्वाणवाणी॥ २॥

—श्री रतिनाथ झा

# श्रीमहर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

( अष्टादश-सर्ग )

९१. जगद्धरं धर्ममथेश्वरं च न मन्वते मे मनुजाः कदापि ।
ते सन्ति नूनं पशवो नृरूपाः किं वा श्वसन्तोऽपि मृता भवन्ति ॥
९२. जीवाः समे स्थावरजङ्गमा भृशं सञ्चालिताः प्राकृतिकेन धर्मतः ।
एतं निरादृत्य यशस्विनोऽपि चेत् तिष्ठन्ति ये ते पशुतोऽपि गर्हिताः ॥
९३. धर्मान्तरं यो भुवने प्रबाधते, प्रयुद्ध्यते हन्त तथाऽन्यधर्मिभिः ।
अधर्मभृद् धर्मसमाह्वयोऽप्यसौ, विगर्हणीयो विबुधैर्भवेद् ध्रुवम् ॥
९४. सनातनः सर्वसमन्वयान्वितः प्रचारणीयो भुवने स शासकैः ।
धर्मं सुरक्षन्ति नरेश्वराश्च ये तान् सर्वतो रक्षति सोऽपि रक्षितः ॥
९५. क्षितीश्वरे धर्मिणि धार्मिकी प्रजा पापे च पापा भुवि सा समे समा ।
प्रजा तु राजानमिहानुवर्तते राजा यथा स्याद्धि तथा भवेत् प्रजा ॥
९६. विधिश्च वैवाहिक आर्य - पुरुषै - र्मतोऽस्ति धर्मो ननु दूरदर्शिभिः ।
परन्तु कैश्चिल्लघुबुद्धिमानवै - रुदर्करम्योऽपि विगीयतेऽधुना ॥
९७. क्रियामिहैकां हि गुणत्रयाश्रिता मतिर्मनुष्यस्य विभिन्नरूपधिक् ।
हितां तथैवाप्यहितां च मन्यते, सदोषदृष्टिर्बत चैकवस्त्विव ॥
९८. प्रवृत्ति निवृत्ति च कार्यं ह्यकार्यं भयं चाभयं निवृत्तिं बन्धनं च ।
मतिर्वेत्त्यधर्मं च धर्मं यथार्थं मता सात्त्विकी सैव कल्याणकर्त्री ॥
९९. यथा मानवः स्वं हितं वाऽहितं वाऽविधेयं विधेयं त्वधर्मं च धर्मम् ।
ऋतं चानृतं वाऽयथावत् प्रपन्नौ मता राजसी सा मतिस्तत्त्वविद्भिः ॥
१००. अधर्मं हि धर्मं सदा मन्यते या दरीदृश्यते वैपरीत्येन सर्वम् ।
तमोग्रस्तताया: प्रभावेण नित्यं मता सा मतिस्तामसी वेदविज्ञैः ॥

( क्रमशः )

सम्पादकीयम्

# प्रस्तावितः संस्कृतायोगः, प्रदेशशासनञ्च

अचिरादेव विंशत्युत्तरशतसङ्ख्यकैः भारतीय-लोकसभा-सभ्यैः प्रायो निखिलभारतीय-राजनयिक-दलानुगैः भारतराष्ट्र - प्रधानमन्त्रिभ्य एकं प्रतिवेदनं प्रस्तूय सत्वरं नूत्नं सर्वसमर्थं 'संस्कृतायोगमे'कं सङ्घट्टयितुं साग्रहं प्रार्थितम्। प्रतिवेदनेऽस्मिन् तैः स्पष्टमुक्तं यत् सकलभारतीय-भाषाजनन्याः संस्कृत-भाषायाः पादशताब्दिमिते दीर्घतमे स्वातन्त्र्योत्तर-काले यावान् समुत्कर्षः समपेक्षितः समनुध्यातश्च आसीत्, भारतीयता - जीवातु - जीवनैरस्माभिः, ततो न्यूनतरोऽपि तदुत्कर्षो व्यवहारपथि नासाद्यते। प्रतिदिनं तस्या बहुमुखीनो ह्रास एव अक्ष्णोर्विषयीक्रियते। चिरात् प्रचलिताः संस्कृतपाठशालाः अहरहो विलयं यान्ति, छात्राश्च अस्याः वैमुख्यं भजन्ते। भाषाज्ञान-विषयेऽपि न काचित् समुल्लेख्या प्रगतिर्विलोक्यते। शैक्षणिक्यां त्रिभाषा-योजनायां यत्रेयं परिरक्षणीया, तत्र महती समुपेक्षा समनुभूयते। निखिलभारतीयभाषाणां स्रोतस्विन्याः कामदुघाया अस्या देववाण्या इत्थं समुपेक्षणं नूनमात्मघातायितं मन्यते नितान्तदून-चेतोभिः तटस्थैः भारतीपुत्रैः। अतः सप्रश्रयमस्माभिः काम्यते यन्नवसङ्घट्ट्यमान आयोगोऽयं संस्कृतोन्नयन-परिपन्थिनं विषयजातं दिवाकरेण गाढान्धतमसमिव सर्वथा विलोप्य संस्कृतभाषा-विद्याप्रचारस्य कार्य-कारिण उपायान् सूचयन् शासनतश्च तान् कार्यान्वयी-कारयन् देवगिरमिमां सर्वतः परिपात्विति।

संस्कृतविषयकं वृत्तमपीदं मुमूर्षुषु संस्कृततपस्विषु क्षणमाश्वासं सञ्चारयति। इतोऽन्यदपरं वृत्तं 'संस्कृत-दिवस'-सम्बद्धमपि तेष जीवनस्य क्षीणसत्यामाशां [illegible] शिक्षां विदधाति। ज्ञायत एव संस्कृतप्रणयिभिर्यत् कति-पयैर्वर्षैः संस्कृताकृष्टचेतसां कतिपय - केन्द्रीयशासनाधि-कारिणां प्रेरणया प्रतिवर्षं श्रावणीपूर्णिमादिने भारतस्य विभिन्नप्रदेशेषु 'संस्कृत-दिवसः' समायोज्यते। अतिचिरं गुरुकुलेषु उत्सर्जनोपाकर्मपूर्वकं समारभ्यमाणस्य वेदारम्भणस्य प्रतीकरूपेण समायोज्यमाने संस्कृत-दिवस - समारोहे ऐषमे भारतराजधान्यां तत्र भवतां केन्द्रीय-शिक्षामन्त्रिणां श्री नूरुल हसन महाभागानाम्, केन्द्रीयमन्त्रिणां काश्मीरनरेश श्री कर्णसिंह महोदया-नाञ्च भाषणानि वृत्तपत्रपाठकैर्ज्ञायन्त एव। तेषु भाषणेषु विशेषतः शिक्षामन्त्रिभाषणे यावान् संस्कृता-नुरागः, तत्समुन्नयनकामना च समालक्ष्यते, नूनं संस्कृत-प्रणयिनां तदाश्वासनस्थानम्। तैः स्पष्टमेवोक्तं यदहं संस्कृत-समुन्नयनाय दृढं प्रयतिष्ये इति।

किन्तु संस्कृतप्रणयिन इदमपि जानन्ति यदस्माकं नेतारः शासनाधिकारिणः समये समये आत्मनः संस्कृत-प्रेम इत्थं प्रदर्शयन्तोऽपि व्यवहारविधौ तत्परिणमयितुं कैश्चिद् अनिर्वचनीयहेतुभिः प्रायो विफला भवन्त्येव। स्वर्गीय प्रथम-राष्ट्रपति देशरत्न डॉक्टर राजेन्द्र-प्रसाद महोदयान् आरभ्य सर्वेषामपि भारतीय-राष्ट्र-नायकानामियमेव स्थितिः। यदि तैर्यावत् संस्कृतप्रेम प्रदर्श्यते, तस्य शतांशमपि तत् कार्यरूपतां नीतं स्यात् तदाऽद्य संस्कृतं सुविशाल-कल्पवृक्षायितं दृष्टं स्यात्। यतो हि संस्कृतबीजं किल ऊषरेऽपि क्षेत्रे पतित-मङ्कुरयति। प्रसङ्गेऽस्मिन् ऐषमे संस्कृतदिवसे बिहार-प्रदेश-मुख्यमन्त्रिभिः माननीयैः श्री केदार पाण्डेय महा-भागैः [illegible] समनध्याय सस्पष्टं घोषितं

यदस्माभिः हाईस्कूल - कक्षापर्यन्तशिक्षणे संस्कृतमनिवार्य-पाठ्यविषयत्वेन विधास्यते इति। एतदर्थमेकत्र ते सर्वेषां भारताभिजनानां संस्कृतप्रणयिनां सादरं साधुवादभाजः, तथैवापरत्र ते सर्वेषां संस्कृत-गौरवगायकानां केन्द्रीय - प्रादेशिक - शासनसूत्रधाराणां कृते निर्दशनभूता अपि। यदि केन्द्रीय - शासनसूत्रधाराणां संस्कृत-गौरवगानं समये समये आतन्यमानं किमपि वास्तवं तत्त्वं बिभर्ति चेत्, अयं समुपस्थितस्तेषां पुरतः संस्कृतायोग-सङ्घटन-प्रस्तावरूपोऽवसरः। सर्वेषु क्षेत्रेषु स्वातन्त्र्य-पादशताद्वयामभूतपूर्वां प्रथमां क्रान्तिमातन्वतां भारतराष्ट्र - प्रधानमन्त्रिणामप्ययं निकषावसरो यत्तैः सर्वदलीय-लोकसभासभ्यानां प्रस्तावोऽयमचिरात् शुभोद्घोषणेन स्वीकरणीय इति। नूनं वयमाशास्महे यत् लोकोत्तरं साहसमात्मनि धारयन्त्योऽस्माकं प्रधानमन्त्रिमहोदयाः श्री इन्दिरा गान्धि महाभागा अत्र विषयेऽपि स्वात्मगौरवानुरूपमेव निदर्शनमुपस्थापयिष्यन्तीति।

प्रसङ्गेऽस्मिन् वयम् उत्तरप्रदेश - मुख्यमन्त्रिणः श्री कमलापति त्रिपाठि महोदया अपि सादरं सौत्सुक्यञ्च स्मर्यन्ते। उत्तरप्रदेशः किल यथा मधुरस्य इक्षुदण्डस्य खनिः, तथैव मधुरतरायाः संस्कृत-गिरोऽपि मूलस्रोतम्। स्रोतःप्रदेशेऽस्मिन् यावत् संस्कृतं समुन्नतं भवेत्, तदनुपातेनैव अखिले राष्ट्रे संस्कृतस्रोतस्विनी प्रवाहिता स्यात्। इत्थमखिले राष्ट्रे संस्कृतस्रोतस्विन्याः पूरस्य बीजमुत्तरप्रदेश एव। पक्षान्तरे राष्ट्रे संस्कृत-स्रोतस्विन्याः स्रोतःकार्श्यस्य बीजमपि उत्तरप्रदेश एव। चिरकालत एव संस्कृत-क्षेत्रे नैकविधानां बृहत्तर - संस्कृतग्रन्थानां सार्वविषयाणां संस्कृतविदुषाञ्च विपुला सस्यसम्पद् उत्तरप्रदेशेनैव राष्ट्राय उपायनीकृता। संस्कृतविद्यामातृगृहायमानया वाराणस्या जन्मत एवायं प्रदेशः समलङ्कृतः। सौभाग्यात् प्रदेशस्यास्य शासनसूत्रं सङ्ख्यया कालेन च वाराणसी - वास्तव्यैरेव नेतृभिः स्वायत्तीकृतं क्रियते च। एवंस्थितेऽपि प्रदेशेऽस्मिन् संस्कृतसमुन्नयनस्य यादृशी समुपेक्षा दृश्यते, मन्ये तादृशी प्रदेशान्तरे कुत्रापि नास्ति। नवनिर्मितैः आन्ध्रप्रभृति - प्रदेशैरपि संस्कृत - समुन्नयनविषये यावत् विधीयते, कण्ठघोषं कृत्वाऽपि उत्तरप्रदेशानेन एवंगुणविशिष्टेन न क्रियते, किमतः परं विधुरम्?

संस्कृतस्य समुन्नयनं संस्कृत - समुपासकानां प्रोज्जीवनपूर्वकमित्यत्र न संशीतिलेशः। त एव संस्कृत - समुपासकाः प्रदेशेऽस्मिन् निर्ममपुपेक्ष्यन्ते। आन्ध्र-राजस्थान - मध्यप्रदेश - हरियाणा - पञ्जाबादि-प्रदेशेषु सर्वं विहाय संस्कृतं भजतां विदुषां कृतेऽपि सर्वसामान्य - शिक्षास्तरीण - वेतनमान - महर्घताभृति-विश्रामवेतनादिमाध्यमेन सर्वविधं सौविध्यं वितीर्यते। राजस्थाने पुनः पृथक् संस्कृतनिदेशालयोऽपि प्रचलति। किन्तु उत्तर-प्रदेशे प्रायः पञ्चसहस्रमिताः संस्कृत-विद्यालयाध्यापकाः बुभुक्षाविकलाः स्वप्नेऽपि उदरपूर्तिं न पश्यन्ति। आसीदत्र एतासां संस्कृतपाठशालानां सङ्ख्या प्रायः चतुर्दशशतात्मिका, या संप्रति ह्रसन्ती नवशतसङ्ख्यामपि नातिक्रमति। शासनमेताभ्यः प्रतिशिक्षकं शतमुद्रामितमपि मासिकमस्मिन् महति महर्घताकाले दातु न प्रभवति। सत्येवं ये पूर्वत एवास्मिन् घोरे विपज्जाले (?) ग्रस्ताः, तैस्तु कथमपि शिष्ट वयोऽतिवाह्यते। परं भविष्यति केऽप्यत्र प्रवेष्टुं जीवनं नरकायितं च विधातुं नाकाङ्क्षन्ते। वर्ष-

चतुष्टयेभ्यः 'प्रादेशिक-संस्कृत-विद्यालयाध्यापक-समित्या' नैकैरुपायैः प्रदेशशासनाधिकारिणः प्रतिबोधिताः प्रार्थिताश्च यदेतेषां पञ्चसहस्रमितानां संस्कृत - विद्यालयाध्यापकानां कृते न्यूनातिन्यूनः सर्वसामान्य - शिक्षानियमानुसारी समुचितो वेतनक्रमः, महर्घता - भृतिः विश्रामवेतनञ्च प्रदेयम्। संस्कृत - सम्ब

समस्त - समस्यानां समाधानाय स्वतन्त्र एकः संस्कृत - निदेशालयश्च स्थापनीयः। समित्या प्रादेशिक - वेतनायोगस्य समक्षं विषयेऽत्र साक्ष्यमपि प्रदत्तम्, प्रत्यक्षं नै कवारं मुख्यमन्त्रिणः प्रार्थिताः, तथापि अद्यावधितैरत्र किमपि न कृतमिति महान् खेदावसरः। यदि नव प्रस्तावितोऽयं संस्कृतायोगः सङ्घट्ट्येते, तेन च बलात् प्रति-प्रदेशशासनं संस्कृतोन्नयन-कर्मणि नियोज्येत, ततो यदि उत्तरप्रदेशेना किमपि क्रियेत नेतश्च किमपि महत्त्वास्पदं न भवेत्। न च तेन संस्कृत - मातृगृहगौरवावहस्य प्रदेशस्य काचित् प्रतिष्ठा। तदा किल यदा-कदा संस्कृतगौरवगायकानां प्रदेश-शासनसूत्रधाराणां सा गौरव-गाथा नक्राश्रु-कल्पैव परिगणिता स्यात्। अतोऽस्माभिः नामग्राहं प्रदेशमुख्यमन्त्रिणः श्री कमलापति त्रिपाठि पादाः प्रार्थ्यन्ते, ये च सम्प्रति प्रदेश - शिक्षामन्त्रिपदमपि बिभ्रति, यत् तेऽवसरे एव प्रदेशीय-संस्कृतविद्यालयाध्यापकानां पूर्वोक्ताः प्रार्थनाः सफलीकृत्य आत्मनः संस्कृत-मातृगृहाभिजनत्वम्, विद्वत्कुल - जन्मगौरवं स्वस्यापि प्राच्यविद्या - वैदुष्यं सफलयन्त्विति। संस्कृतायोगस्तु शासनमाध्यमेन यत्किमपि विषयेऽत्र क्रियताम्, स्वयं विताडिताः शोषिता उपेक्षिताश्च संस्कृत - विद्यालयाध्यापकाः इतः परं धैर्य-विवेक-धारणेऽक्षमा जायेरन्, तदा सर्वस्यास्य दोषस्य दायित्वं प्रदेशशासकानामेव भवेत्. इति वयं सप्रश्रयं सूचयामः।

अस्माकं प्रदेशशासकाः संस्कृत - समुन्नयने स्वीयं महत्तरं पौरुषं वाराणसेय - संस्कृतविश्व-विद्यालयस्य परिचालनं निदर्शयन्ति। किन्तु संस्कृत - प्रणयिनां नैतत्तिरोहितं यदयं संस्कृत - विश्वविद्यालयः स्वीयान्तरिकाऽव्यवस्थया, अनधिकारि - कार्यकर-सम्मर्दन, व्यक्तिगत - राग-द्वेष स्पर्धादिदूषितदोषैः घोरतर - सङ्कुचित-साम्प्रदायिकभावैः अमर्यादमस्थान-धनापव्ययैः साक्षात् स्वीयसङ्घटनघटकानामपि तोषाय न जायते, तदा दूरे स्थितं समस्त-संस्कृत-समुपासकानां तोषेण। दौर्भाग्यात् विद्याया आलयोऽयं विद्यायाः लयरूपतां बिभ्रत् दरीदृश्यते। अचिरादेव गीर्वाणवाग्वर्धिनीसभाया विशेषाधिवेशने विश्वविद्यालयस्यास्य प्रतिकुलपतिभिः डॉ० विभूति-नारायणसिंह देवैः सङ्केतिता एतदीया दुरवस्था नूनं मर्मभेदिनी। अचिरादेव सम्पन्ने विश्वविद्यालयीय-विद्वत्परिषदधिवेशने सम्पन्नमकाण्डताण्डवं तत्संस्थाया निखिलामपि प्रतिष्ठां समुच्चयेन विलोपयति।

प्रदेशीय संस्कृतविद्यालयाध्यापकानां सौविध्याधान-विषये विश्वविद्यालयस्यास्य एकमेव निदर्शनं यद् विगत-वर्षद्वयपूर्वतन्याः परीक्षायाः अपि पारिश्रमिकं सुबहु प्रार्थितेऽपि तेनाद्यावधि न वितीर्यते। तदर्थं प्रार्थयितुं गच्छन्तो विद्वांसस्तत्रस्थैरधिकारिभिः अवमन्यन्ते। अपि नाम विश्वविद्यालयेन स्वीयपदाधिकारिणामेक-मासिक मपिवेतनमवरोधितम्? 'विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसाम्प्रतम्' इति हि अभियुक्तानां वचः। अतो वयं सच्छायाकाङ्क्षया स्वयमेव सङ्घट्टितस्य विश्वविद्यालयस्य स्वप्नेऽपि अहितं न कामयामः। किन्तु यदा प्रार्थनस्य सीमा अतिक्रान्ता भवति, तदा मध्ये गङ्गं निमज्जन्त्या कपिजायायाः स्कन्धाधिरूढ-पुत्र-मोहत्यागेन स्वात्मरक्षणवत् स्वात्मरक्षा मूर्ध्नि प्रतितिष्ठति। प्रदेशशासनस्येदमनुपेक्ष्यं कर्तव्यं यद् दुर्भगा संस्कृतविश्वविद्यालयस्येयं महती अव्यवस्था सत्वरं परिष्करणीया, तत्र च प्रतिवर्षं षोडशलक्षमित-धनस्य जायमानोऽपव्ययः सद्व्ययत्वे परिणमनीयः, विश्वविद्यालयश्च यथार्थतः संस्कृतपाठशालानां केन्द्रीय - संस्थात्वेन परिणमनीयः। सहैव संस्कृत-विद्यालयाध्यापकानां कृते तदीयसङ्घटनप्रस्तावानुसारं मानवसुलभा सुविधा देया। इत्थमेव संस्कृत-

# कालिय-विजय-काव्यम्

—श्री वायुनन्दन पाण्डेयः—

[ साहित्यविभागाध्यक्षः—काशिक विश्वनाथ-गुरुकुल-महाविद्यालयस्य ]

गोविन्द-पादाब्जरजः पुनीतं,
गोपाङ्गना-केलिकुटो-रीतम् ।
गोलोक - लोकेशयवासरम्यं,
गो-विप्र- वृन्दारकवृन्दवन्द्यम् ॥ १ ॥

वृन्दावनं धाममनोऽभिरामं,
कलिन्दजा-तीरतं प्रकामम् ।
भूमण्डलामण्डन - नन्दनाभं,
श्रीराधिकाराधितपद्मनाभम् ॥ २ ॥

मातृगृहेऽस्मिन् प्रदेशे संस्कृतं रक्षितं सत् परेषामादर्शाय भवेत् ।

प्रसङ्गेऽस्मिन् उत्तर प्रदेशशासकैः सह अन्यप्रदेशशासका अपि प्रार्थ्यन्ते यद् भवद्भिरपि बिहारप्रदेशमुख्यमन्त्रिणां सद्घोषणं दृष्ट्वा स्वीये प्रदेशे हाईस्कूल-कक्षापर्यन्तं संस्कृतशिक्षणमनिवार्यं विधेयम् । तदैव तेषां संस्कृतगौरवगानं तात्त्विकं स्वीक्रियेत । अन्यथा तत् नक्राश्रुकल्पम्, अवसरवादितायाश्च परं निदर्शनं मन्येत ।

नव-संस्कृतायोग-सङ्घट्टनस्यायं प्रस्तावोऽपि केन्द्र-शासनेन कथमपि अनुपेक्षणीय इत्यप्यस्माकं दृढं मतम् । यतो हि भारतं राष्ट्रं विश्वमहाराष्ट्राणां पङ्क्तौ अनयैव संस्कृत-संस्कृत्या अग्रस्थानं प्राप्तुं प्रभवति । आधुनिक-विज्ञान - सम्पत्त्यादिविषयेषु भारतराष्ट्रतो नैकानि राष्ट्राणि अतिशयं बिभ्रति । तैः किल अस्माकं राष्ट्रं कदापि तेभ्यः स्पर्धितुं न प्रभवेत् । केवलं भारतीया संस्कृतिः तद्वाहनं संस्कृतञ्चैव एतादृशं वस्तु यद् वैश्विके एतदतिरिक्ते कस्मिन्नपि राष्ट्रे न दृश्यते । विश्वशान्तेर्विश्वबन्धुत्वस्य उपनिषद् अत्रैव निबद्धा । 'सर्वे किल अमृतस्य पुत्राः, सहजं हि तेषां भ्रातृत्वम्, शुनि चैव श्वपाके च पण्डिताः समदर्शिनः, सर्वे भवन्तु सुखिनः' इत्याद्याः कामनाः सर्वप्रथममनेनैव भारत-राष्ट्रेण समुद्घुष्टाः । अतोऽत्र पुनरस्माकं पूर्वजैः कामनानामासां मूर्तरूपतासम्पादनाय स्वात्मनः प्राणा अपि हुताः । तेषामेव वयं वंश्याः, उत्तराधिकारिणश्च । परवर्तिभिः पूर्ववर्तिनां गुणा उन्नेया इति हि नियमः । अस्माभिः पुनर्यदि तेषां ये गुणास्त एव संरक्ष्यन्ते तदपि बहु स्यात् । अतः भारतराष्ट्र-प्रधानमन्त्रिणः प्रार्थ्यन्ते यत्तैः प्रस्तावितोऽयं संस्कृतायोगः सत्वरं सङ्घट्टनीयः, सर्वसमर्थश्च विधेयः । राष्ट्रभाषाशैली-भूतायाः तथाकथितायाः उर्दूभाषायाः कृते समितिं परिकल्प्य तस्याः प्रायोऽष्टादशसु अधिवेशनेषु तदुन्नयन-चिन्तने महदुत्साहं प्रदर्शयत् तेषां शासनं यदि सकल-भाषामातृभूतायाः संस्कृतभाषायाः कृते कीदृशमपि उपेक्षाभावं दर्शयेत्, तदा इतिवृत्तं कथमपि तान् क्षन्तुं न प्रभवेत् । भगवन्तं प्रार्थयामो यत्सोऽस्माकं प्रधानमन्त्रिणमनया सद्बुद्ध्या योजयत्विति ।

सर्वर्तुपुष्पाढ्यतमं विशालं,
नवाम्बुदश्यामतृणान्तरालम् ।
प्रफुल्ल-हिन्ताल - तमाल - ताल-
मनोकहामूलवृताऽऽलवालम् ॥ ३ ॥

यन्मध्यवर्ती विटपी करीरो,
ध्रुवं मुनिः कोऽपि विवेकधीरः ।
वर्षातपक्लान्तिसहोऽपलाशी,
क्षमाश्रितः श्यामपदाभिलाषी ॥ ४ ॥

यत्रोद्गतः श्रीललनाललाम-
लावण्यलीलालव-माप्तुकामः ।
नीपो मुनिः श्यामपलाशनद्धः,
पिशङ्गवासा सुमनोभिरिद्धः ॥ ५ ॥

गो - गोप - गोपीजनहृद्य-हृद्यं,
व्रजौकसां भोग्यमथो पशव्यम् ।
विलक्षणं दृश्यमिहानवद्यं,
गन्धर्व - विद्याधर-सिद्धसेव्यम् ॥ ६ ॥

पिनाकिनः पाशुपतास्त्रभिन्न-
जलन्धरोर्ध्वाङ्गमशेषलूनम् ।
यदङ्गसंश्लेष - सुधा - समुन्नं,
पूर्णेन्दुतुल्यं पुनरप्यखिन्नम् ॥ ७ ॥

पतिव्रता सा पुरुषोत्तमेन,
विमोहिता श्लिष्टगला छलेन ।
वृन्दा जहौ यत्र तनुं क्षणेन,
तदाभिधानं वनमाप तेन ॥ ८ ॥

वृन्दारविन्दाक्षमवाप नूनं,
विनोदयन्ती स्वमनोऽतिदूनम् ।
सौहार्दमार्द्रं ननु तोलयन्ती,
वक्षोऽधिरूढा तुलसी भवन्ती ॥ ९ ॥

श्यामां च कृष्णां परितो लसन्तीं,
नरोऽवनिज्यात्रस्वकं पुनन्ति ।
गुणान् गृणन्तस्तुलसीं स्तुवन्ति,
क्षीरोदजाजानिपुरीं व्रजन्ति ॥१०॥

सुवर्ण - सोपान - परम्पराभि-
स्ततं सरो यत्र निरन्तराभिः ।
विराजते वारिजराजि - गुञ्जद्,
द्विरेफमालाभृत - शुभ्रसम्पद् ॥११॥

तरुच्छद - श्यामवपु - र्दधानं,
पीतं सुमं पीतपरं वसानम् ।
विशेषशोभाकर - पद्मपृक्तं,
वनं रमेशो वनमालयाक्तम् ॥१२॥

सदागति - प्रेरित - शाखिनृत्यं,
सम्पाद्य यत्कीचकवेणुकृत्यम् ।
श्रीराधिका - कुञ्ज-लतासतृष्णं,
कलापिपिच्छेन कलापि कृष्णः ॥१३॥

यत्केतकी - पुष्पसवर्णनाल-
प्रियङ्गु - संसक्त-तमालमाल-
च्छलात् स्वयं श्रीवृषभानुजाक्त-
नन्दात्मजः क्रीडति भावरक्तः ॥१४॥

यत्रेन्द्रनीलाभ - नवप्रवाल-
मालावृता जम्बुरसालसालाः ।
बिल्वार्जुनाश्वत्थ - वटप्रियाल-
निम्बार्क-नीपासन-कन्दरालाः ॥१५॥

फलानि पुष्पाणि च पल्लवे शये,
निधाय सत्कारविधौ मनोमये ।
खगारवाः स्वागतमुच्चरन्ति,
पान्थार्चनेऽर्घ्यं सततं सृजन्ति ॥१६॥

भजन्ति यच्चम्पकजातिकुन्द-
बन्धूकवेणीगणिकाऽरविन्द-
शेफालिका - केतक - कोविदार-
जयातिमुक्ताऽर्जक-सिन्धुवाराः ॥१७॥

खगा मृगा वत्सतराश्चरन्ति,
सुपुष्पिता यत्र लता लसन्ति ।
नगाः समन्तात् फलिनो नमन्ति,
गोवर्धनं तं सुजनाः श्रयन्ति ॥१८॥

यद्योगिनो ब्रह्म परं गृणन्ति,
निरञ्जनं निर्विषयं वदन्ति ।
ततः सतोऽस्यास्ति किल प्रसूति-
स्तद्वासिनां ब्रह्मसुखानुभूतिः ॥१९॥

तदेकदा दृष्टिपथं विधाय,
निकेतनाहँ मनसाऽवसाय ।
अतर्कितोत्पात - निपातरुद्धाः,
नन्दं समासाद्य विवेकवृद्धाः ॥२०॥

सम्मन्त्रयामासु - रजस्रतोक-
समेधितापत्ति - प्रवृत्तशोकाः ।
गन्तव्यमस्माभिरिता - ऽविदूरं,
वृन्दावनं बालतृणालिपूरम् ॥२१॥

अथोपनन्दः समुवाच नन्दं,
त्वदात्मजोत्पत्तिदिनादमन्दम् ।
औत्पातिकं दुःखमुपैति बाल-
महो मुकुन्दो विधुनोति कालम् ॥२२॥

यत्पूतनास्तन्यमुपाश्य नाशं,
गतो न वाऽनः पतनाद्विनाशम् ।
तदच्युतो रक्षति बालमेतं,
निसर्गतो रूपगुणाभ्युपेतम् ॥२३॥

दैत्यस्तृणावर्तं उपेत्य वासं,
बालं समाहृत्य विचिन्त्य नाशम् ।
नभोगतस्तेन गले गृहीतः,
सितः स्वजाले स्वयमेव भीतः ॥२४॥

अव्यक्तरावः प्रविकीर्णकेश-
श्चेष्टाविहीनो विकरालवेषः ।
विशीर्णसर्वावयवः शिलायां,
पपात हिंस्रो गगनादिलायाम् ॥२५॥

तद्देवदेवस्य महानुभावो
भूतिं विधत्ते नु शिवाऽनुभावः ।
यन्नव्यसुभूंमितले निपाता-
दधोक्षजानुग्रह एव पाता ॥२६॥

माकिर्मृतः प्राप्य द्रुमाऽन्तराल-
मुलूखले बद्ध इयाय बालम् ।
बालप्रभावं गदितुं न वाऽलं,
नारायणः किं विजिगाय कालम् ॥२७॥

यद्गोकुलं नोऽभिजनो निवासः
पयस्विनीनां सरसो विलासः ।
हेयं तथाऽप्यत्र खलस्य सत्ता,
क्षेमं क्व विदन्ति हि दुर्जनात्ताः ॥२८॥

प्रस्तावितस्या - ऽन्यसमर्थनाय,
विचारचारुत्व - परीक्षणाय ।
वाचंयमस्तत्र स गोप आसीत्,
विचारिता वागफला न काचित् ॥२९॥

पथ्यं शिवं शमंकरं विधेयं,
हितेच्छुवाक्यं मनसा न हेयम् ।
इत्थं सुनन्दो मधुरं बभाषे,
को वा क्षमो युक्तवचोनिरासे ॥३०॥

यावद् व्रजं नाभिभवत्यरिष्टं,
विहाय तावद् गमनं वरिष्ठम् ।
त्रासाऽवसादा हृदि नात्र मान्ति,
कुतः शुचाक्रान्तमुपैति शान्तिः ॥३१॥

(क्रमशः)

## मानस-चतुश्शत्युपायनम्

# गोस्वामि तुलसीदासः, तदीयं मानसञ्च

— श्री उमाशङ्कर शर्मा त्रिपाठी —

[ आङ्ग्लभाषा-प्राध्यापकः-काशी-विद्यापीठस्य, वाराणसी ]

**वर्षेऽस्मिन् निखिले राष्ट्रे महाकवेर्महानुभावस्य गोस्वामि तुलसीदासस्य मानस-ग्रन्थनिर्मितेश्चतुश्शती-समारोहो प्रजाजनेन राजतन्त्रेण च भूयसा समुत्साहेन तत्र तत्राऽऽतन्यते। 'छत्रपति-चरितादि'-महाकाव्योपायन-समर्पणेन 'सूर्योदय'-पाठकानां सुपरिचितेन कविवरेणानेन गद्यकाव्यरूपेण गोस्वामिपादानां मानसस्य सुललितं सुसमीक्षितं शब्दचित्रमवतारितं नूनं सहृदयानां तोषाय भवेत्। सहैवानेन प्रकाश्यमानं 'नवश्लोकिमानसम्' नाम अपरं खण्डकाव्यमपि विज्ञैनैकेन शोधच्छात्रेण प्रस्तुतं तेषां मोदाय स्यात्। वयं पुनरेतेषामेव शब्दैः राष्ट्रकवेरस्य पदपाथोजयोः श्रद्धासुमान्यर्पयामहे। —सम्पादकः।**

मूर्धन्यो भक्तानामशेषकीर्तिधनः कविकर्मकुशलानां स्वयमकिञ्चनोऽपि सदाश्रयो विरहिताश्रयाणामुपेक्षितानां पावनः पावनानां गोप्ता भारतीयसंस्कृतेः रक्षिता धर्मस्य निहन्ता स्वार्थदृष्टेरधर्मस्य, संस्थापकः सत्प्रथानामुपकरः सदाचारव्रतानामवधिः परमार्थधियामेकादर्शो रामभक्तानां पाथेयो दुरवधिसंसारवर्त्मनां सेतुर्भवाब्धि - तितीर्षूणां शरण्यः पारतन्त्र्य - विषमूर्च्छितानां सन्धिः सम्प्रदायवैमनस्यवादानां संस्कर्ता तमोनिलीनवर्णाश्रमाणामुल्लासकः धर्मात्मनां प्रेरयिता शुभसङ्कल्पानामुद्धारको दैन्याम्भोधिनिमग्नानां पुण्यश्लोकः सततस्मरणीचरितो रामचरितमानसराजहंसः स्वजनविमण्डितसरयूपारीणवंशः प्रसूजनयशस्यो हुलसीहासो गोस्वामितुलसीदासः केन भारतीयसाहित्यसेविना न ज्ञायते, न मन्यते, न निषेव्यते वा।

मोगलशासने पारतन्त्र्यशृङ्खलनिबद्धे भारते विनश्यमानेषु माण्डलिकनृपाभिधेषु मिथोवैरनिबन्धनेषु राजन्यलोकेषु कुवर्त्मानुरागिषु समाजमूर्धन्येषु निपतिताचारमग्नेषु धर्माचार्येषु विरहितशास्त्र[illegible] ब्राह्मणम्मन्येषु दुर्नीतिपारिप्लवविपद्यमानेषु धर्मपथेषु विकृतिज्वालाप्रधर्षितावस्थासु वर्णाश्रमव्यवस्थासु खण्ड्यमानेषु विश्वासप्रमाणेष्विव देवायतनेषु विध्वंसमानगौरवासु परम्परासु विविधभीतिलोभस्वार्थसंवलितहृदयैः स्वहिन्दुधर्ममुत्सृज्य परधर्माश्रयिभिः विलोभ्यमानेषु संशयसमुद्विग्नेषु विपन्नलोकेषु अयमेको महात्मा भाग्याद् भारतभूमेः पुण्यात् पूर्वजनानाम् अवतीर्णो रामभक्त इव विपदां धन्वन्तरिरिव वर्धमानदोषाणां सहस्ररश्मिरिव तिमिराणां कृतनिश्चयो विचिकित्सायां स्वजीवनं सङ्कल्पयाञ्चकार।

भगवतो रामभद्रस्य चरितमवलम्ब्य सर्वलोकजीवनी सञ्जीवनीव भवरोगविमूढानामुद्बोधिनी हृदयसद्भावानां निर्धूतनिश्शेषनिकृतिरनुत्तमाकृतिः 'रामचरितमानसा'भिधा मौलिमणिः विश्ववाङ्मयानां कौस्तुभं भास्वराणां पीयूषं साहित्यार्णवस्य स्पृहणीयं रसायनं सहृदयानां मर्यादाकाव्यनिबन्धानां भूमिकाऽऽदर्शानां सिद्धिरिव सत्प्रयत्नानां शरणमशरणानां [illegible] निर्मलानां प्रवृत्तिः विपन्नानां घोषो भारत-

संस्कृतेः, शक्तिः निर्वीर्याणां विभातः क्षपाविक्षिप्तानां पूर्तिरिव रिक्तानां कामधेनुरकिञ्चनानां मनोरथाग्रभूमिः सर्वस्तुतालोकदेवतो त्रिलोककालनिषेव्या विरचिता रचनाधुरीणेन महात्मना।

यद्यपि पूर्वमेवाऽऽदिकविना संस्कृते विरचितमेवाद्वितीयं रामायणम्; तथापि विरहितसंस्कृतबोधानां लोकानां कल्याणाय तत्कालोदितविविधदुर्दशाप्रशमाय च नितरामकालजलदमालेव शुभायतिसन्निविष्टा सम्पद्वर्षिणी समभीप्सितमनोरथेव कविभारतो ज्वलत्प्राणं भारतलोकं पुनर्जीवनदेनेव विधिना सञ्जीवमाना विधेरनिवार्यविधानमिव भुवं धारयामास।

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् इति ब्रुवाणः पाराशर्यो यदि भारतं पुरुषार्थचतुष्टयसम्प्राप्तिपरावधिं मनुते, मानसमपि भारतलोकः तदधिकं मन्यमानो नित्यमुपसेवते। अद्यापि नैव कापि मानससमा कृतिः या राजप्रासादे निर्धनकुटीरे च परया भक्त्या निषेव्यते। दैनन्दिनं परःसहस्राः कथावाचकाः असंख्याता मठाधीशाः साधुगणाः साहित्यकाराः नटाः गायकाः विद्वांसः प्रतिदिशं विलुण्ठिताध्यात्मसन्देशे देशे राजार्हभोगं तमेवाश्रित्य भुञ्जानाः सुखेन कालं गमयन्ति। मानसवैदग्ध्यं निकष इव वैदुष्यस्य स्वीक्रियते। अशेषगुणसम्भारस्यास्य शेषोऽपि गुणानुकीर्तने वैशेष्यं नावहति। सरसि सरसे सन्ततमभ्यसितावगाहाऽपि कविमतिः सदानुध्यानपरा लोकादर्शसम्माने। सप्तकाण्डात्मके मानसे तथा सम्बद्धा रामायण-कथा यथा स्वयमेव हृदयतो निसर्गभावेन प्रवहमानेव निर्वृतिं पुरस्करोति, यत्किञ्चित् भारतीयवाङ्मये निर्दुष्टं शास्त्रसमीहितं लोकहितावहं तत् सहजभावेन गुम्फितं स्थाने सम्पूर्णतामादधाति। अविच्छिन्नं कथासूत्रं क्वापि शैथिल्यं न भजते। परवर्ति-संस्कृतमहाकाव्येषु माघ-नैषधादौ प्रायेणानपेक्षितप्रस्तावः निरर्गलविस्तारः प्रथनच्छेदो मोघपाण्डित्यप्रदर्शनञ्च सहृदयानामौचित्यविघातं विदधाति तेषु। दृश्यतेऽस्थानेऽपि महाकाव्यलक्षणलक्षितवस्तुविन्यासाय बद्धपरिकरता। किन्तु मानसे नितरामौचित्यसद्भावसमेविनी वस्तुयोजना। अनन्याधीती संस्कृतवाङ्मयस्य पारदृश्वा देशीयभाषासाहित्यानां समवहितोऽयं भक्तकविः तथा प्रणयति रामाख्यानं यथा पदमपि विपदंकृतं न प्रतिभाति।

लोकदृष्टेरस्य मानसे भक्तानामिव लोकनिरपेक्षा ऐकान्तिकनिस्सङ्गता अत एव समाजवैरस्यप्रसूः स्वात्मपरता नैव स्थानं लभते। लोकस्य विच्छिन्नमनोरथवृत्तेः व्यपेतपार्थिवगुप्तेः प्रतिपदप्रताडितजीवनाशस्य राम एव राजा, तत्पद्धतिरेव लोकपद्धतिः सौहार्दं शीलं शरणागति-निष्ठा, पराक्रमः, परदुःखानुभूतिः, परिजनस्नेहो, व्यवस्थापरिरक्षणं, दुष्टनिबर्हणं सत्यसन्धतादयश्च विरूढतमसि प्रतिपदं जीवने निदर्शयतीव सत्पथम्। रामराज्यमेव परमोपलब्धिः मानसस्य लोकमानसस्यापि। नश्यतु नाम पार्थिवं वैभवम्, विगलतु मानुषी व्यवस्था, कुप्यतु ताम्यतु दारुणः स्वार्थरावणः; तथापि अकुतोभयः स्वस्थो निषेवितरामादर्शः प्रतिष्ठापितरामराज्यचेता सुखं प्रवर्ततामकिञ्चनोऽपि व्यपेतपार्थिवशक्तिरपि नितरामुद्दण्डेऽपि निरङ्कुशराजतन्त्रे शरीरी।

रामराज्य-प्रकल्पनं मानदण्ड इव शासनतन्त्राणां तच्चारित्र्यगुणाश्च सततमभीष्टस्पृहणीयलब्धिसीमेव जन्मभृताम्। मानसप्रतिपादिते पथि वर्तमानाः दृढसङ्कल्पप्राणाः प्राणिनः प्रताडिता अपि लोके विधर्मिभिः समुद्वेजिता अपि स्वार्थान्धघूकैः न व्यथन्ते समनुभावितरामचरितहृदयाः स्वप्नेऽपि। मानसं मानसविद्रोह इव लोकानां दुर्नीतिकदर्थितानां भौतिकं दुराचारं प्रतिकरोतीव अध्यात्मप्रतिष्ठेन सन्न्यायदण्डेन। इदानीमपि शत्रुविपद्यमानेषु विपन्नस्वातन्त्र्येषु देशेषु तद्देशीयाः मनस्विनो देशान्तरे लब्धावकाशाः स्वदेशस्वातन्त्र्यं ... यन्ति, स्वतन्त्रमपि प्रकल्प्य

विद्रोहाग्निं प्रज्वलयन्ति, प्रवर्धयन्ति चाहरहः। विगत-विश्वमहासमरे पराजितायां फ्रांसभूमौ जनरल देगालेन तदेवानुष्ठितं ब्रिटेन-प्रवासकाले। अनेन महात्मना तु प्रतिव्यक्ति प्रतिमानसं कुराजप्रतिरोधाय स्वदेश एव प्रयत्नः समाचरितः। अनायुधेनाऽपि व्यपेतत्रिशक्तिनाऽपि महात्मना तथा संव्यूढाः देशवासिनो यथा ते कृच्छ्रतरमपि सङ्कटोपद्रवंहेलयैव सज्जितात्मसम्पदो दृष्टजीवनसाराः सर्वं सोढुं वोढुं निरवधिविक्रमसम्पन्ना निर्भयाः विचेरुः। पारतन्त्र्ये तु विपन्नायां पार्थिवसत्तायां स्वनिष्ठापरिरक्षणं चारित्र्यसम्पद्गुप्तिश्च विनश्यमानामपि जातिं पुनर्जीवयितुं पीयूषभाण्डमिव धारयति, तथाऽवसरे प्रकल्पयति नवीनमभीप्सितं सर्गम्। ज्वालाभासुरे विजयमाने मोहमदीयप्रतापानले निहताः पारसीकाः, 'ध्वस्ता आर्याना' (अफगानिस्तान) शक्रयः, समुन्मीलिता मिश्रसभ्यता, दग्धं मध्यैशियायशः; तथापि भारतीया संस्कृतिः, धर्मः, पद्धतिः, शास्त्रं यदि कथमपि पारतन्त्र्येऽपि रक्षितं तन्महात्मनो मानसस्यैव अतुलनीयः प्रभावः।

आत्मचेतना हि कवेः लक्ष्यं लोकसङ्ग्रहः, प्रस्तावः दुर्व्यवस्थाविरोधाय नित्यसङ्घर्षयत्नः प्रयोगः रामराज्यावाप्तिः परमा सिद्धिः। अत्र प्रयत्नो हि साधीयान्, प्रतिपदं परितोषः चुम्बति हृदयम्, अध्यवसायो ददाति नवोत्कर्षम्, व्यपैति नैराश्यतमस्विनी, समुदेति विक्रमार्कः, स्वधर्मपालने निधनादपि परमो लाभ इति प्रवहति दुर्निवारः सङ्कल्पः। एतादृशीं सत्त्वसम्पन्नां जातिं निराकर्तुं संहर्तुं कालोऽपि नाम न प्रभवितुं शक्नोति, का कथा दुर्दान्तानामपि मोह-मद-निमग्नानां भौतिकताभक्तानां वराकाणाम्।

ग्रन्थद्वादशी कवेरस्य कृतिरिति समीक्षकाः निदर्शयन्ति। भवतु, एकेनैवायं मानसेन ऐहिकमामुष्मिकञ्च लोकेभ्यो वितरन् फलसमवाय-साफल्यमिवाप्नोति कवि-विशेषत आर्यावर्ते जातोऽपरः योऽनेन स्पर्धितुमीहेत। परमं दैन्यमेवास्य भक्तजनतिलकायमानं गौरवं घोषयति। सर्वथा विनिवेदितात्मा महात्माऽयं स्वरिक्ततां निराश्रयतामपात्रतामेव निवेदयन् निजनाथकीर्तिं गायन् तस्याशरणशरण्यतां ध्यायंध्यायं तच्छीलमौदार्यं कृपापारवश्यञ्च स्मारंस्मारं परं दास्यभावेन तत्कृपालवाभिलाषुकः विमुक्तरागः त्यक्तान्यसमाश्रयो रामभद्रमेवाहर्निशं स्वोद्धारकं मनुते। समन्वयदृष्टिस्तु श्लाघ्यतरैवास्य। शैव-वैष्णवादिविविधसम्प्रदायकीर्तितात्मश्रेष्ठतां तद्भवञ्च परविडम्बनं दर्शंदर्शं विकलितचेताः हरि-हर-भेदशून्यतां तत्त्वतो निरूप्य तयोरेकवद्भावं समन्वेति। आनन्दरामायणादौ सम्प्रदायग्रन्थेषु च हर-हरिभक्तविवादजन्य-कोलाहलो पाठकैः द्रष्टव्योऽस्मिन् विषये। मानसे तु हराराध्यो रामः, रामपूज्यो हरश्च। 'विनयपत्रिका' विनयपदानां स्तबकः, 'कवितावली' मनोहारिभिः छन्दोविधानैः रामकथा गायति। 'दोहावली' दोहानां समये समये कविकृतानां सङ्ग्रहः। 'बरवै रामायणं' बरवै-छन्दसि संक्षेपतो रामकथा। 'पार्वतीमङ्गलं' वर्णयति शिवाशिवयोरुद्वाहम्। इत्थं बहुभिः ग्रन्थैः कविः पूरयति हिन्दीसाहित्यम्। वस्तुतः स्वप्रभुचरितकीर्तनमेवास्य प्रयत्नः। लीलाशुक इव प्राकृतजनकीर्तनपरं काव्यं मोघश्रममिव गणयन् कविरात्मपक्षं पुरस्करोति—

कीन्हेसि प्राकृत जन गुन नाना।
सिर धुनि गिरा ठाढ़ पछिताना॥

हिन्दीभाषा-प्राचेतसोऽयम् नितरां स्मारयति कविकुलशेखरं कालिदासम्। वैदर्भी वृत्तिः, प्रसादो गुणः, सहजालङ्कार-विनिवेशः रसोचितः शब्दसञ्चयः, स्वाभाविकी वर्णनशैली, वैदग्ध्यभूयिष्ठो वार्ता-प्रक्रमः, स्थाने विविध-रसावतारः, मनोहरं वृत्तविधानम्, कौतूहलसंवर्धिनी कथा-परिपाटी एभिः काव्योपकरणैः

# नवश्लोकि-मानसम्

—श्री रहसबिहारी द्विवेदी, शास्त्री एम० ए०—

[ जबलपुर विश्वविद्यालयस्य संस्कृतविभागे शोधच्छात्रः ]

गोस्वामिना प्रणीतस्य श्रीरामचरितस्य च।
नवाह्निकं कथावस्तु लिख्यते पितुराज्ञया ॥

– १ –

आदौ मङ्गलमाप्तसाधुचरितं दुष्टप्रणामस्ततो
व्यासादेः पदवन्दनं सुमधुरं श्रीरामनामामृतम्।
हृद्यं मानसरोवरं मुनिभरद्वाजादि सम्भाषणं
सत्या रामपरीक्षणं पुनरहो शम्भोर्भवानीग्रहः ॥

– २ –

श्रीरामान्यावतारा जय-विजय-कथा नारदस्यापि मोहः
श्रीमत्स्वायम्भुवस्य तप इति सुखदो रामजन्मप्रसङ्गः।
श्रीविश्वामित्रयागो मुनिवरवनिताशापमुक्तिस्तथा च
वैदेहोद्यानपुष्पप्रचयनसमयेऽदर्शि रामेण सीता ॥

– ३ –

चण्डीशस्य धनुः प्रचण्डमतुलं सङ्खण्डितं क्रीडया
वैदेह्या जयहारतो विलसितं रामस्य वक्षःस्थलम्।
सौमित्रेः परशुन्धरेण कठिनं वादो धनुर्धारणं
सीतारामविवाह आर्यविधिना साकेतवासस्ततः ॥

---

नायं केवलं कविः। निस्सङ्गोऽपि स्वजीवने लोकहितचिन्तापरो बहुभिरुपायैरयं रामकथां 'रामलीलादि'-व्यपदेशेन लोकशिक्षणाय प्रचारयामास। इदानीमपि स्थाने स्थाने रामलीलाऽभिनीयते, गीयते। प्रायेण प्रतिनगरं प्रतिग्रामं विजयदशमीपर्वणि लोको रामलीलामनुष्ठापयति। एषा परम्परा तु महात्मनैव प्रचारिता दृढीकृता च। लोकरञ्जनं लोकशिक्षणञ्च रामचरितप्रचारेण सम्पाद्य न केवलं कविषु, लोकोद्धारकेष्वपि परं स्थानमलङ्करोति मानसकविः। ताटस्थ्यवृत्तेरस्य निर्बाधप्रसरा दृष्टिः, स्वयं साधुचारो न सहते साधुषु स्खलनम्। तदर्थमेव विविधैः हासनिर्भरव्यङ्ग्योक्ति-व्याजोक्तिभिरुपहसति विरुद्धाचारम्। नारद-मोहः लक्ष्मण-परशुराम-संवादः शिव-विवाहो यदि हास्य-प्रवणतां ख्यापयन्ति, तर्हि राम-भरत-मिलनं चित्रकूटे गूढनयतन्त्र-कौशलं सूचयति। नूनं समाधानं सर्वसंशयानां चिकित्सा सर्वव्यसनानां श्रेयः सर्वलोकानां प्रतिष्ठापयति कविः मानसमुखेन।

– ४ –

राज्ञो वाञ्छितरामराज्यतिलके राज्ञ्या च संरोधिते
सर्वं कष्टमयं सुमन्त्रविनयं त्यक्त्वाप्ययं निश्चयो ।
पादौ 'केवट' - भक्तितः सुरसरित्पारं प्रयागं गतः
सीता - लक्ष्मणसंयुतो मुनिभरद्वाजाश्रमं प्राप्तवान् ॥

– ५ –

वाल्मीक्याश्रमतो गतो रघुपतिः श्रीचित्रकूटे स्थितः
पुत्रारण्यगतेर्व्यथाकुलनृपः प्राणान् परित्यक्तवान् ।
कैकेयी ह्यवमानिता च भरतात् संत्रासिता मन्थरा
संस्कारं स्वपितुर्विधाय भरतो रामं प्रति प्रस्थितः ॥

– ६ –

रामार्चां हृदि सन्निधाय भरतः श्रीचित्रकूटं गतः
साकेतानयनप्रयासविफले सत्पादुके प्राप्तवान् ।
कौटिल्यं सुरराजपुत्रविहितं सीतानसूयानयः
सौतीक्ष्णः प्रणयश्च दूषणवधो हा हन्त ! सीता हृता ॥

– ७ –

शाबर्याः शुभ आश्रमे च नवधा भक्तिर्हि व्यक्तीकृता
मैत्र्या बालिवधं विधाय कपयः सीतां प्रति प्रेषिताः ।
लङ्कादाहृत आगतो जनकजामन्विष्य सन्मारुतिः
श्रीरामेण विभीषणो ह्युपकृतः सेतुः कृतः सागरे ॥

– ८ –

अङ्कं चन्द्रमसोऽङ्गदस्य गमनं लङ्काधिराजं प्रति
सौमित्रिं प्रति हन्त ! रामकरुणा सर्वस्वनाशं रिपोः ।
श्रीसीताग्निपरीक्षणं पुनरहो साकेतयात्रा मुदा
व्यक्तो रामसमागमेन भरते रागो विरागो महान् ॥

– ९ –

रामः सर्वजनैरकारि सुखतो राज्याभिषेकान्वितः
सज्ज्ञानैरवबोधिता सुजनता सर्वात्मनाऽभारि च ।
सद्भक्त्या गरुडं भुशुण्डिरवदत् रामायणीयां कथां
भक्ति-ज्ञानविभेदवर्णनविधौ सन्मानसं पूरितम् ॥

# श्री गोपीनाथ कविराजानाम् 'अखण्ड-महायोगः'

—श्री योग-चञ्चरीकः—

सितम्बरमासस्य सप्तम-दिनाङ्कः खलु महामहोपाध्याय-पद्मविभूषण-प्रभृतिविरुदाङ्कितानां तत्रभवतां श्री गोपीनाथ कविराजपादानां पावनो जन्मदिवसः। ऐषमेऽस्मिन् दिने एते पञ्चाशीतिवर्षाणि समतीत्य षडशीतितमे पदार्पणं कुर्वन्तो भारतीय-विबुधगगनाङ्गणे प्रभाकर इव विराजन्ते। जानन्त्येव विद्वांसो यत्ते न केवलं महापण्डिता एव, अपि तु महायोगिनोऽपि। योगतन्त्रे महत्तरो नूतनो दायस्तेषां 'अखण्ड-महायोगो' नाम। एतेषां जीवन-साधनाया इदमेव परमं लक्ष्यम्। प्रसङ्गेनानेन तस्यैव अखण्ड-महायोग'स्य विषयेऽत्र किञ्चित् प्रस्तूयते।

अखण्ड-महायोगो नाम अनन्तप्रकारैः असंश्लिष्टानां विक्षिप्तानाञ्च भावानामेकस्मिन् सूत्रे संयोजनं तादात्म्येन तेषां प्रतिष्ठापनञ्च। शिवेन सह शक्तेर्योगः, आत्मना सह परमात्मनो योगः, एकेन आत्मना सह अपरस्य आत्मनो योगः, महाशक्तेः सह परमात्मनो योगः, लोकस्य लोकोत्तरेण सह योगः, लोकेन सह लोकातीतस्य योगः एवमादिकं महायोगेऽस्मिन् अन्तर्भवति।

कालो हि तात्त्विकदृशा महाकाले खण्डकाले च विभक्तः। महाकालो हि अखण्डो निरन्तर सृष्टिशीलश्च। खण्डकालः पुनः अतीत-वर्तमाना-ऽनागत-भेदेन त्रिधा विभक्तः। कालस्य स्रोतमिदमनादिकालतः प्रवहन्नास्ते। आलङ्कारिकभाषया विवक्ष्येत चेत् विशालेयं काल-सरित् निरन्तरमनागततः प्रवहन्ती वर्तमानं स्पृशन्ती अतीतस्य गह्वरं प्रविलीयते। किन्त्वेतादृशी अपि स्थितिर्जायते यत्र त्रिकालस्य सत्ताऽपि खण्ड्यते। तत्र एकमात्रो नित्यो वर्तमान एव विराजते। तत्र सर्वाण्यपि वस्तूनि नित्यं प्रकाशमानानि। तत्र न जातु कस्यचन परिणामो जायते। अखण्डेऽस्मिन् [illegible] महायोगस्य

वर्तमानयुगे वङ्गप्रदेशीयाः प्रभुजगद्बन्धुपादा, योगिराजाः श्री अरविन्दपादाः, मेहरबाबा महाभागाः, पाण्डिचेरि-वास्तव्याः श्रीमातरश्च अंशविशेषैरस्यैव महायोगस्य समुपासकाः। श्री अरविन्दस्य 'अतिमानवस्य अवतरणम्' (डिवाइन डीसेण्ट) अस्यैव महायोगस्यांशः। प्रभुजगद्बन्धुपादानां 'चन्द्रपाता'दिग्रन्थेषु अस्यआंशिकं वर्णनं समुपलभ्यते। वस्तुतोऽखण्ड-महायोगस्य पूर्णता अमरत्वप्राप्तौ, निराकारप्रेम्णि अन्ततश्च साकार-प्रेम-साधनायां प्रतितिष्ठते।

योगेऽस्मिन् अन्ततो गत्वा सत्यपि जगद्वैचित्र्ये भेदो न तिष्ठति। एकस्य प्राप्त्यैव सर्वप्राप्तेर्नित्योऽयुतसिद्धश्च सम्बन्धः। जगतो वर्तमानस्थितौ नेदं वर्तते। एकस्य मुक्त्या सर्वेषां मुक्तिः, एकस्य प्राप्त्या सर्वेषां प्राप्तिः किल पूर्णतोंऽशतो वा तदैव सम्भवति, यदा समष्टिदृशा महासमष्टिदृशा वा समग्रे जगति तादात्म्यं प्रतितिष्ठेत।

अखण्ड-महायोगस्य साधनायां तात्त्विकदृष्ट्या वस्तुद्वयं पूर्णतः समपेक्ष्यते—१. मानवस्य श्रेष्ठप्रयत्नः, २. परमात्मनः परमानुग्रहश्च। मनुष्यस्य कृते पुरुषकारः एकीकरणञ्च कर्तव्यं भवति। पुरुषकारद्वारा

जगत् आपृथिव्या महामायां यावद् विस्तृतम्। प्रथमं तत्त्वं यावद् व्यापकम्, द्वितीयं ततोऽपि व्यापकतरम्। इत्थं चरमं तत्त्वं सर्वतोऽधिकं व्यापकम्। व्याप्यतत्त्वतो व्यापकतत्त्वे समुत्थानस्याद्वितीय उपायः कर्मगतकौशलमेव। द्वितीयतत्त्व-प्राप्तिसमकालमेव तदीयमण्डलस्य अधिगतिर्जायते। अन्तिमतत्त्वे समाक्रान्ते सति समग्रं विश्वं तदधिकृतं भवति। इत्थं मानवस्य श्रेष्ठेन प्रयत्नेन 'पुरुषकारेण' साधक एकीकरणस्य प्रक्रियामिमां पूर्णतां नयति।

योगसाधनाया अपरा धारा किल परमेशितुः महासत्ताप्राप्तौ स्वाश्रितसत्ताया अनुग्रहीकरणं नाम। परमेश्वर-कृपा मनुष्यस्य कर्मगतया ज्ञानगतया वा योग्यतया नासाद्यते। कर्मणः फलं हि ऐश्वर्यम्, ज्ञानस्य च कैवल्यम्। उभयमपि न जातु महाकृपाया उद्बोधकम्। महाकृपायाः स्फुरणं किल जीव-विशेषे परमेश्वरस्य स्वातन्त्र्यशक्त्यैव जायते। कृपाया अस्याः सञ्चारेण मनुष्ये शिवत्वमायाति। तदा वास्तविकदृष्ट्या परमेश्वरस्य क्रियाशक्तिरेव सक्रिया भवति। तस्याः पूर्णविकासेन शिवत्वमपि पूर्णतः प्रतितिष्ठते। कर्मणः कृपायाश्च समन्वयेनैव योगी अखण्ड-महायोगपथि अग्रे सरति।

अखण्डमहायोगस्य उद्दिष्टं किल गुरुकृपाप्रभावेण कालस्य निवृत्तिरेव। इयं खण्डरूपेणात्र अनादिकालत एव सम्पद्यमाना वर्तते। किन्तु समग्रविश्वस्य सामूहिकं कल्याणं पूर्णतो न निष्पद्यते। एतदर्थं परमावश्यकमेतद् यत् मोक्षपथि आरोहणकार्यं परिसमाप्य महाशक्त्या सह तादात्म्यं संसाध्य स्वयं महाशक्तिसम्पन्नो भूत्वा योगी महाप्रेम्णः साधनार्थम् अस्मिन्नेव संसारेऽवतरेत्। अवतरणस्यास्य उद्देश्यः किल विशुद्धप्रेम्णः साधना। महाकरुणयैव प्रेरितेन बुद्धदेवेन महाबोधिप्राप्त्यनन्तरमपि निर्वाणमप्रविश्य सर्वेषां दुःखतप्तजीवानामुद्धारस्य शिवः सङ्कल्पः कृतः। महाप्रेमावस्थायासिद्धौ सत्यां योगी महाप्रकाशमयो जायते। ततः परं स्वातन्त्र्यशक्तेरुन्मीलनं जायते, जगति महाप्रेम्णः पूर्णविकासमार्गश्च उद्घाट्यते, तदा क्रमशः कालराज्यं गुरुराज्येऽन्तर्भवति। कालसङ्कर्षिणीक्रियायाः पूर्णतायां कालस्य सत्ता तु नश्यत्येव, अविद्या-मायाशक्त्योरपि स्थितिर्निर्वाणं याति। कालराज्यस्य पूर्णतया निवृत्तौ गुरुराज्यमपि अनावश्यकं भवति।

इदमेव पूर्णम् अद्वैतस्वरूपम्, पूर्णब्रह्मरूपिण आत्मनः स्वीयं रूपम्। स हि अनन्तप्रकारैः आनन्दमयीं लीलां वितन्वते, तथापि लीलातीतं नित्यसाक्षिरूपे प्रतितिष्ठते। तदा प्राकृतजगतः किमपि नावशिष्यते, तथापि सर्वमपि वर्तते। योगोऽयम् इतो हेतोः 'अखण्ड' उच्यते, यदयं कदापि न खण्ड्यते। प्रतिवस्तुना सह प्रतिवस्तुनोऽभेदः प्रतितिष्ठते, तथापि तस्य स्वीयं रूपं न जातु नश्यति।

अखण्ड-महायोगस्य सिद्धेश्चरमं लक्ष्यं समग्रस्य विश्वस्य सामूहिककल्याणाय व्यष्टिरूपेण योगिविशेषद्वारा अमरप्राप्त्यनन्तरं समष्टिदृष्ट्या महासमष्टिदृष्ट्या वा सकले जगति तादात्म्यं प्रतिष्ठाप्य क्रमशः निराकार-साकारप्रेम्णोः उन्मेषमाध्यमेन जगतः सर्वविधदुःखैः अखण्डानन्दस्य आलोकसमुद्भावनं नाम।

श्रद्धेयानां श्री कविराजपादानामयम् आध्यात्मिकोऽखण्ड - महायोगः आधिभौतिक - स्थूलदृष्ट्या अखण्ड-संस्कृति-माध्यमेन किञ्चिदवगन्तुं शक्यः। आधुनिकं विश्वं स्वत्वस्य सङ्कोचेन दुःखग्रस्तमस्ति। स्वत्वमिदं धर्म-राष्ट्र-राज्य-भाषा-जाति-कुटुम्बादिनानाविभ्रमेषु पतितं सद् विभाजितम्। अखण्डसंस्कृतिमाध्यमेन विभ्रमानामेतेषां विच्छेदानन्तरमेव अखण्ड-स्वत्वस्य अवबोधः संभाव्यते। कविराजपादानां पुष्पदन्तीय - महिम्नःस्तोत्रस्य श्लोकोऽयमतितरां प्रियः—

# पाण्डित्य-ताण्डवितम्

## — स्वर्गीयाः श्री बटुकनाथशर्माणः, काशिकाः —

### द्वितीयोऽङ्कः

[ ततः प्रविशति कैयटकैरवः, तच्छिष्याश्च ]

**कैयटकैरवः**—अपि युष्माभिः प्रत्यक्षीकृतमपारपारावारोपमं महापाण्डित्यमाचार्यचरणानाम् ?

**प्रथमशिष्यः**—उपाध्याय ! कस्मिन् शास्त्रे ते विहितविशेषपरिश्रमाः ?

**कै० कै०**—अयि तद्धितदत्त ! किमेवं देवानां प्रिय इव पृच्छेच्छां कुरुषे ?

**द्वितीयशिष्यः**—उपाध्याय ! अहं त्वेवं पृच्छामि, कस्मिन् शास्त्रे ते न विहितविशेषपरिश्रमा इति ?

**कै० कै०**—साधु प्रचण्डस्फोट ! साधु । किमु न दृष्टं सर्वैरस्माभिर्यत् तैरनुयुक्ता अभियुक्ता अपि सर्वथा मूकतां गताः ?

**प्र० शि०**—उपाध्याय ! तेषां मूकतामालोच्य मया चिन्तितं यत् तेषां रसनासु कोऽपि सन्निपातः सन्निविष्टः ।

**त० द०**—सुतरामहंत्येतत् सम्भाव्यकोटौ प्रवेष्टुम् ।

**कै० कै०**—धिङ् मूर्ख ! सत्यपि सत्यं बलवति हेतौ वृथोपबंहितं कारणान्तरं कुतः कल्पयसि ?

**तृतीयशिष्यः**—उपाध्याय ! तैर्व्याकरणशास्त्रं नास्त्रीकृतं क्वाऽपि वादापयुद्धेष्विति भृशं शङ्के नानुगृहीतस्तैः दुर्गृहीतव्य आगमः शब्दानाम् ।

**कै० कै०**—आः किमुक्तवानसि कृदन्तदत्त ! अवसरश्चेन्नागतो विषयस्यास्य, किमेतावता पाण्डित्यमाहात्म्यं परिहीयते तेषां पण्डितप्रकाण्डानाम् ?

---

रुचीनां वैचित्र्याद् ऋजुकुटिल - नानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ।

समन्वयः सहिष्णुता च भारतीयेतिवृत्तस्य वैशिष्ट्यम् । प्रक्रियेयमद्यापि क्रियाशीला । त्याग-तपसोः उच्चादर्शैरनुप्राणिता साधु-सन्तानां परम्परा परस्परस्य स्थूलभेदानां निवारणायैव निरन्तरं सचेष्टा वरीवर्ति । महात्मगान्धी, योगिराजः अरविन्दः प्रभृतयो महामानवा अस्या एव परम्परायाः प्रसारकाः । एतैः किल आधुनिकविश्वस्मिन् विद्यमानानां धर्माणां वादानाञ्च विरुद्धदृष्टिकोणेषु सहिष्णुतापूर्वकं समन्वयं संस्थाप्य अखण्ड - संस्कृतिनिर्माणस्य पन्थाः प्रशस्तीकृतः, येन विश्वसमष्टौ अखण्डसंस्कृतेरस्या आविर्भावे स्वत्वस्य सङ्कोचो निवार्येत, 'वसुधैव कुटुम्बकम्' इतीयं समुदात्ता भावना च विकसेत् । यत्र प्रतिवस्तुना सह प्रतिवस्तुनोऽभेदे प्रतिष्ठितेऽपि स्व-स्वरूपनाशस्य कोऽपि प्रसङ्गो नाविर्भवति, तत्र वैश्विकस्य कस्यापि वादस्य, धर्मस्य संस्कृतेर्वा स्वत्वलोपस्य अवसर एव कुतः स्यात् ?

अखण्ड-महायोग - समुपासकस्य स्थूलव्यापाराणाम् इतिकर्तव्यता अनेन अखण्ड-संस्कृतिमाध्यमेन व्यष्टि-समष्टयोः स्वत्वं विस्तार्य तत्र विश्वभ्रातृभावञ्च समुन्मील्य परिसमाप्यते । इत्थमत्र स्वत्वं प्रसरति, न जातु लुप्यते । अखण्डमहायोगिनः आध्यात्मिकस्थूलचिन्तने स्थूलव्यापारोऽपि निरन्तरमनुस्यूतो भवति, येन दुःख-व्याधिग्रस्तमिदं निखिलं विश्वं स्वीयेन स्थूलरूपेणाऽपि शान्ति-प्रेम्णोरालोके आप्लावितं स्यात् ।

तद्धितदत्तः—एतादृशे विषये उपाध्याया एव प्रमाणम् ! अथ ते साम्प्रतं क्व वर्तन्ते सर्वतन्त्रस्वतन्त्रा आचार्यचरणाः ?

कै० कै०—भागीरथीमवगाहनार्थं गताः। आगतप्रायैरेव तैः सम्प्रति भवितव्यम्। वत्साः! शृणुत, श्रुत्वा चावधत्त।

न खलु स्वानुमानेन मेयं माहात्म्यमीदृशम्।
अचिन्त्याश्चिन्मयस्वान्ताः सन्तः सन्ति तथाविधाः।

[ ततः प्रविशन्ति गायन्तोऽनध्यायदुर्दमोत्साहाः विद्यालय-विद्यार्थिनः ]

सन्तीह नाथ! के ते ये ते पदं विशन्ति।
सर्वं तमो विमोहात् तामिन्दिरामुशन्ति॥
वेदान्ततत्त्वमुच्चैः केचिद् वदन्ति ये ते।
तेऽपि स्मरन्ति नत्वा तामिन्दिरामुशन्ति॥
युञ्जन्ति येऽपि योगं भोगं च भुञ्जते ये।
भेदः क एषु सर्वे तामिन्दिरामुशन्ति॥
हे नाथ हे दयालो! रक्षाऽधुना तथा नः।
हृद्वृत्तयो यथा नो तामिन्दिरामुशन्ति॥

कै० कै०—( सभ्रूभङ्गम् ) अहह! कोलाहलः कियान् क्रियते दुर्विनीतैरेतैः। यद्याराध्यपादाः श्रोष्यन्ति, तेषां क्रोधाग्निना धगिति प्रज्वलितेन भवितव्यम्।

कृदन्तदत्तः—श्रवणसौकुमार्यमाराध्यपादानाम्।

कै० कै०—( सक्रोधम् ) धृष्टतम, नष्टमते, दुर्विनयप्रथम! न विनीयन्ते त्वयैते विधेयाः? किमिति वृथैव वाचाटयसे?

तद्धितदत्तः—उपाध्याय! अयमेव प्रथमं विनेयो दुर्विनयो यः स्वगुरोः स्वान्तगतमभिप्रायं नावेक्षते।

कृदन्तदत्तः—अपि प्रतिनिवृत्तो भगवान् विहितोपाध्यायाभिप्रायो यदेव मामधिक्षिपति।

तद्धितदत्तः—कस्त्वं मदीयाचरणविचारणायाम्?

कृदन्तदत्तः—त्वमपि को [illegible]

प्रचण्डस्फोटः—मा मा कलहायेथाम्। अनुचितमिदं यदीदृशं नाटकमन्येभ्यो दर्शयथः।

उभौ—अये कस्त्वमावयोरन्तरं प्रवेष्टुम्। ( उभौ ताडयतः। स तौ विप्रतीपं ताडयति। )

[ ते त्रयः कलहायन्ते। विद्यालयीयाश्छात्रा दत्ततालं हसन्ति। ]

कै० कै०—धिङ् मूर्खाः! अपसरत, अपसरत स्थानादस्मात्। ( त्रयः कलहायमाना निष्क्रामन्ति। )

( पुरः परिक्रम्य ) अये छात्राः! किमर्थं कोलाहलं कुरुथ? शान्तस्वान्तैः भवितव्यं युष्माभिः।

( बालकाः कैयटकैरवं समावृत्य सहस्ततालं गायन्ति। स संभ्रान्त इव इतस्ततः पश्यति। )

अयि पण्डित! कुरु शान्तं स्वं स्वान्तम्!
उपदिशसि परं दिशि दिशि
शेथे स्वयमपि निशि निशि
लभसे किमपि न कान्तम्॥ १॥
कोलाहलमपि कुरुषे
वितरसि निजमतिममितरुषे
भजसे किमपि न शान्तम्॥ २॥

दण्डधरः—( एकतः प्रविश्य ) अये! किमिदम्? अहो कैरवो वराकः पतितो वृकानां मुखे। नाऽवगच्छति मन्मतिः, यत् सर्वत्र नैकनीत्या वर्तितव्यम्। अस्मदुपज्ञमेवैतत् सर्वम्। दुर्दमौद्धत्या इमे दुर्वृत्ताः। तदलं चण्डनीत्या।

[ पुरः प्रचलन् मूर्धानं चालयन् हस्ताभ्यां तालं ददन् परमप्रमोदनिमग्नहृदयः सहृदय इव गेयं शृणोति। कैरवः साश्चर्यं पश्यति। ]

धावसि धन-लव-हेतोः
अनुकुरुषे वृषकेतोः
हृदयं वससे तान्तम्॥ ३॥
भज हे तं भजनीयं
सकलकलाकमनीयम्
[illegible] ॥ ४॥

**दण्डधरः**—अहो ! सङ्गीतम् । अहो ! सङ्गीतार्थः । धन्या यूयं बालकाः । कियत् कोमलतरं पदम् ! अहाहा ! 'भज कमलाकान्तम्, भज कमलाकान्तम् ।' ( साश्रु आकाशे लक्ष्यं बद्ध्वा ) हरे ! हरे ! हरे ! प्रसीद, प्रभो ! प्रसीद । वत्साः ! युष्माकं भावमनुभूय नरीनर्तीव मेऽन्तरात्मा । तत् पुनरपि भगवद्भजनं किमपि गायत ।

**बालाः**—( कैयटकैरवं हित्वा तमभिगच्छन्तः ) अत्राऽऽगच्छत सुहृदः, अत्राऽऽगच्छत । अयं तावत् तस्य महापण्डितस्य मातामह इव दृश्यते । महानयं पण्डितः । अहो रे, अश्रूणि मुञ्चति !

**एकः**—किमर्थं भवान् रोदिति ?

**दण्डधरः**—वत्स ! किं कथयामि ? युष्मद्गानजनिताऽऽनन्दजोऽयं विकारः । अन्यदपि श्रोतुमिच्छामि ।

**बालाः**—यद्येवम्, तर्हि नृत्यतु भवान्, वयं गायामः ।

**दण्डधरः**—यथा रोचते वत्सेभ्यः ।

( बाला। तदुत्तरीयादिकं धृत्वा कूर्दन्तो गायन्ति, सः मध्ये विवलात्तुन्दिलोदरं नृत्यति । )

वनमाली वनमाली वनमाली
खेलति हे वनमाली ।
तीरे तीरे धीरसमीरे
यमुनातीरे वनमाली ।
कुञ्जे कुञ्जे मञ्जुलगुञ्जे
वञ्जुलकुञ्जे वनमाली ॥

**दण्डधरः**—( साञ्जलि, सगद्गदकण्ठम् )

परमानन्द - सन्दोह - महार्णवसमुद्गताम् ।
हे माधवाऽऽलोकयेऽहं तां त्वया लोकमातरम् ॥

( बालान् प्रति )

वत्साः ! किं ब्रूमहे युष्मान् दत्तानन्दमहोत्सवान् ।
जीवताऽयुतवर्षाणि प्रथयन्तु त्रयो यशः ॥

युष्माभिः सङ्गमोऽयं यो माऽपयातु स जातु नः ।
श्रान्तास्तथापि दृश्यध्वे तद् गच्छथ यथासुखम् ॥

( बालकाः प्रणम्य गच्छन्ति )

( स्वगतम्, सोच्छ्वासम् ) लब्धः कथमपि मोक्षः । इदानीन्तनाश्छात्राः दृष्टमात्रा मनसि मे महात्रासं संजनयन्ति ।

( कैयटकैरवः उपगम्य पादयोः पतति । )

**दण्डधरः**—( सानुकम्पं शिरसि हस्तं दत्त्वा ) दुर्धर्षोषर्बुधप्रबुद्धज्वालामालासहस्रैरिव तमस्तिरस्करणीतिरस्क्रियायै प्रभूयतां ते शास्त्रावबोधैः । अथ कश्चित् वत्सेनाऽपि गान्धर्ववेदश्रवणसुखं सुसुखेनानुभूतम् ?

**कै० क०**—व्याकरणशास्त्र-परिचरण-निबद्धान्तःकरणस्य मे नास्ति तस्मिन् विषये कोऽपि विवेकविशेषः ।

**दण्डधरः**—( सानुकम्पं स्कन्धे हस्तं स्थापयित्वा ) मैवं विषादं यासीः । अचिरादेव गान्धर्ववेदपारावारमपि गोष्पदीकरिष्यसि ।

**कै० कै०**—( प्राञ्जलिः ) आचार्यचरणानुग्रहेण किं किं न सम्भाव्यते ?

**दण्डधरः**—वत्स ! ननु का कथा तस्याः सभायाः ?

**कै० कै०**—सर्वमेव साधु सम्पन्नम् । केवलमाचार्यचरणानां तत्र गमनमेवापेक्षितम् ।

**दण्डधरः**—वयमत्र प्रस्थातुकामा एव ।

**कैयटकैरवस्य त्रयः शिष्याः**—( प्रविश्य साष्टाङ्गं प्रणिपत्य ) उपाध्याय ! क्षम्यतामस्माकमपराधः । वृथा कलहेनाऽन्धितेव धीरस्माकं जाताऽऽसीत् ।

**दण्डधरः**—( साटोपं पुरः परिक्रम्य ) उत्तिष्ठत, वत्साः ! उत्तिष्ठत । महानप्यपराधः शिष्याणां नैवाऽवलोक्यतेऽस्माभिः । वत्सः कैरवो वा कथं मन्यते ?

**कै० कै०**—यथैवादिशन्ति पूज्यचरणाः, तत्तथैव ।

**शिष्याः**—( उत्थाय ) लब्धमिदानीं स्वास्थ्यम् ।

( सर्वे यथाक्रमं परिक्रमन्ति )

दण्ड०—वत्स! अप्यनुभूतः प्रभावोऽस्माकं वाग्देव्याः?

**अस्माकं रसनासना भगवती शास्त्रार्थसारात्मिका**
**सद्वर्णा सुपदा स्वभावसरसा यावन्मुखान्निर्गता।**
**तावत्ता विचलत्पदाः स्खलदलङ्कारा विकाराप्लुता**
**मन्दाक्षक्षपिताक्षवृत्तय इव क्षीणा विपक्षा गिरः॥**

कै० कै०—आचार्यचरणानुगमनसौभाग्येन सर्वं प्रत्यक्षीक्रियत एव।

दण्ड०—वत्स कैरव! कथमेतद् यदधुना विबुधनमस्यामपि काश्यां न प्रकाशन्ते क्वापि वैदुषीविशेषितशेमुषीकाः विपश्चितः केऽपि कोविदकलानिधयः?

कै० कै०—सन्त्येव विविधागमपारङ्गमाः स्वधिषणानिर्जितधिषणाः विद्वदग्रेसराः। किन्तु नवरात्रानुष्ठाननिष्ठाः संप्रति विन्ध्यक्षेत्रमधितिष्ठन्ति तेषां भूयिष्ठाः।

दण्ड०—( साट्टहासं विहस्य ) मुग्ध एवाऽसि वत्स कैरव! विदग्धसम्बद्धासु चतुरतरजनचर्यासु। न जानासि त्वं पवित्रं चरित्रममीषां पण्डितप्रकाण्डानाम्।

**नानाशास्त्रमहाटवी-विहरणो**
**त्साहैक - पञ्चाननान्**
**श्रुत्वाऽऽस्मान् समुपागतान् हरपुरीं**
**तीर्णाऽऽगमाद्यर्णवान्।**
**नाश्चर्यं यदि मे निरस्य निखिलां**
**पाण्डित्यमुद्रां क्षणात्**
**विन्ध्यारण्य-निलीन-दीनवपुषः**
**सार्धं शशैः शेरते॥**

दण्ड०—( स्खलत्पदः सपङ्कायां भूमौ निपत्य उच्चैः ) हा मृताः स्मः। उपरताः स्मः।

शिष्याः—अहह पञ्चत्वं गता अस्मदीयोपाध्यायाराध्यचरणाः।

प्रचण्डस्फोटः—मृतं पाण्डित्येन।

तद्धितदत्तः—खण्डिता भूः।

कृदन्तदन्तः—मण्डिता द्यौः।

कै० कै०—( अवनम्य [illegible] ) [illegible]

ननु श्वसन्त्येव श्रीमहादाराध्यपादाः। ( पुनर्निरूप्य ) वत्साः! यूयं सपदि गच्छत। आचार्यचरणानां शिष्यं भद्रमुखं कथयत यदेतेषां समुचितं वस्त्रादिकं गृहीत्वा त्वरितपदः समागच्छत्विति। ( ते निष्क्रान्ताः )

[ हस्तं गृहीत्वा दण्डधरमुत्थापयति। ]

दण्ड०—( कथमप्युत्थाय ) वत्स! किमेतावता प्रयासेन?

**पङ्कोपलिप्तसर्वाङ्गानामपि कः पण्डितोत्तमान्।**
**अस्मान् प्रलिप्तकस्तूरीपङ्कान् न कलयिष्यति॥**

कै० कै०—यद्यप्येवं तथापि यथोचिताचारोऽपि न विस्मरणीयः।

दण्ड०—तथाऽस्तु। कोऽयमित एवाभिगच्छति?

कै० कै०—इमे महाकवयः साहित्यसैरिभः। स्वागतं सखे, स्वागतम्। कदाऽऽगतो भवान्?

साहित्य-सैरिभ—अद्यैव समागतोऽस्मि। सखे! अत्रागत्य श्रुतं मया यत् कैरवेण समासादितः कोऽपि जन्तुविशेषः?

कै० कै०—( कर्णयोः ) सखे! मैवम्। नन्वेत एव परमपाण्डित्यमण्डिताः पण्डिताग्रेसराः।

[ साहित्यसैरिभः चक्षुषी विस्फार्य सकुतुकमवलोकयति। दण्डधरः सक्रोधं पश्यति। ]

सा० सै०—( कैयटकैरवं हस्ते गृहीत्वा ) सखे, अपूर्वोऽयं दृश्यते पक्षी!

**काकैर्मा कलहायतामयमिति**
**स्वान्तं न तान्तं भवेत्**
**सत्साहित्यजुषां खरैः कटुरवै**
**रस्येति पूर्णं सखे।**
**गेहं स्वं नय तत्र पञ्जरगत-**
**स्त्वद्गेहिनी - स्नेहभाक्**
**सौख्यं तण्डुलचूर्ण - भक्षणकृतं**
**दीर्घायु - रभ्यस्यतु॥**

[illegible]—( स्वगतम् ) प्रखरप्रतिभोऽयं कविपोतः।

# एवं चिन्तयति कोऽपि प्रवासी !

## — श्री वाक् कन्बे —

[ कूटनीत्यभिशप्तस्य सर्वानर्थनिदानस्य स्वदेशविभाजनस्य दारुणं कष्टमनुभवतः साम्प्रतं भारतराजधान्यां निवसतो वैदेशिक-प्रवासिविदुषोऽस्य देववाणी - ग्रथिता राष्ट्रभक्तिभरिता आधिरियम्, अपि नाम सधर्मिणं राष्ट्रभक्तं कमपि भारताभिजनं प्रेरयेत् ?

१. निर्हिम्रशमरुसंकाशे चित्तपुष्पावशोषणे । विदेशे कष्टभूयिष्ठे सुहृद्बान्धववर्जिते ॥
२. हायनानि बहून्यत्र धृत्वा कृच्छ्रेण जीवितम् । प्रवसन्नपि देशं स्वं विस्मरेयं कथं प्रियम् ॥
३. निदाघतप्तकण्ठो वै नीलकण्ठः प्रतीक्षते । जीवनावर्षिणीमेव सोत्कण्ठं प्रावृषं यथा ॥
४. चिरप्रवाससंतप्तस्तथाऽहं तु निरन्तरम् । मातृभूमिं स्मराम्येव प्राणदां स्वानुरागिणीम् ॥
५. पयसा रुचिरेणैव पीनोध्नी दूरवर्तिनम् । भृशं पिपासितं वत्सं यथाऽऽकर्षति सोत्सुकम् ॥
६. स्वान्तःस्पृशाऽनुरागेण जन्मभूमिस्तथैव माम् । नीरन्ध्रः प्रेमपाशो ह वज्रसारायते सदा ॥
७. कालः संवत्सराणां शतशतसदृशो विप्रयोगातिभाराद्
दीर्घीभूतो व्यतीतः कथमपि विधिना प्रेरितः संस्तथापि ।
हन्त त्वत्सङ्गमोत्थं विधिहतकहतो मातृभूमेः प्रवासी
सौभाग्यं नोपभुञ्जे हृदि कृतवसतिं त्वां समालिङ्ग्य गाढम् ॥
८. दूरस्थोऽहं जननि सततं चिन्तयामि प्रसन्ना-
मौत्सुक्यात् त्वां मनसि निहितां प्रेयसीं मातृभूमिम् ।
काले कस्मिन्नमृतरसदं त्वन्मुखं लोचनाभ्यां
पायं पायं सुखितसुखितः स्यामितीत्थं विमृश्य ॥
९. यत्र वै 'कोरिया' - राज्येऽनन्तसंपद्विराजिते । निजप्रकृतिसौन्दर्यमुषिते लोकलोचने ॥
१०. वर्षाणां पञ्चसाहस्रं निश्चिन्तं वसति स्म यः । समजातिः प्रजालोकः परस्परहितोन्मुखः ॥
११. दृढेन भ्रातृभावेन पुरैकीभूतमानसः । पुरा स्पृहणीयसदाचारः सौमनस्यविभूषणः ॥
१२. तत्राद्य राष्ट्रदौर्भाग्यात् प्रादुर्भूतमतर्कितम् । कष्टं हाहह द्वैराज्यं सर्वलोकजुगुप्सितम् ॥
१३. तादृशं खलु द्वैराज्यं सहेत को नु बुद्धिमान् । देशे द्वैधीकृते कस्य हृदयं न स्फुटेन्मृदु ॥

---

तत्प्रसन्नकर्कशैव वागत्र युज्यते । ( प्रकाशम् ) हंहो साहित्यसैरिभ !

सा० सै०—किं हो राजपथपङ्कसैरिभ !

दण्डधरः—

नायं समुचिताचारो यदस्मानवमन्यसे ।
यदि पाण्डित्यकण्डूतिः स्पष्टं किं नैतदुच्यते ॥

कै० कै०—( साक्षिसङ्केतम् ) आचार्यचरणाः ! एवमिदं विदाङ्कुर्वन्तु यदिमे निसर्गत एव परिहासशीलाः ।

दण्ड०—( साहित्यसैरिभं हस्तेऽवलम्ब्य ) इतः पश्यन्तु महाकवयः—

नास्माकं फणिभाषितानि जनयन्त्येतादृशीं शुष्कतां
तर्कैरप्यतिकर्कशैः परुषता नैवेदृशी जायते ।
श्रीमद्रागानुरागरक्तवचसां साहित्यविद्याजुषां
युष्माकं वचनैः सुधारसचणैर्यन्न प्रमोदामहे ॥

अपि सभां प्रति प्रस्थिता भवन्तः ? वयमपि तत्रैव जिगमिषवः । आयान्तु, सममेव गच्छामः ।

( निष्क्रान्ताः सर्वे )

इति पाण्डित्यताण्डवितं दम्भविजम्भणं नाम द्वितीयोऽङ्कः ।

# ध्वनि-वैभवम्

— श्री रवीन्द्रकुमार सिद्धान्तशास्त्री —

(४)

ननु शोकः कथं श्लोकरूपतां यातुमर्हेदिति संशयावसरे तत्र भवन्तोऽभिनवगुप्तपादा आहुः—

'क्रौञ्चस्य द्वन्द्ववियोगेन सहचरीहननोद्भूतेन साहचर्य-ध्वंसनेन उत्थितो यः शोकः स्थायिभावो निरपेक्षभावत्वाद् विप्रलम्भ-शृङ्गारोचित-रतिस्थायिभावादन्य एव, स एव तथाभूत-विभाव-तदुत्थाक्रन्दाद्यनुभावचर्वणया हृदय-संवाद-तन्मयीभवन-क्रमादास्वाद्यमानतां प्रतिपन्नः करुणरसरूपतां लौकिकशोक-व्यतिरिक्तां स्वचित्तद्रुति-समास्वाद्यसारां प्रतिपन्नो रसपरिपूर्ण-कुम्भोच्चलनवच्चित्तवृत्ति-निःष्यन्द-स्वभाव-वाग्विलापादिवच्च समयानपेक्षत्वेऽपि चित्तवृत्ति-व्यञ्जकत्वादिति नयेनाकृतकतयैव आवेशवशात् समुचित-शब्द-च्छन्दोवृत्तादि-नियन्त्रित-श्लोकरूपतां प्राप्तः'[१] इति।

नन्वत्र यत् 'शोकः श्लोकत्वमागत' इत्युक्तं तत् किन्नाम तेन मुनिगतः शोको बोद्धव्योऽपरगतो वा? मुनिगतश्चेत् शोकस्तदा व्यङ्ग्यरसस्य आत्मगतता स्यात्, तेन च तस्याऽरस्यतापातः। परगतश्चेत्तथापि तस्य परिच्छिन्नतया रसत्वं व्याहन्येत। तदुक्तं दर्पणकारैः—

**परस्य न परस्येति ममेति न ममेति च।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते॥**[२] इति।

तेनेदं मन्तव्यम्—यद्यपि मुनिगत एव शोकः श्लोकरूपतां भजते; तथापि तस्य तादृश-रूपान्तर-प्राप्त्यनन्तरं तदास्वादस्य नितरामनिर्वचनीयत्वमपरिच्छेद्यत्वञ्च वेदितव्यमिति। एतदेव मनसिकृत्य तत्रभवन्तो हृदयदर्पणकारा आहुः—

**यावत् पूर्णो न चैतेन तावन्नैव वमत्यमुम्।**[१] **इति।**
**नायकस्य कवेः श्रोतुः समानोऽनुभवस्ततः।**[२]

—इति वदता तत्रभवता भट्टतौतेनापि एतदेव तत्त्वं विज्ञापितम्। एतदेव तत्त्वं विश्लेषयितुकामास्तत्रभवन्तोऽभिनवगुप्तपादा आहुः—

'एवं चर्वणोचित-श्लोकस्थायिभावात्मक-करुणरससमुच्चलस्वभावत्वात् स एव काव्यस्यात्मा सारभूतस्वभावोऽपरः शब्दवैलक्षण्य-कारकः'[३] इति।

न केवलं कविगताः शोकादयो भावा एव काव्ये निधीयमाना ध्वनित्वमापद्यन्ते; क्वचित् कवेरभिमतं किमपि वस्तु वा कश्चिदलङ्कारो वा तस्यैव निपुणस्य कवेः कौशलरचितां भाषामासाद्य ध्वनिस्वरूपतां याति। तदेतद् ज्ञातव्यम्—ध्वनिमार्गविरचने तत्र विचरणे च कारणतां गच्छतः सहृदयता प्रतिभावत्ता चेति। उक्तञ्च ध्वनिकारैः—

**सरस्वती स्वादु तदर्थवस्तु**
**निष्यन्दमाना महतां कवीनाम्।**
**अलोकसामान्यमभिव्यनक्ति**
**परिस्फुरन्तं प्रतिभा-विशेषम्॥**[४] **इति।**

१. ध्वन्यालोकलोचनम्; प्रथमोद्योतव्याख्या।

१. लोचनटीका। २. तत्रैव।
३. ध्वन्यालोकलोचनम्; प्रथमोद्योतव्याख्या।

ध्वनेरित्थं गुणीभूत-
व्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थ - विरामोऽस्ति
यदि स्यात् प्रतिभागुणः ॥[1] इति च।

यद्यपि गुणीभूतव्यङ्ग्यानामपि विरचने ग्रहणे च विद्यते प्रतिभायाः प्रयोजनम्; तथापि तत्र स्वल्पैव प्रतिभा कार्यकरी भवति। ध्वनिव्यापारे तु विद्यते तीक्ष्णप्रतिभायाः प्रयोजनमिति विद्यते ध्वनेर्भेदो गुणीभूतव्यङ्ग्येभ्यः।

यथा खलु समधीत-विविधशास्त्रोऽपि कश्चिज्जनः सङ्केतविशेषमज्ञात्वा काञ्चन साङ्केतिकीं भाषामवगन्तुं न शक्नोति; यथा वा स्वभावलघुताया अभावात् कश्चिन्मनुष्यः पशुर्वा विहगवद् गगने विचरितुं न पारयति, तथैव व्याकरणशास्त्रमभिधानं दर्शनशास्त्राणि च समधीत्यापि सहृदयता-विरहितः कश्चिज्जनो ध्वनिमुपलब्धुं न शक्नोति, ध्वनेर्ग्रहणे सहृदयताया मुख्यहेतुत्वात्। तदुक्तमानन्दवर्धनाचार्यैः—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम् ॥[2] इति

ध्वनि - वाच्यार्थयोर्भेदः

ननु ध्वन्यार्थप्रकाशन-व्यापारे शब्दार्थयोरस्तित्वप्रयोजनं विद्यते न वा? उच्यते—प्रदीपशिखा-विरचने वर्त्तिकादेर्यावत् प्रयोजनं, तावदेव ध्वनिप्रकाशे शब्दार्थयोः। दीपशिखा यथा गृहमुद्भासयति, तथैव सहृदयचित्तं समुल्लासयति ध्वनिः।

विद्यते हि ध्वनौ विविधं वैशिष्ट्यम्। वाच्यार्थो यथापद-तदर्थमात्रज्ञाननिपुणैर्वैयाकरणादिभिरप्यवबोद्धुं शक्यते, ध्वन्यर्थस्तु न तथा। अत्रोक्तं तत्रभवद्भिर्विश्वनाथपादैः—

बोद्धृ-स्वरूप-संख्या-
निमित्त-कार्य-प्रतीति-कालानाम्।
आश्रय - विषयादीनां
भेदाद् भिन्नोऽभिधेयतो व्यङ्ग्यः ॥[1]

तथा हि—ध्वन्यर्थः केवलं प्रतिभावद्भिर्मननशीलैः सहृदयैरेवावबोद्धुं शक्यते, न तु वाच्यार्थ इव पदादिमात्रविद्भिः। वाच्यार्थोऽभिधामात्रलभ्यः, लक्ष्यार्थश्च उपचारमात्रेणावगम्यते, ध्वन्यर्थस्तु व्यञ्जनयेति विद्यते वैचित्र्यं ध्वनेरेताभ्याम्। वाच्यार्थ एकस्मिन् वाक्ये एक एव भवितुमर्हति। व्यङ्ग्यार्थस्तु क्वचित् विधिरूपे निषेधरूपतया क्वचित् निषेधरूपे विधिरूपतया, क्वचिद्विधिरूपे निषेधरूपे वा तदनुभयरूपतया अवगम्यत इति विद्यते विशिष्टता ध्वनेः। एवं निमित्तादीनां भेदादपि वाच्य - लक्ष्यार्थौ अवधूय विराजते विभवशाली ध्वनिरयं कविजन-विरचितेषु वाक्येषु। यत्र वाक्ये वाच्यार्थ - लक्ष्यार्थाभ्यां सह ध्वनेरपि विद्यमानता, तत्र तु मृग - भल्लूकादिभिरध्यासितायामटव्यां पशुराजस्येव विद्यते नितरां सर्वातिशायि प्राधान्यं ध्वनेरेव, नान्यस्य।

त्रिविधो ध्वनिः

एष च ध्वनिः वस्त्वलङ्कार-रसरूपतया मुख्यतस्त्रिविध इत्युक्तमाचार्यपादैः। भवतु नाम तत्र रसध्वनेर्लोकातीत-चमत्कारिता, वस्त्वलङ्कारयोस्तादृशी गुणवत्ता कथं स्वीकरणीया भवेत्? यथा खलु कस्मिंश्चिद् वस्तुनि कापि लोकातिशायिता, चमत्कारिता च नावलोक्यते, तथैव वस्तुध्वनावपि कथं नावगन्तव्यम्? अलङ्काराणामपि दृश्यते केवलमङ्गशोभावर्धकता, कथन्नाम तादृशामलङ्काराणामलौकिकचमत्कारकारतां स्वीकुर्मः?

१. ध्वन्यालोकः ४.६।
२. ध्वन्यालोकः; १.७।

१. साहित्यदर्पणम्; ५.२।

अत्रोच्यते—लौकिकवस्तुभ्यो विद्यते वस्तुरूपस्य ध्वनेर्महत् पार्थक्यम् । तथा हि—

पन्थिअ ! ण एत्थ सत्थरमत्थि
मणं पत्थरत्थले गामे ।
उन्नअ-पाओहरं पिक्खिऊण
जइ वससि ता वससु ॥

इति श्लोके समुच्चारिते वाच्यार्थबोधानन्तरमेव सत्थरादिशब्दशक्त्या 'यद्युपभोगक्षमोऽसि सदास्व' इति वस्तु व्यज्यते । अनुधावन्तु श्रीमन्तो विबुधधुरन्धराः– यद्यप्यत्र वस्तुविशेष एव ध्वन्यन्ते ; तथापि तस्मिन् वस्तुनि विनिहितश्चित्त-चमत्कारकः कश्चन शृङ्गाराभासोऽपि ध्वन्यर्थबोधसमकालमेव सञ्जायते सहृदयस्य श्रोतुश्चेतसि । वस्तुध्वनेरस्य तावदपरिहार्यफलमिदं सहृदयचित्त-पारावारमुद्वेलयतीति तस्य लोकोत्तरमनोऽभिरामतया तद्धेतुभूतस्य वस्तुध्वनेरपि लोकोत्तरता, चित्तचमत्कारिता च स्वीक्रियते सुधीभिः । एतद् विचिन्त्यैव तत्रभवद्भिः दर्पणकारैरप्युक्तम्—

'अत्ता एत्थ निमज्जइ···' इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यव्यवहार इतिचेन्न । अत्रापि रसाभासवत्तयैवेति ब्रूमः । अन्यथा 'देवदत्तो ग्रामं याति' इति वाक्ये तद् भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्'[1] इति ।

ननु तर्हि यत्र यत्र रसाभासोऽस्ति तत्र तत्रैव वस्तुध्वनेर्विचित्रतया रसाभासस्यैव तत्र काव्यहेतुत्वं विज्ञेयमिति चेन्न । रसाभासादि-व्यतिरिक्तस्थलेऽपि वस्तुध्वनिमात्रसमृद्धस्य वाक्यस्योत्तमकाव्यत्वस्वीकृतिदर्शनात् । तेनैव च स्वयमेव विश्वनाथपादा दर्पणचतुर्थपरिच्छेदे—"कदली: कदली···" इत्यादौ "निःश्वासान्ध इवादर्शः" इत्यादौ च रसाभासादिविरहेऽपि वस्तुध्वनि-समृद्धतामात्रमवेक्ष्य ध्वनित्वमुत्तमकाव्यत्वञ्चाङ्गीकृतवन्तः । 'कदलीः कदली···' इत्यादौ

१. साहित्यदर्पणम् ; प्रथमः परिच्छेदः ।

# वेद-विदुषोऽभिनन्दनम्

## श्री सखाराम दीक्षित दावजीभट्टानाम्

[ वाराणसेय-नूतनबालक - गणेशोत्सव - समाजसेवा-मण्डलेन ऐषमे गणेशोत्सवे विद्वत्सत्कारप्रसङ्गे वेदमूर्तीनामेतेषां करकञ्जपुटके सुमाञ्जलिरयं समर्पितः । —सम्पादकः ]

ओङ्कारतुण्डं गिरिराजगण्डं नागेन्द्रशुण्डं भवभीतिखण्डम् ।
वरोदरान्तर्हितलोकपिण्डं वन्दामहे तत्त्वमनन्तकाण्डम् ॥१॥
काशीपुरी धन्यतमास्ति लोके तत्रापि धन्यं कुलमेतदीयम् ।
श्रीदावजीभट्टमितं वरेण्यं मान्यं श्रुतेः शुक्लतनोः सदैव ॥२॥
गौरीनाथा दीक्षिताः सर्वबोधे तेषां पुत्राः श्रीसखारामविज्ञाः ।
एते तुल्यं दीक्षितास्तैर्वदान्यैः श्रौते स्मार्ते तन्त्रशास्त्रे तथैव ॥३॥
एते घनान्ताध्ययनं विधाय शुक्लस्य वेदस्य विधानपूर्णम् ।
साकं सतीर्थ्यैर्दशभिर्महद्भिर्नूनं यशो दिक्षु विकासयन्ति ॥४॥
एभिरेव गुरुभिर्बुधोत्तमैर्ब्राह्मणस्य शतवर्त्मगस्य च ।
पाठनं पठनसङ्गतं सदा नित्यकर्मसदृशं विधीयते ॥५॥
आध्वर्यवं सोममखस्य हौत्रं पुण्यस्थलादौ विविधान्तरङ्गम् ।
सम्पादनं साग्निचितस्य चाप्तोर्यामस्य मान्यैर्विहितं बहुत्र ॥६॥
पूर्वं काश्यां तत्परश्चोज्जयिन्यां शश्वत्काश्यामुष्यते नूनमेभिः ।
काशीनाथानुज्ञया ब्राह्मणस्य रक्षा छात्रैः साकमाधीयते च ॥७॥
तन्मान्या भवतां सदैव विलसच्चित्ता वयं सादरं
कुर्मः स्वागतमानता गुरुगुणानाप्तुं गणेशाद् विभोः ।
वाञ्छामस्त्विदमेव यद् बुधवरा वेदा इमे मूर्तिगा
भासन्तु प्रतिवर्षमीशकृपया मध्येसभं सर्वदा ॥८॥
सेवार्थमेव सकलस्य समाजमूर्ते-
र्देवस्य मण्डलगतैर्विहितोऽस्ति वाग्भिः ।
श्रद्धाभिनन्दनसुमाञ्जलिरेष बालै-
र्मान्या ! अतः करगतः क्रियतां भवद्भिः ॥९॥

इति निवेदयन्ते

न० बा० ग० समाजसेवा-मण्डलसदस्याः

नायिकाया ऊरुयुगवर्णनया कथञ्चिदादिरसकल्पनायाः सम्भवेऽपि 'निःश्वासान्ध…' इत्यत्र रस-तदाभासादि-व्यतिरिक्तत्वमवश्यमेव अङ्गीकरणीयं भवेत्।

**अलङ्कार-ध्वनिः**

अलङ्कारध्वनावपि विद्यते नितरां चित्ताह्लादकता। तथा हि—

**दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा**
**प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः।**
**नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्**
**गामाक्रम्य विभूति-भूषिततनू राजत्युमावल्लभः॥**

इत्यत्र शब्दशक्तिमूलेन वस्तुना मनोऽभिरामः कश्चिद् उपमालङ्कारो ध्वन्यते। तदुक्तं दर्पणकारैः—

"अत्र प्राकरणिकस्योमादेवीवल्लभः भानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसंबद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र 'उमावल्लभ उमावल्लभ इव' इत्युपमालङ्कारो व्यङ्ग्य[1] इति।

ननु ध्वनेः काव्यप्राणत्वमङ्गीकृतमाचार्यैः। स चालङ्कार्य एव भवितुमर्हत्। कथं तस्यालङ्कारत्वमङ्गीकर्तुं शक्येत? अत्र वदामः—अलङ्काररूपेणैव भवति प्रथमं ध्वनेरस्याविर्भावः। यथा दुग्धं स्वत एव कालान्तरे दधिरूपेण परिणमते, तथैव ध्वनिसंज्ञाकालेऽलङ्कारोऽयं पूर्वसंज्ञां विजहाति। प्रथमाविर्भावकाले तस्यालङ्काररूपत्वादलङ्कारध्वनिनाम्नैव गण्यते स सुधीभिः। उक्तञ्च तत्रभवता विश्वनाथेन—

"व्यङ्ग्यस्यालङ्कार्यत्वेऽपि ब्राह्मण-श्रमण-न्यायादलङ्कारत्वमुपचर्यते"[2] इति।

**रस-ध्वनिः**

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**
**करं व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं**
**वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती॥**[1]

अत्र शब्दशक्तिमूलेन वस्तुना प्रथमं तिर्यग्-विषय-शृङ्गाररूपो रसाभासो ध्वन्यते। ततश्च तत्समनन्तरमेव राज्ञः शकुन्तलागता रतिर्व्यज्यते। एतस्या हि रतेर्नितरां पुष्टतया तज्जनितस्य विशुद्ध-शृङ्गाररसस्यापि ध्वनित्वमेवावगन्तव्यम्। अत्र रसाभासस्य च नितरां चित्तचमत्-कारिता केनापि निह्नोतुं न शक्यते। एतावता दृष्टमस्माभिर्वस्तु वाऽलङ्कारो वा रसो वा सर्व एव ध्वनयो रसिकजन-हृदयाह्लादकतामपूर्वामुत्पादयन्तो लोकातीततां भजन्त इति।

अहो माहात्म्यमस्य ध्वनेः! अहो नितरां चित्ताह्लादकता, ब्रह्मास्वादसहोदरता, चित्तमालिन्यविदूरकता चास्य! तथा हि—विशुद्धानन्दलाभार्थं यतयो गिरिगुहामाश्रित्य चिरंतपश्चरन्ति; साफल्यलाभे तु तेषां विद्यते विरलता, केचन शास्त्रसमुद्रमवगाह्य महता क्लेशेन तत्र सन्तरन्तोऽपि आनन्दस्य परां काष्ठां लब्धुं नार्हन्ति। यद्यपि,

**यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥**

इत्युच्यते; तथापि सम्यक् तृष्णाक्षयो ध्यानपरायणैः मुनिभिरपि प्रायश एव साधयितुं न पार्यते। श्रूयते च वर्षशतानि तपश्चरित्वाऽपि महर्षिर्विश्वामित्रो मेनका-नाम-वराप्सरसं विलोक्य सहसा कामभावेन विमूढः सञ्जात इति। (क्रमशः)

१. साहित्यदर्पणम्; चतुर्थः परिच्छेदः।
२. तत्रैव।

१. अभिज्ञानशाकुन्तलम्; प्रथमोऽङ्कः।

# विक्रेयाणि बहुमूल्यानि पुस्तकरत्नानि

**गृहं स्वर्गं कर्तुं मानवजीवनञ्च सफलयितुं वाणीपुस्तकमालातः महापरिषदः महामण्डलसंस्थानतश्च प्रकाशितानि निम्नलिखितपुस्तकानि विक्रयार्थं प्रस्तुतानि। विशेषविवरणाय सूचीपत्रं नियमाश्च पत्रप्रेषणेन समासादनीयाः।**

| | | | |
|---|---|---|---|
| १. भारतधर्म-समन्वय | १–५० | २७. तीर्थ और देवपूजन-प्रश्नोत्तरी | ०–२५ |
| २. परलोक-तत्त्व | २–५० | २८. स्मरणी | ०–६२ |
| ३. कठोपनिषद् | ३–०० | २९. स्त्री-पुरुष विज्ञान | ०–३७ |
| ४. धर्मतत्त्व | २–५० | ३०. श्राद्ध और परलोक-विचार | ०–३७ |
| ५. वेदान्तदर्शन | १–५० | ३१. धर्म-विज्ञान प्रथम, द्वितीय, तृतीय, ५) ४) | ४–०० |
| ६. हिन्दूधर्मका स्वरूप | ०–३७ | ३२. श्रीमद्भागवत, एकादश स्कन्ध | ३–५० |
| ७. तत्त्वबोध, सजिल्द | १–०० | ३३. सती धर्म और योगशक्ति | ०–३७ |
| बिना जिल्दका | ०–७५ | ३४. अन्तःकरण-विज्ञान | ०–७५ |
| ८. आदर्श देवियाँ प्रथम भाग | २–२५ | ३५. निर्मूल आक्षेपोंका उत्तर | ०–३७ |
| ,, ,, द्वितीय भाग | २–५० | ३६. परलोक-प्रश्नोत्तरी | ०–२५ |
| ९. सती सदाचार | १–५० | ३७. श्रीमद्भगवद्गीता प्रथम भाग | ४–०० |
| १०. कर्म-रहस्य | २–५० | ,, ,, द्वितीय भाग | ३–५० |
| ११. केनोपनिषद् | १–५० | ३८. मनुष्य-धर्म | ०–३७ |
| १२. ईशावास्योपनिषद् | १–०० | ३९. धर्मकल्पद्रुम प्रथम खण्ड | ६–०० |
| १३. सप्तशती ( दुर्गा ) गीता, सजिल्द | ३–०० | ,, द्वितीय खण्ड | ३–०० |
| ,, दफ्ती जिल्द | २–२५ | ,, तृतीय ,, | ३–५० |
| १४. सदाचार-प्रश्नोत्तरी | ०–३७ | ,, चतुर्थ ,, | ५–०० |
| १५. व्रतोत्सव-कौमुदी | १–३७ | ,, पञ्चम ,, | ३–५० |
| १६. हिन्दू-संस्कृति-समीक्षा | ०–५० | ,, षष्ठ ,, | ४–०० |
| १७. धर्म-प्रवेशिका | ०–७५ | ,, सप्तम ,, | ३–५० |
| १८. पूजा-प्रार्थना | ०–६२ | ,, अष्टम ,, | ४–०० |
| १९. गायत्रीमंत्र-टीका | ०–२५ | ४०. प्रवीण दृष्टिमें नवीन भारत ( प्रथम खण्ड ) | २–०० |
| २०. आचार-चन्द्रिका | १–०० | ,, ,, ( द्वितीय खण्ड ) | २–०० |
| २१. कन्या-शिक्षा-सोपान | ०–२५ | ४१. नवीन दृष्टिमें प्रवीण भारत | १–२५ |
| २२. गजेन्द्र-मोक्ष | ०–३७ | ४२. साधन-चन्द्रिका | १–७५ |
| २३. महिला-प्रश्नोत्तरी | ०–५० | ४३. शास्त्र-चन्द्रिका | १–७५ |
| २४. व्रतोत्सव-चन्द्रिका | ५–०० | ४४. धर्म-चन्द्रिका | १–६५ |
| २५. धर्माधर्म-प्रश्नोत्तरी | ०–२५ | ४५. पातञ्जल-योगदर्शन ( हिन्दी भाष्य ) | ३–०० |
| २६. सुलोचना | ०–६२ | ४६. कर्ममीमांसा-दर्शन ( सम्पूर्ण ) | १२–०० |

**व्यवस्थापक : वाणी-पुस्तकमाला, आर्यमहिला हितकारिणी महापरिषद्, जगतगंज, वाराणसी**

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका ( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५ सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६० ) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

वर्षम् ४९



अङ्कः ८

सम्पादकः

गो० न० वैजापुरकरः

अगस्त

१९७३

वार्षिक-मूल्यम्

५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्

## जय जय भारतमातः !

जय जय भारतमातः !
जय जय भारतमात-र्जय हे ! जय जय भारतमातः !

१. क्षालयन्ति सदा सुधासलिलैर्गङ्गाद्याः शुभनद्यः,
पावनावलोकनै-स्त्वदीयैः पापं यास्यति सद्यः,
पूतस्तव मृदुवातः !

२. मङ्गलमयि जय जननि कृपामयि विमले त्वं हि भवानी,
सुमधुरहासिनि कलयति जगति रससान्द्रा तव वाणी,
तव महिमात्यवदातः !

३. राम - कृष्ण - शङ्कर - प्रभृतयो भवशमसाधनशीलाः,
विपिन - तिलक - खुदिरामप्रमुखाः कृतदेशोत्तरलीलाः,
( तव ) क्रोडे केलितवन्तः !

४. रवीन्द्रनाथ - विद्यासागरा-ऽऽशुतोषप्रभृतयो मुख्याः,
गान्धी - नेताजी - देशबन्धुप्रमुखाः पुत्रा वीराः,
सम्यक् प्रकटितवन्तः !

५. षट्पञ्चाशत् - कोटिपरिमिता-स्तनया जयिनो वीराः,
वज्रबाहुधृत-खरकरवालाः साहसिनो रणधीराः,
कस्त्वां जेतुं शक्तः ?

६. सकलकलुषकुलनाशिनि मातस्त्वमसि सदा कल्याणी,
तव शुभमहिमा भुवने ख्यातस्त्वं वत्सला शिवानी,
तुभ्यं मे प्रणिपातः !

— श्री नीरदवरण भट्टाचार्यः
बी० ए० ( आनर्स ), काव्यतीर्थः

# महामण्डले श्रीकृष्णजन्माष्टमीमहोत्सवः, गुरुदेवजयन्ती च

## अनन्तश्री करपात्रस्वामिपादानां प्रवचनम्

वाराणसी । भारतधर्ममहामण्डलीये पराम्बायाः श्रीगायत्रादेव्या मन्दिरे विगते २१-८-७३ दिनाङ्के रात्रौ ८॥वादनतोः भगवतः श्रीकृष्णस्य जन्माष्टमी-महोत्सवो, गुरुदेव श्रीज्ञानानन्दस्वामिजयन्ती महोत्सवश्च महता समारोहेण सम्पन्नः। समारोहस्य सभापतिपदेन अनन्तश्री पूज्य करपात्रस्वामिपादैः श्रीकृष्णस्य परमात्मनः स्वरूपवर्णना-ऽवतारग्रहणविषये महत्त्वपूर्णं भावभरितं प्रवचनं कृतम् । महामण्डलप्रधानमन्त्रिभिः श्रीशिवनन्दनलाल दर महोदयैः, कविराज श्रीव्रजमोहन दीक्षित महाभागैः, श्री वी० पी० सक्सेना महोदयैश्च भगवते श्रद्धाञ्जलयः समर्पिताः महामण्डलसञ्चालकाभि पूज्यश्री विद्यादेवी महोदयाभिः श्रद्धाञ्जलिं समर्प्य निवेदितं यदयमपि कालो भगवदवतारस्य समुपस्थितः । भगवानेव साम्प्रतिकीं विपदं निहन्तुं प्रभवति । भगवतो जन्ममहोत्सवोन्तरं प्रसादवितरणादिकमपि सम्पन्नम् ।

# अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

४९ वर्षे ] वाराणसी, श्रावणः, २०३० वै० : अगस्त १९७३ ई० [ ८ अ :


## जगति विजयते रजत-जयन्ती !

जगति विजयते रजत-जयन्ती !
स्वतन्त्रता साम्प्रतिक - भारते जन्मसिद्धिसफला विभारते।
जनगणमन इति हासपावनी रासरङ्गभुवि नटति हसन्ती॥ १॥

तिलक - लाजपत - मालवीयगुरु - गान्धि - जवाहर - लालबहादुर-
वीरपटेल - सुभाष - भासिनो संप्रतीन्दिरा हृदि विकसन्ती॥ २॥

शिमलाशान्तिसन्धि - सुपुनीता पाकविहित - रणविजय - पीता।
वंगबन्धु - धरणीप्रकाशिनी भरतभूमिभगिनीव लसन्ती॥ ३॥

पञ्चदशी तारिका तारिका हिमगिरितः कन्याकुमारिका।
भारतीह जननी निवासिनी भुक्ति - मुक्तिफलमिव वितरन्ती॥ ४॥

श्री शिवजी उपाध्यायः

# श्रीमहर्षि-ज्ञानानन्दचरितं महाकाव्यम्

— स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः —

( विंशो सर्गे )

११. शक्तेर्न भिन्नो निजदाहिकाया वह्निश्च गाता निजगानशक्तेः ।
तथैव तद्ब्रह्म तदीयशक्त्या न भिद्यते चेति मतं श्रुतीनाम् ।।
१२. चैतन्यतच्छक्ति - विभिन्नतायाः प्रतीति - राहित्य - विवेक एव ।
अद्वैतसिद्धेः स हि बीजमन्त्रो यः प्राणिनां जीवनलक्ष्यमास्ते ।।
१३. जीवप्रवाहोऽयमनन्तशक्तौ चिदम्बुधौ सर्वनिदानभूते ।
धावन्नबाधः प्रभवेद् विलीनः शिक्षाविधेर्लक्ष्यमिदं वरेण्यम् ।।
१४. द्विधा विभज्यैव निजं स्वरूपं सा ब्रह्मशक्तिर्भुवि बन्ध-मोक्षौ ।
ददात्युभौ जागतिकासुभृद्भ्यः सिद्धान्त एषोऽखिल-शास्त्रसिद्धः ।।
१५. तस्यास्तु विद्या च तथाप्यविद्या भेदद्वयं चेति मतं श्रुतीनाम् ।
आद्या तु निर्वाणपदं प्रदत्ते बन्धस्य हेतुर्गदिता द्वितीया ।।
१६. अन्तर्जगद्रूप - मनन्तपारं तद् ब्रह्मराज्यं ह्यनुभूतिगम्यम् ।
दुरूहमादर्शयतेतरां या निजाश्रिताऽन्तेवसतः सदैव ।।
१७. सर्वापदां संशमनी प्रपन्ना समान् समानन्दयते प्रसन्ना ।
ज्ञानस्य चैका जननी नमस्या सत्त्वात्मिका सर्वसुखैकहेतुः ।।
१८. विज्ञानिनो भक्तवरान् स्वकीयान् स्वरूपसंदर्शनपूर्वकं हि ।
आनन्दरूपाम्बुनिधावपारे निमज्जयन्ती च निमज्जिता च ।।
१९. आत्मोन्मुखाञ् जीवगणान् विधत्ते तेभ्यो द्रुतं मुक्तिपदं प्रदत्ते ।
चक्षूंषि चोन्मीलयते जनानां विद्याऽस्ति सा मोक्षनिदानभूता ।।
२०. अज्ञानजालं परिसारयन्ती जीवान् प्लवङ्गानिव नर्तयन्ती ।
मायामयेऽशान्तिद-दुःखपाशे ह्यज्ञानिनो हन्त निपातयन्ती ।।

( क्रमशः )

# स्वतन्त्रता-दिवसीयम् आत्म-समीक्षणम्

तैत्तिरीयोपनिषदि अन्नस्य माहात्म्यं वर्णयन्त्या भगवत्या श्रुत्या उक्तम्—अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभि संविशन्तीति (३.२.१)। अत एव तत्रैवाग्रे अन्नस्य निन्दनं निषिद्ध्य तन्निन्दाकरणाभावं व्रतत्वेन समुल्लिख्य शरीरं प्राणञ्च अन्नब्रह्मत्वेन व्यवस्थाप्य तदुपासनाया फलमप्याह वेदमाता—अन्नं न निन्द्यात्। तद् व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्या (३.७.१)। अन्नत्यागमपि निषिद्ध्य तत्त्यागाभावो व्रतत्वेनाख्यातस्तत्रैव श्रुत्या—अन्नं न परिचक्षीत। तद्व्रतम् इत्यादि (३.८.१)। ततोऽग्रे एव अन्नस्य वर्धनं व्रतत्वेन निर्दिश्य तस्यावश्यकर्तव्यत्वं साधितम्—अन्नं बहु कुर्वीत। तद्व्रतम् इत्यादि (३.९.१)। अस्यामेवोपनिषदि द्वितीयवल्यामप्युक्तम्—अन्नाद्वै प्रजाः प्रजायन्ते। या काश्च पृथिवीं श्रिताः अथो अन्नेनैव जीवन्ति इत्यादि (२.२.१)। इत्थम् आनन्दमय-पञ्चमकोषतो विनिर्मुक्तस्य ततः परतरस्य शुद्धतमस्य परब्रह्मणः साक्षात्काराय प्रथमकोषतया अन्नस्य वैशिष्ट्यं भारतीयदर्शनदृष्ट्या सर्वथाऽनुपेक्ष्यं सिद्ध्यति। कालदृशाऽपि विचार्यमाणे अन्येषु युगेषु अस्थ्यादिगतत्वेन प्राणवर्णनेऽपि साम्प्रतिके युगे प्राणानां स्थितिः अन्ने एव निर्भरेति शास्त्रकृद्भिरपि जोघुष्यते—कलावन्नगताः प्राणाः इति। एवञ्च रागप्राप्तस्याप्यन्नस्य उत्पादन-रक्षण-सर्वसाधारणसुलभीकरणादिविषये शास्त्रकृतां भूयानाग्रहो दृश्यते।

वस्तुतो विचार्यमाणे व्यवहारपथि अन्नमिदं सर्वथा देश-कालसीमातीतमेव विजृम्भते। अतो यदि कोऽप्येनं वैयक्तिक-राजनैतिका-ऽऽर्थिकादि-स्वार्थसाधनाय समुपयुज्येत, तदा तस्य दृढतरः प्रतिरोधः प्रत्येकस्य मानवस्य कर्तव्यं भवति। साम्प्रतमस्माकं स्वतन्त्रे राष्ट्रे भारते इदमेव अखिलभारतीय-संक्रामकव्याधिरूपं बिभ्रद् दरीदृश्यते। जीवनोपयोगि-वस्तुमात्रविषये कस्याप्येतादृशस्वार्थसाधनं सर्वथा निन्द्यं परिहार्यञ्च। तथापि अन्नविषये तु तदतितरां गर्ह्यमुच्येत। अनेनैव सर्वविधस्वार्थसाधनेनाद्य भारतीयसामान्यप्रजानां निम्नप्रजाजनाञ्च जीवनं कीदृक् सङ्कटापन्नं सञ्जातमिति पृथक् वक्तव्यं नावशिष्यते। भुक्तभोगिनी प्रायो बहुसंख्यका भारतीयजनताऽस्य। वृत्तपत्रेषु एतद्विषये नैकाः समीक्षारहरहः प्रकाशयन्ते। विभिन्नराजनैतिकपक्षावलम्बिनः परस्परं दूषयितुं कटिबद्धाश्च दृश्यन्ते। परं सर्वैरेभिरुपायैः मूलभूतसमस्याया लेशतोऽपि समाधानं न जायते। उत्पादनस्य न्यूनता, अवर्षणाऽतिवर्षणादि दैव्य आपदा अपि अस्या विपदः कारणरूपेण समुपस्थाप्यन्ते। राष्ट्रियं शासनं संग्रहकारिणामेव दोषं समुद्भावयति। तदर्थञ्च गोधूमस्य अधिग्रहणं कृत्वा इतः परं तण्डुलस्याप्यधिग्रहणाय तत् कटिबद्धं दृश्यते। परमेकस्य अन्नस्य अधिग्रहणेन देशे भीषणाकालस्य यादृशी स्थितिः समुपस्थिता, तां दृष्ट्वाऽपि

तस्यैव पथोऽनुसरणं कथमपि विवेकानुप्राणितं वक्तुं न शक्येत। आश्चर्यं तु तदैव भवति यदा प्रधानमन्त्रि-सदृशा अपि स्वतन्त्रतादिवसीय-राष्ट्रियसन्देशे आदित आन्तं गोधूमचर्चां कृत्वाऽपि इदमेव वदन्ति यदस्माभि-र्यदधिग्रहणं कृतम्, तस्यैव सुफलं यद् गोधूमस्य दृश्य-मानोऽप्यंशो जनतया समासाद्यते। श्रुत्वेदमिदमेव वक्तव्यं भवति यत् प्रधानमन्त्रिणोऽस्माकमेतादृशाः सर्वसमर्था दैवादस्माभिरुपलब्धाः ये अन्नब्रह्मापि करा-मलकायितं कर्तुं प्रभवन्ति! तटस्थाः पुनरिदमपि वक्तुं समभिलषन्ति यद्भारतीया प्रजा एतावती स्वभावतः सहनशीला यत्प्राणसङ्कटेऽपि शासनस्य सम्प्रतिष्ठां संरक्षितुमप्रमदितेव तिष्ठति। तस्या रक्त-कणेषु राष्ट्रप्रेम, राष्ट्रस्वातन्त्र्यरक्षणभावा अद्यापि प्रवहन्ति। अन्यथा साम्प्रतिकस्थितौ राष्ट्रव्यापिनी-मुग्रतरां क्रान्तिं समाश्रित्य ये केऽपि किल प्राणभृतः प्राणभूतेन अन्नेन सह क्रीडन्ति, अविशेषेण तेषां सर्वेषामेव शुद्धिकरणाय भारतातिरिक्तं किमपि प्रबुद्धं राष्ट्रं सचेष्टं दृष्टं स्यात्। अन्नोत्पादने प्रमादकर्तारः, तद्रक्षणोपेक्षिणः, तत्सङ्ग्रहेण मूल्याधिक्यार्जनलोलुपा अर्थपिशाचाः, स्वीययन्त्रस्य पदे पदे प्रमदितत्वमनु-भूयापि तदधिग्रहणाय प्रवृत्ताश्च शासकाः सर्वेऽपि निरीहभारतीय-प्रजाजनस्य जीवनेन क्रीडन्तोऽस्य सङ्कटस्य उत्तरदायित्वतः कथमपि मुक्ताः न भवेयुः।

तादस्थ्येन विचार्यमाणेऽस्माकं राष्ट्रस्य एतद्विषयिणी समग्रा नीतिरेव दोषग्रस्ता। स्वातन्त्र्योत्तरं वयं स्वकीयां नीतिं परित्यज्य वैदेशिकानां नीतेरनुसरणायैव स्पर्ध-माना इव संवृत्ताः। वैयक्तिक-सामाजिक-राजनैतिका-ऽऽर्थिकादिषु सर्वेष्वपि क्षेत्रेषु अयं दोषः संक्रान्तो वर्तते। शासनं विचारयति यदन्यवैदेशिकराष्ट्रवत् अत्रापि सर्वेषां पदार्थानां राष्ट्रीकरणमेव प्रजाकल्याणस्य बीजम्। अत एव तेन बैंक-बीमा-प्रस्तरेन्धन (पत्थर-कोयला)-प्रभृतीनामपि राष्ट्रीकरणं कृतम्। गोधू-मस्य राष्ट्रीकरणमपि परिस्थितिविशेषानुगमपि अस्या एव नीतेः पथानुगामी। अचिराद्भावि तण्डुलराष्ट्री-करणमपि तथैव। किं बहुना, शिक्षाया अपि राष्ट्री-करणं शासनस्य चिकीर्षितम्। किन्तु येषामपि अद्या-वधि राष्ट्रीकरणमभवत्, तेषु राष्ट्रीकरणपूर्वतः कियती प्रगतिरभूदिति विचार्यमाणे सुस्पष्टं पूर्वस्थिति-तोऽपि ह्रास एव प्रतिफलति। सत्येवमयं राष्ट्रीकरण-व्यामोहोऽस्माकं देशस्य कृते महानभिशापो यथा न भवेत्, तथैव सर्वैर्विवेकिभिः प्रयतनीयम्। कस्यचन वस्तुनः राष्ट्रीकरणे कृतेऽपि तत्सञ्चालका वयमेव। शासनस्य दण्डोऽस्माकमुपरि तेन वर्तेत इति सत्यम्, परं ततो रक्षणमपि कर्तुं नैके उपाया आविष्कृताः स्युः, आविष्क्रियन्ते चापि। व्यक्तेरभिक्रमस्तु सर्वथा विलोपं गच्छन्ति। तस्य दायित्वमपि लोकतन्त्रनाम्ना तस्मिन् बलात् स्थापयन्तु। परं मनसि तस्य तन्मनागपि पदं न धत्ते! अतः भारतस्य कृते सर्वथाऽनिवार्येषु कतिपयेष्वेव धूमशकटि-पत्रालय-सेना-मूलद्रव्यनिध्यादिषु राष्ट्री-करणस्य समर्थनार्हत्वेऽपि सामान्यतोऽधिकाधिकविषयेषु विकेन्द्रीकरणमेव वरदानायितं भवेदित्यस्माकं निर्विचि-कित्सितं मतम्। विकेन्द्रीकरणेन प्रत्येकस्मिन् तत्तद्विष-यकमुत्तरदायित्वं प्रत्यक्षतः समायाति। तस्य निर्वाहे च प्रमादे कृते निकटवर्ती तत्सम्बन्धी एव तनुशासनं कर्तुं प्रभवति। कश्चिदपि स्वीयं प्रमादमन्यस्मिन् समारोप-यितुं सहसा न प्रभवति। विषयोऽयं स्वतन्त्रविवेचन-मपेक्षते। तथापि समासतोऽत्र इदमेव वक्तव्यं यद् भारत-शासनेन राष्ट्रीकरणस्य व्यामोहो यथाशीघ्रमशेषतः परित्याज्यः, विकेन्द्रीकरणपथि च उत्तरोत्तरं प्रगताः क्रमा विधेयाः। नान्दीरूपेण च अन्नस्य अधिग्रहणं सर्वप्रथमं सर्वथा त्याज्यम्। अन्यथाऽस्य दुष्परिणामो न केवलं शासकैरेव समुपभुज्येत, भारतीया प्रजा अपि तादृशं दुष्परिणामं भोक्ष्यति, येन तदीयस्वातन्त्र्यमपि सङ्कटापन्नं स्यात्।

# देववाणी-गौरवम्

——स्वर्गीयाः म० म० हरनारायण गोस्वामिपादाः——

१. पूर्वं दैवी सृष्टिः प्रतीयते स्वरविभागेन ।
पश्चाद् व्यञ्जनवर्णैः लौकिकसृष्ट्युद्भवो भाति ॥

२. स्वरशब्दव्युत्पत्त्या व्यञ्जनशब्दस्य चार्थेन ।
जीवात्मदेहयोः किं प्रतीयते नेह सम्बन्धः ॥

३. त्यक्त्वा स्वरसाहाय्यं कथमपि न व्यञ्जनस्थितिर्भवति ।
एवं हि जीवसत्तां विना न देहव्यवस्थितिः कापि ॥

---

अस्माकमस्मिन् हितोपदेशे कश्चिदुच्येत यर्हि ये तथा पापं समाचरन्ति, तेषां निरोधः कथं क्रियेत ? इति । किन्तु अयमपि समाधेयः प्रश्नः । अस्माकं शास्त्रकाराणामिदमपि मतं यत्प्रत्यक्षपापानां दण्डधरो राजा भवति, परमप्रत्यक्षपापानां दण्डनाय अथ **प्रच्छन्नपापानां शास्ता वैवस्वतो यमः** इत्यप्युक्तम् । अर्थात् यमापरपर्यायस्य धर्मराजस्य भयं दण्डभयादपि सविशेषं प्रभावकरं भवति । दौर्भाग्यात् स्वातन्त्र्यकालारम्भत एव क्रमशोऽस्माकं देशे बाह्यदण्डधराणामेव प्रेरणया अपरोक्षस्य दण्डधरस्य धर्मराजस्य भयं सुनियोजितं दूरीक्रियते नैकैर्धर्मसंस्कृतिविरुद्धैर्विधानैः तदेव सर्वमद्य एतादृशं भस्मासुरकल्पतां गतं यत् शासनमपि तस्य चपेटकायां समापतितमस्ति । शासनमद्यतनीयानां राष्ट्र-संस्कृति-समाजध्वंसकानां नैकेषां प्रमादानां परिमार्जनाय कामं विविधविधानायोजनादिकं करोतु, मूलतस्तन्नियन्त्रणं धर्म-परलोकेश्वरादिभावनासुदृढीकरणेनैव प्रभवितुं शक्नुयात् । अतः शासनेन एकत्र भारतीय-प्राचीननीत्यनुसारीणि विकेन्द्रीकरण-स्वावलम्बन-निराडम्बरतादीनि विधानानि अविलम्बं योजनापूर्वकं कार्यान्वितानि विधेयानि चेत्, अपरत्र भारतीयजनतासु व्यापकरूपेण अहिंसा-सत्यास्तेयादि - सर्वसामान्यधर्मभावनानां परलोकभावनानाम् ईश्वरभावनानाञ्च संक्रमणस्य पृथक् नियोजनं विधेयम् । राष्ट्रियचारित्र्यसंहारिका परिवार-नियोजना यदि भारतीयभावना-नियोजनायां परावर्तिता स्यात्तदा चारित्र्यरक्षणेन सदैव राष्ट्रस्य चारित्र्योन्नयनमपि नूनं भवेत् । समुन्नतचरित्रे राष्ट्रे अद्य प्रवर्तमाना जनसाधारण - जीवनहरण - विषया अन्नब्रह्म - विडम्बनादिसदृश्यः समस्याः कथमपि पदमादधातुं न शक्नुयुः । किमस्माकं राष्ट्रनायकास्ताटस्थ्येन प्रस्तोतितेऽस्मिन् स्वतन्त्रता - दिवसीये आत्म-समीक्षणे क्षणमवधास्यन्ति ?

●

४. सृष्टौ लये च हेतुर्वियतो बीजं हकार उद्दिष्टः।
अत एव द्विरुपात्तः सूत्रेष्वस्यां हकारोऽयम्॥

५. माहेश्वरेषु सूत्रेष्वस्ति जगत्सृष्टि - लय - रचना।
सूक्ष्मदर्शैव विपश्चित् कश्चित् पश्यति परिश्रमोपेतः॥

६. बहुभिर्वैयाकरणैः स्वग्रन्थेषु क्वचित् प्रोक्तम्।
इह रचनावैचित्र्यं यत्तन्नान्यासु भाषासु॥

७. संयुक्ताक्षररचितं प्रथमत उच्चारणमन्यासु।
वर्णानामिति चित्रं कथमाद्यास्ता विनिर्दिष्टाः॥

८. प्रथमाक्षररचनातः पूर्वं नान्योऽस्ति वर्णोऽयम्।
कथय कथं संयुक्तः प्रथमोच्चारणविधौ वर्णः॥

९. दोषोऽयं सुरवाण्यां क्वचिदपि नैवास्ति शुद्धवर्णायाम्।
अन्यासु वज्रलेपो दोषोऽयं वर्णमालासु॥

१०. प्रारम्भ एव तासां दोषो यद्यस्ति वर्णमालायाः।
कः साहसी तु तासामाद्यत्वं मन्यते लोके॥

११. गैर्वाणी वाणीयं सृष्टेः पूर्वं स्वयंभूता।
अत एव दोषविधुरा ब्रह्ममयीत्येव सिद्धान्तः॥

१२. वैदेशिक - विदुषामपि निज - निज - भाषाग्रह - ग्रस्ते।
गैर्वाणी - वाणीकृत - रचना चेतसि चमत्कृतिं तनुते॥

१३. उच्चारणानुकूलो ध्वनिरपि यत्रास्ति वर्णानाम्।
लिपिरपि तद्वच्छुद्धा त्रयमप्येतत् समं शुद्धम्॥

१४. नैतत्त्रयमनुरूपं भाषास्वन्यासु दृश्यते साम्यम्।
सर्वासु ध्वनिरन्यो लिपिरन्योच्चारणं चान्यत्॥

१५. वेदान्त-न्याय-योगाः कपिलमुनिमतं ज्यौतिषं मन्त्रशास्त्रम्,
नीतिस्तन्त्रं चिकित्सा प्रवहणगमनं वास्तुविद्याऽथ शिल्पम्।
वाणिज्यं गानविद्ये कृषि-गणित-कला युद्धविद्या स सर्वे
सन्त्यस्यामेव पद्ये क्वचिदपि नहि तेऽन्यासु भाषासु तस्मिन्॥

# वेदेषु गृहस्थाश्रमः

—श्री जयशङ्कर बहेचरलाल शुक्लः—

[ कर्मकाण्डाध्यापकः—वटोदर-संस्कृत-महाविद्यालयस्य ]

[ आश्रमाश्चत्वारः । चतुर्ष्वपि आश्रमेषु गृहस्थाश्रमस्यैव श्रेष्ठत्वं शास्त्रेषु प्रतिपादितं विद्यते । गृहस्थाश्रमिणा कथं भाव्यम्, कथञ्चान्यैः सह वर्तितव्यम् ? गृहस्थेन जनतायामेव जनार्दनो द्रष्टव्यः । एवं जनसेवयैव जनार्दनस्य सेवा सिद्धा भविष्यति । गृहस्थाश्रमगौरवविषये वेदेषु किं किं विचारितमस्ति, सर्वमेतदस्मिन् लेखे प्रतिपाद्यते । —सम्पादकः ]

मनुष्यस्य मनसि निम्नदर्शिताः सप्तेच्छाः सदा प्रवर्तन्ते—( १ ) दीर्घजीवनेच्छा, ( २ ) कामेच्छा, ( ३ ) धनेच्छा, ( ४ ) मानेच्छा, ( ५ ) ज्ञानेच्छा, ( ६ ) न्यायेच्छा, ( ७ ) मोक्षेच्छा च । अस्मिन्विषये वेदेषु किं किं विचारितमस्ति, तत्प्रदर्श्यते ।

अथर्ववेदे गायत्रीमाहात्म्यं वर्णितम्—

स्तुता मया वरदा वेदमाता
प्रचोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं
ब्रह्मवर्चसं मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥
—( अथर्व० १९.१७.१ )

द्विजान् पावयन्तीं प्रचोदयात्पदान्तां वेदमातरं भगवतीं गायत्रीं देवीमहं स्तौमि ; स्तुत्या प्रसन्ना सा मह्यं ( १ ) आयुः, ( २ ) प्राणम् ( बलम् ), ( ३ ) प्रजाम्, ( ४ ) पशुम्, ( ५ ) कीर्तिम्, ( ६ ) द्रविणम्, ( ७ ) ब्रह्मविद्याञ्च दत्त्वा मोक्षपदं यच्छतु । इत्थं ज्ञायते यन्मनुष्यस्य हृदीमाः सप्तेच्छाः स्वाभाविक्यो भवन्ति ।

अत्र प्रथमेच्छा दीर्घजीवनेच्छा । अस्मिन्विषये वेदे लिखितम्—

शतमिन्नु शरदो अन्ति देवा
यत्रानश्चक्रा जरसन्तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति
मा नो मध्यारीरिषतायुर्गन्तोः ॥
—( शु० य० २९.२२ )

शतं वर्षाणि वयं जीवम । तथा—

पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
शृणुयाम शरदः शतम् । प्रब्रवाम शरदः शतम् ।
अदीनाः स्याम शरदः शतम् । भूयश्च शरदः शतात् ।
—( शु० य० ३६.२४ )

मनुजस्य द्वितीयेच्छा कामेच्छा । अत्र विषये वर्णनमुपलभ्यते यत्—

कामस्तदग्रे समवर्तत मनसो
रेतः प्रथमं यदासीत् ।
स कामकामेन बृहता स
योनी रायस्पोषं यजमानाय धेहि ॥
—( अथर्व० १९.५२.१ )

काम एव मनसि बीजरूपेण वर्तते । हे काम ! त्वयैव मम मनसि रतिसुखेच्छा विस्तारिता । अतो मह्यं धनं प्रयच्छ ।

प्रियो देवानां भूयासं प्रियः प्रजानां भूयासम् ।
प्रियः पशूनां भूयासं प्रियः समानानां भूयासम् ॥
—( अथर्व० १७.१.२ )

अर्थादहं देवानां, प्रजानां पशूनां, सामाजिका-

नाञ्च प्रियो भूयासम्, इत्येवं पुत्र-पौत्रादीनां पश्वादीनाञ्चेच्छा प्रदर्शिता।

अतोऽग्रे तृतीया धनेच्छा। मानवस्य धनेच्छा कीदृशो वर्तते, तस्याः प्रतिपादनमेवं कृतं यत्—

**एकपाद् भूयो द्विपदो विचक्रमे**
**द्विपात् त्रिपादमभ्येति पश्चात्।**
**चतुष्पादेति द्विपदामभिस्वरे**
**सम्पश्यन् पङ्क्तीरुपतिष्ठमानः॥**
—(ऋ० १०.११७.८)

अर्थात् मानवा धनवतो जनान् दृष्ट्वा परस्परं स्पर्धन्ते। अन्येभ्यश्च धनिकेभ्योऽधिकाधिकधनप्राप्त्यर्थञ्च प्रतयन्ते।

धनेच्छापरिपूर्त्यनन्तरं मनुजस्य हृदि मानेच्छा उत्पद्यते। चतुर्थी मानेच्छा वेदेष्वित्थं वर्णिता—

**यथा सूर्यो अतिभाति यथास्मिन् तेज आहितम्।**
**एवा मे वरणो मणिः कीर्तिं भूतिं नियच्छतु॥**
**तेजसा मा समुक्षतु यशसा समनक्तु मा॥**
—(अथर्व० १०.३.१७)

यथा सूर्यो यशसा तेजसा च विभाति तथा अहमपि तेजसा यशसा च युतो भवेयमिति मानप्राप्त्यर्थं प्रार्थनाऽत्र कृता।

अतोऽग्रे पञ्चमी ज्ञानेच्छा। तस्या वर्णनमपीत्थं कृतं विद्यते—

**यां मेधां देवगणाः पितरश्चोपासते।**
**तया मामद्य मेधयाऽग्ने मेधाविनं कुरु॥**
**मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः।**
**मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे॥**
—(शु० य० ३२.१४-१५) अथर्ववेदेऽप्युक्तम्—

**मनसे चेतसे धिय आकूतय उत चित्तये।**
**मत्यै श्रुताय चक्षसे विधेम हविषा वयम्॥**
—(अथर्व० ६.४१.१)

अर्थात् मनोऽन्तःकरण-बुद्धिविचारज्ञानमतिश्रवण-दृष्ट्यादिशक्तीनामुन्नत्यै वयं सर्वे यज्ञकर्म कुर्म इति। षष्ठे न्यायेच्छा। ज्ञानेच्छानन्तरं वेदेषु न्यायेच्छावर्णनमप्युपलक्ष्यते। यथा—

**देहि मे ददामि ते नि मे धेहि नि ते दधे।**
**निहारं च हरासि मे निहारं निहराणि ते॥**
—(शु० य० ३.५०)

त्वं मह्यं यच्छ, तुभ्यञ्चाहं यच्छानि। इदमहं गृह्णामि, त्वं चेदं गृहाण। अर्थादावयोर्व्यवहारो न्याययुक्तो भवतु। कीदृशोऽयं रमणीयो न्यायादर्शः प्रदर्शितः!

अतोऽग्रे सप्तमी मोक्षेच्छा। तस्याश्च वर्णनमित्थं दृष्टिगोचरं भवति—

**वेदाहमेतं पुरुषं महान्त-**
**मादित्यवर्णं तमसः परस्तात्।**
**तमेव विदित्वाऽतिमृत्युमेति**
**नान्यः पन्था विद्यतेऽयनाय॥**
—(शु० य० ३१.१८)

मनुजस्तं परमात्मानं ज्ञात्वैवामृतत्वं प्राप्नोति। अयनाय नान्यः कश्चन मार्गो विद्यते। अन्यच्च—

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि॥**
—(ऋ० ९.११३.११)

हे परमात्मन्! यत्र आनन्द एवास्ति, यत्र सर्वाः कामनाः परिपूर्णा भवन्ति तन्मोक्षाख्यं स्थानं प्रति मां नय।

इत्थं मनुष्यस्य स्वाभाविकेच्छाप्रदर्शका नैके मन्त्रा वेदेषु वर्तन्ते। किन्त्विमा इच्छा मनुजो विना गृहस्थाश्रमं प्राप्तुं न शक्नोति। अतो वेदेषु गृहस्थाश्रमवर्णनमधिकृत्य ये ये विचाराः प्रदर्शिताः, तान्प्रति दृष्टिपातः क्रियते।

गृहस्थाश्रमे तिष्ठता नरेण प्रतिदिनं चिन्तनीयं यदहं कीदृशं कर्म कुर्याम, येन पुत्रपौत्रकलत्रैः स्वदेश-

वाग्भिरन्यैश्च जनैः सह सुखी भवेयम्। अत्र वेदा अस्मान् किमुपदिशन्ति तदेव विचार्यते।

वेदाश्चत्वारः—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्चेति। तत्र वेदेषु गृहस्थाश्रमस्य पर्याप्तं वर्णनमुपलभ्यते। तत्र गृहस्थेन कथं भाव्यं तद्विषये लिखितं यत्—

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम्।
क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥
—(ऋ० १०.८५.४२)

अर्थात् न केनचित्सह गृहस्थेन विरोधः कार्यः। गृहस्थाश्रम एव स्थित्वा पूर्णायुः प्रापणीयम्। पुत्रैः पौत्रैश्च सह गृह एवोषित्वा आदर्शरूपं जीवनं यापयितव्यम्।

पति-पत्न्योः पारस्परिकः सम्बन्ध ईदृग्वर्णितः—

समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।
सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ॥
—(ऋ० १०.८५.४७)

विश्वस्य समस्ताः विद्वांसश्च नौ आनन्तु। आवयोर्हृदयानि जलस्येव शान्तानि भवन्तु। आवयोः प्राणशक्ति-धारणाशक्ति-रुपदेशशक्तिश्च आवयोः कल्याणकर्त्री भवन्तु। वैदिकगृहेषु देवर्षिपितॄणां तृप्तये धृतदुग्धफलानां विशालमायोजनं दृग्गोचरं भवति—

ऊर्जं वहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतम्।
स्वधास्थ तर्पयत मे पितॄन्॥
—(शु० य० २.३४)

हे स्वधास्थ पितरः, अत्रास्माकं गृहेषु बलकारकस्य जलस्य, पुष्टिकारकस्य दुग्धस्य, रसयुक्तस्य तुष्टिकारकस्य अन्नस्य पक्वफलानाञ्च धारा वहन्ति। भवन्तस्तृप्यन्तु। अतोऽधिकं वैदिक गृहस्था स्वेष्टमित्राण्यतिथीन् क्षुधार्तांश्च जनान् स्वाद्वन्नेन जलेन सेवया च कया रीत्या आह्वयन्ति तदपि पश्यम—

ऊर्जं बिभ्रद् वसुवनिः सुमेधा
अघोरेण चक्षुषा मित्रियेण।
गृहानैमि सुमना वन्दमानो
रमध्वं मा बिभीतमत्॥
—(अथर्व० ७.६०.१)

हे वीर्यधननसम्पत्तिमेधासुहृद्भावयुक्ताः शुद्धान्तःकरणयुता जनाः! प्रेमपूर्वकमागच्छन्त्वत्र। भवन्तोऽलङ्कुर्वन्तु चास्माकं गृहाणि, मा बिभीत।

उपहूता भूरिधनाः सखायः स्वादु संमुदः।
अक्षुध्या अतृष्यास्त गृहा मास्मद् बिभीतन॥
—(अथर्व० ७.६०.४)

हे मित्राणि, इमानि गृहाणि भूरिधनानि क्षुत्तृड्हराणि च सन्ति। अत आगच्छन्तु, मा बिभीत।

उपहूता इह गाव उपहूता अजावयः।
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः॥
सूनृतावन्तः सुभगा इरावन्तो हसामुदाः।
अतृष्या अक्षुध्यास्त गृहा मास्मद् बिभीतन॥
—(अथर्व० ७.६०.५-६)

भो मित्राणि! अस्माकं गृहाणि गोभिरजाभिर्विविधरसयुक्तैरन्नैश्च परिपूर्णानि सन्ति। एषु गृहेषु सत्यवादिनः पुण्यवन्तो धनादियुक्ताः क्षुत्तृड्रहिताश्च नरा निवसन्ति, अयत आगच्छन्तु, मा बिभीत।

इहैव स्त मानु गात विश्वारूपाणि पुष्यत।
एष्यामि भद्रेणा सह भूयांसो भवता मया॥
—(अथर्व० ७.६०.७)

श्रान्ताः पथिकाः य इमानि गृहाणि स्मरन्ति, तानीमानि गृहाणि स्वसमीपमाह्वयन्ति। अतो मा कुत्रचिद् गच्छत, अत्रैव वासं कुरुत। इमानि भवनान्यनेकैः प्रकारैर्जनान् पुष्यन्ति। अतो वयमप्यत्रैव निवसामः। एवमुपर्युक्तेषु मन्त्रेषु गृहस्थाश्रमस्य कीदृग्भव्यं वर्णनं कृतमस्तीत्यस्य समासतः परिचय उपलब्धः।

# अहो नव्य-भारत-दशा !



श्री बटुकनाथ भट्टाचार्यः

१. आयातः समयो यदास्तिक-जनाः कायेन वाचा धिया पूर्वैः संस्तुत-सद्गुणान् शम-दया-त्यागानहिंसां क्षमाम्।
नित्यं स्वे चरितेऽनुसृत्य विशदं कुर्युः प्रमाणं तथा धर्मं लोकहितक्षमं च नियतं प्रेम्णो जयं शाश्वतम्॥
२. देवानां प्रथिते प्रियेऽत्र निलये तन्मन्दिरैरास्तृते देशे भारतवर्षनाममहिते प्राज्ञैः श्रिते तापसैः।
नित्यं भागवती कथा श्रुति-स्मृति-पुराणावृत्ति-संनादिते देवो विप्र-सुरावतार-पुरुषेषूज्जृम्भतेऽहो कथम्॥
३. प्रश्नोऽयं मुखरीभवत्यनुदिनं प्रोन्मथ्य चेतः सतां पाश्चात्त्यानुचिकीर्षया हतधियो हिंसापरा मानवाः।
अध्यात्मे कुशलां मतिं जनुभुवि श्रद्धारतिं विस्मृता जाता विप्लववादिनः कथमहो चित्रं किमस्मात् परम्॥
४. काश्मीरात् सेतुबन्धं मणिपुरमभितो द्वारकायाः प्रशस्ते देशे नानाप्रथानां सहवसतिमथो भूयसः सम्प्रदायान्।
स्मारं स्मारमपूर्वं-विश्वगुरुतां द्वीपस्य प्रत्नां कथां विद्वांसो मिलिता महाजनगृहेऽत्रालोचयन्त्वञ्जसा॥
५. ब्रह्मण्ये स्थिरलक्ष्यतामपि तदधिगमेऽश्रान्तयत्नां तपस्यां संरक्षायां प्रचेष्टामतुलितविभवस्यार्यसंस्कारराशेः।
धन्यानां चेह पुंसां प्रतियुगमभितो जातिवर्णानपेक्षं निर्व्याजं विमृशन्तु संहतिकरीं लोकस्य सद्पद्धतिम्॥
६. वर्तेते मनुजेषु संहतिकरे वृत्ती द्व आकल्पतो निष्ठानिष्ठसमादृते कृतिचये तत्त्वे परोक्षे तथा।
काले नित्यचलेऽग्रगामिनि सदा नानापदामास्पदे सामञ्जस्यविधिः समाजविधृती प्राज्ञैर्व्यवस्थापितः॥
७. राष्ट्रं धर्मानपेक्षं चरितमननयोः श्लाघ्यते पारतन्त्र्यं मर्यादा या समाजस्थितिमिह विदधे प्रत्यहं हीयते सा।
सृष्टिस्थित्यन्तकारी विभुरपि गणनामेति न स्वे प्रपञ्चे धत्ते नाम्नैव हन्त प्रथितपरिचयं भारतं वर्षमेतत्॥
८. किं श्रेयःसरणिश्च का कलिहते कालेऽधुना कोविदाः को वा लोकहिताय शास्ति मनुजान् धर्मस्य तत्त्वं स्थिरम्।
श्रद्धासङ्कटकीर्णं-लोकनिवहेऽप्यत्याहितोपद्रुते श्रद्धा सा व्यपयातु लोकहितकृद्धर्मे ध्रुवास्तां मतिः॥
९. प्रतीची - पन्थानं दिशति मनुजा भूमिवलये प्रयान्त्यन्धप्रायास्तमनु पुरुषार्थे हतधियः।
स्मरन्तः पूर्वेषां सुचरितविधौ लोकगुरुतां सतां मार्गं त्वार्या निशितमपि नैव प्रजहति॥
१०. ब्रह्मज्ञैरथ धर्मतत्त्वनिपुणे राजर्षिभिः कल्पितं राष्ट्रं विश्वजिदश्वमेध-मखकृद्-भूपैः पुरा भारतम्।
स्वातन्त्र्यं समवाप्य साम्प्रतमहो धर्मानपेक्षं स्थितं भूयः स्वं महिमानमेतु भगवान् धर्मस्तपोयोगतः॥
११. प्रेयोऽन्वेषिणि मानवे कलियुगे नित्यं विरोधाग्रहे आदर्शं श्रुतशीलसान्त्वतपसां सन्धारयन्तोऽधुना।
पुण्यं कर्मसु वाचि सान्त्वमनिशं ध्येयञ्च तत्त्वं परं तेषां ज्ञानमयं तपः शुभकृते लोकस्थितौ कल्पते॥
१२. मर्यादा मुनिभिः समाजविधृतौ श्रेयस्करी निर्मिता वैवाहो नियमस्तथा नवनवैरुल्लङ्घ्यते शासनैः।
माता गौर्नहि लोकपालनिवहै-धर्मानपेक्षाधिया संरक्ष्येति च गण्यतेऽहह विधे केयं दशोपस्थिता॥
१३. ग्रहर्क्षैराकीर्णं निरवधिनभो यन्त्रनिपुणा विमानैर्गाहन्ते दिवि परमधामानधिगताः।
न सन्तं मन्यन्ते तमखिलनिधानं तु यमिनो हृदिस्थं वीक्षन्ते भजनशरणाः कीर्तनरताः॥
१४. सर्वं वस्तु चराचरे चलमिहाक्षय्यस्तु धर्मः परो मूलं तस्य महाद्रुमस्य भगवान् कृष्णोऽखिलात्मा स्वयम्।
ब्रह्माप्यक्षरमद्वयं गुणकलातीतं वचोऽगोचरं विप्रा विश्वहिताशयाः शमपरा विद्यैकवित्तास्तथा॥
१५. जीवन् मूलफलेन चीरवसनः पर्णोटजस्थो वशी विश्वामित्रमपास्तदर्पमकरोद् यः साधना-सम्पदा।
विश्वे मित्रधियाऽनुवर्तनपरा वृन्तस्य तस्याधुना नानोपप्लवसङ्कटे शुभमतिं वर्धन्तु ते भूसुराः॥

# राष्ट्रियजीवने संस्कृतभाषाया महत्त्वम्

-- श्री अशोकचन्द्र शास्त्री --

[ शोधच्छात्रः—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

'संस्कृतशिक्षा'शब्दोऽयमर्थद्वयं प्रकाशयति— प्रथमः 'संस्कृतभाषाशिक्षा', द्वितीयश्च 'उत्तमा शिक्षा'। तत्र विचारणीयं यत्काचिदपि शिक्षा कस्या अपि भाषाया माध्यमेनैव भवितुमर्हति। सत्येवं यदि कयाचन अन्यया भाषया उत्तमा शिक्षा लब्धुं शक्यते चेत्, संस्कृतभाषयैव उत्तमशिक्षाया आग्रहः कथमिति प्रश्नः पुरः परिस्फुरति। अस्य उत्तरान्वेषणेन ज्ञायते यत् जगतः सर्वासां भाषाणां प्राचीनतमा संस्कृतभाषैव। अत एव उत्तमा शिक्षा अप्यस्यामेव सर्वप्राचीना सुसमृद्धा च। भाषाविज्ञानदृष्टया संस्कृतभाषैव पूर्णा वैज्ञानिकीति सिद्धा। भाषायामस्यां वयं जगतः सर्वानपि ध्वनीन् व्यक्तीकर्तुं पारयामः। भाषाविज्ञानानुसन्धानेभ्य इदमपि जायते यत्संसारस्य सर्वाः भाषाः संस्कृतादेव निस्सृताः। भाषाविज्ञानपण्डितवर्येण डा० मैक्समूलरेण स्वकीये 'कम्परेटिव स्टडी आफ लैंग्वेजेज' ( Comparative Study of tangnages ) इति नामधेये ग्रन्थे उक्तम् :

The sanskrit language is the mother of the all languages of the world.

अर्थात् 'संस्कृतभाषा संसारस्यास्य सर्वासां भाषाणां जननी अस्ती'ति। सर्वतः प्राचीनाः ग्रन्थाः सन्त्यस्माकं चत्वारो वेदाः। अस्यामवस्थायामिदं स्पष्टं यदस्माभिरनितरसाधारणी संस्कृता शिक्षा संस्कृतभाषयैव लब्धुं शक्यते।

**राष्ट्रियैकतादृष्ट्या संस्कृतशिक्षाया उपयोगिता :**

राष्ट्रियैकतायै भारतवर्षे मुख्यरूपेण संस्कृतभाषैव माध्यमस्वरूपा भवितुमर्हति। यतो हि विभिन्नेषु प्रान्तेषु विभिन्नासु भाषासु सतीष्वपि संस्कृतभाषाया अद्वितीयं स्थानमनादिकालादेव तत्र निर्मितमस्ति। धर्मशास्त्र-दर्शन-वेद-शिल्प-सङ्गीताऽऽयुर्वेद-ज्यौतिष-साहित्य-तन्त्रादिविषयाणामध्ययनार्थं संस्कृतभाषाया एव माध्यमः स्वीक्रियते। काचिदपि लिपिः स्याद्, परं भाषा संस्कृतैव भवति। यतो हि भाषायामस्यामेतावन्त्यः सामग्र्यः सन्ति यदस्याः प्रतिनिधित्वं काचिदपि भाषा कर्तुं नैव प्रभवति।

वेदेषु प्रथमः 'राष्ट्र'शब्दस्य प्रयोगो दृश्यते। किन्नाम राष्ट्रत्वमिति जिज्ञासायां वयं वक्तुं पारयामो यत् प्राकृतिकभागेभ्यः संस्कृतिभ्यश्च अपरेभ्यो देशेभ्यो भिन्नो देशो राष्ट्रमिति।' अनया दृष्ट्या भारतवर्षमेकं राष्ट्रमस्ति। तदुत्तरस्यां दिशि हिमालयात्, दक्षिणस्यां प्राच्यां पश्चिमायाञ्च दिशि समुद्रेभ्यः परिवेष्टितमस्ति। अस्मिश्च वैदिकसंस्कृतेः मूलधारा नानारूपेषु विस्तृता। क्वचित् सा वैष्णवानां, क्वचित् शैवानां क्वचिच्च जैनधर्मावलम्बिनानां बौद्धानाञ्च रूपेष्ववलोक्यते। देशेऽस्मिन् यावन्त्यपि विविधानि मतमतान्तराणि सन्ति तेषु सर्वेष्वपि वैदिकसंस्कृतेर्धारा यस्मिन् कस्मिश्चिदपि रूपेऽन्तर्निहिताऽस्ति। दक्षिणभारते यत्र द्राविडभाषाः उच्यन्ते, तत्राऽपि सर्वे संस्काराः धार्मिकाणि कार्याणि च संस्कृतभाषाया एव माध्यमेन क्रियन्ते। अत एवेदं स्पष्टं यद्राष्ट्रियैकतायै संस्कृतभाषाया माध्यमेनैव संस्कृत-शिक्षा उपयोगिनी भवितुमर्हति। संस्कृतभाषाया उत्तमेन प्रचारेण यदा संस्कृता शिक्षा सम्पूर्णेऽपि राष्ट्रे विस्तृता भविष्यति, तदा लोकेषु विचाराणामैक्यं सम्पत्स्यते। यदा सम्पूर्णेऽपि राष्ट्रे विचाराणामैक्यं भविष्यति तदा

सम्पूर्णमपि राष्ट्रमेतेषां वेदमन्त्राणां सस्वरं गानं करिष्यति—

**सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ।**
**ईडस्पदे समिध्यसे स नो वसून्याभर ॥ १ ॥**
**सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ २ ॥**
**समानो मन्त्रः समितिः समानी**
**समानं मनः सह चित्तमेषाम्।**
**समानं मन्त्रमभिमन्त्रये वः**
**समानेन वो हविषा जुहोमि ॥ ३ ॥**
**समानी व आकूतिः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति ॥ ४ ॥**

(ऋग्वेदे: १०मण्डले १९१ सूक्तम्)

हे समस्तसुखानां वृष्टिकारक ज्ञानस्वरूप परमात्मन्! भवानेव संसारस्य सर्वानपि पदार्थान् यथाक्रमेण परस्परं योजयति, खण्डयति च (जगतः सृष्टिकर्ता, पालकः, संहारकश्चाऽस्ति)। संसारेऽस्मिन् भवान् स्वमहिम्ना प्रकाशितोऽस्ति। भवान् सर्वप्रकारेण अस्मान् सुखमैश्वर्यञ्च ददातु ॥ १ ॥

भोः भोः सुखैश्वर्याभिलाषिणो मनुष्याः! युष्माभिरेकस्मिन्नेव सुनिश्चिते मार्गे परस्परं मिलित्वैव गन्तव्यम्। परस्परं प्रेम्णा वक्तव्यम्। युष्माकं मनांसि परस्परं समानानि भूत्वा सहयोगेन ज्ञानावाप्तिङ्कुर्वन्ति। यथा श्रेष्ठा विद्वांसश्च पुरुषाः परस्परसहयोगेन ज्ञानं लब्ध्वा परमैश्वर्यानन्दावाप्नुतः, तथैव युष्माभिरपि कर्तव्यम् ॥ २ ॥

भोः भोः सुखैश्वर्येच्छुका मनुष्याः! युष्माकं विचाराः सभाः समितयश्च समाना भवन्तु, चित्तञ्च समानं भवेत्। ममोपदेशस्वरूपं वेदज्ञानं युष्माकं कृते समानरूपेणैवाऽस्ति। अहं युष्मभ्यं जीवनसामग्रीं समानरूपेण ददामि ॥ ३ ॥

भोः भोः सुखैश्वर्याभिलाषिणो मनुष्याः! युष्माकं हृदयानि सङ्कल्पाश्च समानानि भवेयुः, मनश्च परस्परं समानं भवेत् येन युष्मभ्यं परस्परसहयोगद्वारा ऐश्वर्यानन्दावाप्तिर्भवितुं शक्येत ॥ ४ ॥

### चित्तसंस्कारदृष्ट्या संस्कृतशिक्षाया उपयोगिता :

चित्तसंस्कारसाधनाय अस्माभिरिदं ज्ञातव्यं यत् किन्नाम चित्तत्वमिति। समस्त-प्राणिनामभ्यन्तरे अन्तःकरणचतुष्टयं (आभ्यन्तरसाधनचतुष्टयम्) भवति। यथा पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि चास्माकं दश बाह्यसाधनानि सन्ति, तथैवाभ्यन्तराण्यपि साधनानि यैर्जीवः स्वीयसमस्तं जीवनव्यापारं सञ्चालयति। तानि साधनानि त्विमानि—(१) मनः, (२) बुद्धिः, (३) चित्तम्, (४) अहङ्कारश्चेति।

एषु चतुर्षु चित्तस्य संस्कारः संस्कृतात् कथं भविष्यतीत्यत्र विचारणीयम्। यदि स्थूलरूपेण विचार्येत चेदेतत् कथयितुं शक्यते यदन्तःकरणशुद्ध्यर्थं संस्कृतशिक्षया केन प्रकारेण साहाय्यं मिलिष्यतीति।

विषयेऽस्मिन् संस्कृतभाषायामनन्तसामग्रीपरिपूर्णाः कोषा वर्तन्ते। यदि कोऽपि जिज्ञासुरन्तःकरणशुद्ध्यर्थं तेषां प्रयोगङ्कर्तुमिच्छेत् तर्ह्यनन्तवर्षाणि प्रयुज्यमानेऽपि न कदापि तेषां समाप्तिर्भवेत्। एतदर्थं संस्कृतभाषायां वेदाः, ब्राह्मणग्रन्थाः, दर्शनानि, उपनिषदः, स्मृतयः नीतिशास्त्रेतिहास-कथासाहित्यादयः सर्वे ग्रन्थाः नानासंस्काररत्नैः परिपूर्णाः सन्ति। महर्षिपतञ्जलिविरचितेन योगदर्शनेन वयं चित्तसंस्काराय योगशिक्षां प्राप्नुयामः। अधोलिखिते श्लोके योगेन चित्तस्य शुद्धेः संकेतः प्राप्नोति—

**योगेन चित्तस्य पदेन वाचां**
**मलं शरीरस्य च वैद्यकेन।**
**योऽपाकरोत्तं प्रवरं मुनीनां**
**पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥**

मनुस्मृतावपि भगवता मनुना उक्तम्—

**अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ।**
**विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति ॥**

अर्थात् जलेन शरीरस्य शुद्धिः, मनसश्चः सत्येन शुद्धिर्भवति । अथ च आत्मा विद्यातपोभ्याम्, बुद्धिश्च ज्ञानेन संस्कृता भवति ।

अधुनाऽस्माभिर्विचारणीयं यत् किन्नाम विद्यात्वम्, किन्नाम च तपो याभ्यां चित्तस्य संस्कारो भवति ? प्रथमं वयं विद्याविषयमधिकृत्य विचारयामः ।

**विद्या**—आपृथिव्या ईश्वरपर्यन्तानां पदार्थानां ज्ञानं यया भवति, सा विद्या इति कथ्यते ।

**तपः**—कर्तव्यपालने समागतानां कष्टानां सहनकरणमेव तप इति ।

विद्यायाः क्षेत्रे चतुर्दश विद्याः, चतुष्षष्ठिकलाः, अनन्तशिल्पक्रियाश्च यान्ति । तपस्याक्षेत्रे नानाप्रकाराणां दैहिक - दैविक - भौतिककष्टानां सहनकरणम्, ब्रह्मचर्यपालनम्, वेदाध्ययनादिकञ्चानेके कर्तव्यविशेषाः समायान्ति । अधुनेदं स्पष्टं यत् विद्यायाः प्रचुरसामग्र्यः संस्कृतभाषायां सन्ति । समस्ता सत्यविद्याः कलाश्च वेदेभ्य एव निःसृताः । न्याय-राजनीति-धर्मशास्त्र-ज्यौतिषशास्त्र-यन्त्रकला-भूगर्भ - पश्वायुर्वेद-वृक्षायुर्वेद-मनुष्यायुर्वेदाद्याः सर्वा विद्याः कलाश्च संस्कृतभाषायां वर्तन्ते । ताभिश्च उत्तमप्रकारेण चित्तसंस्कारो भवितुमर्हति ।

**विश्वबन्धुत्वदृष्ट्या संस्कृतशिक्षाया उपयोगिता :**

संसारेऽस्मिन् सर्वत्र विषमता विस्तृताऽस्ति । क्वचिद् वर्णभेदः, क्वचिज्जातिभेदः क्वचिद्वा राष्ट्रभेदोऽस्ति । अस्मादेव कारणात् सर्वत्र भीषणसङ्ग्रामो भवति । समये समये अनेके महात्मानः पृथिव्यां जन्म गृहीत्वा अस्याः विषमताया दूरीकरणाय समुद्यता बभूवुः, परन्त्वद्यावधि न सा दूरीभूता दृश्यते ।

वेदाः अस्मभ्यं विश्वबन्धुत्वस्य विशुद्धां शिक्षां ददति । पश्यत, किमुक्तम् ऋग्वेदे—

**अज्येष्ठासोऽकनिष्ठास एते**
**सम्भ्रातरो वावृधुः सौभगाय ।**
**युवा पिता स्वपा रुद्र एषां**
**सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥**

( ऋग्वेदे ५.६०.५ )

अर्थात् संसारेऽस्मिन् कोऽपि ज्येष्ठः कनिष्ठो वा नाऽस्ति, सर्व एव मनुष्याः मिलित्वा सुखपूर्वकं जीवनयापनस्य यत्नङ्कुर्वन्तु । सर्वेषां मनुष्याणां परमेश्वरः पिता प्रकृतिश्चास्ति माता । ऋग्वेदे मानवमात्रस्य-अमृतपुत्रत्वमुक्तम्—

**श्रृण्वन्तु सर्वे अमृतस्य पुत्राः ।**

( ऋग्वेदे १०.१३.१ )

अथ च—

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।**
**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥**

( अथर्ववेदे )

अर्थात् भ्रातरः भ्रातृभिः सह द्वेषं न कुर्युः, भगिन्यश्च भगिनीभिः सह द्वेषन्न कुर्युः ; अथ च सर्वैरपि सव्रता अर्थात् समानव्रतशालिभिर्भूत्वा कल्याणकारिणी वाणी वक्तव्या ।

संस्कृतवाङ्मये विश्वबन्धुत्वविषये प्रचुरमात्रायां सन्ति सामग्र्यः । तदुक्तं केनचिदाभाणकेन—

**अयन्निजः परो वेति गणना लघुचेतसाम् ।**
**उदारचरितानां तु वसुधैव कुटुम्बकम् ॥**

वेदेषु सम्पूर्णाऽपि पृथ्वी 'माता' इत्युक्ताऽस्ति । ये जनाः केवलं स्वीयजन्मस्थानमेव मातृभूमिं मत्वा तामाराधयन्ति, अन्यांश्च भूभागान् आत्मनो भिन्नान् मन्यन्ते, ते न सन्ति मातृभूमेर्वास्तविकोपासकाः । पारस्परिका कलहा अस्या एव दुर्भावनायाः कारणानि भवन्ति । यदि विश्वस्य जनता सम्पूर्णामपि पृथिवीं

मातरं मत्वा परस्पर-भ्रातृभावं समाचरेत् तदा न केवलं भारतवर्षस्य, अपितु समस्तस्याऽपि विश्वस्य कल्याणं भवितुमर्हति। तदुक्तं वेदे—

जनं बिभ्रती बहुधा विवाचसं
नाना धर्माणं पृथिवीं यथौकसम्।
सहस्रं धारा द्रविणस्य मे दुहां
ध्रुवेव धेनुरनपस्फुरन्ती॥
यत्ते मध्यं पृथिवि यच्च नभ्यं
यास्त ऊर्जस्तन्वः सम्बभूवुः।
तासु नो धेह्यभि नः पवस्व
माता भूमिः पुत्रोऽहं पृथिव्याः॥
(अथर्ववेदे १२.१.१०-१४)

अर्थात् विविधभाषाणां वक्तारः, नानाधर्माणां पालकाः ये जनसमूहास्तान् देशानुसारेण निवासस्थानानुसारेण वा भिन्नभिन्नप्रकारैः परिपालयन्ती पृथ्वीमाता गोवत् निश्चला भूत्वा धनस्यैश्वर्यस्य च सहस्राः धाराः ददातु।

हे मातृभूमे! यस्ते मध्यभागोऽस्ति, यश्च ते नाभिभागोऽस्ति, तथा येऽन्न दिबलकारकाः पदार्थास्तव शरीरादुत्पद्यन्ते तेभ्यस्त्वमस्मान् प्रतिष्ठितं पवित्रञ्च कुरु। सर्वेषामुत्पादकस्वरूपत्वात्। त्वमस्माकं माताऽसि, वयञ्च समस्तव पुत्राः। समस्तरसानां प्रदाता मेघः सर्वेषां पिताऽस्ति, सोऽप्यस्मान् पालयेदिति।

एवंषु विश्वबन्धुत्वदृष्ट्या सम्पूर्णाऽपि पृथिवी मातृरूपेण समाराधिताऽस्ति। अनेन प्रकारेण संस्कृतवाङ्मयस्य सारभूताया विश्वबन्धुत्वबोधिकाया अस्या सूक्त्याः समुल्लेखमुचितं मन्येह गीयते—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥

**भाषासंस्कारदृष्ट्या**

**संस्कृतशिक्षाया उपयोगिता :**

भाषा मानवसमाजस्य विचाराणां भावनानाञ्च व्यक्तीकरणार्थमस्ति परमं साधनम्। यदि भाषा पूर्णरूपेण सुसंस्कृता स्यात्, तर्हि तया वयं स्वीयविचारान् भावनाश्च पूर्णरूपेण सम्यक्तया च व्यञ्जयितुं पारयामः। अनया दृष्ट्या संस्कृतभाषायाः समता विश्वस्मिन् संसारे काचिदपि भाषा कर्तुन्नैव प्रभवति।

कस्याश्चिदपि भाषाया वैशिष्ट्यमस्मिन् तथ्ये निर्भरमस्ति यत्तस्यां ध्वनीनां सूक्ष्मतमाया ऐकिक्याः कियद् ग्रहणसामर्थ्यमस्ति? संस्कृतभाषां परित्यज्य संसारेऽस्मिन् नैतादृशी काऽपि भाषाऽस्ति यस्यां ध्वनीनां विशुद्धाया ऐकिक्याः ग्रहणसामर्थ्यं भवेत्। संस्कृतभाषायां यावन्तोऽपि वर्णाः सन्ति ते सर्वेऽपि सम्भावितानां ध्वनीनामैकिक्यः। अथ च तैः सर्वासामपि ध्वनीनां ग्रहणं भवितुमर्हति। उदाहरणार्थमिह ते निर्दिश्यन्ते—

**स्वराः—**

अ आ इ ई उ ऊ ऋ ए ऐ ओ औ (अं अः)

**व्यञ्जनानि—**

कवर्गः—क ख ग घ ङ। चवर्गः—च छ ज झ ञ।
टवर्गः—ट ठ ड ढ ण। तवर्ग—त थ द ध न।
पवर्गः—प फ ब भ म। अन्तःस्थाः—य र ल व।
ऊष्माणः—श ष स ह

अनेन प्रकारेण वैज्ञानिकीनामैकिकीनां निरूपणं संसारस्य कस्यामपि भाषायां नाऽस्ति। रोमन-अरबी-फारसी-रशियन-स्लाव-ग्रीक-लैटिन-चीन-प्रभृतिषु वर्णमालासु अनेकेषां ध्वनीनामैकिक्यः सम्मिलिताः सन्ति। एतासु भाषासु कोऽप्येतादृशो वर्णो नाऽस्ति यः कस्याऽपि ध्वनेरैकिकीं व्यञ्जयितुं प्रभवेत्। कण्ठ-तालु-मूर्धा-दन्तोष्ठ-नासिकाप्रभृतिभ्यो ये सम्भाविता ध्वनय उत्पत्तिमर्हन्ति, ते संस्कृतभाषायाः वर्णेषु निबद्धाः। एतादृशी वैज्ञानिकी योजना संसारस्य अन्यस्यां भाषायां नाऽस्ति।

वर्णानां योगेन पदानि पदानाञ्च योगेन वाक्यानि

निर्मीयन्ते। वाक्यद्वारा विचाराणां भावनानाञ्च व्यक्तीकरणं भवति। समस्तपदानां वर्गीकरणं बोधयितुं महर्षिपतञ्जलिना स्वकीय-व्याकरणमहाभाष्ये निम्न-वेदमन्त्रो लिखितो व्याख्यातः—

चत्वारि शृङ्गास्त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्यामा विवेश॥

"चत्वारि शृङ्गाणि चत्वारि पदजातानि—नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः—त्रयः कालाः भूतभविष्यद्वर्तमानाः। सप्त हस्तासो अस्य—सप्त विभक्तयः। त्रिधा बद्धः—त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसीति। वृषभः—वर्षणात्। रोरवीति—शब्दङ्करोति। कुत एतत्? रौतिः शब्दकर्मा। महो देवो मर्त्याम् आविवेशेति। महान् देवः—शब्दः। मर्त्याम्—मरणधर्माणो मनुष्यास्तान् आविवेश।"

(महाभाष्ये १. १. १)

चतुःशृङ्गयुक्तस्य त्रिस्थानेषु बद्धस्य त्रिपादयुक्तस्य वृषभस्य शब्देन रूपकं कुर्वन्नाह पतञ्जलिर्महाभाष्ये पस्पशाह्निके—

शब्दरूपिणो वृषभस्य चत्वारि शृङ्गाणीव चत्वारि पदानि नामाख्यातोपसर्गनिपाताश्च सन्ति। पादत्रयमिव भूतभविष्यद्वर्तमाना इत्येते त्रयः कालाः सन्ति। अथ च सप्तहस्तासः सप्तहस्तवत् सप्त विभक्तयः प्रथमा, द्वितीयादयः। शिरोद्वयमिव नित्यानित्यभेदेन शब्दो द्विविधः। स उरसि कण्ठे शिरसीत्येषु त्रिषु स्थानेषु बद्धोऽस्ति। अर्थात् एतेभ्य एव स्थानेभ्यो वर्णा उच्चार्यन्ते। सः शब्दं करोति। स महान् देवः शब्दो मरणशीलानां मनुष्यां मध्य आगतः अर्थात् मनुष्याः शब्दानां प्रयोगमारभन्ते।

अनेन प्रकारेण पतञ्जलिना वृषभस्य रूपकेण शब्दविज्ञानं प्रकाशितम्। भाषायाः संस्कारार्थं संस्कृतभाषाया वैदिककालादेव व्याकरणस्य मौलिकसिद्धान्ताः प्रयुक्ता वर्तन्ते। नामभिः सप्तविभक्तीनामाख्यातेन भूतभविष्यद्वर्तमानानां त्रयाणां कालानां धातुभिरुपसर्गाणां निपातानाञ्च सर्वत्र निर्बाधप्रयोगाणां भाषायाः संस्कारविषये स्वीयं मौलिकं स्थानं विद्यते।

अस्यैव व्याख्यानार्थमिन्द्रः सर्वप्रथमं व्याकरणशास्त्रं रचयाम्बभूव। तदनन्तरमनेके आचार्यास्तस्मिन् क्षेत्रेऽनुसन्धानङ्कुर्वन्तो ग्रन्थानरचयन्। अद्यावधि प्रायश्चतुःषष्ठिवैयाकरणा बभूवुरिति सम्प्रति विज्ञायते। एतेष्वन्तिमो मुनिः 'पाणिनिः' सर्वश्रेष्ठो बभूव। तेन स्वीयव्याकरणशास्त्रग्रन्थे "अष्टाध्यायी"त्यभिधेये दश वैयाकरणानामुल्लेखो विहितः। संस्कृतवाङ्मये वैदिककालादद्यावधि भाषासंस्कारविषये जागृतपरम्परा दरीदृश्यते। संसारस्यान्याभ्यो भाषाभ्यः तत्तद्देशीया विद्वांसः संस्कृतव्याकरणात् पर्याप्तं साहाय्यं गृहीतवन्तः। संसारे संस्कृतभाषैव एतादृशी या भाषायाः समस्तसंस्कारेभ्यः परिपूर्णा।

संस्कृतभाषायाः व्याकरणपद्धतिमाश्रित्यैव संसारस्य सर्वासामप्याधुनिकभाषाणां संस्कारो जातः। भविष्यति कालेऽप्येतादृशी पद्धतिरेव प्रचलिष्यति। संसारस्य ताः भाषाः यासां व्याकरणस्य किञ्चिदपि स्वरूपमद्यावधि न निर्धारितमस्ति, यस्याश्च काचिदपि लिपिर्न निर्मिताऽस्ति, ताभ्यश्च संस्कृतभाषायाः व्याकरणस्य साहाय्यमत्यधिकं श्रेयस्करं भविष्यति। उदाहरणाय भारते पर्वतीयप्रदेशानां पर्यटकजनानां भाषाः नागालैण्डस्य भीलवाडा-प्रदेशस्य चानेका भाषाः किरातानाम्, आस्ट्रेलियास्थादिवासिनाम्, अमेरिकानिवासि - रेडइण्डियन - लोकानाम् औदीच्यध्रुवस्य एस्किमोजातिजनानाम्, रूसीदोच्यध्रुवयोर्मध्ये स्थितानां स्टेप्स-टैगा-प्रभृतिक्षेत्राणां पर्यटकानां भाषाः संस्कृतभाषायाः व्याकरणस्य लिपीनाञ्च साहाय्येनैव सुसंस्कृता भवितुमर्हन्ति।

# अभिनवा चिरप्रत्ना च निद्रोपनिषद्

— श्री माणिक मुरलीधर देशपाण्डे —

शौनको वै महाछात्रः अङ्गिरसं विधिवदुपसन्नः पप्रच्छ। अङ्गिरसेति होवाच। यदि सर्वं निद्रया आप्तम्, सर्वं निद्रया वशीकृतम्, तद् केन निद्रायाः प्राप्तिः ? तद् ब्रूहीति। अङ्गिरसः प्रोवाच—यथा वत्स एकेन मृत्पिण्डेन विज्ञातेन सर्वं विज्ञातं भवति, एवं एकया निद्रया ज्ञातया सर्वं विज्ञेयं विज्ञातं भवति।

यदा सर्वाणि मुच्यन्ते भयानि हृदये स्थिता-
न्यथ छात्रोऽमृतो भवति अत्र निद्रां समश्नुते॥ १॥
अन्धं तमः प्र विशन्ति सर्वे ये निद्रां समुपासते।
ततोऽपि भूयिष्ठतरं तमः त ये अनिद्रायां रताः॥ २॥
तामेव धीरो विज्ञाय निद्रां कुर्वीत स्नातकः।
नानुध्यायद्बहून्छब्दान् वाचां विग्लापनं हि तत्॥ ३॥
अतिभोग्यां तां मन्यन्ते निद्रां छात्रप्रियां सदा।
अनुभूय च तां भूयः तामाहुः परमां गतिम्॥ ४॥
स्वप्नान्तं जागरितान्तं चोभौ यो अनुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥ ५॥
अन्यदेवाहुर्निद्रया अन्यदाहुरनिद्रया।
अनिद्रया पाठस्तरित्वा निद्रयाऽमृतमश्नुते॥ ६॥
निद्रया सखिना युक्तो व्याख्यानान्यरसानि वै।
यो वर्जयति आचार्यान् तं वन्दे द्विपदां वरम्॥ ७॥

× × ×

अथ द्वितीयोऽध्यायः।

न अत्रोन्मीलिते नेत्रे शब्दः पञ्चत्वमागतः।
मनो मूढं भवत्यत्र अमतित्वं गता मतिः॥
अन्यत् तद्विदितादस्ति अन्यच्चाविदितादपि।
निद्रातत्त्वं न जानेऽहं कथनीयं कथमिति॥ १॥
अभ्यासमेके कवयो वदन्ति
आलसं तथान्ये परिमुह्यमानाः।
निद्रायाः महिमा एष लोके
ययेदं भ्राम्यते छात्रविश्वम्॥ २॥
वेदाहमेतां महतीं च निद्रां
छात्रप्रियां वै तमसः स्वरूपाम्।
तामेव विदित्वा अति-पाठमेति,
नान्यः पन्था विद्यते अयनाय॥ ३॥
य एनां विदुरमृतास्ते भवन्ति,
अथेतरे दुःखमेवापि यन्ति॥ ४॥
पाण्डित्ये हि बहुधा वर्तमानाः
स्वयं कृतार्थमभिजानन्ति बालाः।
यदज्ञानिनो न जानन्ति निद्रां
तथातुराः क्षीणबला भवन्ति ते॥ ५॥
तदेतत्सत्यं मन्त्रेषु यदपश्यन् कवयः
निद्रैव कलौ बहुधा सन्ततेति।
तामनुसरन्ति नियतं मुक्तिकामाः
एष वः पन्था सुकृतस्य लोके॥ ६॥
सम्प्राप्यैनां स्नातकाः स्वप्नतृप्ताः
कृतात्मानः वीतत्रासाः प्रशान्ताः।
ते आलीयैनां सर्वतः प्राप्य धीराः
युक्तात्मानः शून्यमेवाविशन्ति॥ ७॥
नेयं निद्रा धैर्यहीनेन लभ्या
न च ज्ञानात्तपसो वाऽपि लेखनात्।
एतैरुपायै-र्यतते यस्तु विद्वान्
तमियं निद्रा न गच्छति सौख्यरूपा॥ ८॥
नेयं निद्रा प्रवचनेन लभ्या
न मेधया नापि बहुना श्रुतेन।
यमेवैषा वृणुते तेन लभ्या
तमेवैषा विवृणुते तनुं स्वाम्॥ ९॥

उपनिषदं भो ब्रूहीत्युक्तं त्वया। उपनिषन्-निद्रां वाव अब्रूम।

[ यदा खलु समाप्तः उपदेशः, तदा शौनको ह वै महच्छात्रः निद्रामग्नो गुरुणा दृष्ट इति कृत्वा गुरुवर्यैरपि मौनं स्वीकृतम्। तेऽपि निद्राराधने मग्नाः।]

---

एवं संस्कृतभाषा राष्ट्रियैकतायाः सामान्य-स्वरूपादुत्तरोत्तरं प्रवर्धमाना राष्ट्रियैकतायाः विराजं स्वरूपमासाद्य समस्तपृथिव्याः मानवसमाजं दृढबन्धुत्व-भावनाया एकस्मिन्सूत्रे सम्यगाबध्नाति। अजरा-मरा चेयं भाषेति संसारे सर्वं एव समामनन्ति। यूरोप-देशस्थ मूर्धन्यविदुषः श्रायुतो मोक्षमूलरभट्टस्य प्रशस्तिश्लोकोऽयं संस्कृतभाषाया अमरतायाः अमर-तायाश्च सन्देशन्निरन्तरं दास्यतीति निश्चप्रचम्—
यावद् भारतवर्षं स्याद् यावद् विन्ध्यहिमाचलौ।
यावद् गङ्गा च गोदा च तावदेव हि संस्कृतम्॥

# भगवान् श्रीकृष्णः : यत्र षोडशकलाः सर्वांशतो विकसिताः !

— श्री गोविन्द नरहरि वैजापुरकरः —

उच्यते यद् भगवान् कृष्णः षोडशकलाभिः परिपूर्णः पूर्णावतार आसीत्। किन्तु कास्ताः कला इत्यनेन कतिपये एव परिचिताः स्युः। अत एवात्र ताः षोडशकला विविच्य पर्यायतस्तत्कलावतो भगवतः श्रीकृष्णस्य जन्मदिवसप्रसङ्गे गुणवर्णनेनात्मानं पुनीमहे।

आसां षोडशकलानां विषये मतभेदोऽपि जागर्ति। वैदिकविज्ञानवादिनः भिन्ना एव कलाः परिगणयन्ति। तान्त्रिकाणां षोडशकलाः पुनरन्याः। दर्शन-पुराणदृष्ट्या च अपरा एव षोडशकलाः। तत्रापि अवान्तरं भेदद्वयमादाय तृतीयोऽयं षोडशकलाप्रकारः स्वयमपि त्रिविध आख्यातुं शक्यते। इत्थं षोडशकलाविषये संभूय पञ्च कल्पाः समुपलभ्यन्ते। तेषु वैदिकानां तान्त्रिकाणाञ्च षोडशकलास्तत्तद्ग्रन्थेषु वर्णिताः। अवतारवादस्य विशेषतो दर्शन-पुराणाद्यनुगृहीतत्वादत्र तमेव पक्षमुपबृंहयामः। विषयेऽत्र वेददर्शनाचार्यैः पूज्य श्री गङ्गेश्वरानन्द स्वामिवर्यैः उदासीनसम्प्रदायाचार्यैः स्वीयव्याख्यानेषु बहु प्रपञ्चितम्। तदाधारेणैव विषयोऽयमत्र वितन्यते।

**वैदिक-विज्ञानमतम्**

'सूची-कटाह'न्यायेन प्रथमं वैदिक-विज्ञानमतेन तान्त्रिकमतेन च स्वीकृतानां षोडशकलानां संक्षिप्तं परिचयमुपन्यस्य पौराणिकसम्मत-कलाविवेचनं विवेचयिष्याम.।

वेदविज्ञानविदां मतं यत् 'अक्षरात् परतः परः' ( मुण्ड० २.१.२ ) इत्यौपनिषदे वचने 'अक्षर'स्य 'परात्पर'स्य च सुस्पष्टं निर्देशः। एवमेव 'गताः कलाः पञ्चदश प्रतिष्ठा'··'परेऽव्यये सर्व एकीभवन्ति' ( मुण्ड० ३.२.७ ) इत्यत्र 'अव्ययः' 'परः' चापि समुल्लिखितौ। तथैव 'संयुक्तमेतत् क्षरमक्षरं च क्षरं प्रधानममृताक्षरं हरः' ( श्वेता० १.८.१० ) इत्यत्रापि 'अक्षर'स्य 'क्षर'स्य च निर्देशः। इत्थं वैदिकवाङ्मयपरिशीलनेन सुस्पष्टं यत् एकमेव ब्रह्म १. परात्परः, २. अव्ययः, ३. अक्षरः, ४. क्षरश्चेति भेदैर्विभक्तम्। तेषु अव्ययस्य पञ्च कलाः—१. आनन्दः, २. विज्ञानम्, ३. मनः, ४. प्राणः, ५. अन्नञ्च। सूक्ष्मेक्षिकया विचार्यमाणे तैत्तिरीयोपनिषदि परिगणिताः अन्नमयादि-पञ्चकोषा एव व्युत्क्रमेणाऽत्र निरूपिताः। अक्षरोऽपि पञ्चकला-समन्वितः—१. ब्रह्मा, २. विष्णुः, ३. इन्द्रः, ४. अग्निः, ५. सोमश्च। क्षरोऽपि पञ्चविधः—१. प्राणः, २. आपः, ३ वाक्, ४. अन्नम्, ५. अन्नादश्च। पुरुषत्रयस्य कलानामासां सम्मेळनेन १५ पञ्चदश कलाः सम्भवन्ति। षोडशी कला पुनः परात्परं विशुद्धं वा ब्रह्म। इत्थं वैदिकविज्ञानसम्मताः षोडशकला भवन्ति।

ज्ञातव्यमेतत् यद् अक्षर-क्षरयोः आधिदैविकी कला एकैव। क्षरस्य उपर्युक्ताः कलाः केवलम् आधिभौतिक्य एव। तस्य आध्यात्मिक्यः कलाः पुनरिमे—१. बीजचितिः ( कारणशरीरम् ), २. देवचितिः ( सूक्ष्मशरीरम् ), ३. भूतचितिः ( स्थूलशरीरम् ), ४. प्रजाः, ५. वित्तञ्च। व्यष्टेः क्षरेऽन्तर्भावात् क्षरजीवसम्बद्धा आध्यात्मिक्यः कला न पृथक् परिगणिताः। संक्षेपतो वैदिकशैल्या षोडशकलानामयमेव विभागः।

**तान्त्रिक्यः षोडशकलाः**

तान्त्रिकाणां षोडशकलानां सङ्केतो ब्रह्मसत्र-

शाङ्करभाष्यस्य टीकायां श्री वाचस्पति मिश्रपाद-कृतायां भामती मङ्गलाचरणे समुपलभ्यते। यथा—

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च॥

सनातनं नित्यं वेदनारायणं परब्रह्माणञ्च नमस्कुर्वन् षड्दर्शनाचार्योऽयं विबुधाग्रणीः उभयमपि षडङ्ग-पूर्णं विविधाव्ययसमन्वितञ्च मनुते। तत्र वेदस्य षडङ्गानि—१. शिक्षा, २. कल्पः, ३. व्याकरणम्, ४. निरुक्तम्, ५. छन्दः, ६. ज्योतिषञ्च। विविधानि अव्ययानि पुनरेतानि, येषां वेदेषु भूरिशः प्रयोगः—प्र, परा, अनु इत्यादीनि।

महेश्वरस्य परब्रह्मणः पुनरङ्गानि पञ्च, अव्ययानि च दश इतो भिन्नानि। तथा चोक्तम्—

सर्वज्ञता तृप्तिरनादिबोधः
स्वतन्त्रता नित्यमलुप्तशक्तिः।
अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः
षडाहुरङ्गानि महेश्वरस्य॥
ज्ञानं विरागमैश्वर्यं तपः सत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥

अर्थात् ६ अङ्गानि, १० अव्ययानि च मिलित्वा षोडश परमात्मनः कलाः। तथा च तान्त्रिकदृष्ट्या षडङ्गानि—१. नित्यसर्वज्ञता, २. नित्यतृप्तिः, ३. अनादिबोधः, ४. नित्यस्वतन्त्रता, ५. नित्यालुप्त-शक्तिः, ६. नित्याचिन्त्यशक्तिश्च। दश अव्ययानि यथा—७. ज्ञानम्, ८. वैराग्यम्, ९. ऐश्वर्यम्, १०. तपः, ११. सत्यम्, १२. क्षमा, १३. धृतिः, १४. स्रष्टृत्वम्, १५. आत्मसम्बोधः, १६. अधिष्ठातृत्वमिति षोडश कलाः।

अत्र सर्वज्ञता स्फुटा। तृप्तिश्च असन्तोषाभावः, सुप्रसन्नता, हर्षातिरेको वितृष्णता वा। अनादिबोधो नित्यज्ञानं स्व प्रकाशता वा। स्वतन्त्रता सर्वाधिष्ठा-तृत्वम्, अवशीभूतता वा। अव्ययानि पुनः सुस्पष्टानि। आत्मसम्बोध आत्मदर्शनम्, अनावृत-स्वस्वरूपं वेति विवेकः।

पौराणिक-दार्शनिकयः कलाः

इतः परं पौराणिक-दार्शनिककलाः विवेचनपदं भजन्ते। अस्यास्त्रिषु प्रकारेषु मूलभूतः सर्वसम्मतश्च प्रकारः षोडशकलानामयम्—

१. अन्नकला, २. प्राण-कला, ३. मनः-कला, ४. विज्ञान-कला, ५. आनन्द-कला, ६. ग्राह्य-कला, ७. ग्रहण-कला, ८. ग्रहीतृ-कला, ९. भूमि-कला, (अपरप्रकृत्यन्तर्गता) १०. आपः कला, ११. अनल-कला, १२. वायु-कला, १३. आकाश-कला, १४. अहङ्कार-कला, १५. महत्-कला, १६. मनः = मनोगम्य-कार्यानुमेय-मूलकारण मूलप्रकृति-कला चेति।

एतास्वेव कलासु अष्टौ अष्टौ च ससीमाऽसीम-भेदाभ्यां विभज्यन्ते। तत्र ससीमकलाः सामान्यजनेभ्यो योगिजनं यावद् विलसिताः। असीमकलाः पुनः केवलम् अवतारेष्वेव विलसन्ति। अयमेव तृतीयस्य कला-विभागस्य द्वितीयोऽवान्तरभेदः।

अस्यैव तृतीयोऽवान्तरभेदश्चेत्थम्—प्रारम्भिक-पञ्चकोषात्मकं कलापञ्चकं विहाय षष्ठ-ग्राह्य-कलायाः विभूतित्रयम्—१. अणिमादि - प्रादुर्भावः, २. कार्य-सम्पत्तिः, ३. तद्धर्मानभिघातश्चेति। सप्तम-ग्रहण-कलायाः विभूतित्रयम्—४. मनोजवित्वम्, ५. विक-रणभावः, ६. प्रधानजयश्चेति। अष्टम-ग्रहीतृकलायाश्च विभूतिद्वयम्—७. सर्वज्ञता, ८. सर्वाधिष्ठातृत्वञ्चेति संकलय्य अष्टौ विभूतयो भवन्ति। एतासामेव अष्ट-विभूतीनां 'सातिशय'-'निरतिशय'-भेदाभ्यां विभजने पौराणिक - दार्शनिककलात्मकस्य तृतीय - षोडशकला-कल्पस्य तृतीयोऽवान्तरविभागो भवति। अवतार-कोटौ एता निस्सीमकलाः विकासं गच्छन्ति, लौकिक-कोटौ पुनः ससीमकलाः विकासम्।

**कलानां परिचयः**

इत्थं पौराणिक-दार्शनिकानां षोडशकलानां भेदत्रयेऽपि विश्लेषणवैशिष्ट्येन प्रथमभेद एव सामान्यरूपेण समादृतो दृश्यते। एतासु प्राथमिकाः पञ्च-कलाः दर्शनशास्त्रे प्रसिद्धान् पञ्चकोषान् ( अन्नमय-कोषं, प्राणमय-कोषं, मनोमय-कोषं, विज्ञानमय-कोषं, आनन्दमय-कोषञ्च ) आधृत्यैव प्रतिष्ठापिताः। एता हि कलाः एकैकवृद्ध्या सामान्यतः पञ्चसु जीवयोनिषु विकसिता दृश्यन्ते। जीवस्य पञ्च योनयश्चेमाः— १. उद्भिज्जा ( वृक्षादिगता ), २. स्वेदजा ( मशक-मत्कुणादिगता ), ३. अण्डजा ( पक्ष्यादिगता ), ४. जरायुजा (गर्भवेष्टनचर्मपुटकरूपेण जरायुणा जन्या पश्वादिरूपा ) ५. मनुष्यरूपा च। यद्यपि मनुष्य-योनिरपि जरायुजैव, तथापि ब्राह्मण-वसिष्ठन्यायेन विभागोऽयं समादिग्रयते। मानवयोनौ किल एताः पञ्चापि कलाः पूर्णतो विकसिता दरीदृश्यन्ते। इतः परतास्तिस्रः कला अपि योगबलेन मानवे विकासयितुं शक्यन्ते, या हि 'भगवद्विभूतिपदेन' व्यपदिश्यन्ते। किन्तु नवमकलातः शिष्टानां सर्वासां विकासः पुनः भगवदवतारेष्वेव जायते।

षष्ठाद्यष्टकलासु तिसृषु क्रमशः षष्ठी ग्राह्यकला 'भूतविजय-कला' इति, सप्तमी ग्रहणकला 'इन्द्रिय-विजय-कला' इति, अष्टमी ग्रहीतृकला च 'आत्म-विजय-कला' उच्यन्ते। आभिरेव संज्ञाभिः सुस्पष्टं यद् यस्मिन् एतासां विकासो जायते, तस्य वशे एते शब्दादिविषयाः; चक्षुरादीन्द्रियाणि ग्रहीतृबुद्धौ प्रतिबिम्बिता आत्मानश्च भवन्ति। मानवे हि आधि-भौतिकम्, आध्यात्मिकञ्च द्विविधं बलं तिष्ठति। आध्यात्मिकं बलं तेन योगाभ्यासत आसाद्यते।

योगशास्त्रानुसारं योगस्य अष्टसु अङ्गेषु ध्यान-धारणा-समाधिरूपाणां परसाधनानां यदा कस्मिंश्चि-द्विषये योगः साध्यते, तदा स 'संयम'शब्देन उच्यते। 'त्रयमेकत्र संयमः ( योगसू० ३.४ )। अयमेव संयमो यदा स्थूलभूतेषु क्रियते, तदा षष्ठी ग्राह्यकला भूत-विजय-कला वा मानवे विकसति। योगशास्त्रेषु इयं 'मधुमती'-भूमिका उच्यते।

घ्राणादीन्द्रियेषु पुनरयं संयमो यदा साध्यते, तदा मानवे सप्तमी ग्रहण-कला इन्द्रियविजयकला वा विकसति। योगशास्त्रे कलेयं 'मधुप्रतीका' उच्यते।

सांख्यदर्शनानुसारं ज्ञानोत्पत्तिकाले बुद्धितादात्म्या-पन्नतां गते पुरुषे ( आत्मनि ) संयमे कृते ग्रहीतुर्यथार्थ-रूपस्य साक्षात्कारो जायते। तेन च बुद्धेः पुरुषस्य च पार्थक्यबोधः ( सत्त्वपुरुषान्यताख्यातिः ) सुस्पष्टं प्रतिफलति। इयमेव अष्टमी ग्रहीतृ-कला आत्मविजय-कला वा, या च योगशास्त्रे 'सर्वाधिष्ठातृत्वम्' 'सर्व-ज्ञातृत्वम्' उच्यते। एतेन सुस्पष्टमेतद् यद् योगमार्गा-नुसरणेन नूनं मानवः कलात्रयमेतदात्मनि विकास-यितुं प्रभवति। तदा स नूनं 'भगवद्विभूति'पदेन व्यपदिश्येत।

**अवतार-कलाः**

नवम्याः भूमि-कलाया आरभ्य षोडशकलां यावत् अष्टौ कलाः अष्टविधाया अपरप्रकृतेरेव विलासो वक्तुं शक्यते। नवमीतस्त्रयोदशीपर्यन्तं कला-पञ्चकं भूत ( सूक्ष्मभूत ) - पञ्चतन्मात्ररूपमेव। शिष्टास्तिस्रः कलाः पुनः अहङ्कार-महत्तत्त्व-मूलप्रकृते-रेव विलासः।

भगवदवतारेषु 'कूर्मावतारे' अस्या एव भूमि-कलाया विकासः पूर्णतां गतः। दशमी आपःकला 'मत्स्यावतारे' पूर्णविकासं गता। 'मोहिनी'-संज्ञके अवतारे अनल ( तेजः )-कलायाः पूर्णविकासो दृश्यते। 'वाराहावतारे' वायु-कलायाः पूर्ण-विकासः। 'वामना-वतारे' 'हयग्रीवावतारे' पुनः आकाश-कलायाः पूर्ण-विकासो विलोक्यते। सांख्यशास्त्रोक्तः 'अहङ्कार' एव दर्शने 'विराट्' पुराणेषु च 'प्रजापतिः' उच्यते।

# कालिदास-काव्येषु कुलपतयः

—— श्री प्राध्यापकः चन्द्रदेव रायः ——

प्राचीन-भारते शिक्षायै, संस्कृत्यै तथात्मसाधनायै परमरमणीया आश्रमव्यवस्थासीत्। एतेषामाश्रमाणां स्थापना नगराद्बहिः कस्मिंश्चिदपि तादृशे स्थानेऽभवत्, यत्र नागरिककोलाहलस्याभाव आसीत्। परन्तु प्रकृतेः सर्वासां सामग्रीणां सौलभ्यमभवत्। बौद्ध जातक-ग्रन्थेषु तक्षशिलायां, वाराणस्यां, राजगृहे, कोशलादि-स्थानेषु च शिक्षापीठस्य निर्दशो लभ्यते। बुद्ध-समकालीनस्य मगधस्य सम्राजो राजवैद्यस्य जीवकस्य राजकुमारप्रसेनजितश्च शिक्षा तक्षशिलायामेवाभूत्। गुप्तकाले नालन्दायाः प्रसिद्धविश्वविद्यालयस्योल्लेखः प्राप्यते, यत्र विधिवत् कुलपतयो नियुक्ताः जायन्ते स्म। शिक्षायाः समस्तमुत्तरदायित्वं कुलपतौ निर्भरमासीत्।[1] महान् विद्वान् तथा शिष्ट एव जन इदं पदमलङ्कुर्वन्नासीत्। नालन्दाविश्वविद्यालयस्य सर्वप्रथमः कुलपतिः धर्मपाल आसीत्। तत्पश्चात् तच्छिष्यः शीलप्रभ एतस्य कुलपतिर्बभूव। कुलपतिर्न केवलंशिक्षादीक्षा-प्रवीण एवाभवत्, प्रत्युत ग्रन्थनिर्माण-कार्यं-सम्पादनमप्यकरोत्।

महाकविकालिदासस्य ग्रन्थेषु कण्वस्य, वाल्मीकेः, च्यवनस्य, वरतन्तोश्च नामानि कुलपतिरूपेणायातानि। राजाश्रये, गुरुकुले ऋषीणामाश्रमेष्वपि च शिक्षादानमभवत् यत्र विशेषाध्ययनशीलव्यक्तीनां शिक्षाग्रहण-

१. Buddhist Records of western world Vol 2 P. 171.

---

अतश्चतुर्दशी अहङ्कार - कला नाम 'विराड्विजयः', 'प्रजापति - विजयो' वा। इन्द्रादयो विराट्कोटौ परिगण्यन्ते। अतस्तेषां विजयो 'विराड् - विजयो' वक्तुं शक्यते। इन्द्रादिविजेतू रावणस्य विजेतरि 'रामावतारे' अर्थतो विराड्रूपस्य अहङ्कारस्य विजयेन चतुर्दश्याः कलायाः पूर्णविकासः स्फुटीभवति।

किन्तु 'श्रीकृष्णावतारे' शिष्टयोः पञ्चदशी-षोडश्योः महद्विजयकला - मूलप्रकृतिविजयकलयोरपि पूर्णतो विकासः परिलक्ष्यते। सांख्यदर्शनोक्तं महत्तत्त्वमेव पुराणेषु 'ब्रह्मा' दर्शनेषु च 'हिरण्यगर्भः' इत्युच्यते। कृष्णचरितविदां नापरोक्षमेतत् यद् भगवता श्रीकृष्णेन कथं ब्रह्मणोऽखर्वो गर्वः खण्ड-खण्डतां नीतः— अभिनवानां गवां वत्सानां गोपालकानां च नवां सृष्टिं समुत्पाद्य। इत्थं भगवति श्रीकृष्णे महत्तत्त्व-विजयरूपा ब्रह्म-विजयरूपा वा पञ्चदशी कला पूर्णतो विकसितेति वक्तुं शक्यते।

मूलप्रकृति-विजयरूपायाः षोडशीकलायास्तात्पर्यमिदं यत् प्रकृतिराज्ये यस्य वस्तुनः कृते ये नियमा निर्धारिताः, तानपि अतिक्रम्य तद्वस्तुनः प्रस्तुतीकरणम्। भगवान् रामः किल मर्यादावतारः, पुरुषोत्तमश्च। अत एव सत्यपि महत्सामर्थ्ये तत्र भगवत एतयोः कलयोः विकासो नाभवत्, नापि च तदौचित्यमपि। किन्तु श्रीकृष्णावतारे तयोरपि शिष्टयोः कलयोर्विकासो दृश्यते। गुरोर्मृतस्य पुत्रस्य पुनरुज्जीवनं प्रकृतिविजय एव। अतो निर्विचिकित्सं वक्तुं शक्यते यद् भगवति श्रीकृष्णे षोडश कलाः पूर्णं विकसिताः। अत एव उच्यते—

कृष्णस्तु भगवान् स्वयम्।

भभूत् । तेऽध्ययनाध्यापनाभ्यां सह यज्ञ-यागादिभिस्तपस आराधनया चात्मसाधनां कुर्वन्त आसन् । भारद्वाजस्य वाल्मीकेश्चाश्रमाः प्राचीनकालादेव स्वसांस्कृतिकसम्पद्भ्यः प्रख्याताः सन्ति ।[१] दुर्वासा ऋषिः स्वीयदशसहस्रशिष्यैः सह स्वगुरुनरेशं द्रष्टुकाम आगच्छति ।[२] महाभारते मार्कण्डेयाश्रमस्य कण्वाश्रमस्य चोल्लेखः प्राप्यते, यत्र ज्ञानस्य विभिन्नशाखानामध्ययनं क्रियमाणमासीत् ।[३]

कालिदास-निरूपित-कुलपतीनामाश्रमेषु विशेषतो वेदस्य शिक्षणकार्यमभवत् । कुलपतीनामाश्रमाः सघनवनेष्ववस्थिता आसन् । तेऽवश्यमेव वेदशिक्षार्थमुपयुक्ता अभवन् । अभिज्ञानशाकुन्तले काश्यपगोत्रीयकण्वर्षेराश्रमस्य निर्देश आयाति । कण्व एवात्र कुलपतिरासीत् । दुष्यन्तो यदाऽऽश्रमसमीपमागच्छति, तदा वैखानस आश्रमस्य परिचयं ददत् कथयति—

"राजन्, समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः, प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः ।"

स्पष्टमेतद्यत् कुलपतेः[४] कण्वस्याश्रमो मालिनीनदीतटे शान्तवातावरण आसीत् । तत्र च राजनैतिकवितण्डावादस्याभावोऽभवत् । आश्रमे प्रत्येकशिक्षार्थिनः कृते यज्ञोऽनिवार्यधर्मं आसीत् । आश्रमेषु नरनार्योः सहैव निवासोऽभवत् । आश्रमभूमिरत्यन्तशान्ता साधनामयी चाभूत् । "शान्तमिदमाश्रमपदम्" ( अभि० शा० १.१६ ) इत्युक्त्या स्पष्टमेतद् ध्वन्यते यदाश्रमवासिषु शमगुणप्राधान्यमासीत् । शृङ्गाररसस्य प्रभावस्तेषु नाभवत् । आश्रमेष्वतिथिसत्कारक्रियापि सम्पद्यते स्म । महर्षिकण्वो यदा शकुन्तलायाः दुर्भाग्यशमनार्थं सोमतीर्थयात्रायां गत आसीत्, तदातिथिसत्कारभारं शकुन्तलोपरि समर्पितवान् । यद्यपि तत्रान्यर्षेः वयस्कव्यक्तीनाञ्च अभावो नासीत्, तथाप्यत्यन्तात्मीयतया सत्कारदायित्वं शकुन्तलोपरि समर्पितमभवत् ।[१]

कुलपतेः कण्वस्य चरित्रं कविना आदशर्षेः, आदर्शाध्यापकस्य, आदर्शपितुश्च रूपेणाङ्कितम् । स हि तपस्वी तथान्तर्ज्ञानी च वर्तते । यदा मारीचाश्रमे दुष्यन्तशकुन्तलयोर्मिलनं भवति, तदादितिः एतत्सुखद वृत्तं कुलपतिकण्वसमीपं प्रापयितुं मारीचं निवेदयति । सन्दर्भेऽस्मिन् मारीचस्तत्सर्वज्ञतां निरूपयति । कविर्मरीचिमुखेन वादयति—"प्रत्यक्षं सर्वमेव तत्र भवतः । तपसः प्रभावात् कण्वस्य सर्वं प्रत्यक्षमस्ति" ( अभि० अं० ७ ) । सिद्धमेतद्यत् कण्वस्तपस्वी ज्ञानी नीतिज्ञश्चास्ति । तेन शकुन्तलागमनवेलायां य उपदेशः तस्यै दत्तः, सोऽद्यापि पतिगृहं गच्छन्तीभ्यो बालिकाभ्यः पितृभ्यां दीयते । कण्वः कन्यां परकीयसम्पदं मनुते । स उक्तवान्—

**अर्थो हि कन्या परकीय एव**
**तामद्य संप्रेष्य परिग्रहीतुः ।**

---

१. वाल्मीकिरामायणम् ६.१२३.५१

२. शिष्यायुतसमवेतो··· । महाभारतम् ३.२३२.८ ।

३. महाभारतम् ३.२७१.४८ ।

४. प्राचीनसमये कुलपतिः कोऽपि सामान्यजनो नाऽभवत् । प्रत्युत एतादृशो महान् जनः कुलपतिपदे नियुक्तोऽभवत्, यस्य छत्रच्छायायां दशसहस्रशिष्याणाँ पालन-पोषणैः सह शिक्षाभूत्—

मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ।

पद्मपुराणेऽपि कथितमस्ति—

आचार्यो बहुशिष्याणां मुनीनामग्रणीस्तु यः ।
व्रतयज्ञादिकर्माढ्यः स वै कुलपतिः स्मृतः ॥

१. इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः । ( अभि० शा० प्रथमाङ्के द्वादश-श्लोकपश्चात् । )

जातो ममायं विशदः प्रकामं
प्रत्यर्पितन्यास इवान्तरात्मा ॥
( अभि० शा० ४.२२ )

कण्वः शोचति यत्प्रेम परमविलक्षणं भवति । अद्य शकुन्तलां पतिगृहं संप्रेष्य मम मनः शान्तं जातम् । यतः कन्या वस्तुतः परकीयैव सम्पद् भवति । अद्य मम मनः तथैव शान्तिं गृह्णाति यथा कश्चन जनः कस्यापि न्यासं प्रत्यर्प्य गृह्णाति ।

कण्वेऽपारं वात्सल्यमस्ति । तथा सः क्षमाशीलोऽपि वर्तते । शकुन्तलायाः गन्धर्वविवाहवृत्तं श्रुत्वा स मनागपि रुष्टो नाभवत् । शकुन्तलाया एतदाचरणं धर्म-विरोधि वर्तते, तथापि क्षमाशील उदारश्च पिता कण्वस्तस्य समर्थनमेव करोति ।

"तदो जाव एणं लज्जावणदमुहिं परिसज्जिअ तादकस्सवेण एव्वं अहिणंदिदं दिट्ठिआ धूमा उलिद दिट्ठिणो वि जअमाणस्स पावए एव्व आहुदो पडिदा । वच्छो सुसिस्सपरिदिण्णा विज्जा विअ असो अणिज्जासि संवुत्ता । अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमित्ति ।'
( अभि० शा० चतुर्थाङ्के तृतीयश्लोकान्तिमं गद्यखण्डम् ।)

अनेनोद्धरणेन स्पष्टमेतद्यत् कुलपतिः कण्वः क्षमाशीलस्तु वर्तते एव, सहैव विद्याविनयमहत्त्वदोऽप्यस्ति ।

कुलपतेर्दृष्टिर्लोकानुग्रहे तथा सत्कारोपरि बद्धासीत् । तेन शकुन्तला लेखने गीतरचनायामपि शिक्षितासीत् । कुलपतौ विद्यासिद्धिजन्यमपूर्वं सामर्थ्यमासीत् । अस्माकमेतत्कथनस्य पुष्टिर्निम्नाङ्कितया ऋषिकुमार-प्रार्थनया भवति ।

"तत्र भवतः कण्वस्य महर्षेरसान्निध्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।'
( अभि० २.१५ अनन्तरं गद्यखण्डम् )

सिद्धमेतद्यत् कण्वप्रभावेण यज्ञे राक्षसानां विघ्ना नाभवन् । ऋषयः सर्वे यज्ञादिक्रियाणां सम्पादनं निर्भयाः कुर्वन्ति स्म । एवं प्रकारेण महाकविना कालिदासेन विद्याव्यसनिन उग्रतपस्विनः कण्वस्य चरित्रे दयालुतायाः, क्षमाशीलतायाः दूरदर्शितायाः, लोकानुग्राहकतायाः, अतिथिसत्कारपरायणतायाः संगठनक्षमतायाः वत्सलताप्रभृतिगुणानाञ्च समावेशः कृतः ।

## कुलपतिर्वरतन्तुः

महाकविः कालिदासो वरतन्तोर्विद्यायाः, बुद्धेः, व्यवस्थायाश्च पर्याप्तप्रशंसां कृतवान् । कविना तत्सम्बन्धे व्यलेखि—

अप्यग्रणीर्मन्त्रकृतामृषीणां
कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वयाज्ञानमशेषमाप्तं
लोकेन चैतन्यमिवोष्णरश्मेः ॥
( रघुवंशम् ५.४ )

कायेन वाचा मनसापिशश्व-
द्यत्संभृतं वासवधैर्यलोपि ।
आपाद्यते न व्ययमन्तरायैः
कच्चिन्महर्षेस्त्रिविधं तपस्तत् ॥
( ५.५ )

यथा सूर्यः स्वप्रकाशेन सुषुप्तसंसारमुद्बोधयति, तथैव कुलपतिर्वरतन्तुः स्वज्ञानज्योतिषा शिष्यानुद्बुद्धानकुर्वन् । स मन्त्रद्रष्टाऽऽसीत् । तस्य तपश्चरणं नितान्तमुग्रं कठोरञ्चाभवत् । तस्य तपसा इन्द्रोऽपि चिन्तितो बभूव । वरतन्तोर्गुरुकुले प्रकृतेः पूर्णरूपेण निवास आसीत् । तस्यैतद् गुरुकुलमाश्रमरूपेण सञ्चालितमासीत् । विविधानां वृक्षाणां लतागुल्मानाञ्च तत्र संवर्धनं क्रियमाणमासीत् । मृगास्तत्र निर्द्वन्द्वं विचरन्ति स्म । ते सर्वप्रकारेण तत्र स्नेहं संवर्धनञ्चाप्राप्नुवन्ति स्म ।

आश्रमनिवासिनः समस्तस्नातकाः स्नानं संध्या,

तर्पणादिक्रियाश्चाकुर्वन् । शिक्षापेक्षया दीक्षा तत्राधिका ध्यातव्याऽऽसीत् । महाराजो रघुः कौत्सं वृत्तं पृच्छन्नाश्रमसम्बन्धिनीं सर्वां व्यवस्थां प्रकाशितवान् । आश्रमस्य पाठ्यक्रमे चतुर्दश विद्यानां स्थानमासीत् ।[1] एतासु विद्यासु वेदाङ्गस्य, स्मृतेः, उपनिषदः, अर्थशास्त्रस्य, कामशास्त्रस्य, नाट्यशास्त्रस्य, ज्योतिषशास्त्रस्य, राजनीतेः, खगोलस्य, व्याकरणस्य, काव्यस्य, धनुर्वेदस्य, आयुर्वेदस्यच शिक्षा परिगणिताऽऽसीत् । महाकविकालिदासस्य शिक्षासम्बन्धिनो ये विचारा अन्यत्रोपलभ्यन्ते तैरप्युक्तविद्यानां समर्थनं भवति । 'रघुवंशस्य छाया हि भूमेः शशिनः' ( १४.४० ), 'तस्मिन् पुनः सरस्वतीकृतकाव्यबन्धे' ( विक्रमो० ३ ), तौ सन्धिषु व्यञ्जितवृत्तिभेदम्, रसान्तरेषु प्रतिबद्धरागम्, (कुमार० ७.९१) वागर्थाविव संपृक्तौ ( रघु० १.१ ), सिन्धुतीरविचेष्टनैः ( रघु० ४.६७ ), इतिहास-निबन्धेषु ( अभि० अ० ३ ) पुराणस्य कवेस्तस्य ( रघु० १०.३६ ) तथा साङ्गञ्च वेदमध्याप्य ( रघु० १५.६३ ) प्रभृत्युद्धरणैराश्रमस्य पाठ्यक्रमः प्रकाश्यते । नात्र सन्देहो यत् कुलपतिवरतन्तोराश्रमो विद्यासंस्कृतेः प्रधानकेन्द्रमासीत् । कौत्ससदृशाः कियन्तः स्नातकास्तत्राधीयते स्म । आश्रमसुव्यवस्थायाः, अध्यापनप्रवीणतायाश्च प्रसिद्धिः सर्वत्र आसीत् । रघुना कौत्सः श्रुतपारदृश्वा कथितः । ( रघु० ५.२४ ) एतेनापि तत्रत्यस्नातकानामाचार्याणाञ्च सम्बन्धे ज्ञानं भवति ।

## कुलपतिः वाल्मीकिः

कुलपतिर्वाल्मीकिः अत्यन्तकृपालुर्धर्मशास्त्रमर्यादाभिज्ञः, तपश्चरणादिसाधनासु रतश्च दृश्यते । तस्याश्रमे मुनिकन्यका अपि निवसन्ति । तत्र प्रेमवात्सल्ययोः पूर्णं साम्राज्यमस्ति । संध्यायां मृगाः सिंहाश्च सहैव निवसन्ति । आश्रमवृक्षाः लताश्च जलैः सिच्यन्ते । स्नातकाः पर्णकुटीः निर्माय पृथक्-पृथक् निवसन्ति । तस्य कुटीषु इङ्गुदीतैलप्रदीपाः प्रज्वलन्ति । कविना वाल्मीकेः सम्बन्धः दशरथेन जनकेन च सहोक्तः । महर्षिः स्वयं सीतां प्रति कथयति—

तवोरुकीर्तिः श्वशुरः सखा मे
सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां
किं तन्न येनासि ममानुकम्प्या ॥
( रघु० १४.७४ )

आश्रमस्य शान्तेस्तत्रत्यनिवासिनां परस्परसौहार्दस्य सम्बन्धे च स्वयं महर्षिः सीतां प्रति कथयति—

तपस्विसंसर्गविनीतसत्त्वे
तपोवने वीतभया वसाऽस्मिन् ।
इतो भविष्यत्यनघप्रसूते-
रपत्यसंस्कारमयो विधिस्ते ॥
( रघु० १४.७५ )

अनुग्रहप्रत्यभिनन्दिनीं तां
वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं
स्वमाश्रमं शान्तमृगं निनाय ॥
( रघु० १४.७९ )

कुलपतिः लवकुशौ वेद-वेदाङ्गान्यध्यापितवान्, स्वरचित - रामायणगानं च शिक्षितवान् । कविकालिदासः कुलपतिं वाल्मीकिं 'मन्त्रकृतं' ब्रवीति—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चकारोभयप्रीत्या मैथिलेयौ यथाविधि ॥
( रघु० १५.३१ )

अर्थात् स मन्त्रद्रष्टा ऋषिरासीत् । तस्याश्रमे शिक्षायाः साधनायाश्च मूर्तिमद्रूपमासीत् । कविना व्यलेखि—

१. षडङ्गो वेदाश्चत्वारो मीमांसान्वीक्षिकी तथा धर्मशास्त्रं पुराणञ्च विद्या एताश्चतुर्दश । ( अभिधान चि० २ १६७ )

पुष्पं फलं चार्तवमाहरन्त्यो
बीजं च बालेयमकृष्टरोहि।
विनोदयिष्यन्ति नवाभिषङ्गा-
मुदारवाचो मुनिकन्यकास्त्वाम् ॥
( रघु० १४.७७ )

पयोघटैराश्रम - बालवृक्षान्
संवर्धयन्ती स्वबलानुरूपैः।
असंशयं प्राक्तनयोपपत्तेः
स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥
रघु० ( १४.७८ )

च्यवनर्षिः

महाकविकालिदासस्य चतुर्थः कुलपतिश्च्यवनर्षिरस्ति। एतस्य वर्णनं विक्रमोर्वशीयनाटके वर्तते। उर्वश्या आयुर्नामकः पुत्रो जायते। सा पतिवियोग-शङ्कया पुत्रं कुलपतेः च्यवनस्याश्रमे शिक्षादीक्षार्थं त्यजति। च्यवनेन तस्य क्षत्रियकुमारस्य जातकर्मादयः सर्वे संस्काराः विहिताः। तस्य शिक्षादीक्षाणाञ्च पूर्णप्रबन्धः कृतः। कविः लिखितवान्—

जं खत्तिअ कुमारअस्स जादकम्मादि-विहाणं तं से भअवदा चवणेण असेसं अणुचिट्ठिदं। गहीविज्जो धणुव्वेदे अहिविणीदो।'

( विक्रम०, पञ्चमाङ्क-दशश्लोकानन्तरगद्यम्। )

गहीदामिसो किल गिद्धो पादवसिहरे णिलीअमाणो अणेण लक्खीकिदो बाणस्स। ( तत्रैव )

उल्लिखितोद्धरणैः स्पष्टमेतद्यत् च्यवनेन आयुःकुमारो धनुर्वेदेऽपि पूर्णशिक्षित आसीत्। तेन कुमारेण यदाऽऽश्रमविपरीतमाचरणं कृत्वा वृक्षासीनं समांसखण्डं गृध्रं प्रति बाणसंधानं कृतं तदा कुलपतिना निर्णीतं यदयं कुमारः पितुः समीपे प्रेषणीयः। फलतो विद्वानायु-कुमारः पितृ-समीपं प्रेषितः।

महाकविकालिदासवर्णितानामुल्लिखितचतुर्णां कुलपतीनामाश्रमव्यवस्थां वीक्ष्य निम्नाङ्कितो निष्कर्ष उपस्थितो भवति—

१. कालिदासस्य कुलपतयो दयालवः स्नातकाभ्युत्थानाय सर्वैः प्रकारैः सहायकाः सुव्यवस्थापकाश्च सन्ति।

२. शिक्षया बौद्धिक-प्रगत्या च सह दीक्षायाः नैतिक-सांस्कृतिक-साधनानामभ्यासस्य चावश्यकता कुलपतिदृष्टावासीत्।

३. बौद्धिकमानसिक-विकासानन्तरमाश्रमेषु शारीरिकः श्रमोऽप्यनिवार्य आसीत्। स्नानकानां कर्तव्येषु वृक्षादीनां सेचनस्य, आश्रममृगादिपशूनां संरक्षणस्य कुशादीनां दूरस्थप्रदेशेभ्योऽप्यानयनस्य गणनासीत्।

४. गुरुकुलेष्वाश्रमेषु वा सहशिक्षाप्यासीत्। ऋषिबालास्तथर्षिबालिकाः संयमपूर्वकं सहैव शिक्षिता अभूवन्। कुलपतेरतिरिक्तोऽन्याध्यापकवर्गोऽप्यासीत्। स स्वविषयस्य पूर्णपण्डितोऽभवत्। तेन च स्नातका अध्यापिता अभूवन्।

५. वेदवेदाङ्गानां शिक्षा प्रयोगात्मकविधिनाभ्यभूत्। प्रायेण सर्वे स्नातकाः संध्या-हवनादिकार्याणि चाकुर्वन्। पुष्पार्चनविधिराश्रमेषु प्रचलित आसीत्।

६. आश्रमेषु पठनेन सह लेखनस्यापि शिक्षाभूत्। शकुन्तला चित्रकला-लेखनेऽपि शिक्षितासीत्।[1]

७. राजकुमारेभ्यो धनुर्वेदस्य ऋषिकुमारेभ्यो यजुर्वेदस्य तथा सामान्यवर्गेभ्यो ललितकलायाः शिक्षा दीयमानाऽऽसीत्।

८. सामान्यतः कुलपतिर्दशसहस्रस्नातकानामाश्रम एवावसत्। किन्तु कालिदासवर्णितकुलपतीनामाश्रमेषु विद्यमानानां छात्राणां संख्यासु न कोऽपि प्रकाशः पतति। परमेतावत्तथ्यं यत् कुलपतिः स्नातकानामभ्युत्थानाय स्वसमस्तशक्तिव्ययमकरोत्।

९. आश्रमेषु स्नातकनिवासाय पर्णकुटीनां व्यवस्थासीत्। भोजनावासव्यवस्था गुरुदक्षिणया प्राप्तेनैव धनेनाभवत्। गुरुदक्षिणा राज्ञां महाराजानां धनिकानाञ्च सहयोगेनैव प्राप्यते स्म। कौत्सः चतुर्दशकोटि-स्वर्णमुद्राः महाराजात् रघोः गृहीत्वा कुलपतये वरतन्तवे समर्पितवान्। वरतन्तुश्च तामर्थराशिमाश्रमव्यवस्थायां नियोजितवान्। अन्यशिक्षकेषु सत्स्वपि गुरुदक्षिणां कुलपतिरेव गृह्णाति स्म। एतेन एतद्ध्वन्यते यद् धनराशौ कुलपतेः स्वत्वमासीत्। व्यक्तिविशेषस्य कस्यचन नहि। स्नातका इङ्गुदीतैलस्य दीपं प्रज्वाल्य रात्रावपि पठन्ति स्म। कुलपतेः वाल्मीकेराश्रमे व्यवस्थैवमासीत्।—'मागधम्' तः

१. अभि० तृतीयाङ्के त्रयोदशश्लोकानन्तरं गद्यम्।

# विन्ध्यवासा शिवा स्तात् !

--स्वर्गीयाः कविवराः श्रीरामानन्द त्रिपाठि शर्माणः--

[ भाद्रपदकृष्णाष्टम्यां भगवतः श्रीकृष्णस्य जन्मनः सहैव भगवत्याः विन्ध्यवासिन्याः दुर्गादेव्या अपि जन्म समभवदिति पुराणेषु सुप्रथितम्। अतो भगवत्योश्चरणयोः उत्तरप्रदेशस्य भूतपूर्वं मुख्यमन्त्रिणां श्रीकमलापति त्रिपाठि महाभागानां पूर्वजैः श्री रामानन्दशर्म कविवरैर्ग्रथितानि (१७४२ वैक्रमेऽब्दे) एतानि पद्यानि नितरां भावभरितानि समुल्लसन्ति। वयमेभिरेव कविवचोभिर्मातरं सप्रश्रयं स्तुमः। —सम्पादकः ]

सच्चिद्रूपां हि केचित् प्रकृतिमथ परे चापरेऽणुस्वरूपां
प्राहुः कर्मेति केचित् क्वचिदपि च जगुर्नेति नेति स्वरूपाम्।
यत्तत्त्वं योगिनोऽपि स्वयमिह न विदुस्तत्त्वमस्यादिवाक्यै-
स्तां वन्दे मोहकाशां त्रिभुवनजननीं विन्ध्यशैलेन्द्रवासाम् ॥ १ ॥

यस्याः कारुण्यपूर्णां दिनकर-किरणोत्फुल्ल-कह्लारदीर्घां
दृष्टिं संप्रार्थयन्ते सकलसुरगणा ब्रह्मविष्णुप्रधानाः।
सेयं सर्वा सुरेन्द्रप्रकर-विदलनोद्दाम-गर्वादखर्वा
सर्वाभीष्टप्रदात्री त्रिभुवनजननी विन्ध्यवासा शिवा स्तात् ॥ २ ॥

सिंहस्फालोग्रलीला - नियमितहृदया निर्दया वैरिवर्गे
घण्टा-चापासि-शूलाद्यखिल - भुजलसध्देतिभिर्भासमाना।
गर्जज्जीमूतजालोद्भट - विकट - महोदग्र - चण्डाट्टहासा
नीलाम्भोदप्रकाशा प्रभवतु सततं शर्मणे विन्ध्यवासा ॥ ३ ॥

अष्टाभिर्दोर्भि - रष्टायुध - निवहवहा सिंहपृष्ठे निषण्णा
सोल्लासैस्त्रासयन्ती रिपुगणमचिरात् काममट्टाट्टहासैः।
नानालङ्कारपूर्णा मणिमयविलसत् - कुण्डलोल्लासिकर्णा
नीलाम्भोदालिवर्णा प्रभवतु सततं शर्मणे काऽप्यपर्णा ॥ ४ ॥

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश (मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः (जनवरी-अङ्कतः) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका (टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रणस्थलम्—[illegible] सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ५०

❀

अङ्कः ५

❀

सम्पादकः

गो० न० वैजापुरकरः

❀

मई
१९७४

❀

वार्षिक-मूल्यम्
५) रूप्यकाणि

❀

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्

## वृन्दावनकुञ्जम्

चेतश्चल वृन्दावनकुञ्जम् ।
नन्दकुमार - चरणकमलाभ्यां परिपूतं छबिपुञ्जम् ॥ १ ॥
विविधविहगकुल - कलरवयुत - मृदुतरुवर - राजितपुञ्जम् ।
निर्मलकालिन्दी - श्यामलजल - विलसित - लोलतरङ्गम् ॥ २ ॥
भाति यत्र गोकुलसंयुक्तं, गोवर्धन - गिरिशृङ्गम् ।
शरदुत्फुल्लमल्लिकामोदः कर्षति सहृदयभृङ्गम् ॥ ३ ॥
परमानन्दो निवसति भक्तिर्नृत्यति यत्र सलीलम् ।
कर्मयोगि-केलिस्थलमेतत् कृन्तति कश्मलकीलम् ॥ ४ ॥

—डॉ० शिवशरण शर्मा

# ग्राहका विज्ञापनदातारश्च विनिवेद्यन्ते

यत् 'सूर्योदय'स्य पञ्चाशत्तमवर्षस्य वार्षिकं शुल्कमद्यावधि नैकैः प्रत्नग्राहकैर्नं प्रेषितम्। अतस्तैः एतदङ्क-प्राप्तेः समकालमेव पञ्चमुद्रात्मकं वार्षिकं शुल्कं धनादेश ( मनिआर्डर ) द्वारा प्रेषणीयम्। नव्योऽपि एकैको ग्राहको विधेयः।

एवं नैके धनिनोऽपि ग्राहकाः व्यवसाय-संस्थानानि शासनानि च सर्वेभ्यो मुक्तहस्तं स्वव्यापार-विज्ञापनानि प्रददति। परं 'सूर्योदयः' तै कदापि न स्मर्यते। सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाशयितुमस्माभि-रूप क्रान्तमस्ति। अतस्तेऽमुमपि कृपयाऽनया अनुगृह्णन्त्विति।—व्यवस्थापकेन

---

# अनुक्रमः



स्थानाभावाद् अङ्केऽस्मिन् नैकेः पूर्वानुवृत्ताः लेखा विवशतो न प्रकाशिताः।—सम्पादकः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५० वर्षे ] वाराणसी, ज्येष्ठ, २०३० वै० : मई, १९७४ ई० [ ५ अङ्कः


## मां पातु गाङ्गमनिशं सुखकारि वारि !

•

विष्णुः समुद्रमथनेन सुधां निपाय्य कृत्वामरान् भुवि भवान् स्वजनान् विचार्य।
मात स्वकीयकरुणावरुणालयात्त्वां तापत्रयोपशमनीं प्रणिनाय गङ्गाम्॥ १॥

तोये पतन्ति कुसुमानि फलानि यावत् क्षेत्राधिपालवृषकर्षकवंशपूर्वे।
विद्युत्प्रभैर्मणिमयैः सुरसङ्घसेव्यैः स्वर्गं प्रयान्ति सरिते विकसद्विमानैः॥ २॥

भ्रातुः प्रियं विदधता भरतेन गङ्गे ब्रह्मर्षिमातृपरिवारगणेन साकम्।
त्वत्सेवयैव रघुनाथपदारविन्दं लब्धं महाधिमलिमुच्यमहच्चरित्रम्॥ ३॥

अम्ब त्वदाश्रयमवाप्य निषादराजो जातिक्रियागुणगणैः स महानपूतः।
रामं रमापतिमनर्घ्यगुणं सखायं लेभे लिलिङ्गयमथो भगवान् वसिष्ठः॥ ४॥

तापप्रहारि गुरुपातकदारुहारि हेमाद्रिगह्वरगभीरतलप्रसारि।
मज्जज्जनालिमनसां सदृशोपहारि मां पातु गाङ्गमनिशं सुखकारि वारि॥ ५॥

# श्रीमहर्षि-ज्ञानानन्दचरितं महाकाव्यम्

-- श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः --

( अथ एकविंशः सर्गः )

१. अभ्रान्तसर्वविधसंविदपौरुषेयो वेदो मतोऽस्ति समयत्रितयेऽप्यबाधः ।
ज्ञानात्मना च परमात्मनि नित्यरूपे सन्तिष्ठते प्रलयकालमुपेत्य नित्यः ॥

२. शश्वत्तपः - परमपूतमहर्षिवृन्द - बाह्यावबोधविनिवृत्तिसमाधिभृत्सु ।
चेतस्सु सर्गसमये ह्यनुपूर्वमेव संश्रूयते श्रुतिसमाह्वयवानतोऽसौ ॥

३. आध्यात्मिकं तदधिदैवमथाधिभूत - मर्थत्रयं भुवि विकासयते तदीयः ।
प्रत्येकमन्त्र इति चान्तरदृष्टिशून्यः साधारणो बुधजनो न विबोद्धुमर्हः ॥

४. प्रज्ञा समाधिसुलभा च ऋतम्भरा यैरासादिता भुवनवन्द्यमहर्षिवर्यैः ।
तच्छेमुषीषु भगवत्प्रवणासु वेद आविष्करोति नितरां त्रिविधं स्वमर्थम् ॥

५. सत्त्वं रजस्तम इति त्रिगुणान् प्रकृत्या आश्रित्य तत्र विलसन्त्यधिकारभेदाः ।
अन्योन्यबाधजनकास्तु विरोधभावास्तैरेव जाग्रति न सन्ति हि वस्तुतस्ते ॥

६. कर्म ह्युपास्तिरथ संविदिति त्रिकाण्डो वेदो मतो यदपि किन्तु वरेण्यभागः ।
कर्मैव तस्य मुनिभिर्निखिलैः श्रुतिज्ञैर्ब्रह्माण्डचालकतया परिगीत आस्ते ॥

७. अम्ब्वाशयेषु च यथा पवमानवेगादुज्जृम्भते सततमेव तरङ्गराशिः ।
तत्प्राकृत - त्रिगुणजन्य - तरङ्गसङ्गात् कर्माविरस्त्यखिलविश्वनिदानहेतुः ॥

८. आघाततोऽपि च यथा प्रतिघाततश्च बिभ्रत्यसङ्ख्यकवपूंषि जलोर्मिमालाः ।
वैषम्यभाजनतया च गुणत्रयस्य कर्मापि धारयति नैजमनन्तरूपम् ॥

९. सम्पातितं जलनिधौ प्रवहत्तृणं हि प्राप्नोति कूलमनुकूलतरङ्गसङ्गम् ।
तद्वद्ध्रुवं मनुतनूजननोऽपि लोकः संगृह्य कर्म शुभदं विजहाति बन्धम् ॥

१०. विज्ञाय तद् भुवि हिताहितकर्मरूपं चेन्मानवः स्वपुरुषार्थविधौ प्रवृत्तः ।
निःश्रेयसं स्वपरमाभ्युदयेन साकं प्राप्नोत्यवश्यमिह नास्ति वितर्कलेशः ॥

( क्रमशः )

# धूमशकटीनां कार्यमुद्रणं किमस्मान् शिक्षयति ?

मई-मासस्य अष्टमदिनाङ्कतोऽस्माकं राष्ट्रे धूमशकटीनां राष्ट्रव्यापि कार्यमुद्रणं ( रेलवेकी हड़ताल ) तत्कर्मकर्तृसमाचरितं प्रारब्धं यदिदानीं लेखानावसरेऽपि सिद्धान्ततस्तथैव प्रचलद् वर्तते। तथापि व्यवहारतोऽद्य बहुषु भागेषु तन्मुद्रणं वैफल्यमेवाऽऽसादयत् पुनरपि धूमशकटीनां पूर्ववद् गमनागमनव्यापारं कथमपि निरोद्धुं न प्राभवत्। तटस्थैर्विवेकशीलैः प्रसङ्गेऽस्मिन् 'किमिदमस्मान् शिक्षयती'त्यत्र अवहितैर्भूयेत चेन्नूनं तदवधानं व्यक्तेः समाजस्य राष्ट्रस्य च श्रेयसे कल्पेत। अतो वयमप्यत्र स्वां लेखनीं प्रवाहयामः।

पुराकाले अस्माकं भारतीयानां सर्वोऽपि व्यवहारो विकेन्द्रितोऽध्यात्मनिष्ठश्च जायते स्म। सामान्यतः प्रत्येकः स्वीयं कार्यं तत्तत्-सीमितक्षेत्रे सीमितवर्गैः सम्पाद्यते स्म। व्यापकानि कार्याणि पुनरध्यात्मशक्त्यधिष्ठितैः भौतिकसाधनैः प्रपूर्यन्ते स्म। साऽपि शक्तिः प्रायः प्रत्येकस्य सविधे नियता आसीत्। स च तस्याः दुरुपयोगाय स्वप्नेऽपि न प्रवर्तते स्म। अतो वयं कथमपि उपालम्भमेतं स्वीकर्तुं न शक्नुमो यत् 'प्राचीना प्रतिगामिनः, सङ्कुचिते क्षेत्रे एव व्यवहरन्तो विश्वजनीनव्यवहारतः सर्वथाऽपरिचिताश्चासन्नि'ति। वस्तुतस्ते निरर्थकं भोगसम्भारं न स्पृहयन्ति स्म। जीवनयात्रायै यावदपेक्षितं तस्यैव संयोजने तेषां निखिलः समुद्यमो जायते स्म। सन्तोषः पुनस्तेषां जीवनसर्वस्वमासीत्। तेषां सुदृढा धारणेयं यत्—

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥** इति

**त्यागेनैके अमृतत्वमानशुः** इति च। तदा सर्वे अन्ने, वस्त्रे, आवासे, औषधे, यातायातसाधनेषु अन्येषु च दैनिक-जीवनीयविषयेषु सर्वथा स्वावलम्बिन एवासन्। अतस्तेषां पदार्थानामादानाय समुपलब्धये वा कीदृश्यपि समस्या तेषां पुरतो न समुपतिष्ठते स्म।

किन्तु 'ते हि नो दिवसा गताः!' प्रथमचरणे एव सर्वाङ्गपरिपूर्णः सम्पन्नः कलिः। चिराद् वैदेशिकदास्येन भारतीयानामस्माकं सा चिरन्तनी अध्यात्मशक्त्यधिष्ठिता स्वावलम्बन - विकेन्द्रीकरणभावना मुमूर्षन्तीव संवृत्ता। अत्रान्तरेऽस्माभिः देशभक्तिधुरीणानां सुदीर्घप्रयासैः राजनैतिकं स्वातन्त्र्यमासादितम्। किन्तु ततः परमावश्यकर्तव्यभूतं मुमूर्षन्त्या अस्या भावनायाः जीवनदानरूपं सुकृतं नास्माकं नेतृवरैः समाचरितम्। भौतिकताचाकचिक्यदीप्तचक्षुष्कैः पाश्चात्यसंस्कृतिग्रहगृहीतमानसैस्तैः पुनस्तेषामेव पाश्चात्यानां साधनान्यादाय सर्वविधभौतिकसमुन्नतये एव प्रयतितम्। अध्यात्मशक्तिं सर्वथा न्यक्कुर्वन्तस्ते सर्वत्र दैनिकजीवनयात्राप्रकारेष्वपि भौतिकान्येव सर्वाणि उपकरणानि प्रयुक्तवन्तः। तान्यपि न विकेन्द्रितानि स्थापितानि तैः, क्रमशस्तानि कथितराष्ट्रीकरणपथि एव प्रवर्तमानानि विलोक्यन्ते। विशालतमानाम् इस्पात - लौह - पेट्रोलतैल - धूमशकटी-बैंकादीनां कथा तु दूरे एवास्ताम्, प्राणप्रदानां गोधूमानामपि राष्ट्रीकरणं संवृत्तम्। इतः परं शिक्षाया अपि राष्ट्रीकरणाय अस्मदीया एव पाश्चात्यसंस्कृतिसंस्कृताः शासकान् नैकशो विवशीकर्तुं प्रयतमाना दरी-

यतो हि राष्ट्रीकरणं नाम पर्यायतः व्यक्तेः स्वातन्त्र्यस्य सुस्पष्टमपनोदनम्। राष्ट्रं नाम न किमपि स्वतन्त्रं वस्तु, व्यक्तीनां समष्टिरेव तत्। सा च समष्टिर्न चेतना। चेतनविशेषमधिष्ठायैव सा प्रवर्तते। स च यदि सर्वतः साधीयान् भवेत्तदा राष्ट्रमपि साधीयः स्यात्, राष्ट्रीकरणमपि। अथ तस्मिन् कोऽपि दोषः प्रसरेत्, तदा समग्रं राष्ट्रमपि दुष्टतां यायात्। यदि एकस्मिन् राष्ट्रनायके सर्वासां व्यक्तीनां स्वातन्त्र्यस्य विलयः स्यात् तदा सा पर्यायतोऽधिनायकतैव भवेत्। कामं लोकबहुमतेन स नियतः स्यात्। सर्वाधिकारसम्पत्त्या अध्यात्मभावनाशून्यतया च अकार्यकरणं स्वीयसङ्घटनप्रभाववर्धनञ्च तस्मिन् सर्वदैवाशङ्कितं स्यात्। अन्यच्च, साम्प्रतं यादृशं लोकबहुमतं समासाद्यते, तदपि न विपश्चितां तिरोहितम्। अपि च, बहूनां मेषपात्राणां बहुमतमेकस्य विवेकिनो दूरदर्शिनो मतेनाञ्जसा कथमपि स्पर्धितुं नालमित्यपि विवेचका अवगच्छन्त्येव। सत्येवं तथाविधेन राष्ट्रीकरणेन समग्रं राष्ट्रमेव सुगतं भवितुं शक्नोति दुर्गतं वा। तत्रैव सर्वसत्ताविलये कस्याश्चन क्षमतासम्पन्नाया अपि व्यक्तेः कृते स्वात्मोद्धाराय अवसर एव न भवेत्। किमिदं कस्यचन प्रगतिपथं गच्छतो राष्ट्रस्य कृते श्रेयस्करम्? एतद्विपरीतं विकेन्द्रितव्यवस्थायां क्षमतासम्पन्नाः स्वातन्त्र्येण स्वात्मनो विकासं विधाय राष्ट्रसेवायै सन्नद्धा भवितुमर्हन्तीति निश्चप्रचम्।

अत्रेदमवधेयम्—इत्थं केन्द्रीकरणतो विकेन्द्रीकरणस्य ज्यायस्त्वेऽपि कुत्र कुत्रचन केन्द्रीकरणमपि राष्ट्रहिताय परमावश्यकमिति तस्य सर्वथा खण्डनं नास्माभिर्विधीयते। तत्तु भाव्यमेव। तेन विना राष्ट्रशकट एव सुचालितो न भवेत्। तथापि सर्वस्यास्य विवेचनस्य इदमेवोद्दिष्टं यद् यावद् राष्ट्रस्य हिते काऽपि बाधा न भवेत्, तावद् भूयसा सर्वैः नैकेषु विषयेषु विकेन्द्रीकरणमेव समादरणीयं समनुष्ठेयञ्च। तेनैव राष्ट्रशकटः सुचालितः सन् समुद्दिष्टं पदमासादयितुं प्रभविष्यतीत्यस्माकं दृढं मतम्।

प्रकाशेऽस्मिन् विचार्यमाणे यातायातसाधनविषयेऽपि पदसञ्चारं, पदगन्त्री-सञ्चारं, वृषभाश्वादियानसञ्चारं च न्यक्कृत्यास्माभिः गमनागमनाय सर्वथा धूमशकट्या एवाश्रयो गृहीत इत्यपि स्वावलम्बन-विकेन्द्रीकरण - परिपन्थी एव। शासनेनापि तदुपकरणस्य राष्ट्रीकरणं कृतम्। अत एव धूमशकटीकर्मकरैर्निर्धारितं यत् 'सर्वे भारतीया अस्माकं वशंवदा एवास्मिन् विषये। शासनमपि अस्मदायत्तमेव सन् व्यवसायममुं कर्तुं प्रभवति।' अन्यच्च, तैरिदमपि विचार्यते यत् 'साम्यवादिदेश - विचारधाराभिभूतमस्माकं शासनम् अन्यानि व्यावसायिकसंस्थानानि स्वकर्मकरेभ्यो लाभांशदानाय विवशानि करोति, सत्येवं स्वीयेऽस्मिन् व्यवसायेऽपि कथङ्कारं तत् नास्मभ्यं लाभांशं (बोनस) दातुं प्रवर्तते? अतो यथाकथञ्चन स समादेय एवे'ति। अत्रान्तरे तेषां सर्वेषां सङ्घोऽपि सङ्घटित आसीत्। तद्बलेन ते स्वीयमभीष्टं साधयितुं धूमशकटीनां राष्ट्रव्यापि कार्यमुद्रणात्मकं महाभियानं (राष्ट्रव्यापी रेल-हड़ताल) मासस्यास्य अष्टमदिनाङ्कतः प्रारब्धवन्तः। एतेन समग्रराष्ट्राभिजनानां तत्तद्व्यक्तीनां च कियती महत्तरा हानिः समभवदिति तु अन्ते शासकीय-घोषणया स्फुटीभवेदेव। तदभिशापः स्वतन्त्रः करभारः सर्वस्यापि राष्ट्रस्य शिरसि निपतेदित्यपि सुनिश्चितमेव। तटस्थैः पुनः सर्वमेतत् परावलम्बनस्य केन्द्रीकरणस्य चाभिशापभूतमेवेति विभाव्य भारतीयाः प्रबोध्यन्ते यदद्यापि भवद्भिर्जीवने स्वावलम्बनस्य विकेन्द्रीकरणस्य च भूयसा समावेशः कार्यं इति।

प्रसङ्गेऽस्मिन् भूमशकटी-कर्मकरैः, अन्यैश्चापि विभिन्नव्यवसाय-कर्मकरैः इदमवधेयं यत्कामं युगानुरूपं

सङ्घबलं भवतां भवेत्, तथापि यदि तत् जनमतानुगृहीतं न स्यात्, तदा तस्य साफल्यं शशशृङ्गायितमेव। तेषामनेन व्यापारेण जनसाधारणस्य या महत्तरा हानिरभूत्, तां किल जनता कथं सहेत ? अन्यच्च, प्रायशः सकलैव जनता साम्प्रत महान्तमर्थकष्टमनुभवति। शतशः सहस्रशश्च जनाः सुखेन एकवारमपि उदरदरीं पूरयितुमक्षमाः स्वप्ने एव उदरपूर्तिं ध्यात्वा सन्तुष्यन्तो दरीदृश्यन्ते। अस्यां विषमायां स्थितौ शासनकृतां भूयसीं सुविधामासादयन्तोऽप्येते धूमशकटीकर्मकराः, बैंककर्मकराः, अन्ये च तादृशाः कर्मकराः बुभुक्षितानेतान् अवमत्य शासनतोऽधिकाधिकमर्थजातं समाक्रष्टुं प्रयतेरंस्तदा जनसाधारणः कथमप तान् न क्षमेत। तेषां तादृशस्य क्रमस्य सैव परिणतिर्भवेत् या हि धूमशकटीकार्यमुद्रणाभियानस्य दृश्यते। अपि च, एतेषां धूमशकटीविभागे सार्वत्रिको जनसाधारणस्य लुण्ठनप्रकारो वस्तूनां क्रयणावसरे प्रचलति। द्विगुणं चतुर्गुणं वा मूल्यं प्रदायापि समुचितमूल्यसुलभं वस्तु जनसाधारणेन कथमपि नासाद्यते यावच्च तत्र उत्कोचसत्रं न परिचाल्यते, तद्विरोधे च निर्मम पीड्यते जनसाधारण.। सर्वैरेतैः दुष्कृत्यैस्तेषां नैतिकं मूल्यं जनसाधारणस्य पुरतः न्यूनायितमिव संवृत्तम्। तेषां महाभियानस्य विफलतायामस्यां जनसाधारणस्यायमाक्रोशोऽपि नूनम् महान् अभिशापायितोऽभवत्। अतस्तैर्यदि स्वात्मनो वास्तविकं हितं काम्येत चेत् सर्वप्रथमं जनानुरागसम्पादनायैव सुदृढं प्रयतनीयमिति तेषां कृते तटस्थानां विवेकिनां हितोपदेशः।

पर्यन्ते शासनायापि किमपि उपदेष्टव्यमवशिष्यते। विषयेऽस्मिन् तेन यादृशः सुदृढः क्रमोऽनुसृतस्तस्य समर्थनं कुर्वद्भिरपि तटस्थैः शासनं प्रबोध्यते यत्तेन व्यावसायिकसंस्थानेषु कर्मकरेभ्यो लाभांशदानस्य यो दुराग्रहः कृतः स सर्वथा अकाण्डे एवासीदिति। ये केचन कमपि व्यवसायं समाचरन्ति, तेषां तत्र बुद्धिः, धनम्, समयः, सर्वस्वञ्च व्ययीभवति। अपरिपक्ववस्तुनाम् उपकरणानां च सङ्कलनाय प्रभूतं धनं स्वकीयं व्ययीभवति। तैः कर्मकरेभ्यश्च वेतनं प्रदीयते। शासनं पुनः सर्वोच्चस्वामित्वेन महान्तम् आयकरमपि गृह्णाति। सत्येवं व्यावसायिकानां हस्ते कियान् लाभः पतेदिति विवेचका एव निर्धारयन्तु। तत्रापि कर्मकरेभ्यो लाभांशो दीयेत तदा मुधैवायं तेषां व्यवसायप्रयासः स्यात्। तेन च अग्रिमव्यवसायकरणाय तेषां सविधे कियान् निधिर्भवेत्? किमेकवारं व्यवसायं कृत्वा सर्वथा ते ततो विरता एव भवेयुः? इत्थं तु राष्ट्रस्य व्यावसायिकः समुत्कर्षः क्रमशो विलयं गच्छेदिति। किं वा विचारितं शासनेन ?

वस्तुतः सर्वमेतत् पाश्चात्यसंस्कृतेस्तेषामेव रीतिनीतीनामनुकरणस्यैव अभिशापः। भारतीयसंस्कृतौ भारतीयराजनीतौ च पुना राज्ञां व्यावसायिकानाञ्च लाभस्य ये पञ्चशो विभागाः कृताः, तेषां यथार्थतोऽनुकरणेन राज्ञो व्यावसायिकस्य वा पार्श्वे एक एवांशो व्यक्तिगतसम्पत्तिरूपेण परिशिष्यते। तत्रापि तस्य दानधर्मांशो भवति यद्धि जनतास्वेव प्रसरति। अतो भारतीयशासनस्य अनुपेक्ष्यमिदं कर्तव्यं यत् तत् तथाकथित - प्रगतिशीलानां भौतिकसमुत्कर्षमात्रसाधने प्रवृत्तानां राष्ट्राणां बौद्धिकपारतन्त्रसूचिकां शासनपद्धतिं राजनीतिं वा परित्यज्य विशुद्धभारतीयां वैदिकीं कौटिल्य-कामन्दकाद्यनुगृहीतां सर्वथाऽध्यात्मपरिनिष्ठितां स्वदेशीयां स्वतन्त्राञ्च शासनपद्धतिं समाश्रित्य भारतं शासितुं पुरः समुपतिष्ठेत। सप्तविंशतिवर्षदेशीयः स्वतन्त्रदेश-युवाऽयमद्यापि स्वीयां श्रेयःप्रेयसाधिकां धर्मनिष्ठां शासननीतिमपहाय परतन्त्रां वैदेशिकीं चपलां शासननीतिमेव संश्लेषितुं समुत्सुकः स्यात्तदा भगवानेव शरणमित्येव वक्तव्यं भवेत्। अतः शासनेनापि सद्योऽस्य सर्वस्य गभीरं मननं विधाय ←

## अद्वैतं सुख-दुःखयोः !

विश्वस्मिन् विभवेऽपि यस्य विगलद्वस्त्रा तनुः श्रेयसी
स्तोत्रं यस्य च पाणिपीडित-मुखोद्गारैक-साराक्षरम् ।
गङ्गाः-वह्नि-भुजङ्ग-चन्द्रशकलान्येकत्र देहे वहन्
अद्वैतं सुख-दुःखयोरनुभवत्येकः स योगीश्वरः ॥ १ ॥
विद्वन्मण्डन-मूढयोः कुलवधू-वारस्त्रियोः केसरी-
धावद्वारणयो - दिनेश-तमसोः - कादम्ब-काकोलयोः ।
ऐक्यं चेन्नवजन्मनाऽपि विधिना संपाद्यते कौशलाद्
अद्वैतं सुख-दुःखयोरिति तदा धत्तां समस्यापदम् ॥ २ ॥

—कविवराः श्री खिस्ते बटुकनाथशास्त्रिणः

←स्वतन्त्रः स्वदेशीयश्च क्रमोऽनुसर्तव्यः। अन्यथा अन्न-वस्त्र-निवास-रक्षाकल्पेषु सर्वसामान्य-दैनिक-जीवनीय-पदेषु जनसाधारणस्य कृते सौविध्यमनसादयत् किमपि शासनं कियत्कालं स्थिरं स्थावरं स्थातुं प्रभवेदिति भगवानेव जानातु। अतोऽस्मिन् महति सङ्कटायिते काले भारतशासनेनापि विचार्येदं सर्वं सुनियोजितः एकान्ततो राष्ट्रहितकारी पन्था अवलम्बनीय इत्येव तस्यापि कृते तटस्थानां विवेचकानां कान्तासम्मितोपदेशः। अन्ते कर्तुमकर्तुमन्यथाकर्तुं क्षमं भगवन्तमेव प्रार्थयामो यत्सोऽस्मान् सर्वान् भारतीयान् सद्बुद्ध्या योजयत्विति।

[ लेखस्य समाप्तिकाले वृत्तं प्राप्तं यत् मईमासस्य २८ दिनाङ्के प्रातः ६ वादतः महाभियानमिदं परावर्तितं कार्यकरैः। पञ्चाशत्कोटिरूप्यकाणां हानिश्चात्र समभवत्' इति। महाभियानसमाप्तिर्नूनं शुभावहेति अस्माकं मतम्। ]

### परमाणु-परीक्षणं विजयतेतराम्

भारतराष्ट्रेण अन्ततः 'परमाणुबम' - महास्त्र-निर्माणं विधाय तस्य परीक्षणमपि भूमेरधो मरुस्थले तादृशे प्रदेशे कृतं येन केषामपि मानवानामहितं न भवेत्। एतदर्थं वयं सर्वान् एतन्निर्मातृ - वैज्ञानिकान् भारतशासनं च सादरमभिनन्दयामः। एतेन भारत-राष्ट्रमप्यस्माकम् अद्यतनीय-सर्वोच्चभौतिकशक्तिमतां राष्ट्राणां पङ्क्तौ ससम्मानं समुपवेशितुमधिकृतं तु जातमेव। परमाणुशक्तेर्विध्वंसाय प्रयोगं वाञ्छता-मभिक्रमं निरुद्धुमपि राष्ट्रेणानेन महत्तरं बलमासादितं यस्य च स चिराद् बहुशः समुद्घोषक आसीत्। शक्तेरस्याः विध्वंसकप्रयोगं कामयमानै राष्ट्रैः प्रसङ्गेऽस्मिन् भारतराष्ट्रस्य निन्दा क्रियेत चेत्तत्र नातितरां चित्रम्। स्वाभाविकं तत्। अस्माभिः पुनस्तत्रावधानमेव न देयम्। यानि पुनर्हीनबलानि विरोधकानि राष्ट्राणि उपक्रममसुं निन्देयुः, भीताश्च भवेयुश्चेत्तत्सर्वं व्यर्थमेव। यतो हि भारतस्य प्रतिज्ञैव यत् 'परमाणुशक्तेर्निर्माणकार्ये एव विनियोगो भाव्यो न जातु विध्वंसकार्ये।' सौभाग्याद् अस्मत्प्रधानमन्त्रिभि-रपि प्रतिज्ञेयं घण्टाघोषं पुनरुद्घुष्य भ्रान्ताः भीताश्च समाश्वासिताः। इतः परमपि केचन न तुष्येयुः, समाश्वस्ताश्च न भवेयुश्चेत् भविष्यत्काल एव तेषां समाधानं विधास्यति। तदर्थमस्माभिः स्वीये-ऽस्मिन्नभिक्रमे कथमपि शैथिल्यं न प्रदर्शनीयमित्येवा-स्माकं सप्रश्रयं निवेदनम्।

# मानस-भारती : देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

इत्थं दूरीकृत्य सर्वान् बहुरूपांश्च संशयान् ।
मूर्ध्नि धृत्वा गुरोः पादपद्मयोर्धूलिमादरात् ॥
सर्वेभ्यो विनयं कुर्वे पुनः साञ्जलिरानतः ।
यथा कथामारचने कोऽपि दोषो न संस्पृशेत् ॥
इदानीं सादरं शीर्ष्णा प्रणम्य श्रीसदाशिवम् ।
विशदां वर्णयामीह श्रीरामगुणसत्कथाम् ॥
एकत्रिषड्ब्रह्मसङ्ख्ये वैक्रमे शुभवत्सरे ।
कथां करोमि संस्थाप्य हरेः पादाब्जयोः शिरः ॥
नवम्यां भौमदिवसे मधुमासे मनोरमे ।
अयोध्यायामिदं रम्यं चरितं सम्प्रकाशते ॥
श्रुतिर्गायति यद्यस्मिन् रामजन्म-सुवासरे ।
तस्मिंस्तत्र समायान्ति तीर्थानि सकलान्यपि ॥
असुरा नाग-विहगा मनुष्या मुनि-देवताः ।
अयोध्यां प्राप्य कुर्वन्ति रघुनाथस्य सेवनम् ॥
सम्पादयन्ति सुधियो रामजन्ममहोत्सवम् ।
गायन्ति ललितां कीर्तिं रघुनाथस्य सन्ततम् ॥

**मज्जन्त्यनेकाश्च सतां समूहाः**
**सुपावने नीरवरे सरय्वाः ।**
**जपन्ति रामस्य च नाम चित्ते**
**ध्यात्वा तमाश्याममनोज्ञमूर्तिम् ॥३४॥**

सरय्वा दर्शनं स्पर्शो मज्जनं पानमेव च ।
हरन्ति पापमित्याह पुराणसहिता श्रुतिः ॥
पुनीताति नदी चास्या महिमाऽप्यमितो मतः ।
शारदाऽपि न शक्ताऽस्ति शुद्धधीर्यस्य वर्णने ॥
शोभना पूर्ययोध्या च रामधामप्रदा सदा ।
प्रसिद्धा सर्वलोकेषु तथैवातीव पावनी ॥

चतुर्विधाः सन्ति जीवा असङ्ख्या जगतीतले ।
तेषु तेषां न संसारो येऽयोध्यायां तनुत्यजः ॥
सर्वथा सर्वविधिभिर्ज्ञात्वा रम्यां पुरीमिमाम् ।
सर्वसिद्धिप्रदां सर्वमङ्गलानां खनिं तथा ॥
विमलायाः कथायाश्च समारम्भः कृतो मया ।
नश्यन्ति यस्य श्रवणाद् दम्भकाममदादयः ॥
इदं श्रीरामचरितमानसं नाम निर्मलम् ।
श्रुतिभ्यां श्रवणादेव यस्य विश्रान्तिराप्यते ॥
दन्दह्यते मनोहस्ती विषयाख्यदवानले ।
यद्यस्मिन्नापतेदेष तर्हि नूनं सुखी भवेत् ॥
इदं श्रीरामचरितमानसं मुनिभावनम् ।
श्रीशम्भू रचयामास शोभनञ्च सुपावनम् ॥
दावानलस्त्रिदोषाणां दुःखदारिद्र्ययोस्तथा ।
कलेः कुवृत्तेः सर्वस्य कलुषस्य च नाशनम् ॥
विरच्य मानसे नैजे न्यधाद् गुप्तमिदं शिवः ।
पश्चात् प्राप्य शुभं कालमुवाच गिरिजां प्रति ॥
तस्माच्छ्रीरामचरितमानसं वरमीदृशम् ।
चकार नाम हृष्ट्वेदं मानसे मुदितः शिवः ॥
सुखदां शोभनां चैव वच्मि तामेव सत्कथाम् ।
शृण्वन्तु सुजनास्तस्मान्मनः संयोज्य सादरम् ॥

**सुमानसं यादृशमस्ति जातं**
**यथा च लोकप्रथितेश्च हेतुः ।**
**सर्वं प्रसङ्गं कथयामि सम्प्र-**
**त्युमामहेशौ स्मरणे निधाय ॥३५॥**

(क्रमशः)

# चत्वारो वेदाः, तेषां पद्धतित्रयञ्च

-- आचार्यः श्रीविष्णुदेव पण्डितः --

[ एम० ए० वेदान्ताचार्यः ]

[ वैदिकवाङ्मयस्य चिरन्तनमनन-परिशीलन-समालोचन-गवेषणे लब्धप्रतिष्ठैः गुर्जरप्रदेशाभिजनैः प्राच्यप्रतीच्य-विद्याकोविदैः शास्त्रिवर्यैरेभिः लेखेऽस्मिन् 'ऋचो यजूंषि सामानि' इतिवचनं वेदचतुष्टयस्य पद्धतित्रयप्रदर्शनपरं समुचितं संसाध्य एकत्र वेदचतुष्टयस्य स्थापनं कृतम्, अपरत्र वेदे विस्तृता कर्मभावना निदर्शिता वर्तते ।—सम्पादकः ]

**यावद ब्रह्म विष्ठितं, तावती वाक् ।**

( ऋग्वेद १०.११४.८ )

वेदानां मूलभित्तिरूपा मन्त्राः । वेदेषु 'ब्रह्म'पदं ब्रह्मन्, ब्रह्मणि, ब्रह्मणा आदि नपुंसकलिङ्गे बहुधा प्रयुक्तं दृश्यते । यथा वेदान्तदर्शने 'प्रस्थानत्रयी'-पदेन उपनिषद्-गीता-ब्रह्मसूत्राणि गृह्यन्ते, तथैव 'वेदत्रयी' पदेनापि ब्रह्म - ब्राह्मण - कल्पसूत्राणि वेदसाहित्य-संनिवेशे ग्रहीतुं सुशकानि । अत एव मन्त्रा-परपर्यायेण ब्रह्मणा सह ब्राह्मणग्रन्थानां कल्पसूत्राणां च सम्बन्धो नूनं विवेचनीयो भवेत् । तदेवात्र प्रतन्यते। 'ऋचो यजूंषि सामानी'ति वेदत्रयी न केवलं त्रयाणां वेदानामेव ग्राहिका, अपितु चतुर्षु वेदेषु समाहृतस्य पद्धतित्रयस्य निर्देशकं वचः । तद्धि पद्धतित्रयं 'छन्दो-बद्धा हि ऋक्, गीतिषु साम, शेषे यजुः' इति मीमांसा-सूत्रनिर्दिष्टम् । एतच्च चतुर्ष्वपि वेदेषु परिदृश्यते इति वेदत्रयस्यैव साधका आपातदर्शिनः प्रत्युक्ताः ।

**मन्त्रब्राह्मणयोर्वेदनामधेयम्** इति सूत्रव्याख्या-मनुसृत्य संहिता-ब्राह्मणारण्यकोपनिषदां 'वेद'शब्द-व्यवहारोऽतिप्राचीनः ।

**कृतं नो यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रशस्ता ।**
**उपो रयिर्देवजूतो न एतु प्रणः स्पार्हाभिरुतिभिस्तरेतम् ॥**

( ऋग्वेद ७.८५ ६ )

बृहणं दृश्यते । ऋषिमुनयो हि वनारण्यप्रदेशेषु वर्त-मानाः विदथ-संवाद-व्याख्यान-प्रवचन - स्वाध्यायादि प्रसङ्गसंयोजनेन यज्ञसहकृत-ब्रह्मयज्ञानुष्ठानरूपे तपः-स्वाध्याये निरताः आसन् । इन्द्रादिदेवाश्च हवन-यजनसंप्रयुक्तस्तुति-स्तोत्र-शंसनसमाकृष्टाः हविर्द्रव्य-लाभार्थं यज्ञयागादिसु समागच्छन्तः समाहूतविदथ-सभाष्वपि ब्रह्मचर्चारसभाजिनो जायन्ते स्म । तदपि तेषाममृतं सोमात्मकमन्नम् ।

मन्त्रे 'रयि'-पदम् अभ्युदयस्य, 'उति'पदं च निःश्रेयसस्य वाचकमिति धर्मसम्पादने मन्त्ररूपं ब्रह्म मुख्यं साधनम् । ते च ऋषिमुनयो मन्त्रविदः सन्तो ब्रह्मविदो ब्रह्मनिष्ठा ब्राह्मणाः सर्ववेदस्वाध्यायप्रवचन-कुशला आसन् ।

**गायत्रेण प्रतिमिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।**
**वाकेन वाकं द्विपदा चतुष्पदा अक्षरेण मिमते सप्तवाणी ॥**

( ऋग्वेद १.१६४.२४ )

अत्र मन्त्रा हि मननात्मकाः । ते च छन्दोबद्धाः सन्तः ऋचः । ऋचां तृचां सङ्कलनं सूक्तम् । सूक्तानां वाकानुवाकेषु संयोजनम् । यजनानुष्ठानद्वारेण विनि-योगकरणे वर्गनिर्धारणा । तथा सति तद् ब्रह्म-मन्त्रैर्देवानामर्चनं क्रियत इति अर्कपदम् ऋक्समूहवाचकम् । तत्र स्वरसञ्चारे गीतिषु साम, यज्ञप्रयुक्तेषु मन्त्रेषु

विविधयज्ञसमारम्भेषु प्रथमं तावत् सर्वसाक्षित्वेन 'ब्रह्म' इतिनामकस्य ऋत्विजो वरणं जायते। अध्वर-यज्ञमार्गस्य संयोजने 'अध्वर्यु'नामकस्म ऋत्विजो वरणं तदनुसङ्गतम्। देवानामाह्वाने स्तुतिशंसन-करणे 'होतृ'नामकस्य ऋत्विजो वरणम्, तदनु च स्तोत्रसामगानरचनायाम् 'उद्गातृ'नामकस्य ऋत्विजो वरणं सुशकं भवति। इत्थं च मार्गद्वयानुसारिणी यज्ञप्रतिष्ठा प्रमाणपदवीं भजते। तद् यथा—

**अयं वै यज्ञो योऽयं पवते, तस्य वाक् च मनश्च वर्तन्यौ। वाचा हि मनसा च यज्ञो वर्तते। अथ केन ब्रह्मत्वं क्रियत इति ? त्रय्या विद्ययेति ब्रूयात्।**

( ऐतरेय ब्राह्मण ५.३२.२ )

कतिचन पाश्चात्त्या अर्वाचीना वा विद्वांसो वेदत्रयीरूपेण ऋग्यजुःसाम्नामेव संहितानां समावेशे संतुष्टा भवन्ति। इयं हि शैली वेदचतुष्टयेऽपि गृह्यत इति मन्त्रद्वारेण बोधनीयम्—

**ऋचां त्वा पोषमास्ते पुपुष्वान्**<br>
**गायत्रं त्वो गायति शक्वरीषु।**<br>
**ब्रह्मा त्वो वदति जातविद्यां**<br>
**यज्ञस्य मात्रां विमिमीत उ त्वः॥**

( ऋग्वेद १०.७२.११ )

अत्र हि ऋचां पोषण-शंसनद्वारेण ऋग्वेदपाठिनां होतॄणां बोधः। शक्वरीछन्दःसमाविष्टमहानाम्नीनां गायत्रगानेन सामवेदपाठिनामुद्गातॄणां बोधः। यज्ञ-मात्राकरणसंयोजनविनियोगप्रक्रियाकर्मद्वारेण यजुर्वेद-पाठिनामध्वर्यूणां बोधः। जातकप्रायश्चित्तादिकर्म-निष्ठयज्ञसाक्षित्वनियोजनेन अथर्ववेदपाठिनां ब्रह्मादीनां बोधोऽपि जायते। ऋषिमुनिपरम्परागतं तात्त्विक-दर्शनमित्थं प्रमाणीक्रियते—

**ऋचो अक्षरे परमे व्योमन्**<br>
**यस्मिन् देवा अधि विश्वे निषेदुः।**<br>
**यस्तन्न वेद किमृचा करिष्यति**<br>
**य इत् तद् विदुस्त इमे समासते॥**

( ऋग्वेद १.१६४.३९ )

एतद्धि ॐकार-ओमनृचां परमे श्रेष्ठे अक्षरे प्रतिष्ठितम्, तदेव परब्रह्मप्रतिपादकम्। सर्ववेदसार-रूप एष हि दिव्यो मन्त्रः प्रणवपदवाच्यः। ये ये देवा वेदानां मन्त्रेषु व्यवस्थितास्ते सर्वेऽस्मिन् व्योम्नि निवसन्ति। अतो यः कश्चिन्मानवस्तं दिव्यं मूल-मन्त्रं न जानाति, स वेदमन्त्राणां पाठकोऽपि न स्वारस्यं लभते।

एषा हि दिव्या वाक् या वेदवाणी, एष च परमः श्रेष्ठमन्त्रः प्रणवरूप इति वेदारम्भे तस्य ग्रहणं जायते। मन्त्रे मन् - धातुर्मननात्मकः, त्रप्रत्ययश्च साधनार्थे प्रयुक्तः। यो हि शब्दो मनन-विचारसाधन-वाचकः सन् मनसि अन्तर्गतमेकं चित्रम्, एकां प्रति-माम् एकमाकारम् ओङ्कारं वा प्रकटयति, तद् दिव्याक्षरं कवयः क्रान्तदर्शिन ऋषयो मान्त्रिकशब्दे, सङ्गीतकारगायकाः स्वरकलामाधुर्ये, योगिनश्च नादब्रह्मणि च संयोजयन्ति। तद् यथा—

**देवीं वाचमजनयन्त देवा-**<br>
**स्तां विश्वरूपाः पशवो वदन्ति।**<br>
**सा नो मन्द्रेषमूर्जं दुहाना**<br>
**धेनुर्वागस्मानुप सुष्टुतैतु॥**

( ऋग्वेद ८.१००.११ )

दिव्या एषा वाक् यथातथं युगानुसारेण पूर्वं कविभिर्देवकल्पैः ऋषिभिः शब्दरूपेण प्रग्रथिता। तामेव वाणीं व्यक्तरूपेण दर्शनशील-पश्यक-कश्यपसमाख्यात-पशुपदवाच्यानां मानवानां वाचि व्यक्तरूपतां गता। यथा हि कामधेनुर्मनोनुकूलकामानां दोहनं करोति, तथैवैषा वाग् देवानां दिव्यपदार्थानां स्तुति-प्रशंसन-पूर्वकमन्नरसादि-पदार्थानुदानं करोति। एषा हि मन्द्रा

( शेषांशः १०९ पृष्ठे )

# निपातोपसर्गविषये किञ्चित्

– श्री चन्द्रभानुशर्मा भारद्वाजः –

[ शोधच्छात्रः—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

व्याकरणशास्त्रानुसारं सृष्टे उद्गमः शब्दत एव उच्यते, **भूरिति व्याहरत्** इति श्रुतिप्रामाण्यात्। एवञ्च शब्दात्मिकायाः सृष्टेरपि निबन्धस्तत्सत्तायै सुतरामपेक्ष्यतेतराम्। अस्याः शब्दसृष्टेरेकोंऽश उपसर्गाख्यः, तमवलम्ब्य निबन्धोऽयं विलिख्यते। यद्यपि उपसर्गघटकीभूतः 'सर्ग'शब्दः सृष्ट्यर्थक एव; तथापि व्याकरणशास्त्रे 'उप'संश्लिष्टः 'सर्ग'शब्दः 'उपसर्ग'-संज्ञायां प्रयुज्यते।

'उपकुम्भम्', प्रतिदिनम्' इत्यादिसमास-कोशादि-प्रामाण्यात् प्रादयो[1] निपाताश्च वाचकाः। क्रियायोगे सत्येव अद्रव्यार्थकानां प्रादीनां उपसर्गसंज्ञा।[2] तादृशानामेव चादीनाञ्च[3] निपातसंज्ञा। 'या या संज्ञा सा सा प्रयोजनवती' इति शिष्टप्रामाण्यात् उपसर्गसंज्ञायाः[4] निपातसंज्ञायाश्च[5] प्रयोजनमपि नैकेषां सूत्राणामुदाहरणे प्रत्युदाहरणे च समुपलभ्यते। क्रियायुक्ता द्रव्यार्थकाः प्रादय उपसर्गसंज्ञां लभन्ते। अत एव पूर्वाचार्यैः क्रियायुक्तप्रादिषु उपसर्गत्वं प्रकल्प्य 'प, परा, अप' इत्यादीनां प्रादीनां, पकारोत्तराकारोत्तररेफोत्तराऽऽत्ववत्तया 'परा' - उपसर्गस्य, एवमेव अन्येषामपि प्रादीनां तत्तदानुपूर्वीकाणां द्योत्य - द्योतकार्थकत्वमुपसर्गाणामिति विविच्य सम्मन्यते। एवमेव अद्रव्यार्थकाश्चादयः क्रियाऽयुक्ताः प्रादयश्च निपातसंज्ञका सन्तोऽपि द्योतका एव।

अत्र निपातोपसर्गा वाचका इति मीमांसकाः। उपसर्गा द्योतकाः, निपाताश्च वाचका इति नैयायिकाः। अर्धजरतीयस्य अन्याय्यत्वादुभावपि द्योतकौ इति च वैयाकरणाः। साहित्यिकैरपि द्योत्य-द्योतकत्वरूपैव शक्तिरुपसर्ग-निपातेषु मनसा स्वीकृत्यानुमोद्यते। तत्र कतमः समयः श्रेयान् ?

अत्रोच्यते—यथा लोके नेत्रम्, उपनेत्रमित्यत्र उपनेत्रं यथा कृत्रिमम्, तथैव उपसर्गोऽपि कृत्रिमः, संज्ञात्वात्। यथा च उपनेत्रं दर्शकं न भवति तथैव उपसर्गोऽपि न वाचकः। अत एव उपसर्गसंज्ञकाः प्रादयो न वाचकाः, यतो हि लिङ्गसंख्यादिना अनन्वितस्य पदस्य पदार्थस्य वा स्वतन्त्रप्रयोगानर्हत्वात्।

एवमेव अद्रव्यार्थकाश्चादयाः[2] क्रियायुक्ताः[1] प्रादयः क्रियाऽयुक्ताः[4] प्रादयश्च निपातसंज्ञकाः

---

१. प्रेत्युपसर्गः पञ्चदशस्वर्थेषु प्रयुज्यते—

नियोगे वियोगे भृशार्थे च तृप्तौ यथा शुद्धिशक्त्यग्रपूजासुशान्तौ।
वदन्त्यादिकर्मण्युदीर्णे···तथा संभवैश्वर्यदृष्टाभिलाषे॥

—लघूपसर्गदीपिका।

२. 'उपसर्गाः क्रियायोगे' ( पा० सू० १.४.२२ )।

३. चादयोऽसत्त्वे ( १.४.२० )।

४. उपसर्गे घोः किः ( ३.३.९२ ), उपसर्गस्यायतौ ( ८.२.१९ ) इत्यादयः।

५. निपात एकाजनाङ् ( १.१.१४ ), निपातस्य च ( ६.३.१३६ ) इत्यादयः।

---

१. लिङ्गसंख्यान्वितं द्रव्यम्।

२. चादयोऽसत्त्वे ( १.४.२० )।

३. उपसर्गाः क्रियायोगे ( १.४.२२ )

४. [illegible] ( १.४.२१ )।

सन्तोऽपि स्वतन्त्रप्रयोगानर्हाः ।[1] यथा स्वतन्त्रप्रयुक्तो घटः कम्बुग्रीवादिमदर्थं बोधयति, न तथा केवलं 'चे'ति पदम् । अतश्चादयः[2] परतन्त्राः । नामाख्यातयुक्ता अपि चादयस्तदभिन्नार्थमेव[3] बोधयन्ति । यथा—'अवदत्तम्,[4] विदत्तमि'त्यादि प्रयोगेषु । उपसर्गे सति "अवदत्तम्" इत्याद्येव स्यात् । उपसर्गविभक्तिस्वर-प्रतिरूपकाश्चापि[5] निपाता न स्वतन्त्रप्रयोगार्हाः । उपसर्गप्रतिरूपकाः अवदत्तमित्यादयः । विभक्ति-प्रतिरूपकाः 'अहंयुरि'त्यादयः[6] । स्वरप्रतिरूपकाः 'अ अपेहि' इत्यादयः । तेषां फलं तु प्रकृतिभावः ।[7] अतः प्रादयो द्योतकाः येन निपाताश्चादयस्तथेत्येवा-वगन्तव्यम् ।

अत्र नैयायिकाः—प्रादयस्तूपसर्गा न सार्थकाः, सार्थकाश्च[8] चादयो निपाता वाचकत्वात् । उपसर्गा-स्तु न तथा, किन्तु द्योतका[1] एव, लाघवात् ।[2] अन्यथा स्वादिविभक्तीनां प्रकर्षवाचकत्वमिव प्राद्युप-सर्गाणामपि प्रकर्षादिवाचकत्वस्य[3] निराबाधत्वात् ।

नैयायिकैरन्वय[4]व्यतिरेकाभ्यां, समानाधिकरण-प्रातिपदिकार्थयोरभेदान्वय इति व्युत्पत्तौ निपातेतर-सङ्कोचेन[5] चोपसर्ग-निपातानां वाचकता उररीक्रियते; तन्न युक्तियुक्तम् ।[6] अतो हेतोः नव्यनैयायिकैः स्वीकृता द्योतकता, किन्तु उपसर्गविषय एव इत्येव

---

१. चादयो न प्रयुज्यन्ते पदत्वेऽपि च केवलाः ।
—वाक्यपदीयम् ।

२. परतन्त्रास्तु चादयः । —वाक्यपदीयम् ।

३. नामाख्यातप्रयोगेषु अर्थादभिन्नाः निपतन्ति इति निपाताः । —दुर्गसिंहः, कातन्त्रप्रकाशे ।

४. अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते ॥
—पाणिनीय ( ७.४,४७ ) सूत्रस्य भाष्यम् ।

५. उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः ।
—गणसू० १६ ( चादिषु ) ।

६. 'अहंयुः' इत्यादिषु अस्मच्छब्दस्य प्रथमैकवचनान्त-पदस्य प्रतिरूपकं भवति । अन्यथा प्रकृतेरस्मदित्येव श्रवणं प्रसज्येत । —महाभाष्यम् ।

७. निपात एकाजनाङ् ( १.१.१४ )

८. एवं समुच्चयादिवाचिनां चादिनिपातानां 'वृक्षं प्रति विद्योतते विद्युत्' इति कर्मप्रवचनीयानां चार्थो प्रयोगप्रतिपत्तिभ्यामवधारणीयः ।

उपसर्ग-निपातानां नाम्नामप्यविभागतः ।
प्रयोगप्रतिपत्तिभ्यामनेकार्थोऽवगम्यते ॥
—न्यायमञ्जरी, पृ० ३२७-२८ ।

१. 'प्रणमति' इत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः, प्रादयो द्योतका एव, न तु प्रकर्षादिवाचकाः ।
—सादर्शो व्युत्पत्तिवादः, पृ० १३६ ।

२. प्रादीनां प्रकर्षादिवाचकत्वे शाब्दबोधसामग्र्यां प्रादिजन्यप्रकर्षाद्युपस्थितेः प्रवेशात् तस्याश्च विभिन्नविषयक-प्रत्यक्षं प्रति समानविषयकानुमितिं प्रति च प्रतिबन्धकत्वे योग्यताज्ञानेन सह विशेष्यविशेषणभावविनिगमनाविरहाच्च प्रतिबध्यप्रतिबन्धकभावसंख्याधिक्यापत्त्या गौरवम् ।
—सादर्शो व्युत्पत्तिवादः, पृ० १३६ ।

३. अनन्तधातुजन्यप्रकर्षादिविशिष्टनतत्स्वार्थोपस्थितीनां शब्दधीजनकतामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात् ।
—सादर्शो व्युत्पत्तिवादः, पृ० १३६ ।

४. उपसर्गाः किमर्थस्य वाचका द्योतका वा इति प्रश्ने स्वयमुत्तरति—अन्वय-व्यतिरेकाभ्यां तदर्थो ह्यवधार्यते । अन्वय-व्यतिरेकाभ्यां तिङादीनां वाचकत्वात् निपातानामपि वाचकत्वम् । —न्यायमञ्जरी, पृ० ३२८ ।

५. निपातातिरिक्तनामार्थस्यैव अभेदान्वयः इति व्युत्पत्तेः ।

६. 'प्रतिष्ठते' इत्यादिषु उपसर्गस्याभावे शक्तिस्वीकारे तु 'नामार्थ-धात्वर्थयोः' इति व्युत्पत्तिसङ्कोचेऽपि गमनवृत्त्य-भावरूपेणैव बोधः स्यान्न तु गमनत्वेनेति । तस्मात् गमनत्वेन अनुभवसिद्धबोधनिर्वाहार्थं धातोर्लक्षणा आवश्यकी । लक्षणा-स्वीकारे च उपसर्गसमभिव्याहार-वैयर्थ्यापत्तिभिया धातोः कस्मिन्नर्थे लक्षणा कर्तव्येत्यत्र तात्पर्यग्राहकत्वमेव उपसर्गाणां द्योतकत्वम् ।—निपातार्थनिर्णयः, दर्पणटीकायाम्, वैयाकरण-भूषणसारस्य, पृ० २९३ ।

तेषां भ्रमः । उभयत्रापि द्योतकता एव । स्पष्टञ्चैतत् 'उपास्येते हरिहरौ, चैत्रमिव पश्यति, शरैरुस्रैरिवोदीच्यान्, वागर्थाविव सम्पृक्तौ, पार्वतीपरमेश्वरौ वन्दे' इत्यादिषु स्थलेषु । 'निपातस्यानर्थकस्य'इत्यादिविधिबलाच्च ।

तत्र क्रमशः उपास्येते हरि[1]हराविति । अत्र हृद्युपासना किमुपसर्गार्थो विशिष्टस्य धातुमात्रस्य वा ? नाद्यः ; तथा सति कर्मणि[2] लकारो न स्यात् । न द्वितीयः ; गौरवात् ।[3] तृतीये खलु द्योतकत्वमेव, तच्चादिष्वपि[4] तुल्यम् । 'चैत्रमिव पश्यति' इत्यादौ सादृश्यविशिष्टं चैत्रपदं लक्ष्यम् । इवशब्दस्तु तात्पर्यग्राहक इत्यस्य सुवचत्वात् ।

शरैरुस्रैरिवोदीच्यन्निति निपातानां वाचकत्वेऽन्वयो न स्यात्, अत्र उस्रसदृशैः सरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । अयञ्च उस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे च सङ्गच्छते, अन्यथा प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्वमिति व्युत्पत्तिविरोधः स्यात् । 'वागर्थाविव सम्पृक्तौ' 'पार्वतीपरमेश्वरौ वन्दे' इत्यत्र वागर्थयोः वन्दिकर्मत्वाभावात् तदुत्तरद्वितीयाया अनन्वयः । यदि च विशेषणविभक्तिः अभेदार्था साधुत्वमात्रार्था वा, तदापि इवशब्दस्य अनन्वय एव । अतो निपाता अपि द्योतका एव ।

निपातस्यानर्थकस्येति द्योत्यार्थमादाय अर्थवत्त्वात् प्रातिपदिकत्वम् । वस्तुतस्तु "अव्ययादाप्सुपः (पा० सू० २.४.८२) इति ज्ञापकात् सुबुत्पत्तिः । 'निपातस्यानर्थकस्ये'ति वार्तिकाद्वा प्रातिपदिकत्वम् । 'कृत्तद्धितसमासाश्च' (पा० सू० १.२.४६) इत्यनुक्तसमुच्चयार्थचकारेण निपातानां सङ्ग्रहः ! तस्माद् युक्तं निपातानां द्योतकत्वम् ।

केचिच्च—व्यञ्जनावृत्ति[1]स्तत्रेति स्वीकुर्वन्ति, तदेव द्योतकत्वम् । द्योतकत्वञ्च किञ्चिदर्थविशिष्टलक्षकत्वम्, तच्च धातोर्विशिष्टार्थे तात्पर्यग्राहकत्वम् । तात्पर्यग्राहकत्वमेव औपसन्दानिकी शक्ति[2]रित्युच्यते ।

अथ च पदान्तरसाहाय्यं विना निपातानां, क्रियायोगं विना उपसर्गाणाञ्च अस्तित्वमेव नास्तीति

१. द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारो दृश्यते यथा ॥
—वैया० भूषण०, पृ० ४२ ।

२. स्वार्थफलव्यधिकरण व्यापारवाचकत्वरूप-सकर्मकत्वस्य अस्-धातोरुपासनारूप-फलवाचकत्वाभावादनापत्तेस्ततः कर्मणि लकारो न स्यात् । —वैया० भू० सदर्पणम्, पृ० २९४ ।

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥
—वाक्यपदीये ।

३. विशिष्टस्य गणे पाठाभावाद्धातुत्वानापत्तिः, पाठकल्पने द्विर्वचनाडादिव्यवस्थानुपपत्तेः ।
—वैयाकरणभूषणस्य टिप्पण्याम् ।

४. तथाऽन्यत्र निपातेऽपि लकारः कर्मवाचकः ।
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥
—वैया० भू०, पृ० ४३ ।

१. नहि प्रादेः प्रकर्षादौ शक्तिः द्योतकत्वात् । न च लक्षणा; अशक्तत्वात् । प्रशब्दस्तु तात्पर्यग्राहकः, तत्त्वमेव च द्योतकत्वम् । —न्यायसिद्धान्तमञ्जरी ।
[ 'तथा च शक्तिलक्षणयोरभावात् प्रजयतीत्यादौ प्रकर्षबोधार्थं प्रादेः व्यञ्जनारूपं वृत्त्यन्तरमवश्यं वाच्यमिति भावः ।' ]
—तत्रैव यादवाचार्यकृतसाराख्यटीकायाम् ।

२. प्राद्युपसर्गाणां द्योतकत्वेन वाचकत्वम् । द्योतकत्वञ्च धातोरेव अर्थविशेषे तात्पर्यग्राहकत्वम्, धातूनामनेकार्थत्वात् । उपसर्गोपसन्दानेन शक्तिर्वा द्योतकत्वम् । इयमेव औपसन्दानिकी शक्तिरित्युच्यते ।
—वाग्विनोदे, पृ० ७०, इण्डि० प्रेस, प्रयाग ।

कृत्वा वाच्यवाचकभावाख्यपक्षस्य च गौरवग्रस्ततया वैयाकरणानां द्योत्यद्योतकत्वमेव निपातोपसर्गाणामित्येष सिद्धान्त एव ज्यायानिति विदाङ्कुर्वन्तु तत्र धीमन्तः।

क्वचिच्च उपसर्गं विनापि एकस्या एव क्रियायाः प्रकरणादिना बहुविधा अर्था प्रतीयन्ते। अतश्च उपसर्गा अवाचका एव।

अथ च उत्तरोत्तरसौन्दर्याभिवृद्धये यथायौवनसम्पन्नेव जनेन चक्षुषोः उपनेत्रं उपादीयते, तथैव पादपूत्यर्थं पदलालित्यार्थं वा निपातोपसर्गाणां प्रयोगोऽभिलक्ष्यते, इत्यपि शक्यते कल्पयितुमिति केचन विवदन्ते।

तत्सर्वं तत्त्वान्वेषिणः नीरक्षीरविवेकिनो विविच्य प्रसाधयन्तु।

●

---

( १०५ पृष्ठस्य शेषांशः )

मधुरा ग्रामसप्तकसंयोजिता सती भावनापूरितामुपासनाभक्तिं पूरयतीति महद् भाग्यम्।

एतद्धि मन्द्रपदं सङ्गीतकारैः धीरगम्भीरप्रथमस्वरसञ्चालने संयोज्यते, यत्र प्रथममन्द्रसप्तकस्वरैर्गीयते। प्राचीनग्रीकभाषाविशेषज्ञैरपि न्द्व् ndw-न्त्र ntr इति पदव्यत्ययेन 'मन्द्र'शब्दस्य मूलगीतिस्वरविषये प्रयोगः कृतः। तथा च मन्द्र-मध्यम-तारेति त्रिसप्तकस्वराणां व्यवहारः सोमयागे प्रातःसवनादिषु क्रियते। अत्र हि यज्ञप्रयुक्ता दिव्या वाक् कामधेनुरूपेति प्रमाणयन्ति—

**वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः। तस्यै द्वौ स्तनौ। देवा उपजीवन्ति, स्वाहाकारं च वषट्कारं च। हन्तकारं मनुष्याः, स्वधाकारं पितरः। तस्याः प्राण ऋषभः, मनो वत्सः॥**

( बृहदा० ५ ९.१ )

अत्र हि यज्ञप्रयोगे स्वाहा-वषट्शब्दाभ्यां सह संयोजितवेदमन्त्रोच्चारणेन देवाः प्रसन्नतां भजन्ते। 'हन्त हन्त' इति यज्ञशेषप्रसादं भुञ्जाना मनुष्या दिव्यामृतस्वादमावहन्ति। पितरश्च 'स्वधा'शब्देन सह संयोजितश्रद्धाञ्जलितर्पणप्रदानेन परमां तृप्तिं सेवन्त इति सर्वा हि वेदप्रयुक्ता दिव्या वाक् कामधेनुरूपेण सेव्येति तात्पर्यम्।

एषा हि यज्ञभावना वेदप्रतिपाद्यदेवस्तुति-शंसनचरणसंयोजिता सती ब्रह्मनिष्ठां समावहन्तीति तदनुसारं स्वजीवने अभ्युदय-निःश्रेयस-सिद्धिसाधकं धर्ममाचरन्तो मनुष्या दिव्यमननद्वारेण मन्त्राणां वाचि विनियोगं कुर्वन्ति। तदनुकल्पं च स्वव्यवहारमपि शुद्धाचरणपूर्वकमनुतिष्ठन्तीति प्रमाणीक्रियते —

**यद् वै मनसा ध्यायति, तद् वाचा वदति, तत्कर्मणा करोति।**

( तैत्तिरीयसंहिता ६.१० )

एवञ्च मनोवाक्कर्मभिः यज्ञनारायणस्य नित्यनैमित्तिक-काम्ययज्ञानुष्ठानेन प्रसादं लभन्तो मानवाः जीवनसाफल्यमालभन्ते। अत एवोच्यते—

**मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम्** इति।

●

# चम्पूकाव्य-स्वरूपसमीक्षा

—श्रीमती मिथिलेश शर्मा—

[ अनुसन्धात्री—वाराणसेय-संस्कृत-विश्वविद्यालयस्य ]

संस्कृतवाङ्मयेतिहासे मिश्रकाव्यस्य एका विधा चम्पूकाव्यं चिरादुपेक्षितप्रायमेव। लक्षणकारा अपि तत्परिभाषां न परिभाषितवन्तः। अत एवात्र काव्यस्य विविधवैशिष्ट्ययुता विधेयं समासतो विविच्यते।

चुरादिगणीयेन गत्यर्थकेन 'चपि'-धातुना 'अ'-प्रत्ययं योजयित्वा 'चम्पयति इति चम्पूः' इति विग्रहेण 'चम्पू'शब्दो निष्पद्यते। संस्कृतसाहित्यस्य परिशीलनेन ज्ञायते यत् शब्दोऽयं प्रथितकाव्यलक्षणकर्तुः दण्डिनः 'काव्यादर्शे' सर्वप्रथमं समुपलभ्यते। दण्डिनः कालः खैष्टाब्दस्य षट्शतकात् सप्तमशतकं यावत् ( ६००-७०० ई० ) मन्यते। तेन महाकविना लिखितम्—**गद्यपद्यमयी काचित् चम्पूरित्यभिधीयते** इति। अत्र 'काचित्'शब्दः सुस्पष्टमस्याः सन्दिग्धत्वं द्योतयति। एतेन प्रतीयते यद् दण्डिनः काले चम्पूकाव्यं प्रारम्भिकावस्थमेवासीत्, न तदा तत्प्रौढतां गतं स्यात्। तदीयं समग्रं वैशिष्ट्यं काव्यनिकषे परीक्षितं नाभवदिति।

अत एव खैष्टीय-दशमशताब्द्याः पूर्वं किमपि चम्पूकाव्यं नासाद्यते। तथापि संस्कृतवाङ्मयस्य गद्य-पद्यात्मिका मिश्रशैली पुनर्वैदिककालादेव समुपलभ्यते। उपनिषत्स्वपि सा प्राप्यते। 'ऐतरेय-ब्राह्मण'स्य 'हरिश्चन्द्रोपाख्यानम्' गद्य-पद्यमयशैल्या उत्कृष्टतमं निदर्शनम्। खैष्टवत्सरारम्भपूर्ववर्तिनि पातञ्जले महाभाष्येऽपि गद्यं चरमोत्कर्षतां गतं दरीदृश्यते। पालिजातकेषु पुनः मिश्रशैली समासाद्यते। किन्तु तेषां भाषा सरला, पद्यं च सापेक्षतया प्रयुक्तमस्ति। नूनमेभिर्वाङ्मयैः चम्पूकाव्यं बहुशः प्रभावितं स्यादिति कल्प्यते।

गद्य-पद्य-मिश्रशैल्या निदर्शनं खिष्टस्य प्रथम-द्वितीयशताब्द्यां जायते। तदा लिखितेषु लेखेष्वपि मिश्रशैली सर्वोत्कर्षं गता समुपलभ्यते। समस्तपदालङ्कृतदीर्घवाक्यानि अस्यां मिश्रशैल्यां समासाद्यन्ते, यद्धि चम्पूकाव्यस्यैकं वैशिष्ट्यम्। 'जातकमाला' पुनरस्य चम्पूकाव्यस्य कृते शैली-वर्ण्यविषयदृष्ट्या नितान्तं पथप्रदर्शिका समभवदिति स्फुटं वक्तुं शक्यम्। एवमेव शिलालेखेष्वपि चम्पूकाव्यमिदं स्खलितमासीत्। तथापि ग्रन्थरूपेण निबद्धं चम्पूकाव्यं सर्वप्रथमं दशमशताब्द्यामेव दृशोर्विषयीभवति। यथा—नलचम्पूः, यशस्तिलकचम्पूः इति।

वयमस्मिन् निबन्धे मुख्यतश्चम्पूकाव्यस्य लक्षण-विषये एव विवेचयिष्यामः, यथाशक्त्या तस्यासाधारण-लक्षणाय च प्रयतिष्यामः। सन्दर्भेऽस्मिन् सर्वप्रथमं महाकविर्दण्डी एव समायाति। तेन हि 'गद्यपद्यमयत्व'-मात्रं चम्पूकाव्यस्य लक्षणं निर्दिष्टम्। किन्तु नैतत् पर्याप्तम्, यतो हि कथा-नाटकादिष्वपि तस्यातिव्याप्तेः। पञ्चतन्त्रे कथासाहित्येऽपि गद्यपद्यद्वयं प्राप्यत एव।

ततः परं हेमचन्द्र-वाग्भटाचार्यौ चम्पूलक्षणमिदं जगदतुः—'गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः' इति। किन्तु इदमपि लक्षणमव्याप्तिग्रस्तम्। साङ्कत्वं सोच्छ्वासत्वञ्च सर्वत्र चम्पूकाव्येषु न घटते। समुपलब्धेषु ५२४ चतुर्विंशत्युत्तरपञ्चशतसङ्ख्यकेषु चम्पूकाव्येषु नलचम्पूः, गङ्गावतरणचम्पूश्चेति चम्पूद्वय-

मेव साङ्कं दृश्यते। प्रकरणविभाजकमभिधानमिदं शिष्टेषु चम्पूकाव्येषु नैकविधम्। यथा—यशस्तिलकचम्पूग्रन्थे 'आश्वासः'। चम्पूरामायणे 'काण्डम्'। काकुत्स्थविजयादिषु 'समुल्लासः'। विद्वन्मोदतरङ्गिणीप्रभृतिषु 'तरङ्गः'। जीवन्धरचम्पूप्रभृतिषु 'लम्भकः'। आचार्यदिग्विजयादिषु 'कल्लोलः।' भागीरथीचम्पूग्रन्थे 'मनोरथः'। मन्दारमन्दचम्पूग्रन्थे 'बिन्दुः'। रामचन्द्रचम्पूग्रन्थे 'परिच्छेदः' इति नैकरूपाणि प्रकरणानि विभक्तानि। अत एव लक्षणद्वयमपीदं न निर्दुष्टमिति।

अनन्तरं खिष्टीय-चतुर्दशशताब्दीकः साहित्यदर्पणस्य प्रणेता श्रीविश्वनाथः चम्पूकाव्यस्य लक्षणमित्थमभिदधौ—"गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते। यथा—देशराजचरितम्" इति। किन्तु सुस्पष्टमिदं यदयमपि मनीषी असाधारणं चम्पूकाव्यलक्षणं निदर्शयितुं न प्राभवत्। यतो हि—लक्षणरूपबन्धनाभावेन चम्पूसाहित्यं निर्झरिणीवद् अलङ्कृतशैलीरूप-कलकलनिनादैः सर्वेषां हृत्तन्त्रीः झङ्कुर्वद् स्वेच्छया यां कामपि दिशं प्रवहत् प्रगतिशीलमासीत्। इत्थं प्रायेण सर्वेषु विषयेषु स्वरूपादिभिर्वैशिष्ट्यैः समलङ्कृतं चम्पूकाव्यं लक्षणशृङ्खलाभिर्निबद्धुं केऽपि मनीषिणो नाशक्नुवन्निति स्फुटम्।

अथ शब्दकल्पद्रुमे कोषे एतत्स्वरूपं दृश्येत चेत् तत्र 'चम्पू'शब्दः स्त्रीलिङ्गः काव्यविशेषबोधकश्च उक्तः। जटाधरमतानुसारेण तल्लक्षणं च तत्रेदं निर्दिष्टम्—'गद्यपद्यमयी वाणी चम्पूरित्यभिधीयते' इति। एवञ्च अयमपि कोषकारश्चम्पूकाव्यस्य विश्वनाथकृतमेव लक्षणं प्रकारान्तरेण पुनरावर्तयत्।

अग्निपुराणे उक्तम्—

'गद्यं पद्यं च मिश्रं च काव्यादि त्रिविधं स्मृतम्।'

तथा च अत्रापि काव्यस्य अङ्गत्रयमात्रमेव समुल्लिखितम्। एतेन प्रतीयते यन्मिश्रसाहित्यं तदानीमपि प्रचलितमुपलब्धं चासीत्। तथापि चम्पूकाव्यलक्षणविषये तत्रापि न कश्चित्सङ्केतो लभ्यते।

श्रीहरिदासभट्टाचार्याः प्राहुः—'चमत्कृत्य पुनाति सहृदयान् विस्मयीकृत्य प्रसादयति इति चम्पूः।' अत्रापि गद्य-पद्योभयसंश्लिष्टरूपेण पाठकमद्भुतविधिना आह्लादयितुं समर्थमिदं काव्यमित्येव सङ्केतितम्। नैतत् पुनरसाधारणं लक्षणमस्य।

डॉ० सूर्यकान्त त्रिपाठिना सम्पादितस्य दैवज्ञसूर्यकृतस्य 'नृसिंहचम्पू'नाम्नो ग्रन्थस्य भूमिकायाम् अज्ञातकविकृता चम्पूकाव्यपरिभाषा समुल्लिखिता वर्तते। यथा—

**गद्यपद्यमयी साङ्का सोच्छ्वासा कविगुम्फिता।**
**उक्तिप्रत्युक्तिविष्कम्भशून्या चम्पूरुदाहृता॥** इति।

अत्रेदं बोध्यम्—चम्पूकाव्यस्य गद्यपद्यमयता तु सर्वैरभ्युपेयत एव। परं साङ्कत्वम्, सोच्छ्वासत्वञ्च पूर्वोक्तचम्पूकाव्यद्वयं परित्यज्य कुत्रापि चम्पूकाव्ये न दृश्यत इति पूर्वमेवोक्तम्। अतः हेमश्चन्द्रादेः पुनरावृत्तिरूपं लक्षणमिदं न निर्दुष्टं वक्तुं शक्यते। 'विश्वगुणादर्शचम्पू'काव्यं पुनः द्वयोः पात्रयोः कृशानुविश्वावसोः उक्ति-प्रत्युक्त्याधृतमेव। कतिपय-चम्पूकाव्यानामुत्तरार्धेषु उक्ति-प्रत्युक्तियुक्तत्वमेव दृश्यते। यथा—वीरभद्रविजयः, तत्त्वगुणादर्शः, विद्वन्मोदतरङ्गिणी, श्रीनिवासचम्पूश्चेति। अत एव इदमपि लक्षणं चम्पूकाव्यस्य नासाधारणो धर्मो भवितुमर्हति। एवमेव विष्कम्भकादीनां प्रयोगस्तु नाटकेषु रूपकेषु वा क्रियते। श्रव्यकाव्ये तु तथा व्यवहाराभावात् श्रव्यस्य चम्पूकाव्यस्य लक्षणे तच्छून्यत्वनिवेशो व्यर्थः सन् हास्यास्पदत्वमेव लक्षणकृतः साधयति।

इत्थं साहित्यशास्त्रेषु चम्पूकाव्यस्य किमपि प्रामाणिकं सर्वाङ्गपूर्णं लक्षणं नोपलभ्यते। सर्वत्र चम्पूकाव्यस्य किञ्चिद् बाह्यरूपमेव लक्ष्यते, आभ्यन्तररूपं तु न कुत्रापि। कोऽपि लक्षणकारः ईदृक् लक्षणं

चम्पूकाव्यस्य निर्देष्टुं न शशाक यस्मिन् अन्तर्बाह्यं समग्रवैशिष्ट्यं समाहितं भवेत्। 'गद्यपद्यमयता' इत्येको लक्षणांशः प्रायेण भ्रान्तिमुत्पादयति।

## ऐतिहासिकानां मतम्

साहित्यशास्त्रकाराः चम्पूकाव्यं स्पष्टं लक्षणैः परिभाषयितुं प्रायेण न शेकुः। ऐतिहासिकानां बुद्धौ चम्पूकाव्यस्य कीदृशं रूपम्, तदप्यत्र समासतः समीक्ष्यते। तत्रादौ 'कीथ' महोदयो लिखति :

They use prose or verse indifferently for the same purpose,......

But it is only from a late period that we have works written in the full kavya style in which poet shows now his ability in prose and now in verses without seeking to reserve verses for any special end.

—A History of Sanskrit literate P. 332 By A. B. Keitu.

अयमैतिहासिकः चम्पूकाव्यस्य लक्षणं गद्यपद्यमयमित्येव स्वीकरोति। तन्निर्दिष्टो गद्यपद्यसंश्लेषः किञ्चिद् वैशिष्ट्यमादधाति। महानुभावोऽयं गद्यपद्यसमभावं प्रयोगे लक्षयति, चम्पूकाव्यस्यान्तमपि पक्षं प्रत्यवदधाति। एतदनुसारं कविः कदाचित् पद्यप्रयोगे स्वयोग्यतां प्रदर्शयति, अन्यदा तु गद्यप्रयोगे। गद्यपद्ययोः प्रयोगोऽयं निरपेक्षरूपेण क्रियते। कश्चिदपि कविः कथाख्यायिकावद् पद्यं विशेषाद्देश्याय नापेक्षते। यद्यपि परिभाषेयं न पूर्णसमस्तचम्पूकाव्यस्य, तथापि **निरपेक्षगद्यप्रयोगरूत्वम्** आंशिकं लक्षणम् अन्येभ्यो लक्षणेभ्यो भिन्नं दृष्टिपथमायात्येव।

केचिद् ऐतिहासिकलक्षणकाराः दण्डिप्रभृतिलक्षणकारवचनमेवानुसत्य गद्यपद्यमयत्वमेव चम्पूकाव्यस्य लक्षणं निरधारयन्। तेषामुल्लेखः पिष्टपेषणमात्रमेव।

श्री सी० कुन्हनराजा महोदयो लिखति :

'The admixture of prose and metrical in more or less equal proportions took a definite form in the classical period and this became a special pattern of literary art in sanskrit literature known as the Champu."

—Survey of Sanskrit literature P. 21.5

अयं गद्य-पद्ययोः मिश्रितः प्रयोगो न्यूनाधिको वा भवेत्' इत्येतदेव चम्पूकाव्यस्य लक्षणमभिमनुते स्म। अयमपि अन्यानि काव्यविशेषणानि न लक्षयति, तथापि गद्यपद्यप्रयोगे गद्यपद्ययोः मात्राविषये 'न्यूनाधिका वा' इति निर्दिशति। पद्यस्य सोद्देश्यप्रयोगोऽपि अनेन न वर्जितः। लक्षणानि अपराणि न सङ्केतितानि, इत्येषाऽपि अपूर्णा परिभाषा।

श्री एम० कृष्णमाचारी कथयति :

'A narrative in mixed prose and verse has been called Champu.'

अस्मिन् लक्षणे एकमधिकं वैशिष्टयं प्रदर्शितं 'वर्णनात्मकता' इति। चम्पूनामकाव्यं वर्णनप्रमुखं भवेदित्यर्थः।

श्री के० चन्द्रशेखरः कथयति :

'It contains a free mingling of prose and verse in course of narration.'

'वर्णनात्मकता' अस्यामपि परिभाषायां निर्दिष्टा। सर्वाणि चम्पूकाव्यानि न वर्णनप्रधानानि। कानिचिद् कथावस्तुप्रधानान्यपि दृश्यन्ते।

मोनियर विलियम्स महोदय उल्लिखति :

"A kind of elaborate Composition in which the same subject is continued through alterations in prose and verse."

(A Sanskrit English Dictionary)

वैशिष्ट्यमेकमधिकमाभासते लक्षणेऽस्मिन्—'निरपेक्षगद्य - पद्यप्रयोगनिर्देशः' इति 'Elaborate composition.' चम्पूकाव्यमलङ्कृतभाषा - समायुक्तं भवेदिति सङ्केत उक्तवचनेन प्राप्यते। परिभाषेयं संस्कृतवाङ्मयस्य विविधेभ्यः काव्याङ्गेभ्यो भिन्ना परिलक्ष्यते। एकतः कथाख्यायिकाश्च सरलभाषा-समायुक्ताङ्गाः पृथक् क्रियन्ते, अपरतः विरुद-दानपत्र-करम्भकादि-सापेक्षपद्ययुक्तयोः काव्याङ्गयोः वैभिन्न्यं स्पष्टम्। प्राचीनकालादारभ्य ब्राह्मणोपनिषत्सु आरण्यकेषु च मिश्रसाहित्यस्य स्वरूपमपि चम्पूकाव्येतरमेवेति प्रमाणयितुं वयं शक्ताः। तेन काचित् चम्पूकाव्यस्य परा विशेषता अस्माकं समक्षे आयाति।

आधुनिकः ऐतिहासिकः श्री बलदेवोपाध्यायो वदति :

'चम्पू-काव्य गद्यकाव्य का ही प्रकारांतर से उपबृंहण प्रतीत होता है :'

—( संस्कृत साहित्य का इतिहास, पृ० ३६३ )

उपाध्यायमहानुभावस्य कथनमिदं न युक्तियुक्तम्; चम्पू-साहित्यस्य पर्यवेक्षणेन प्रतीयते यत् कस्मिंश्चिद् चम्पूकाव्ये गद्यमात्राऽधिका वर्तते। यथा 'वरदाम्बिका-परिणय-चम्पू'ग्रन्थे। अपरेषु तु चम्पूग्रन्थेषु पद्यभाग-मात्राधिक्यम्। यथा—अनन्तभट्टकृतं 'चम्पूभारतम्'। कस्मिंश्चिद् गद्य-पद्ययोः सममात्रा। यथा—'नीलकण्ठ-विजयः', 'वीरभद्रचम्पू'ग्रन्थश्च च। अत एव चम्पूकाव्यं न गद्यस्यैव उपबृंहितं रूपम्, पद्यस्यापि तदुपबृंहितं रूपं भवितुमर्हति।

कानिचित् चम्पूकाव्यानि उक्ति - प्रत्युक्तिरूपेण संवादयुक्तान्यपि वर्तन्ते। यथा–'विश्वगुणादर्शचम्पूः'। इमानि चम्पूकाव्यानां परवर्तिरूपाणीति कथमपि कथयितुं न शक्यते। पुनश्च 'नलचम्पूः' साङ्को वर्तते। तादृशचम्पूकाव्याणि गद्यकाव्यापेक्षया नाटकेभ्योऽधिकं प्रभावितानीति।

एस. दासगुप्ता महोदयो लिखति :

In actual practice the question in the absence of the authoritative prescription seems never to have worried the authors. We employ prose and verse indifferently for the same purpose. The verse is not always specially reserved as one would expect for an important idea-poetic description and impressive speech, a pointed moral or a sentimental outburst, but we find that even for ordinary narrative and description verse is as much pressed into service as prose.

—History of Sanskrit Literature P. 433

अयमपि 'कीथवत्' चम्पूकाव्ये गद्य-पद्ययोः निर्बाध-प्रयोगं सूचितवान्। पद्यं विशेषप्रयोजनाय न सुरक्षितं भवति तत्र। विचारविशेषाय प्रभावोत्पादकोक्त्यै, आदर्शविशेषाय, भावात्मकावेगायैव पद्यं चम्पूकाव्ये प्रयुज्यते इति वचनं समीचीनम्; सामान्यवर्णनेष्वपि पद्यं गद्यवत् प्रयुज्यत एवेति न तिरोहितं विपश्चिताम्।

समस्तैतिहासिकमतमन्थनस्य पश्चात् चम्पूकाव्यस्य असाधारणो धर्मः प्राप्यते—'निरपेक्षगद्यपद्य-प्रयोग' इति।

विद्वत्प्रवरः डा० भोलाशङ्कर व्यासः कथयति :

"बाण के उत्तराधिकारियों में बाण जैसी प्रतिभा नहीं दिखायी देती। बाण जैसी गद्य-शैली का निर्वाह करना उनके लिए बड़ा कठिन हो गया। गद्य के फलक पर बाण जैसी प्रवाहमय शैली को बनाये रखना तथा वैसी वर्णन-पटुता का परिचय देना बाण के बाद के गद्यकवियों के लिए संभव न था। फलतः उन्होंने गद्य के बीच-बीच पद्य की छौंक डालकर एक नयी शैली को जन्म दिया।"

त्रिविक्रमभट्टेन, भोजेन, तिरुमालम्बया च विरचितानि कतिपयचम्पूकाव्यानां गद्यखण्डानि बाणशैल्याः न कथमपि साहित्यिकसौष्ठवस्य न्यूनतां भजन्ते। यदा गद्य-पद्ये उभे अपि चरमोत्कर्षं प्राप्नुताम्, तदैव चम्पूकाव्यं जन्म लेभे। कवयः नूत्नतमशैल्या स्वात्मनः काव्यरचनाक्षमतां प्रदर्शयितुमेकां नूतनां विधां संस्कृतसाहित्ये आविष्कृतवन्तः चम्पूरूपाम्। अनेकचम्पूकाव्यानां गद्यखण्डानि बाणस्य 'कादम्बरी'वद् अलङ्कृतैश्च समस्तैः पदैः समलङ्कृतानि दृश्यन्ते। अतः चम्पूकाव्यरचनोद्देश्यस्तेषां केवलं गद्य-पद्यरचनाऽक्षमतागूहनरूपः स्यादिति न कथमपि युक्तिसङ्गतम्।

अन्यच्च, व्यासमहोदयेन अस्याः निजोक्त्याः खण्डनमपि अपरत्र कृतं दृश्यते। 'नलचम्पू'काव्यस्य प्रणेतारं त्रिविक्रमभट्टमुद्दिश्य ते लिखन्ति :

'त्रिविक्रम की शैली से स्पष्ट है कि बाण के शाब्दी क्रीडावाले पक्षको त्रिविक्रम ने और बढ़ाया और इसका प्रभाव बाद के सभी गद्यकाव्यों पर देखा जा सकता है।'

एतेन सुस्पष्टमिदं यत् 'चम्पूकाव्यकर्तारः गद्यपद्ययोः रचनाकौशले स्वाधिपत्यं प्रदर्शयितुमेव तानि काव्यानि विरचितवन्तः। दृश्यते चेदं यत् कतिपये एव विद्वांसस्तत्र पूर्णं साफल्यं लब्धवन्तः। सुधीरकुमार गुप्तोऽपि कथयति :

'उपलब्ध चम्पूकाव्यों में कहीं-कहीं ही विषयनिर्वाह में विशेषता आ पायी है। इनमें विषय और शैली में ऐसी कोई विशेषता नहीं जो अन्य गद्य या पद्यकाव्यों में अनुपलब्ध हो। इसमें न तो गद्य-काव्य की ओज-सफलता है, न पद्य-काव्यकी शक्ति और प्रभाव। इनमें लेखक की अपनी कोई मौलिकता नहीं है।'

'संस्कृत साहित्यका सुबोध इतिहास'-ग्रन्थे एस० एन० दासगुप्ता महोदयो लिखति :

The Champu thus shares the features fo both prose and poetry, but the mosaic is hardly of an attractive pattern, the large number of champus that exist scarcely show any special characteristic in matter and manner which is not already familiar to us from the regular metrical and prose kavya. The Champu has neither the siveway strength and efficieny of a real prose nor the weight and power of real poetry-Champu-writer as a rule has no real voice of his own.

—( A History of Sanskrit Lit P. 434)

ऐतिहासिकानां समस्तचम्पूकाव्यविषयिणी धारणेयं न न्यायसङ्गता। 'नलचम्पूः', 'यशस्तिलकचम्पूः', 'रामायणचम्पूः', 'वरदाम्बिकापरिणयचम्पूः' काव्यान्येतानि भाषाशैलीवर्ण्यविषयदृष्ट्या गद्यपद्ययोरुत्कृष्टरूपमपि प्रदर्शयन्ति। चम्पूकाव्यस्य यावान् विस्तृतो विषयः परिलक्ष्यते, न तथा संस्कृतवाङ्मयस्य कस्मिन्नपि काव्याङ्गे इत्यपि वक्तुं शक्यते। नूनं संस्कृतसाहित्ये चम्पूकाव्यानां महत्तमं योगदानम्। तद्धि नवीनामेव विधामुपस्थापयति। कस्यचिदपि मानसं गद्यरूप-कान्तारे परिभ्रमन् पद्यरूपं निर्झरमासाद्य निश्चयमेव प्रमोदमनुभवति।

'जीवन्धरचम्पू'-काव्ये महाकविर्हरिश्चन्द्रो लिखति :

**गद्यावलि पद्यपरम्परा च**
**प्रत्येकमप्यावहति प्रमोदम्।**
**हर्षप्रकर्षं तनुते मिलित्वा**
**द्राग् बाल्यतारुण्यवतीव कान्ता॥**

अर्थात् गद्य-पद्यचारुत्वं तथैव हृदयमाह्लादयति यथा बाल्यकाल-तारुण्यमध्यावस्थिता कान्ता रसिकान् प्रमोदयति।

तथ्यमिदं काव्यकारास्ते सम्यगजानन् यद् गद्यस्य दुरूहत्वेन समस्तपदबाहुल्यजन्यनीरसत्वेन पद्यस्य प्रसादमयत्वेन सौष्टवेन, ध्वन्यात्मकत्वेन च गद्यपद्ययोर्भेदः। गद्यस्य पद्यस्य वा एकैकस्य प्रयोगेण ते भाषाभिव्यञ्जनायां व्यतिरेकमन्वभूवन्। ते इदमप्यन्वभूवन् यत् तेषामन्तर्निहितानां समस्तभावनानां गद्यपद्ययोरुभयोरपि समत्वभावेन प्रयोगोऽनिवार्यः। निजकाव्यस्य स्वरूपं रोचकतमं रमणीयतरं हृदयग्राही च भवत्वेतदर्थं ते मिश्रशैल्याः प्रयोगं नितान्तं व्यावहारिकं मन्वते स्म।

शरभोजी महाशयाः प्राहुः—

**पद्यं हृद्यमपीह गद्यरहितं धत्ते न हृद्यास्पदं,**
**गद्यं पद्यविवर्जितं च भजते नास्वाद्यतां मानसे।**
**साहित्यं हि तयोर्द्वयोरपि सुधामाध्वीकयोर्योगवत्,**
**सन्तोषं हृदयाम्बुजे वितनुते साहित्यविद्याविदाम्॥**

( कुमारसम्भव-चम्पूः )

महाशयस्यास्य चम्पूरचनाया उद्देश्योऽपि स्पष्ट एव यद् गद्यपद्ययोः मिश्रणं सुधामाध्वीकयोर्योगवत् निर्मातुं स चम्पूनाम्नीं मिश्ररचनां चकार। राज्ञी तिरुमालम्बाकृतस्य बरदाम्बिकापरिणयचम्पूकाव्यस्य भूमिकायां विद्वद्वरः डॉ० सूर्यकान्त त्रिपाठी लिखति :

The prime object of Tirumalamba in writting this Champu was to exhibit the beauty of Sanskrit prose and variety of imaginary as was doubtless the case with Subandh Dandin & Bana

अयमपि चम्पूकाव्यरचनोद्देश्यं गद्य-पद्ययोः समभावेन वर्णनपटुत्वप्रदर्शनमेव कल्पयति।

निष्कर्षोऽयं यत् चम्पूकाव्यं मिश्रकाव्यस्य एका विधेति सर्वे विद्वत्प्रवराः ऐकमत्येनेदं स्वीकुर्वन्ति। गद्यं पद्यं वा कोऽप्युद्देश्योऽत्र नापेक्षते। अस्यां स्वतन्त्ररूपेण गद्य-पद्ययोः प्रयोगः कर्तुं शक्यते। काव्यमिदं समस्तपदसम्पन्नं सालङ्कृतं च भवति। इयमेका प्रबन्धात्मिका विधा काव्यस्य। उक्ति-प्रत्युक्तिरहितानि चम्पूकाव्यानि परित्यज्य प्रायेण सर्वाणि चम्पूकाव्यानि कथावस्तुप्रधानान्येव। कतिपयवर्णनप्रधानेषु काव्येषु कथावस्तु न प्रधानम्।

चम्पूकाव्यरचनाया उद्देश्यस्तेषां गद्यरचनायोग्यताप्रदर्शनमिति कथनं सर्वथाऽनुचितम्। एषां चम्पूकाव्यानां वर्ण्यविषयः सुविस्तृतः।

"चम्पू-काव्यों के वस्तुग्रहण का क्षेत्र संस्कृत की किसी भी एक काव्यविधा से विस्तृत एवं व्यापक है। एक ओर पुराण, दूसरी ओर सामान्य जीवन की लोककथाओं तक ··। भारतीय जन-जीवन की जैसी झाँकी यहाँ मिलती है···अन्यत्र दुर्लभ है।"

—'चम्पू-साहित्य का आलोचनात्मक अध्ययन'।

अत एव एषु मौलिकतायाः सर्वथाऽभाव इदमपि कथनं नोचितम्—

"गद्य-पद्य-मिश्रित चम्पू-काव्य कहलाता है। चम्पू-काव्यों में गद्य-पद्य की मात्रा निश्चित नहीं है। गद्य और पद्य वर्णन के किसी विशेष अंश के लिए सुरक्षित न रहकर समान रूप से व्यवहृत हुए हैं। चम्पूकाव्यों के वर्ण्य-विषयों का क्षेत्र व्यापक है। इसके मुख्य स्रोत पुराण रहे हैं। चम्पू-काव्यों का अङ्गी रस कोई भी हो सकता है।"

—'चम्पू-साहित्य का आलोचनात्मक अध्ययन'।

'चम्पूरामायण'स्य साहित्यिकं परिशीलनम्' नामके शोधप्रबन्धे प्रबन्धात्मकत्वं, सालङ्कृतत्वञ्चेति द्वे चम्पूकाव्यविशेषते अपि परिगणिते। परं तत्रापि चम्पूकाव्यलक्षणकरणे नितान्तमसामर्थ्यमेव दृश्यते।

काऽपि साहित्यिकविधा सीमाबद्धैव सम्यग् बोधगम्या भवति। तदैव कश्चिदपि तस्याः स्वरूपं सम्यक् ज्ञातुं प्रभवति। लक्षणविहीनं तु काव्याङ्गं मृगमरी-

चिकावत् प्रतीयते। काव्यनिकषे कषणमपि न तस्य सम्भवि। उपरिर्वणितानामैतिहासिकानाम्, शास्त्रज्ञानाम्, अनुसन्धातॄणां च विचारान् समालोच्येदं वक्तुं शक्यते यत् सन्ति केचिद् असाधारणा धर्माश्चम्पूकाव्येषु इति। यथा—१. निरपेक्षगद्यपद्यमयता, २. प्रबन्धात्मकता, ३. सालङ्कृतत्वं च। तथा च तस्येयं सामान्यतः परिभाषाऽपि समुपस्थापयितुं शक्यते—

'निरपेक्षगद्यपद्यमयं सालङ्कृतं प्रबन्धात्मकं च चम्पूकाव्यम्' इति।

अथ एतेषु एकैकान् गुणान् समासत व्याख्याय तेषामौचित्यं प्रदर्श्यते :

**निरपेक्ष-गद्यपद्यप्रयोगः**—सकृद्दर्शनेनैव काव्येऽस्मिन् वैशिष्ट्यमिदं दृग्गोचरं भवति। सर्वैरपि इतिहासज्ञैः शास्त्रविद्भिरपि स्वीकृतमिदम्। पूर्वरचितमिश्ररचनासु ब्राह्मणारण्यकोपनिषत्प्रमुखेषु कानिचिद् आख्यानानि मिश्रशैल्यां रचिताकानां काव्यानामुदाहरणानि, परं तत्र गद्य-पद्यमात्राया अपेक्षा वर्तते। कथाख्यायिकास्वपि पद्यं प्रयोजनविशेषेण प्रयुक्तम्। विरुद-करम्भक-दानपत्रादिष्वपि पद्यप्रयोगः सीमितः सोद्देश्यश्च भवति। सामान्यवर्णने एकदा गद्यप्रयोगः, पुनश्च पद्यप्रयोगः सर्वप्रथमं चम्पूरचनास्वेव प्राप्यते। इत्थमयं विशेषो चम्पूकाव्यस्य मिश्रशैल्यां विरचितेभ्यः काव्याङ्गान्तरेभ्यः पृथक्कर्तुं समर्थः।

**सालङ्कृतत्वम्**—कतिपयचम्पूग्रन्थान् व्यवकलय्य सर्वाणि चम्पूकाव्यानि समस्तपदयुक्तानि अङ्कृतानि च वर्तन्ते। गद्यपद्ययोरुभयोर्दाक्षिण्यं प्राप्य कवयश्चम्पूकाव्यानि विरचितवन्तः स्वीयं भाषाधिपत्यं रचनाकौशलं च प्रदर्शयितुम्। तदा अलङ्कारभूषिता समस्तपदसुशोभिता च भाषा कवीनां निकष आसीत्। बाण-सुबन्धु-दण्डिप्रभृतीनां कृतयस्तु विषयेऽत्र आदर्शभूता आसन्। अत एव चम्पूकाव्यनिर्मातारः द्वयोः गद्य-पद्ययोः प्रावीण्यप्रदर्शनमेवेति लक्ष्यं निर्धार्य अलङ्कार-चमत्कृतां भाषां योजयामासुः।

**प्रबन्धात्मकत्वम्**—प्रायेण चम्पूकाव्यानि किञ्चित् 'कथावस्तु' आश्रित्यैव रचितानि। बन्धविहीनं मिश्रशैल्यां निबद्धं ग्रन्थं चम्पूकाव्यं कथयितुं वयं न शक्नुमः। तस्य मुक्तकरचनाभिः भेदप्रदर्शनं दुष्करमित्येकं कारणम्। द्वितीयं तु विरुद-करम्भकदानपत्रादिभिरपि तस्य भेदः प्रदर्शयितुं न शक्यते। पृथक्करणाय चम्पूकाव्यस्य प्रबन्धात्मकत्वरूपोऽसाधारणो धर्मोऽनिवार्यः। कानिचिद् अपवादस्वरूपाण्यपि चम्पूकाव्यानि प्राप्यन्ते। उक्तिप्रत्युक्त्याश्रितानि—'विश्वगुणादर्शचम्पू'वत् चम्पूकाव्याणि किमपि विशिष्टं कथावस्तु नाश्रयन्ते। किन्तु अपवादाः पुन विज्ञाननियमेष्वपि वर्तन्ते। पुनश्च, शृङ्खलाविहीनं स्वैरं वने परिभ्रमन्तं गजं यथा न कोऽपि वशीकर्तुं शक्नोति तथैव संस्कृतवाङ्मयस्य असीमे कान्तारे वर्तमानं स्वैरमाचरन्तं शिथिलैर्विविधैर्लक्षणैरुपेतं चम्पूकाव्यं न कश्चिदेकेन लक्षणेन निबद्धुं समर्थ इति निर्विवादम्।

# पूर्णाहुतिः—महाभारतीयं दृश्यकाव्यम्

– कविवरः श्री कृष्णप्रसाद घिमिरे –

२.

## प्रथमोऽङ्कः

( ततः प्रविशतः सुधर्मासभायाम् उद्धव सात्यकिभ्यां चामरतालवृन्तकैः समभिवीज्यमानौ प्रियसारथिना दारुकेन सञ्चालितं स्वरथमभिशोभमानौ भगवन्तौ रामकृष्णौ । )

**श्रीकृष्णः** ( जगतामभयदानसमर्थेन स्वकरकमलेन अवलम्ब्य दारुकबाहुं रथाच्छनैः शनैरवरुह्य तमेवाऽभिलक्ष्य )—प्रिय दारुक ! पश्य, पश्य ! मध्याह्नसमये वायुवेगेन प्रासादतोऽत्र आगमनेन भगवतो भास्करस्य प्रखरकिरणैः सन्तापिताः प्रस्विन्नगात्रा अस्माकमिमे प्रियसदश्वाः स्वशरीरमपि आप्लावयन्त इव दरीदृश्यन्ते स्वेदाम्बुभिः । तद्गच्छ यथास्थानं नीत्वा इमान् सम्प्राप्तसमाश्वासनान् विधेहि । त्वमपि क्षणं विश्रम च यथासुखम् ।

( दारुकः साञ्जलिबन्धं प्रणम्य निर्गच्छति । )

( स्वाग्रजं समीक्ष्य ) पूज्यतमाग्रज ! समागम्यतामग्रे ! ( पुनस्तन्मुखं सविशेषं निरूप्य सहर्षम् ) अहो ! किमेतद् ? विराजतेऽद्य भगवतो भवतः श्रीमुखकमलमिदं पूर्णं परिपूर्णानन्दमयं लोकान्तरेण ज्योतिषा सम्पृक्तम् । कोऽर्थः स्यादार्य ! तत्कथ्यतां कार्यस्यास्य उपपत्तिं तन्निदानञ्च शुश्रूषवो वयं सञ्जातकौतुकाः स्मः ।

**श्रीरामः** ( सस्मितम् )—शोभनं प्रतिभाति तवैव निरूपणमायुष्मन् ! यस्य रोमकूपान्तरिता अनन्ता अनन्ता महानन्दसागरा अनन्तकालादारभ्य अद्यावधि समुद्वेलयन्तः स्वान् प्रत्यागच्छन्ति पुनः स्वपूर्वस्थानमेव, यस्य कृते पुनरानन्दातिरिक्ताश्चान्ये पदार्था न प्रतिभान्ति, यश्च भूयो नित्यमेव [illegible]न्तस्थः, स एव तत्रैवाऽऽत्मानं रमयितुकामं यदा कदा तदानन्दांशप्रादुर्भूताऽन्तःकरणं यं कमपि तादृशावस्थायां संपश्येद् विभावयेद्वा, एतत्सर्वं तद्धृदयान्तरितसद्भावं न स्याद्विषयेऽस्मिन् किमप्याश्चर्यं तस्य व्यक्तिविशेषस्य कृते । तत्त्वमेवात्र कथय आयुष्मन् ! किमर्थमद्य अकस्मादसमय एवेदृशं प्रश्नविशेषं मत्पुरतो न्यधाः ?

**श्रीकृष्णः** ( समागृह-निःश्रेणीमारुहन् )—नहि नहि प्रतीक्ष्यचरण ! स्वहृदयाऽभ्यन्तरे प्रादुर्भूतानन्दो भवता संसूचितः, किन्तु कारणेनाऽनेन समुद्भूतोऽयमेतद्विषयिकश्चेति तु नाऽत्र निर्देशितः । किमर्थं गोपितोऽसौ भवता भगवन् ? नूनं भवान् प्रतिष्ठितप्रज्ञो विभाति विषयेऽस्मिन् यः कच्छप इव स्वाङ्गानि संहरते विषयेभ्यो हृषीकवृन्दानि । आर्य ! वस्तुतो भवत्स्वभाव एव ईदृशः सञ्जातप्रायो दृश्यते यत् किञ्चिदुक्त्वा किञ्चिन्निगूहनम् । दृश्यमानस्यापि प्रपञ्चस्य अदृश्यमानत्वमिव प्रतिभानकरणम् । तथैव अलौकिकेषु स्थितिविषयेषु निरन्तरावगाहनं तत्रैव विहरणञ्च । यद्वा—युक्तमेवैतत् तत्र भवतः कृते यल्लोकोत्तरा महात्मनोऽनित्यलोके स्थिता अपि नित्यलोकं गता रमन्ते स्वात्मवस्तुन्येव ।

( नयनाञ्चलात्स्वात्मानं भगवतो रामस्य नयनमार्गेणैव तदात्मानं नीत्वा उभयोरात्मनोरैक्यं विदधदलौकिकानन्दमनुभवंश्च समागृहाङ्गणं समभेत्य आत्मनः स्वागतार्थं समागतैर्मुनिभिर्वीतरागैः ब्राह्मणवर्गैश्च समर्पितान् सत्याशीर्वादान् [illegible] शिरसा संगृह्णंस्तानेव अवलोक्य ) पूज्यवसु-

देवपुत्रो वासुदेवोऽयं भवतस्तीर्थोपमान् श्रीचरणान् प्रणमति स्वात्मनिवेदनपूर्वकम् ।

**ब्राह्मणवर्गाः**—विजयस्व वासुदेव ! जय त्वं पुनरहर्निशमित्थंरूपेणैव दिने द्विगुणं रात्रौ चतुर्गुणम् । वर्धस्व च स्वकर्मणि स्वान् सफलीकर्तुं परित्रातुञ्च दुष्टेभ्यस्तेषां सत्यान् कामांश्च परिपूरयितुम् । ( बलराममवेक्ष्य ) राम ! सदैव आरामदो भव त्वमपि स्वेभ्यः परिजनेभ्यो भक्तेभ्यश्च ।

( रामहस्तौ बद्धा प्रह्वेण शिरसा गृह्णाति । सभासदस्तयोः शिरसि पुष्पलाजाक्षतादीनि सुगन्धिद्रव्याणि च वर्षाधारा यथाऽभिवर्षयन्ति । इतो नेपथ्यमाश्रिताः स्तुतिपाठका बन्दिनश्च तौ स्तुवन्ति । तयोः सद्गुणैर्जनमनोवचनातिगैस्तौ प्रशंसन्ति च । )

**श्रीकृष्णः** ( समागृहान्तःस्थं भद्रासनमुपसर्पन् )—तिष्ठन्तु भवन्तः सर्वेऽपि महानुभावा मुनयो ब्राह्मणवर्गाः सभ्या महाजनः श्रेष्ठिनश्च, स्वं स्वंमुपयुक्तासनं गृह्णन्तु च । (श्रीरामं समीक्ष्या) आर्य ! समागम्यतामितः, आवामपि तिष्ठावः । ( उद्धवसात्यकिनौ प्रति ) समागच्छतां युवामपि तिष्ठताम् ।

( सर्वे जना निवसन्ति । भगवान् कृष्णोऽपि भगवता रामेण सार्धं भद्रासनमधिरोहति । निवसति च तदेव किञ्चिद्रुतं यथाऽभिनीय तालवृन्तकेन स्वात्मानमभिवीजमानं सात्यकिनं विलोक्य )

प्रियसखे ! कुतः समागतोऽयं मधुरो रवः ?

**सात्यकिः**—जगन्नियामक ! विभो ! नाममात्रका इमा द्वारकावासिन्यो मानिन्यः कामिन्यः सभागृहस्यैतस्य पश्चाद्भागं समाश्रित्य तौर्यत्रिकैः समाराधयन्ति भवन्तं जगन्नियन्तारम्, इतस्तत उत्प्लुत्य वादयन्ति च लयतालादिप्रदानार्थं स्वशरीरावयवविभूषितानि स्वाङ्गस्थान्याभरणजातानि । तत्तेषामेवाऽयं मधुरो रवः, तत एवागच्छन् चायं जिहीर्षति सभासदां मनांस्यपि ।

**भगवान्** ( उद्धवं समीक्ष्य )—प्रियसखे ! आभिरपि संगृहीतमिव प्रतिभाति शोभनमुपयुक्तञ्चेदं कार्यजातम् । किं मन्यते तत्र भवान् प्रियवयस्यः ?

**उद्धवः** ( मध्य एव चामरेणाभिवीजमानः )—इमा अपि स्वजीवनसाफल्यं कुर्वन्त्येव भगवन् !

**भगवान्** ( ईषद्विहस्य अजानन्निव )—एतादृशाकर्मणाऽपि जीवनसाफल्यं सम्भवति किम् ?

**उद्धवः** ( सगद्गदम् )—प्रश्नस्याऽस्योत्तरं त एव वितरन्ति भगवन् ! यैर्नाम एतदर्थमेव स्वं जीवनमाधुनिकानां मोहमदान्वितानां सांसारिकाणां दृष्टिषु निरर्थकमापादितम् । य इमे महानुभावा विराजन्ते भस्माङ्गरागधवलितस्वशरीरावयवा व्यक्तिविशेषा येऽप्यत्र विषयस्याऽस्य निदानभूता दरीदृश्यन्ते यैर्नाम पुनरात्मजीवनं तदर्थमेव यापितमहर्निशं रुदित्वा रावयित्वा चात्मसमान् अन्यानपि ।

**भगवान्** ( वार्तामन्यथगां विधित्सुर्भूत्वा )—किं किं तत् सात्यकिना प्रोक्तं तद्रवो जिहीर्षति सभासदां मनांसीति ?

**सात्यकि** ( सहर्षम् ) -एवं प्रभो ! अहन्तु तथैव निरूपयामि ! भवतः सत्कर्मगुणरूपलीलाप्रदर्शनप्रधानीभूतं तौर्यत्रिकमिदं विजृम्भमाणं सभ्यानां मनांसि जिहीर्षतीति नैव कथनीयमपेक्ष्यते, अपितु भगवन्नहरदिति वक्तव्यताञ्चावगाहते । धन्यं जगति महत्तरं खल्वेतदेव, यतः स्वात्मनः शान्तिमधिगच्छति लोकः । ( विमुग्धो भवति ) ।

**भगवान्**—युक्तमुक्तं भवता सखे । परन्त्वस्याः सभायाः सद्गुणोऽप्ययमेवाऽऽसीद् यदा स्थानान्तरितविग्रहाणां व्यक्तिमात्राणां ताः शोकमोहादिकाः बहूमयो नाशमायान्तीति या जनोक्तिः सुप्रसिद्धाऽऽसीत्, सत्या चेत् सा पुनः कथं सम्भवतीत्थं मोहरूपाकर्षणम् ? तत्कथय ? कथं मुखमुद्रणं क्रियते भवता तदेतेषां दुष्प्रवृत्तीनां जनानां तदस्मिन् विषये ?

**सात्यकिः** ( सुप्रसन्नो भूत्वा )—युक्तं भगवन् ! परं कथञ्चैतत्सम्भवति ? श्रूयतां जगन्नियामक ! तावन्नरक-विशेषाणामसह्यकष्टोद्वेगेन भृशं परिपीड्यमानस्तुच्छा-तितुच्छयोनिगतोऽपि जीवः स्वशरीरं जीर्णातिजीर्णं दीनं हीनञ्च सदपि पुनः क्षणान्तर एव विनश्यदपि किमर्थं तद्विहातुं नेच्छति स्वेच्छया किञ्चित् पूर्वकाले, अपि तु तदवस्थायामेव आनन्दातिरेकमनुभवति च । किं ददाति तत्र भवानस्य युक्तमुत्तरम् ?

**भगवान्**—आत्मनः सच्चित्त्वमेवाऽत्र निदानं सखे ! यतस्तस्य नित्यानन्दमयस्वरूपत्वात्, अमरत्वाच्च ।

**सात्यकिः** ( सुमधुरं विहस्य )—आस्तां तावन्नाथ ! अस्त्वत्राऽपि तत्तौर्यत्रिक-कर्मान्तरित आनन्दातिरेक एव मुख्यो हेतुः । का नो हानिः । तदेवोपादनं स्यात् ।

( इत्थं सर्वैरपि सर्वतः स्वकथनमनुपयुक्तमसङ्गतञ्चेति युक्त्वा सत्तर्कैश्च निर्दिश्यमानोऽपि मूकतामापादितोऽपि जगन्मोहनं हास्यं संत्यजन् )

**भगवान्**—धन्यो भवान् सञ्जातप्रायो दृश्यते सर्वलोकोपकारी महात्मा देवर्षिनारद इव । (स्वगतम्) अहो ! किमर्थमद्याऽकस्मात् स्मृतिपथमध्यारूढो मे भगवान् नारदः ? तद्दर्शनमेव तु न प्राप्स्यामि किम् ? ( उपरितनं स्वभाषणक्रमं मेलयित्वा ) यदात्मन्येवा-ऽनुभूयते नाऽन्यत्र । किमेतत् सत्यं स्यात् ?

**सात्यकिः**—सत्यं प्रभो ! सत्यमेवैतत् यदद्यावधि कृतस्यैतस्य भवच्छ्रीचरणसुसेवनस्य सद्योजातमिदं सुफलं सद्विचारमयम् । किमत्राऽऽश्चर्यं तदेव फलितमिति कथिते ।

( जगता विमोहनकारणीभूतं तादृशं स्वहास्यमपि तस्मिन्नित्थं विफलीभुतं विलोक्य किंकर्तव्यविमूढः सत्यमेवै-तत्सुधर्मान्तरितं जनं मदीया मोहिनी शक्तिरपि स्ववशीकर्तुं नेशा चेत् पदार्थान्तरः प्रबाधितुं कथं सफलो भविष्यतीति विचारयन् स्वशिरः परावृत्त्य )

**भगवान्**—निगूढं विश्रूयमाणश्चैष वीणारवोऽपि तत्रैव संमिश्रित इवाऽनुभूयते चाऽस्माभिस्तद्गतचित्तैः । किं मन्यते तत्र भवान् प्रियवयस्यः ?

( विभो ! किमर्थमज्ञ इव भवान् मामित्थं मुहुर्मुहुः परिपृच्छतीति भावेन भगवन्तं समीक्ष्याऽभिवीज्य च तालवृन्तकेन )

**सात्यकिः**—प्रभो ! अहन्तु उपयुक्तमेवेति मन्ये इदमपि तानं परिपूर्णं सम्पाद्य शब्दब्रह्मस्वरूपिण-स्तवैव सद्गुणगानेन त्वामेवाप्तुं प्रयतन्त इमे नटाचार्या अपि । तद्गायनजन्योऽयं रवोऽपि त्वामाकर्षयितुं तान्प्रति तमपि सफलीभूतं मन्ये । नो चेदुदासीन-तमानां कथं समाकृष्टौ भवतो बधिरतरावपि कर्ण-पुटावित्थं तच्छब्दरसास्वादनार्थम् ।

( सर्वेऽपि सभासदः सात्यकिनः पक्षं समाश्रित्य "भगवन् ! सत्यं त्वमसि भृशं निर्दय" इति भावेन भगवन्तं निरीक्षन्ते । भगवान् कृष्णस्तु "सञ्जातोऽस्मि अद्याऽहं जीवन्मुक्तानामेषां हस्तगतः सन्निरुद्धगतिश्च तैः । तदेकपद एव सभागृहादस्मादन्तर्हितो गन्तुं समीहेऽज्ञातस्थलम्, परन्त्वत्र विवशोऽस्मि । युक्तमप्येतत्—"वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा" इति यदुच्यते, इति ध्यायन् वितिष्ठते । तावदेव सभागृहद्वारतो गवाक्षरन्ध्रेभ्यश्च रजो-राशिरन्तर्हितो भवति । दृष्ट्वामेतद्वार्तामन्यपथगां करोमीति मन्यमानः सम्प्राप्ततत्संयोगः किञ्चिद्विहसन् ।

**भगवान्**—पश्यतां पश्यतां तावद्रजोराशिरयं कुतः समागतः सभागृहान्तरे ? कथ्यतां चैतस्य आगमन-कारणम् ?

**उद्धवः**—भगवन् ! प्रातर्भवता गोदानरूपेण ब्राह्मणेभ्यो वितीर्णा इमा बद्धसंख्याका ( १३०८४ ) अग्रेगामिन्यो गावः स्वगृहान् नीयन्ते वृन्दावने भवदिव गोचारणलीलामनुकुर्वद्भिः एभिर्ब्राह्मणवर्गैः । तदेतेषां पवित्रात्मनां विप्रवर्गाणां श्रीमुखतो विनिःसृत्य भगवद्गुणगणैः ।

( उच्चैः सलयतानं सुमधुरेण रवेण गायति )

**तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।**
**श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥**

पूर्वतोऽनुवृत्तम्

# सूर्यनमस्कारो व्यायामः

—डॉ॰ नरेश झा शास्त्री

( ४ )

## सूर्यनमस्कारस्य अद्यतनं रूपम्

पुरा सूर्यनमस्कारव्यायामो नूनं बहुचर्चितोऽभवत्। अथर्ववेदे, इतिहास-पुराणेषु तस्य बहुधा समुल्लेखः। क्वचिदुपासनायां क्वचित्तपसि क्वचिच्च व्रतकल्पे। प्रकारान्तरेण अनेकत्र सूर्यनमस्कारस्य चर्चा समुपलभ्यते। अथर्ववेदनमस्कारावलिः विकासक्रमे द्रष्टव्यः। स्कन्दपुराणे सूर्यायाऽर्घ्यदानमहिमवर्णने **पश्चादासनस्थं देवं सवितारं मण्डलमध्ये द्वादशात्मकं सुरादिभिः सम्पूज्यमानं ध्यात्वा पूर्वोक्तमर्घ्यपात्रं शिरसि कृत्वा भूमौ जानुनी निपात्य सूर्याभिमुखस्तद्गतमना भूत्वा-अर्घ्यमन्त्रमुदाहरेत्**[1] इत्यत्र 'जानुनी निपात्य' इति 'जानुनास' इत्यस्यैव मूलरूपम्। अत्र 'ॐ ख खोल्काय नमः' इत्युच्चारणं आधुनिके नमस्कारे 'ॐ ह्राँ' इतिवत् वर्तते। तथैव तत्रैव स्कन्दपुराणे—

**तदस्त्वगस्त्यभ्राताऽसौ ग्रीष्मे पञ्चाग्निमध्यगः।**
**भास्करे दत्तदृष्टिश्च मौनव्रतसमन्वितः॥**
**तिष्ठन् कनिष्ठिकाङ्गुल्या वामपादश्च निश्चलः।**
**ऊर्ध्वबाहुर्निरालम्ब - स्तपस्तेपेऽतिदारुणम्॥**

अत्र 'भास्करे दत्तदृष्टिः, मौनव्रतसमन्वितः, कनिष्ठिकाङ्गुल्या तिष्ठन्, वामपादश्च निश्चलः ऊर्ध्वबाहुः, निरालम्बः' इत्यादिविशेषणानि किं सूचयन्ति? आधुनिके सूर्यनमस्कारे 'उपरि अवलोकयेत्, ऊर्ध्वेक्षणम्, नासिकया श्वासाकर्षणम्' इत्यादिपदैः किं सूच्यते?

एवमेव भविष्यपुराणे[2] ब्राह्मपर्वणि सप्तमीकल्पे भानुपादद्वयव्रते वाल्मीकीयरामायणे[3] उत्तरकाण्डे च—

**पञ्चवर्षसहस्राणि सूर्यं चैवान्ववर्तत।**
**तस्थौ चोर्ध्वशिरोबाहुः स्वाध्याये धृतमानसः॥**

अत्र 'ऊर्ध्वशिरोबाहुः' इत्यनेन सूर्यनमस्कारव्यायाम एव सङ्केतितः।

बहुकालं शारीरिकोऽयं व्यायामो विकसन् शताब्द्यामस्यां पूर्णविकासं प्राप। सूर्यनमस्कारव्यायामस्य व्यापकप्रचारे श्रेयोभाजः सन्ति श्रीमन्तो भगवानराव श्रीनिवासराव पन्तप्रतिनिधि महोदयाः (औंध-नरेशाः)। तेषां प्रशंसनीयेन प्रयासेनास्य व्यापकः प्रचारोऽभवत्। १९९६ ( सन् १९३९ ) वैक्रमवत्सरे प्रथमप्रकाशितस्य 'सूर्यनमस्कार'-पुस्तकस्य प्रास्ताविके एभिर्लिखितं यत् 'मया स्वयमेव सशास्त्रः समन्त्रः विशेषपद्धत्या च सूर्यनमस्कार - व्यायामो नियमेन समभ्यस्तः। अनुभूतञ्च यत् अनेन व्यायामेनास्माकं शारीरिकी मानसिकी चोन्नतिर्नितरामभूदिति। सर्वेषां स्त्री-पुरुषाणां समग्रा समुन्नतिर्भवेदित्याकाङ्क्षया मया 'सूर्यनमस्कार'नाम्नी एका लघुपुस्तिका मराठीभाषायां विरचिता। सा च पण्डितेन सातवलेकर महोदयेन स्वीये भारतमुद्रणालये मुद्रापयित्वा १९२२ ईशवीयवत्सरे प्रकाशिता। अनन्तरञ्च १९२८ ईशवीये वत्सरे अंग्रेजीभाषायामपि 'सूर्यनमस्कार'-पुस्तकं प्रकाशितम्। एवमेव तदनु 'लीडर प्रेस, प्रयाग'तः प्रायः १९३० ईशवीये वत्सरे हिन्दीभाषायामपि तत् प्रकाशितम्।

( क्रमशः )

१. स्कन्दपु० माहे० कौमारिका० ४३.५५।
२. भविष्यपु० १०/ [illegible] ३. वाल्मीकि० रामा० [illegible]

# विक्रेयाणि बहुमूल्यानि पुस्तकरत्नानि

गृहं स्वर्गीकर्तुं मानवजीवनञ्च सफलयितुं वाणीपुस्तकमालातः महापरिषदः महामण्डलसंस्थानतश्च प्रकाशितानि निम्नलिखितपुस्तकानि विक्रयार्थं प्रस्तुतानि। विशेषविवरणाय सूचीपत्रं नियमाश्च पत्रप्रेषणेन समासादनीयाः।

| | | |
|---|---|---|
| १. भारतधर्म-समन्वय | ... | १—५० |
| २. परलोक-तत्त्व | ... | २—५० |
| ३. कठोपनिषद् | ... | ३—०० |
| ४. धर्मतत्त्व | ... | २—५० |
| ५. वेदान्तदर्शन | ... | १—५० |
| ६. हिन्दूधर्मका स्वरूप | ... | ०—३७ |
| ७. तत्त्वबोध, सजिल्द | ... | १—०० |
| बिना जिल्दका | ... | ०—७५ |
| ८. आदर्श देवियाँ प्रथम भाग | ... | २—२५ |
| ,, ,, द्वितीय भाग | ... | २—५० |
| ९. सती सदाचार | ... | १—५० |
| १०. कर्म-रहस्य | ... | २—५० |
| ११. केनोपनिषद् | ... | १—५० |
| १२. ईशावास्योपनिषद् | ... | १—०० |
| १३. सप्तशती ( दुर्गा ) गीता, सजिल्द | ... | ३—०० |
| ,, दफ्ती जिल्द | ... | २—२५ |
| १४. सदाचार-प्रश्नोत्तरी | ... | ०—३७ |
| १५. व्रतोत्सव-कौमुदी | ... | १—३७ |
| १६. हिन्दू-संस्कृति-समीक्षा | ... | ०—५० |
| १७. धर्म-प्रवेशिका | ... | ०—७५ |
| १८. पूजा-प्रार्थना | ... | ०—६२ |
| १९. गायत्रीमन्त्र-टीका | ... | ०—२५ |
| २०. आचार-चन्द्रिका | ... | १—०० |
| २१. कन्या-शिक्षा-सोपान | ... | ०—२५ |
| २२. गजेन्द्र-मोक्ष | ... | ०—३७ |
| २३. महिला-प्रश्नोत्तरी | ... | ०—५० |
| २४. व्रतोत्सव-चन्द्रिका | ... | ५—०० |
| २५. धर्माधर्म-प्रश्नोत्तरी | ... | ०—२५ |
| २६. सुलोचना | ... | ०—६२ |
| २७. तीर्थ और देवपूजन-प्रश्नोत्तरी | ... | ०—२५ |
| २८. स्मरणी | ... | ०—६२ |
| २९. स्त्री-पुरुष-विज्ञान | ... | ०—३७ |
| ३०. श्राद्ध और परलोक-विचार | ... | ०—३७ |
| ३१. धर्म-विज्ञान प्रथम, द्वितीय, तृतीय, ५) ४) | | ४—०० |
| ३२. श्रीमद्भागवत, एकादश स्कन्ध | ... | ३—५० |
| ३३. सती धर्म और योगशक्ति | ... | ०—३७ |
| ३४. अन्तःकरण-विज्ञान | ... | ०—७५ |
| ३५. निर्मूल आक्षेपोंका उत्तर | ... | ०—३७ |
| ३६. परलोक-प्रश्नोत्तरी | ... | ०—२५ |
| ३७. श्रीमद्भगवद्गीता प्रथम भाग | ... | ४—०० |
| ,, ,, द्वितीय भाग | ... | ३—५० |
| ३८. मनुष्य-धर्म | ... | ०—३७ |
| ३९. धर्मकल्पद्रुम प्रथम खण्ड | ... | ६—०० |
| ,, द्वितीय खण्ड | ... | ३—०० |
| ,, तृतीय ,, | ... | ३—५० |
| ,, चतुर्थ ,, | ... | ५—०० |
| ,, पञ्चम ,, | ... | ३—५० |
| ,, षष्ठ ,, | ... | ४—०० |
| ,, सप्तम ,, | ... | ३—५० |
| ,, अष्टम ,, | ... | ४—०० |
| ४०. प्रवीण दृष्टिमें नवीन भारत ( प्रथम खण्ड ) | | २—०० |
| ,, ,, ( द्वितीय खण्ड ) | | २—०० |
| ४१. नवीन दृष्टिमें प्रवीण भारत | ... | १—२५ |
| ४२. साधन-चन्द्रिका | ... | १—७५ |
| ४३. शास्त्र-चन्द्रिका | ... | १—७५ |
| ४४. धर्म-चन्द्रिका | ... | १—६५ |
| ४५ पातञ्जल-योगदर्शन ( हिन्दी भाष्य ) | ... | ३—०० |
| ४६. कर्ममीमांसा-दर्शन ( सम्पूर्ण ) | ... | १२—०० |

**व्यवस्थापक : वाणी-पुस्तकमाला, आर्यमहिला हितकारिणी महापरिषद्, जगतगंज, वाराणसी**

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश (मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः (जनवरी-अङ्कतः) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका (टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे न 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थानम्—[illegible]/२०, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

वर्षम् ५५

卐

अङ्कः : ५
मई १९७८

卐

संरक्षिका
श्रीमती विद्यादेवीजी महोदया

卐

प्रबन्धसम्पादिका
श्रीमती एस० बी० पाई०

卐

वार्षिकं मूल्यम्
९/०० रूप्यकाणि

卐

प्रत्यङ्कमूल्यम्
१/०० एकरूप्यकम्

卐

सम्पादक :— डॉ० परमहंस मिश्रः

सहसम्पादकौ :—
डॉ० कपिलदेव पाण्डेयः श्रीश्यामविहारी त्रिपाठी


## ताम्रपर्णीस्तुतिः

पाटीरशैलतनयां तीर्थराज्ञीं सुमङ्गलाम् ।
अनादिशक्तिसंभूतां श्रीताम्रां प्रणमाम्यहम् ॥ १ ।

भारद्वाजकुलोद्भवः सतनयः विप्रैः सगोत्रैर्बुधः,
सांकृत्यायनकाश्यपात्रिहरितैः श्रीवत्स - षण्मर्षणैः ।
विश्वामित्रजकौशिकैः प्रतिदिनं पुत्रेण भर्त्रा स्वसुः,
शम्भुं सर्वमयस्करं सहवधूः सेवेऽतिरुद्रे मखे ।। २ ।।

लोपामुद्राधवोऽयं गिरिवरदमनः ताम्रपर्णीसमेतः
भूमिं संप्राप्य याम्यां मलयगिरियुतां साधुभिः पूज्यमानाम् ।
तुष्टिं पुष्टिं विधात्री, निगमपथविधौ सज्जनान् प्रेरयन्ती,
सर्वान् कामांश्च दात्री मलयगिरिसुता ताम्रपर्णी चकास्ति ॥ ३ ॥

ताम्रां तन्वीं सुपूर्णां सकलसुखकरीं वैदिकान् पालयन्तीं,
कुम्भोद्भूतेन नीतां मलयगिरिसुतां दक्षिणां पोषयन्तीम्
सिद्धैर्देवैः मुनीन्द्रैः हरिविधिविबुधैः सेवितां योगिसंघैः,
गङ्गातुङ्गाद्रिमान्याम् ऋषिकुलमहितां ताम्रपर्णीमुपासे ॥ ४ ॥

—श्रीमन्तः न० रामसुब्रह्मण्य रामायणियार्, शिरोमणयः

# विषयक्रमः



# ताम्रपर्णीस्तुतिः

गजाननस्ताम्रपर्णी ताम्रपर्णी गजाननः। उभयोव भेदोऽस्ति ताम्रपर्णी गणाधिपः ॥ १ ॥
पुण्यायै पुण्यभूतायै पुत्र्यै मलयभूभृतः। सर्वतीर्थस्वरूपायै ताम्रपर्ण्यै नमो नमः ॥ २ ॥

आदौ शक्तिविनिर्मिता गिरिजया संमानिता मङ्गले,
भर्तुः कण्ठसमर्पिता तदनु या कुम्भोद्भवायार्पिता।
कन्याभूत् कनकोज्ज्वलाथ विबुधैः या ताम्रपर्णी कृता,
सा माला जलरूपिणी मलयजा जेजीयतेऽस्मिन् गिरौ ॥ ३ ॥

भद्रा श्रीताम्रपर्णी जयति भुवि सदा मङ्गलानां विधात्री,
शोभां पुष्टिं च दात्री लसति मणिनिधिः दक्षिणाशासुरक्षा।
स्थैर्यं लक्ष्मीं च विद्यां वितरति सततं सज्जनानां बुधानां,
लोपामुद्राप्रियेण स्थिरतममुनिना पालिता लोकमाता ॥ ४ ॥

यां मालां कुम्भजाय प्रमथपतिरदात् शैलजाया विवाहे,
सा माला सत्पथानां हरिशिवकमलप्रोद्भवेभ्यो हि नित्यम्।
दत्वा शैलेन्द्रकन्यापरिणतिसमये शैलजायाश्च लब्ध्वा,
भर्तुः कण्ठे विसृष्टा जगति विजयते ताम्रपर्ण्याख्यया सा ॥ ५ ॥

नदी श्रेष्ठा ताम्रा वहति सलिलं प्राज्यमहिता,
स्वतन्त्रां स्वावस्थानभिलषति लब्धुं शिवमनाः।
पवित्रा सा रुद्रे नमति कृतधीः तां प्रतिदिनं,
जलं गेहं नीत्वा विधिवदभिषेकं वितनुते ॥ ६ ॥

धर्मद्रवा भगवती माला मलयनन्दिनी। परापराऽमृतस्यन्दा तेजिष्ठा कर्मनाशिनी ॥ ७ ॥
मुक्तिमुद्रा कल्पकला कलिकल्मषनाशिनी नारायणी ब्रह्मरूपा नादेयी मङ्गलालया ॥ ८ ॥

—श्रीमन्तः न. रामसुब्रह्मण्य शिरोमणयः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५५ तमे वर्षे ] वाराणसी, चैत्र २०३४-३५, मई १९७८ [ अङ्कः ५

## ॐ इमा गिर आदित्येभ्यः ॐ

इमा गिर आदित्येभ्यो घृतस्नूः,
सनाद्राजभ्यो जुह्वा जुहोमि।
शृणोतु मित्रो अर्यमा भगो नस्,
तुविजातो वरुणा दक्षो अंशः॥१॥
इमं स्तोमं सक्रतवो मे अद्य,
मित्रो अर्यमा वरुणो जुषन्त।
आदित्यासः शुचयो धारपूता
अवृजिना अनवद्या अरिष्टाः॥२॥
त आदित्यास उरवो गभीरा,
अदब्धासो दिप्सन्तो भूर्य्यक्षाः।
अन्तः पश्यन्ति वृजिनोत साधु,
सर्वं राजभ्यः परमा चिदन्ति॥३॥

ऋ० २।३।२७-१-३

क्रान्तदर्शी ऋषिः मंत्रदर्शनानन्तरम् यत् प्रयुंक्ते तत् सर्वम् दिव्यशक्तिसम्पन्नेभ्यः विश्वरञ्जकेभ्य आदित्येभ्य एव समर्पितम् वर्त्तते। स्नेहसमायुक्तानि चित्राणि चिद्वचांसि हविष्यरूपाण्येव श्वासवैश्वानर-शिखासु हुतानि विश्वव्यवहारकारणानि भवन्ति। श्रुतिमाध्यमेन दिव्या वागेव ह्यत्र वदति—भो अर्यमादयः देवाः सर्वे प्रत्यक्षं तच्छृणवन्तु !

भो देवाः अस्मिन् वाग्यज्ञकर्मणि सर्वे भवन्तः सम्मिलिताः भवन्तु। यतः वाक्षु कदाप्यासुरभावना न समायातु। यत्र आदित्यः अवृजिना अनवद्याः देवास्तिस्ठन्ति, तत्र नासुरतासद्भाव इत्यर्थः। अन्तर्यामिनः दुष्प्रधर्षाः देवाः विविधैः वरप्रदानैः वक्तारं बोधयन्ति। यजमानस्य ऋषेः अन्तःस्थितान् भावान् शश्वत् पश्यन्ति। पापनिवारणं कुर्वन्ति चैतन्यं चेतयन्ति च ! अतः सर्वाः गिरः देवप्रयुक्ताः एव स्युः।

# श्रीमहर्षिज्ञानादचरितं महाकाव्यम्

## स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः

## [ अथ त्रयोविंशः सर्गः ]

सर्वश्रेष्ठो जीवनाधारभूतः, सद्ग्रन्थानां वृद्धिकर्त्ता विभागः ।
प्रेयान् योगीन्द्रस्य शास्त्रप्रकाश, आस्ते, तत्कार्यं सरीसर्त्ति चाग्रे ।।५१।।
तद्योगीन्द्राङ्घ्र्यब्ज सेवारताया, देव्या एतस्याः प्रशस्यात् प्रयत्नात् ।
नित्यं नित्यं नव्यनव्या वरेण्याः, सद्ग्रन्थाः संयान्ति लोके विकाशम् ।।५२।।
दिल्लीपुर्य्यां संगतायां सभायां, हिन्दूकोडाख्यं विधानं विधातुम् ।
दत्तं देव्या तद्विरोधाय नैजं, व्याख्यानं तत्कर्णपेयं सुधीभिः ।।५३।।
अग्रे भूम्यां श्रीमहामण्डलस्य, चातुष्पथ्ये काशिकामध्यकेन्द्रे ।
रम्यं चैकं मन्दिरं श्रीविशालं, शोभाढ्यं सच्चत्वरं चारचय्य ।।५४।।
सा गायत्री, श्रीः, सनारायणश्च, साकं पार्वत्या शिवः श्रीगणेशः ।
वायोः पुत्रः, स्थापिताः सन्ति चैते, शुभ्रा मूर्त्तिश्चापि रम्या महर्षेः ।।५५।।
एतेषां संस्थापितानां सुराणा-, मह्नो मध्ये मध्यरात्राच्च पूर्वम् ।
नित्यं नव्या भोगरागव्यवस्था, प्रातः सायं चास्ति नीराजनं च ।।५६।।
पूजासेवासंरता ये मनुष्याः, सानन्दं संभुञ्जते ते द्विवारम् ।
नानास्वादान् देवताभ्योऽर्पितांस्तान् रस्यान् स्निग्धान् मिष्टमिश्रान् प्रसादान् ।।५७।।
निष्कामा या धर्मसेवासुदक्षा, सत्यज्ञानानन्दपादाप्ततृप्तिः ।
विद्यादेवी श्रीयुता शुभ्रकीर्त्ति-, र्दीर्घं जीव्यात् स्वास्थ्यसम्पत्प्रपन्ना ।।५८।।
विद्याशिष्या ये महर्षेः सहस्रं, विद्यन्ते तन्नामसंकीर्त्तनं वै ।
नास्ते शक्यं, किन्तु तेष्वत्र केचि, न्निर्दिश्यन्ते स्मर्यमाणाः सुधीन्द्राः ।।५९।।
प्रायोऽलभ्यं सुप्रसिद्धं महार्दि, विद्वत्सम्मान्यं महोपाधिमेतम् ।
बिभ्रद्धीमानन्नदापादनामा , विख्यातो यस्तर्कचूड़ामणीन्द्रः ।।६०।।
न्यायः काणादं च योगश्च सांख्यं, मीमांसे द्वे व्याससूत्राणि चैव ।
अध्यैष्टासौ वन्द्ययोगीन्द्रपादा-, दन्योन्यैतद् द्वन्द्वराहित्यपूर्वम् ।।६१।।

(क्रमशः)

## राजनीतिः, शिक्षाव्यवस्था शान्तिश्च

सम्प्रति देशः स्वतन्त्रः । पुरात्र राजतन्त्रशासन-व्यवस्था प्रचलितासीत्, अधुना प्रजातन्त्र-शासन-प्रणाली प्रचलिता वर्त्तते । स्वातंत्र्यामृतपानपरिपुष्टः एकत्रिंश-द्वर्षदेशीयोयं देशः प्रतीयते विषपानप्रमत्त इव सत्तासीध्वा-सवास्वादानुसन्धित्सुरिव स्वसंस्कृतसंस्कृतिसंस्कार-परिष्कृत मध्यस्वाभाव्यभङ्गप्रसङ्गविस्मृत इव दरीदृश्यते ।

हन्त ! किं स एवायं देशः, यत्र परतत्त्वं प्रत्यक्षीकृत्य ब्रह्मणाप्यभ्यानर्षिता ऋषयः परां वाचं चक्षुर्गोचरां चक्रुः । सामगानेन भारतीयान् उपवनान्यारण्यानि आश्रमाँश्च समलंकृताँश्चक्रुः । किं स एवायं देशः, यत्र रामकृष्ण-युधिष्ठिरार्जुनगोतमसदृशा अवतारा महापुरुषाश्च जन्म लेभिरे, स्वीकीयैः शुभैरादर्शैश्च देशस्यास्य धरातलं वायु-मण्डलम्, दिवमन्तरिक्षं च चिदैक्यचमत्कारचाकित्यरोचि-ष्मतश्चक्रुः ? किं स एवायं देशः, यत्र चातुर्वर्ण्यचैतन्यवैचित्र्य संचारणात् विरिञ्चरचनासंचालनम् सुव्यवस्थापितम् ? निश्चप्रचं वक्तुं शक्यते न इति !

सत्यम् अद्य वेदाः विहृत्य विदार्य च वीथीषु विक्षि-प्यन्ते, शास्त्राणि शीर्य्यन्ते रामायणसदृशधर्मेतिहास-काव्य-ग्रन्थाः जातवेदसः ज्वालासु प्रज्वाल्यन्ते, आश्चर्यमेतन्नैतान्य-कार्याणि पापाचरणानि च दुराचर्यन्ते विधर्मिभिः अपितु आर्यसभ्यतां स्वीकुर्वद्भिः हिन्दुभिरेव । सर्वमिदं दौर्भाग्य-विजृम्भणमेव भारतस्य ! राजनेतारः स्वार्थसाधनदुरुद्देश्य-दीक्षिताः मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यदित्युक्तेः प्रतीकाः वर्गविद्वेषं वर्द्धयित्वा जनमनःसु परस्परं वैमनस्य-वैश्वानरं प्रज्वाल्य शान्तिं समीहन्ते, शोचिष्केशशिखासु शैत्यमेभिरन्विष्यते ।

सम्प्रति प्रचलितया राजनीत्या देशः दुर्दशाभिः सग्रा-सित एव । पुरा राजनीतिः प्रजारञ्जनमुद्दिश्य व्यवा-ह्रियत । परिणामतः सा सर्वजनकल्याणकारिणी संवृत्ता प्रवृत्तासीत् किन्तु अद्य निर्वाचनचयनस्य विषमयप्रक्रियादूषि-तेयम् सम्प्रति देशं नाशाय-समर्पयितुं कृतसंकल्पा दरी-दृश्यते । सर्वतः सर्वग्रासिनो अभावा एव सर्वथा सम्भूय-स्यन्ति ! समाजव्यापिन्या दुरुच्छृङ्खलतया जनजीवनं नितरामेव कष्टमयं दृश्यते ।

देशे दिशाहीनानि सर्वाणि दलानि । जनताऽपि पोत-भङ्गे प्राणारक्षणार्थम् प्राणपणेन यथाकथमपि आश्रयत्वेन प्राप्तकाष्ठपटलपरिग्रहणप्रयत्न–परायणानां सांयात्रिकाणां सम्मर्दइव वर्त्तमानान् दिग्भ्रान्तान् निरस्तपादपेदेशे एरण्डोऽपि द्रुमायते इतिवत् एरण्डखण्डसंकाशान् नेतॄनेव मार्गदर्श-कान् मन्यते । परिणामः साक्षात् परिलक्ष्यते-अन्धेन नीय-मानाः यथान्धाः लक्ष्यं नाक्षिगोचरीकर्तुं शक्नुवन्ति तथै-वाद्य देशोऽपि प्रतीयते दिशाहीन इवैव ।

एतस्यामेव अप्रत्याशितायां परिस्थितौ शिक्षायाःशकटः त्वरया विरहितः करुणया चटचटाकृत्यैव चलति ! पश्यन्तु तत्रभवन्तः प्रेक्षका अस्य भारतशिक्षानाटकस्य दुरभिनेयतां !

इमे प्राचार्याः सन्ति ! केपि साम्यवादिनः, केपि जन-सङ्घिनः केऽपि केवलं सङ्घिन केऽपि केऽपि सम्प्रदायिनः नैकेऽपि निष्पक्षं शिक्षाशास्त्रिणः ! ते देशं स्वेच्छया चरन्ति, स्वमान्यताधमन्यां विद्राव्य स्वानुकूलान् छात्रान् निर्मित्सन्ति । इतरमतवादिभ्य जुगुप्सां च जनयन्ति ।

इमे छात्राः मर्यादाः निर्ममतया प्रोन्मथ्य निरपत्रपम् अतिचारे रमन्ते । सम्प्रति विचित्रा जन्तव इव दृश्यन्ते । तद्यथा शिरसि शात्रुघ्नाः, शरीरसज्जायां स्त्रियः, चलचित्रे-श्वराणां लाभाश्रयत्वात् सर्वाधिकं तेषां प्रियाः, अग्निदाह-कर्मणि दक्षाः शीशककाचकुट्टनकुशलाः, अवैधशस्त्रगुलि-कादिदुष्कर्मरताः, छुरिकागुटिकागुणाग्रगण्यत्वात् परीक्षकैः

प्राप्तसर्वाधिकाङ्क्षाः एतादृशसर्वदुर्गुणसम्पन्नाः केवलम् प्रापणीयज्ञानविज्ञानवञ्चिताः, देशस्य भाविनः अयोग्यतमनागरिकाः वक्रतया विराजन्ते, समूलघातं च देशं घ्नन्ति।

अपरश्चैषां गण्डस्योपरि स्फोटः छात्रसंघः। तत्र प्राप्तं धनं, तस्य उपभोगः, नेतृपदलोलुपता ! छात्रसङ्ग्रंथनसंघटनरोगः सर्वथा विवृद्धः समस्तान् विद्यालय—महाविद्यालयविश्वविद्यालयान् राजयक्ष्मलक्षितान् व्यधात्-नास्त्यत्रसंदेहलेशः। परिणामत' प्रायशः विश्वविद्यालयाः विवृतसंवृताः, अनावृततायां पुनः पुनः कलहकोलाहलत्रोटन-स्फोरण ज्वालनहिंसनादि कुकृत्यैः ते त्वरितं पौनः-पुन्येन संवृता भवन्ति ! पठनं पाठनं ३६५ दिवसेषु प्रायः ६५ दिनमपि भवति न वेति न वक्तुं शक्यते। इयमेवोच्चशिक्षायाश्चित्रम्।

एतस्यामवस्थाया शान्तिः ? का वार्ता शान्तेः ? सा तु कपोतग्रीवासुसन्देशरूपेण आकाशपथगामिनी पृथ्वीं विहाय विहायसि स्थिता ! पुनरपि शान्तिस्तु सर्वथैव भाव्या एव। सा शिक्षाक्षेत्रे केन प्रकारेण भवतु इत्येव विचारणीयो विषयः।

शिक्षाक्षेत्रे शान्तिस्तु प्रतिक्षणमपेक्षिता भवति। अपरिपक्वमस्तिष्कगुहागहनान्धकारकीलनपूर्वकम् प्रकाशप्रसारः एव शिक्षायाः उद्देश्यम् भवति। विद्यालयाः न सन्ति कस्यामप्यवस्थायां राजनीतिशिक्षणप्रशिक्षणप्रयोगस्थलाः न तत्र काप्यावश्यकया भवति छात्रसंघस्य। न तत्र गुरुशिष्ययोः कौचित् कलहकोलाहलौ कल्पेते। परस्परमनयोः काचित् न तु संघर्षकल्पना, नापि द्वन्द्वः। केवलं पठनं केवलं पाठनम् देशगतसंस्कारदृष्ट्या सम्यग्ज्ञानवर्धनं वा तत्रत्यं लक्ष्यम्। आपतेत् चेत् किमपि वैरस्यं तदर्थं भवेदेव काचित् शासनद्वारा स्वतंत्रा व्यवस्था अथवा कुलपतिप्रयुक्तमनुशासनतंत्रम्। न तत्र गुरुशिष्ययोः हस्तक्षेपः अनिवार्यः। अस्मिन् सन्दर्भे वक्तुं शक्यते यत् शासनद्वारा छात्रसंघसंघटनयोजना निरस्ता घोषिता भवेत्। सर्वप्रकारककलहबीजम् अस्मिन् संघटने एव विद्यते।

ये इत्थं कथयन्ति यत् अस्मिन् जागरूके युगे इदं प्रजातन्त्रविपरीतं भविष्यति ते वास्तविकतां निश्चप्रचं समुपेक्षन्ते। न विद्यालयेषु प्रजातन्त्रप्रणाली लाभप्रदा, केवलं हानिप्रदा एव। पुरातनः गुरु-शिष्यसम्बन्धः एव सर्वथा स्थाप्यः, न तत्र प्रजातन्त्रप्रणाली महाप्राणत्वं प्रणेष्यति। गुरुशिष्ययोः मध्ये इयती आत्मीयता आसीत् पुरा—यथा अयुतान्तेवासिनां पालयितारः गुरव एव कुलपतयस्तदा अभूवन्। ध्रुवमेतन्मदीया धारणा यत् संघनिर्वाचनेषु ये अध्यक्षादयः पदासीनाः निर्वाच्यन्ते ते पदलोलुपतालालसाः राजनीतिप्रेरिताः अध्ययनस्व्याध्यायविरताः सर्वप्रकारकविषमसमस्याजनका एव भवन्ति। त एव सर्वदैव अशान्तिं कामयन्ते। वैविध्येन अनपेक्षितान्यपि कलहकारणानि प्रादुर्भावयन्ति। परिणामतः गतिरोधः भवति निखिलं निर्माणं अवरुध्यते, विनाशलीला च परिचाल्यते सम्प्रति इयमेव दशा सार्वत्रिकी दरीदृश्यते। किमेतस्याः समस्यायाः निदानमितिसर्वे तूष्णीमेव स्थिताः सन्ति इति महत्कष्टम्।

अस्मिन् सन्दर्भे बहुभिः विद्वद्भिः बह्व्यः शिक्षायोजनाश्च प्रस्तुताः सन्ति किन्तु न तत्र मूलसमस्यानिदानम् वर्त्तते। एतदर्थं किमपि प्रस्तूयतेऽस्माभिरपि—

१—शासनद्वारा शिक्षाक्षेत्रे सर्वविधसंघटनानामवैधत्वघोषणा।

२—माध्यमिकस्तरे लब्धपञ्चाशत्प्रतिशताङ्का एव छात्राः विश्वविद्यालयेषु प्रवेशार्हाः इति घोषणा।

३—अन्ये पञ्चाशत्प्रतिशताङ्कादपि न्यूनतया उत्तीर्णाः छात्राः सामान्यकृषिकर्मणि, वयने, तन्तुसन्ताने

अन्येषु वा सामान्य—सामाजिकयंत्रमयसेवाकर्म—दीक्षिताः सर्वथा समाजं संविष्यन्ते ।

उच्चश्रेणीमधिगताः विश्वविद्यालयेषु एकं लक्ष्यं कृत्वा विभिन्नज्ञानविज्ञानदीक्षिताः स्वप्रतिभा – परिष्कारेण महत्वमावक्ष्यन्ति ।

४—कोपि राजनीतिपरः नेतानामधारी विद्यालयेषु पदमपि न आदध्यात् । कुलपतिरेव तत्रत्यः सर्वव्यवस्थापकः स्यात् ।

५—कलहकृद्भ्यः छात्रेभ्यः सुदूरग्रामप्रदेशेषु कृषिकर्मणः पञ्चवर्षीया योजना नितरां शासनद्वारा व्यवस्थाप्या ।

६—परीक्षायाः व्यवस्था केवलं माध्यमिकस्तरपर्यन्तम् भवेत् । उपरितनासु कक्षासु गुरुजनप्रमाणसम्मतिम् आधृत्य कुलपतिः प्रमाणपत्रं वितरेत् ।

७—प्राथमिकतः माध्यमिकविद्यालयपर्यन्तम् सर्वेषु विद्यालयेषु नैतिकशिक्षा धर्मशिक्षा समाजशिक्षा आचार शिक्षा अनिवार्यविषयाः भवेयुः । तत्र उत्तीर्णतापि अनिवार्यतः शासनद्वारा जोधुष्येत । इति सप्तसूत्रीयया योजनया शिक्षाक्षेत्रे निश्चप्रचं शान्तिः भविष्यतीति शम् ।



पूर्वतोऽनिवृत्तम्

# संस्कृत काव्यानि

—वि० कृष्णस्वाम्ययंगार्यः

**भारविः—**

बहवो हि कवयोऽसंख्यातान् ग्रन्थान् विरचय्य कीर्तिमासादयितुं यतन्ते । कविकुल ललामः कालिदासोऽपि सप्त ग्रन्थान् कीर्तिलाभलोभेनैव विनिर्ममे । परन्तु भारविरेकेनापि काव्येन संस्कृतसाहित्ये महान्तमादरपूरितं बहुमानमधिजगाम । किरातार्जुनीयमित्येकं काव्यम् अधुना याव त्तस्य कृतिरित्युपलब्धम् । अथापि कालिदासादानन्तरम् भारविरेव स श्रेष्ठः कविः परिगण्यते । अस्यकवितायाअर्थगाम्भीर्यं मीदृशं दृश्यते यद् व्याख्यातारस्समुचितान् भावान् सम्यक् प्रतिपादयितुम् क्वचित्क्वचिदसमर्थाः भवन्ति । राजनीतावप्यस्य वैदुष्यमात्यन्तिकमासीदीति किरातार्जुनीयस्य सूक्ष्मेक्षणिकया पठने प्रकटीभवति ।

विवक्षितार्थमात्रप्रतिपादकानन्यूनानातिरिक्तवृत्तीनेव शब्दानुपाददानो भारविः कवीनामग्रिमम् स्थानमधितिष्ठति । एनमनुकुर्वाणो माघोऽपि महाकवीनामुत्तमोबभूव, किमुतास्यैवादर्शरूपस्य विषये वक्तव्यम्-किरातार्जुनोयं काव्यं भारतीयानामतीव प्रियमित्येतावता भारवेरुत्कर्षः शक्यः सम्भावयितुम् । क्रि. श. ६३४ वर्षीये शासने भारवेरपि नाम्ना निर्देशात् स षष्ठशतकस्य इत्यनुमीयते । अस्य काव्यात्कतिचन प्रयोगाः "काशिकावृत्ता" वुदाहरणतयोद्धृताः । वृत्तिश्चेयं ६४० कि. श. वर्षे विलिखितेति प्रमाणान्तराणि द्रढयन्ति । तस्मादपि भारविः षष्ठशतकस्य इति समभ्यूहस्सम्भवति । बाणभट्टेनास्य नामानुलेखान्नायमतीव प्रचीना भविष्यति । काव्यस्यास्य रामणीयकं पाठक-

खलोकनीयम् । महाभारतात्कथामुपाददानः कुत्रचिद्वि पर्यासमूरीकरोति । दूतसम्प्रेषणं, दूतस्य युधिष्ठिरसविधमागम्य सुयोधनराज्यवृतान्तनिवेदनम् , इन्द्रस्यार्जुनसमाधिभङ्गप्रयत्नः, मूकनाम्नोऽसुरस्य वराहरूपधारणेत्यादिका विषयाः कविना स्वकपोलकल्पितास्सचमत्कारमुपवर्णिताः । वर्णनानैपुण्यञ्चात्र कवेरितिवृत्तस्यातिह्रस्वत्वादधिकं शोभते । नगरार्णवशैलर्तु प्रमुखप्रकृतिदृश्यवर्णने कवेरप्रतिमा कृतहस्तता रसिकानानन्दयति । पञ्चदशे सर्गे चित्रबन्धमानामुपयोगादपि पाण्डित्यमस्य संप्रदर्शितम् । यद्यपि शब्दचित्राणामतिदुरूहार्थतया चामत्कारिकार्थप्रतीत्यनुपयोगितया च काव्यत्वव्यवहारासाधकत्वमभिसंहितं जगन्नाथेन, काव्यतामंगीकुर्वाणैरपि मम्मटादिभिरेषामधमवर्गीयत्वमभ्यधायि, तथापि शाब्दचमत्काराणामपि, परम्परया रसपरिपोषकारणत्वविरहेऽपि, सहृदयहृदयाह्लादजनकता प्रत्यक्षतस्साक्षात्कृतेत्यतः काव्यलक्षणमेव विपर्यस्य शब्दचित्राणामुपसंग्रहः कर्तव्य इत्याधुनिका विमर्शकाः । पाश्चात्यास्त्वतिशयोक्त्यादावर्थालङ्कारेऽपि निवृत्ताभिरुचिविशेषाः शाब्दिकानाडम्बरान्निरर्थकानेव मन्वते । भारतीयानां प्रिया इत्यतोऽलङ्काराणामेषामुपयोगो भारव्यादिभिरादृतः । एकाक्षरं, द्व्यक्षरम् निगोठ्यम्, अर्धभ्रमकम् सर्वतोभद्रमित्यादिन्यलङ्करणानि भारवेः पाण्डित्यशक्तिमाविष्कुर्वन्ति । काव्यमेतन्नितान्तं रमणीयं गम्भीरगूढभावार्थोपबृंहितञ्चोपलभ्यते । यदाहुः किंवदन्तीप्रिया भारतीयाः --'भारवेरर्थगौरव" मिति ।

**माघः—**

शिशुपालबधमित्येकं काव्यमनेन व्यरचि । एतेनैकेनैव काव्येन भारविरिव माघोऽपि महाकविपदवीमलभत । यद्यप्यस्य कुमुद्वनमपश्रि श्रीमदम्भोजखण्डं त्यजति मुद्रमुलूकः प्रीतिमांश्चक्रवाकः । उदयमहिमरश्मिर्याति शीतांशुरस्तं हतविधि निहतानां हा विचित्रो विपाकः (११—६४) पद्यमाकर्ण्य प्रमुदितचेता भोजराजोऽक्षरलक्षप्रदानेनैतं बहुमन्यते स्मेति जागर्ति काचित्सार्वजनिकी प्रतीतिः तथाऽपि नैतया माघस्य कालानिर्धारणे कश्चिदुपयोगः, यो भोजराजास्थाने कालिदासभवभूत्यादीनामितरेषां विभिन्नकालिकानामिवास्याऽपि प्रशंसनीयप्रतिभस्य स्थानमासीदिति केनचित्कल्पिता सा किंवदन्ती । भवभूतिर्हि कान्यकुब्जस्याधिपतिं यशोवर्माणं नाम नृपतिमशिश्रयादिति, यशोवर्मा च क्रि. श. अष्टमशतकस्य पूर्वार्धं राज्यमकार्षीदिति संस्कृतनाटकानीत्यास्मन्ग्रन्थे मया निरूपितम् । कालिदासस्तु पञ्चमशतकस्थः भोजराजोऽपि याभ्यां समानकालिकः अपित्वेकादशशतकस्थ इति प्रामाणिकैर्निर्णीतमस्ति । कथममोषामेककालिकत्वं केनचिददृष्टाकरण—वचनेन प्रत्येतुं शक्यते ? तस्मान्माघस्य कालनिर्णये प्रमाणान्तराण्यावश्यकानि। माघस्तावत्सर्वत्र भारविमनुकरोति । यथा—भारविः काव्यारम्भे श्रिय इति पदं प्रयुयुजे, एवं माघोऽपि। यथा भारविः प्रतिसर्गान्तं श्रीपदमविच्छिन्नमुपयुङ्क्ते तथा माघोऽपि। काव्यान्ते माघेनैव श्रीशब्दरम्यकृतसर्गसमाप्तिलक्ष्मेति कण्ठरवेण प्रतिपादितञ्च । पञ्चदशसर्गे भारविरिवैकोनविंशसर्गे माघोऽपि चित्रश्लोकान्निर्ममौ । भारविणोपयुक्तान्यधिकान्यपि वृत्तानि निरवशेषं माघः स्वीकरोति । यथा च भारविर्वननदीगिर्य्यादिकमप्रस्तूय कथामुपवर्णयामास, माघोऽपि तमनुकुर्वाणस्तथैव श्रीकृष्णस्य हस्तिनावतीप्रयाणावसरे रैवतकपर्वतादीनां वर्णनमारचयन्प्रधानां कथां विस्मरति । भारविः शिवोत्कर्षप्रतिपादिकामिव माघो विष्णूत्कर्षपर्यवसायिनीं कथां महाभारतादेव वस्तुत्वेन

परिजग्राह। एवमुपलभ्यतेऽनयोस्सादृश्यम्। अथाऽपि माघस्य प्रतिभासम्पत्कल्पनाशक्तिवर्णननानैपुण्यं विषयप्रतिपादनसारणिश्चान्यादृशीं शोभामावहन्तीत्येतस्य कीर्तिरनवद्या जागर्ति। अनुकरणलक्षणानां परिस्फुटत्वेपि स्वतंत्रकविताचमत्काराणामनर्गलमुपनिबन्धादादरणीयता काव्यस्यास्येति। तथा च भारवेरयमर्वाचीन इति सिध्यत्येव। म्याग्डोनलस्तु श्रीहर्षवर्धनकालेऽस्य कवेर्जन्मपरिग्रहे बाणभट्टेन स्वमित्राणामन्येषामिव कवीनामस्याऽपि नाम्नोलेखो व्यरचयिष्यत। श्रीहर्षश्च ५९० क्रि० श० वर्षे समुत्पन्नः ६०६ क्रि० श० वर्षे पट्टाभिषेकमवाप, ६४९ तमेवर्षे च परलोकं प्रायासीत्। ६४० ए० डी० वर्षे कृता काशिकावृत्तिः जिनेन्द्रबुद्धिनाम्ना जैनपण्डितेन विरचितो न्यासाख्यस्तस्या व्याख्यानरूपश्च ग्रन्थः माघेनोल्लिखितौ। द्वितीयसर्गे अनुत्सूत्रपदन्यासा सद्वृत्तिस्सनिबन्धना। शब्दविद्येव नौ भाति राजनीतिरपस्पशो (श्लोक ११२) त्यत्र श्लिष्टविशेषणसाम्याच्छब्दविद्याराजनीत्योस्सादृश्योपन्यासात्। तस्मात् जिनेन्द्रबुद्धिप्रमुखेभ्योऽर्वाचीन एव माघो नवमशतकस्यादिभागेस्यादित्याह। कीथपण्डितस्त्वेन्नानुमनुते। "उदाहृतैः कारणैर्माघास्यार्वाचीनत्वमात्रप्रतिपादनाच्छतकद्वयविलम्बो कल्पयितुं शक्यः। सर्वाधिकारी सुकृतधिकारः श्रीधर्मनाभस्य बभूव राज्ञः। आसक्तदृष्टिर्विरजास्सदैव देवोऽपरः सुप्रभदेवनामा॥१॥ भवत स्यहृत्तक इत्युदात्तः क्षमी मृदुर्धर्मपरस्तनूजः यं वीक्ष्य वैयासमजातशत्रोर्वचो गुणग्राहि जनैः प्रतीये ॥२॥ इति माघेनैव स्वपित। महः सुप्रभदेवो धर्मनाभराज स्यामात्य इति स्पष्टम् लिलेखप्रभदेवश्च धर्मनाभापराभिधानस्य वर्मलातस्यैवामात्यो लातश्च ६२५ क्रि० श० वर्षं राज्यमकार्षीदिति शिलाशासनात् अगम्यते। तथा च सुप्रभदेवस्य पौत्रो माघोऽपि सप्तमशतकस्यान्त्यभागे भारतमलचंकारेत्ये वाङ्गीकार्य मिति तस्याशयः।

माघकाव्यञ्च व्युत्पित्सूनामतीवोपकारकं, सर्वेषामपि परिचितशब्दानामत्रान्विष्यान्विष्य प्रयोगात्। नवसर्गे गते माघे नवशब्दो न विद्यते इति प्राचीनानां प्रशंसोक्तिमाघस्य विषये सत्यमेव वर्णशश्चरितार्था दृश्यते। प्रसिद्धानामेव भूयसां शब्दानां दुर्विज्ञेयार्थानामुपयोगान् व्याख्यानसापेक्षमपि काव्यंरसिकाना माह्लादकमेवैतत्। द्वितीयसर्गे राजनीतिर्माघेन सविस्तारं वर्णिता भारवेरनुकरणं स्पष्टयति। नानाविधाः कविताचमत्कारा माघस्य कवित्वशक्तिमनुगृह्णन्ति षष्ठसर्गे यमकानुप्रासादयोऽर्थालङ्कारैरुपस्कृताः शाब्द चमत्काराः काव्यशोभामत्यधिकं पुष्णन्ति। जलविहारवर्णनादिकञ्च कवेरुत्कर्षं साधयति। सूर्यास्तमयः चन्द्रोदयो मद्यपानं बाह्याभ्यन्तर सुरतमित्यादयो रसिकंरास्वादनीया विषयाश्चतुरेण कविना सम्यगुपवर्णिताः। षोडशसर्गे द्वात्रिंशत्पद्यान्यर्थद्वयगर्भाणि ग्रथ्नतो माघकवेरसाधारणः प्रौढिमा भाषाप्रयोगचातुर्यञ्च व्यक्तिमुपगच्छतः। सर्वथा काव्यमेतत्किरातार्जुनीयादपि मनोहरतरं वाचकानान्दयितुमलमिति विमर्शकानामाशयः।

### भर्तृहरिः—

नीतिशतकम्, श्रृंगारशतकम् वैराग्यशतक ञ्चेति त्रीणि शतकानि भर्तृहरिणा विनितानि। बाक्यपदीयकारो वैयाकरणो भर्तृहरिः शतकत्रयनिबन्धकात्कवे विभिन्नएव। न हि शास्त्रेषु व्यासक्तमतिः कर्कशपदानां परिचयमधिकं संपादितवान् कश्चन पण्डितः कविपदवीमलङ्कर्तुं शक्नोति। ललितरमणीया कविता कन्या कर्कशकठिन-कठोर-क्रूरकरालानां शास्त्राणां

सम्पर्कं न जानुचिदतेक्षेत। कविताशक्तिर्नाम व्युत्पत्त्यभ्यासलभ्याऽपि प्रतिभा-नियम्या--स्वाभाविकी जन्मसिद्धा काचित्स्फूर्तिरेव, अन्यथा नितरां शास्त्र-व्यासंगानन्तरं तीक्ष्णमेधाशक्तीनां काव्यनिर्माण-प्रसंगात्। "न हि कवित्वशक्तिरभ्यासतो भवति, न न शिक्षणात्। एषा च जन्मान्तरसंस्कारप्राप्या काचिच्छास्त्रविदामस्वाधीना विशेषते" ति पश्चात्यानामपि प्रवादः। तस्माद्वैयाकरणो भर्तृहरिः काव्यनिर्मातुर्भिभ एवेति युक्तमुत्पश्यन्ति स्म विमर्शकाः। तथाहि-वैयाकरणो भर्तृहरिः बौद्धमतावलम्ब्येव। तस्य ब्राह्मण-मते प्रवेशो बभूवेत्यत्र न किमपि प्रमाणम्। ६९० क्रि. श. वर्षे चीनायात्रिकेषु प्रख्यातो 'इत्सिंगः (Jitsing) एष "भर्तृहरिर्नाम वैयाकरणः चत्वारिंश-शद्वर्षेभ्यः प्राक् बहुधा ख्यातिमलभत। चञ्चलस्व भावस्सोऽयं सप्तवारान्बुद्धमतं प्रविश्य पुनरपि वैदिकमार्गमेवान्वसार्षी" दितिव्यलिखत्। अयं वैयाकरणः इति वदन् इत्सिगो भ्रान्तो वितर्क्यते। प्रमाणान्तरैः कविर्भर्तृहरिरेव तस्मिन्कालेऽविद्यतेत्यनुमानात्। भर्तृहरिरेक एवेति म्याक्डोनलस्च वचनमश्रद्धेयमेव।

श्रृंगारशतकन्तावदस्य कवेः कृतिषु, रत्नमिति व्यपदिश्यते। प्रथमतः स्त्रीसहवासस्य रमणीयतां विषयोपभोगेनै वात्मनः कृतार्थतां स्त्रीसंपर्कहीनानामधन्यानामपुण्यशालिताञ्च सचमत्कार मनुसन्दधानः कविः प्रसंगेन रमणीवर्णनमप्यंगीकरोति। एकैकस्मिन्नपि पद्ये कवित्वचमत्कारलक्षणान्काल्पनिकान् विषयानवलम्ब्य सुरुचिरमुपन्यस्यति। महाकवीनामतिदुर्गमं पन्थानमनुसरन्नेष कविर्वयोगुणानुरूप्येण प्रथमं श्रृंगार रसमेव पुरश्चकार। ततश्चातिक्रामति काले, जराजीर्णेष्वंगेषु, विषयोपभोगविमुखे चेतसि पारलौकिक-हित-सम्पादनायोपायानालोचयति, परमेश्वरपादपंकज-पूजनमेव पारमार्थिक-सुख-सन्तान-वितरण-क्षममित्यभिसन्धाय संप्राप्त वैराग्यः कविरसौ वैराग्यशतकस्य पीठिकारूपं स्त्रीविगर्हणकाण्डमारभत। विषयसुखस्य क्षणिकतामाकलयन्वार्धक्योचितां मनोवृत्तिमुपदर्शयामासेत्यतो वैरग्यशतकं जीवनस्योत्तारसन्ध्यायां निर्मितमित्यनुमीयते। श्टंगारवैराग्यशतकयोरुभयोरप्येतत्कर्तृकत्वे न संशयलेशवार्ताऽपि।

नीतिशतकमप्येतत्कर्तृकमेवेत्यधुना निर्णीतम्। अत्र च कानिचित्पद्यानि ग्रन्थान्तरतोऽनूदितान्युपलभ्यन्ते। शाकुन्तलमुद्राराक्षसतंत्राख्यायिकादिभ्यो ग्रन्थेभ्यः केषाञ्चिद्भावानुवाद केषांचित्तु समानानुपूर्वीकाणां शाब्दानुवादोऽपि व्यरचि वैराग्यशतकेऽपि तादृशान्यनूदितानि पद्यान्युपलभ्यन्त इति विमर्शकानां नूतनमन्क्षेषणमुपपादयामास। मुद्राराक्षसकारश्च विशाखदत्तास्तावत् भरतवाक्ये म्लेच्छपदमुपयुञ्जानो महम्मद् घोरि नामानं तुरुष्कं निरदिक्षदित्यतस्तस्य कालः द्वादशशतकमित्येके। अष्टमशतकात्प्राचीन एवायमिति म्याग्डोनलादयः। कीथपण्डितस्त्वेनं नवमशतकस्थमभ्यधासीद्। 'कीथ : मतानुसारेण तु मुद्राराक्षसात्पद्यानुवादो भर्तृहरेरनुपपन्नः। तस्मात् विशाखदत्तेन भरतवाक्ये 'अधुना चन्द्रगुप्तोऽवतु इत्यादि वर्तमानत्वप्रत्यायकशब्दप्रयोगादस्य कालिदाससमानकालिकत्वं सम्भाव्यमानं संगतमिति संस्कृतनाटकानीतिग्रन्थे विस्तरेण निरूपितम्। नीतिशतके च दश पद्धतिषु जनानां स्वभावः विद्यामाहात्म्यमित्यादयो विषयास्सम्यग् वर्णिताः। कर्मणैव सर्वफलप्रलप्राप्तिः, देवतानामपि निग्रहानुग्रहौ कर्माधीनावेवेत्येष कर्मयोगपक्षपातिनां वादः प्रतिबिम्बितः। नियतिवादस्य च संपूर्णरमणीयरागमत्र

क्रमशः

# "आक्षेप निराकणम्"

**प्रेषकाः-श्रीमन्तः श्रीचन्द्रदीपशुक्लाः "संस्कृत सम्मेलनम्" सम्पादकमहाभागाः, पटना**

१९७७ खीष्ट्राब्दीये दिसम्बरमासात्मके "सूर्य्योदया" मिधे पत्रे "पत्रपत्रिकाप्रकाशनेऽनवधानम्" इति शीर्षात्मके अभिलेखे पटनातः प्रकाशिते १९७७ रवीष्टाब्दात्मकाक्टूबर मासिकेङ्के "संस्कृत सम्मेलनम्" मुखपत्रे संस्कृतसेविपरिचयः' इत्येतन्नाम्निलेखे विद्वत्तल्लजानामितिपदं भवत्यपाणिनीयं विद्वच्छब्दस्य जातिवाचकत्वाभावात्प्रशंसावचनैश्चेतिसूत्रस्याजातिवाचक-पदेनसह प्रशंसावाचकतल्लज शब्दस्य समास—विधावप्रवृतेरित्युद्घोषितन्तन्न युक्तम् । विदुषःतल्लज इति विग्रहे सामान्यसम्बन्धे षष्ठीति सूत्रस्य प्रवृत्तौ समासाक्षतेः । अन्यथा १९७१ विक्रमाब्दे क्षेमराज-श्रीकृष्णदास-प्रकाशिते वैयाकरणसिद्धान्तकौमुद्याः प्रस्तावनायान्तत्र शेषकृष्णशिष्येण विद्वत्तल्लजेन "विद्वत्प्रकाण्डै र्हृदयाधिष्ठितेववरिवस्यते" इत्यादि वाक्यप्रयुक्त विद्वत्तल्लजविद्वत्प्रकाण्डशब्दयोर्विलयापत्तिस्स्यात् ।

अथैतस्मिनेव प्रघट्टके "मेधाविछात्रैः" तीव्रबुद्धिछात्राणाम्" इत्यनयोः छेचेतिसूत्रप्रवर्त्तनामकृत्वैव लेखकेनानवधानताव्यरचीत्युक्तन्तत्रेदं वाच्यम् । वहुधा कृतेऽपि प्रूफसंशोधने मुद्रकानवधानतावशादेवैषाशुद्धिः । अस्मादेव कारणाद् भवल्लेखेऽपि बहुषु स्थलविशेषेषु बहुधा अशुद्धयस्स्वाक्षिगोलकमनवलोक्यैव परदोषप्रेक्षणमिति लोकोक्ति स्मारयन्ति । तद्यथा—"साहित्य-समुद्र-मन्थनसमुद्भूतामृतास्वादरसज्ञानां पत्रपत्रिकासु" इत्यत्र भूतशब्दघटक 'भू' इत्यस्यापि पार्थक्यं स्वादशब्द-घटितदकारादर्शनं रसज्ञानां पत्रपत्रिकासु इत्यत्र च कस्याप्नुनासिक विधायकस्य सूत्रस्या प्रवृत्तावपिमकारस्यानुनासिकत्वदर्शनं किं भवतोऽनवधानतां न प्रकटयन्ति ?

श्रैमत्कशब्दस्यार्हीयेण ठक् प्रत्ययेन साधुत्वाद् भवतानोद्वेजयितव्यः । किमिति विचित्रम् इति शीर्षकसम्बद्धं छन्दोविहीनं काव्यमत्रैव दिग्भ्रमित इति व्याकरणशासनविहीनं पदं दर्शं दर्शमपि कविरुत्साहयितव्यः । छन्दसोऽशुद्धिर्न परिगणनीया । प्रायश आधुनिका कवय एतद्विषयेऔदासीन्यमवलम्बन्ते । दिग् भ्रमितः पदं ण्यन्तभ्रामीत्यस्मान्निष्ठायां साधुत्वं लप्स्यते । तस्माद् यद्येवं वाच्यंस्याद्यल्लेखकाक्षेपकयोर्गतेस्तुल्या तदा नास्ति काचन क्षतिरेकस्य छन्दसोऽज्ञानत्वाद् अपरस्य च शब्दसाधनाज्ञानत्वाद् गतेः साम्यम् ।

सम्पादकीये वारद्वय प्रयुक्ते वाङ्मयमिति पदे गकारेक्षणमपि नानवधानतां व्यनक्ति लेखकस्येति । प्रत्युत मुद्रकदोषानुभूति परिपक्वमतेरेतादृशस्थलेषु मुधाध्यानवतो भवत एव ज्ञानाल्पतामीर्ष्यालुतां वा प्रकाशयति । किञ्चात्रैव सम्पादकीयेऽन्तिमेनुच्छेदे "सतुतत्रविशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः" इति भवभूतिसूक्त्यनुसारेणेति वाक्ये भवभूतिरिति पदन्नकस्यचिद् व्यक्तिविशेषस्य विशेषसंज्ञात्वं भजत्यपितु भवस्य भूतिः भवभूतिः संसारकल्याणमिति भावस्तदर्थंया सूक्तिस्सा भवभूतिसूक्तिरिति रीत्या सम्पादकस्यावधानत्वमङ्गीकरणीयम् । यद्यप्युक्तश्लोकांशो भारवेर्भाति तथापि भवभूतिसूक्त्यनुसारेणेति कथनमुपर्य्युक्तशास्त्रार्थरीत्या दर्त्तव्यमेवेति । किञ्चैतादृश-प्रघट्टके एव चलतस्स्खलनं क्वापीत्यनुसन्धातव्यं भवति । यद्येवन्नाङ्गीक्रियते तदा भवानपि नूनमनवधानकत्वं लालप्स्यते । तथाहि "भारतोदय" नाम मुखपत्रे ह्याक्षेप-प्रकाशन-विधौ भवता प्रयुक्ते "रवीष्ट्राब्दीय-जुलाय्यगस्तसितम्बराक्टूबर-

मासिकेऽङ्के" इति वाक्यांशे रेखाङ्किताशुद्धित्रयं प्रेक्षावतां दृष्टौ किं भवतोऽनवधानतां न स्थापयति ? किञ्च जुलाय्यादीनां मासशब्देनान्वये जाते जुलाय्यगस्तसितम्बराक्टूबर मासशब्दादेव ठकि प्रत्यये जुलाई-घटक-जकारोत्तरवर्त्युकारस्यैवाद्यच्त्वात्तस्यैव वृद्धिर्भविष्यति मासशब्दान्तर्गतमकारोत्तरवर्त्यकारस्याद्यच्त्वं विज्ञाय तस्य वृद्धिकरणं भवतो भयङ्कर्य्यनवधानता । अपरञ्चविद्वत्तल्लजशब्दे लेखकेन प्रयुक्ततल्लजशब्दस्य स्थाने मतल्लजशब्दस्येत्यादिभणितिः पाठकान्नोद्वेजयिष्यति किम् ?

भवदीये सूर्य्योदयाख्ये पत्रे श्रीवासुदेवद्विवेदि—शास्त्रिणामभिलेखे दुर्दिनेषु वीरोऽपि वराको भवतीति पङ्क्तौ दन्त्योष्ठवकारे प्रयोक्तव्ये मूर्द्धन्यवकारप्रयोगः किं शास्त्रिमहोदयानां ज्ञानाल्पतां सूर्य्योदयपत्रस्य चासौन्दर्यं द्योतते नेति भावोऽपितु सर्वथा मुद्रणालयदोषः प्रतीयते ।

अनवधान—प्रकाशन—प्रसङ्गे "दिव्यज्योतिः" संज्ञके पत्रे "सप्तसप्तत्युत्तरैकोनविंशे" इति प्रयोक्तव्ये सप्तसप्तत्युत्तरैकोनविंशे इति भवद्वाक्येष्वनावश्यक रेफाधिक्यप्रयोगः गैर्वाण्यामाक्षेपप्रकाशने" एतस्या एव पत्रिकाया नवमे पृष्ठे इति वाक्ये पत्रिकायाः नवमे पृष्ठे प्रयोक्तव्ये पत्रिकायाः प्रयोगः, सर्वगन्धायाः सम्पादकीयेऽनवधानता प्रकाशने जाति वाचका इत्यस्य साकाङ्क्षत्वादिति प्रयोक्तव्ये परसवर्णविहीनसानुस्वारात्म-साकांक्षत्वादिति प्रयोगश्च केषाञ्चित्तानि नोदवेजयन्ति ?

स्वरमङ्गला लेखकाशुद्धिप्रकाशने "स्वरचिताप्रतिमसरसप्राञ्जलगद्येन" इत्यस्याग्रे इति पङ्क्तिगतप्राञ्जल इति वक्तव्ये तकारविहीनपङ्क्तिगत इति प्रयोगश्चानवधानतामेव प्रतिपादयति ।

तस्माल्लेखकानामेवम्विधा अशुद्धीर्बुद्धिसागरो विद्वान् यदा स्वयमेव संशोध्य पठेच्छुद्धयनवधानातां प्रतिलेखकानां दृष्टिमप्याकर्षयेत्तदा लेखकोत्साहवर्द्धनपुरस्सरमाकर्षकस्यादावैदुष्यमित्युपसंहारः ।

## ज्योतिष्पीठ प्रगति :—

**ब्रह्मचारिणः कैवल्यानन्द महोदयाः**

(अनन्तश्रियाम् ज्योतिष्पीठाधीश्वराणां जगद्गुरुशंकरा- चार्याणाम् विश्वकल्याणश्रमे राजआनन्दपुरे सिंहभूमि-विहारे विविध–सुमगसेवा—समायोजनम् त्रिसहस्ररुग्णजनोपचारः, सार्द्ध द्विशत वनवासिजनानां सपरिवारं स्वधर्मानयनम् )

अस्ति विहारप्रदेशे झारखण्डक्षेत्रे आपामरपण्डितरमणीया अनन्तप्रकारायमाणा प्रकृतिपारमैश्वर्यपरमास्पदा वनश्रीविभूषिताभिः पर्वतपरम्पराभिः परिवृता, ललितललामा कालीकोकिलासंगमस्थली ।

तत्रैव भारतीय सांस्कृतिक-समभ्युत्थानसिद्धये संस्थापिते महाप्रयाससाध्य महदध्यवसायशुभाभिनिवेशनिरते भारतीयाध्यात्मिकसमुत्थानमण्डलस्य तत्त्वावधाने संचालिते महत्वपूर्णे उपकेन्द्रे विश्वकल्याणाश्रमे, ज्योतिष्पीठाधीशानां जगद्गुरुशंकराचार्याणाम् स्वामिनां साक्षात् शंकराणामनन्तश्रियाम् स्वरूपानन्दसरस्वती—महाभागानां निर्देशने नवदिवसीयनिःशुल्कः चिकित्साशिविरः कार्यकर्त्तृभिः ससमारोहं समायोज्यत ।

अवसरेऽस्मिन् त्रिसहस्रपरिमितानां रोगिणाम् उपचारः चिकित्सा चाक्रियत । शिविरे राजस्थानप्रदेश-प्रसिद्धानां राजवैद्यानां श्रीमतां विरंचीलालशास्त्रिणां सहायक-चिकित्सकानां श्रीमतां सुखदेवशर्मणाम् आश्रमस्थानां स्थायिनां वैद्यानां ज्ञानानन्दब्रह्मचारिणाम् अन्येषां च सहयोगिनां साहाय्येन वनवासिनां बान्धवानां सेवा सर्वतः सर्वथा च व्यधायि ।

शिविरेऽस्मिन् सप्तषष्ट्युत्तरसहस्रसंख्याका असाध्यरोगग्रस्ता अपि नवजीवनं लेभिरे । केचिदासन् कठिनाम्लपित्त-

ग्रस्ताः केचिच्च प्रश्वास-पीडिताः आमवातापस्मार-विषूचिकार्बुदकुष्ठ-जलोदरपक्षाघात-संघातरोगग्रस्ताः व्यथिताः सहस्राधिकाः वनवासिनः सम्यक्तरतया निःशुल्कं चिकित्सिताः स्वास्थ्यं च प्रापिताः ।

सुविज्ञैः भिषग्वरैस्तत्रैव आश्रमं निकषा वनोद्देश्यवीक्षितानि सरलतया समुपलब्धव्यान्यशीतिजातीयानि भैषज्यानि अन्विष्टानि वनवासिजनपरिचितानि चाक्रियन्त, यानि जीवने सदैव सदुपयोगीनि आयुर्वेदशास्त्रे निर्दिष्टानि हितकारीणि च सन्ति । स्वभावसिद्धमेतद्यत् प्रकृतिरेव प्रादुर्भावयति स्वानुकूलान्यौषधानि देशकालगतरोगापहारीणि च ।

**स्वधर्मदीक्षा—**

सुविज्ञातमेव सुधीभिर्यत् एतेषु पर्वतीयप्रदेशेषु शतशः दूषितशेमुशीकाः ख्रीष्टमतवादप्रचारकाः विविधैः प्रलोभनैः प्रलोभ्य सरलहृदयान् वनवसिजनान् आदिवासिनश्च धर्मान्तरण-षडयन्त्रद्वारा ईशुसमुपासकान् संव्यधुः ।

आध्यात्मिकसमुत्थानमण्डलस्थाः सदास्थावन्तः कार्यकर्तारः प्रचारकाश्च ग्रामे - ग्रामे प्रतिवसति च भ्रामं भ्रामं दिग्भ्रान्तान् वनवासिनः पूर्वाचरितशुभान् सनातनधर्माचारान् विबोधयाञ्चक्रुः सनातनधर्मस्य महत्वमपि तन्मनःसु प्रातिष्ठिपन् ।

शिविरेऽस्मिन् सार्द्धशतसंख्याकाः सपरिवाराः वनवासिनः शुद्धाचारानूरीकृत्य स्वधर्माचरणनिश्चयं चक्रुः । विधानतस्ते दीक्षिताश्चाक्रियन्त । सहस्राधिकाः वनवासिनः शिविरद्वारा भोजनेन वस्त्रप्रदानेन चानुगृहीताः ।

**अध्यात्मसन्देशप्रसारः—**

नवनिर्मिते विशाले संकीर्त्तनभवने प्रतिदिनं सहस्राधिकपुरुषस्त्रियः सुदूरान्तःदेशेभ्यः समागताः ज्योतिष्पीठधीश्वराणाम् पुण्योपदेशश्रवणाग्रहग्रहिलाः स्वकीयानि मानसानि परिष्कर्त्तु तत्पराः पुण्योपदेशै लाभान्विताः अभवन् ।

नवदिवसीये प्रचारकार्यक्रमे जनाः परमहितावहान् उपदेशान् श्रद्धया अशृण्वन् । 'स्वधर्मे निधनं श्रेयः' स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति पद्मनाभवक्त्रारविन्द-निष्यन्दमान-वचनारविन्दमकरन्दमाधुरीमधुकरा एवसंवृत्ताः महाराजश्रीवागमृताप्यायितास्ते सरलहृदयाः सनातनधर्मधुरां च सम्यक् धर्त्तुं धारयितुं च सम्प्रेरिताः प्रतिज्ञाः च कारिताः ।

पूज्यशङ्कराचार्यप्रवचनानन्तरं श्रोतृभिराकण्ठं वचनपीयूषपानाप्यायनानन्तरं समागतैः समाहूतैर्वा विद्वद्भिः स्वकीयैः संगीत-सांस्कृतिकार्यक्रमैः भाषणैरुपदेशैश्च सामाजिकाः श्रोतारः भृशं समाश्वासिताः जबलपुरीयाध्यात्मिक-उत्थानमंडलस्य अध्यक्षायाः श्रीमती पार्वतीपाण्डेयमहोदयायाः कु० मंजु श्रियः गीतैः सर्वे परमामोदमाङ्गल्यसमन्विताः अभवन् ।

**नवाहपरायणम्—**

स्थानीये सुभगवट—विटपसघनच्छायशीतले तले रामायणरसज्ञैः श्रीमद्भिः सुरेशव्यासमहोदयैः नवाहपरायणं कृतम्। पुण्येऽस्मिन् कर्मणि सर्वे श्रद्धालवः सम्मिलिताः लाभान्विताश्चाभवन् ।

**तीर्थराजावाहनम्—**

कालीकोकिलासंगमस्थले महाशिवरात्रिपर्वणि तीर्थराजपुण्यतोयभरितकलशं करयोरादाय पूज्यैः जगद्गुरुभिः शङ्कराचार्यैः तीर्थराजस्यावाहनं व्यधायि । तत्र ज्ञातम् यत्-सर्वैः तीर्थराजक्षेत्र एवावागाह्यत इव ।

तत्रास्ते एकम् प्रचीनं देवस्थानम् । तत्र विराजन्ते विश्वरूपेश्वरमहादेवाः । महाशिवरात्रिपर्वणि तत्रत्याः अयुतपरिमिता जनाः देवेभ्यः श्रद्धाः समर्पयन् । भगवत्पूज्य-

पादैःशङ्कराचार्यैः तीर्थराजपुण्योदकैः विल्वपत्रैश्च विश्वरूपेश्वराणाम् शिवविग्रहाणां सहस्रार्चनं कृतम् । आश्रमप्रभारिणां ब्रह्मचारिणां कैवल्यानन्दमहोदयानाम् अनुसारं सर्वेषां कार्यकर्तृणाम् उत्साहः श्लाघ्य आसीत् ।

एतदनन्तरं तत्र पर्वतारोहणमपि सम्पन्नम् । विश्वकल्याणाश्रमपार्श्वप्रवहितायाःकोकिलायास्तटे समुत्तुङ्गश्रृङ्गशोभितस्याद्रेः यस्य नामकरणम् शङ्कराचार्यैः शिवपर्वतः अकारि श्रृङ्गभागे सर्वैरारोहणं कृतम् । तत्र संकटमोचनमन्दिरनिर्माण-योजना विचाराधीना वर्त्तते ।

एवम् अस्मिन् समारोहे देशान्तभागेभ्यः समागताः अभ्यगताः राजपुरुषाः नेतारः कलाविदः सर्वे समभिनन्दिता सर्वमेतत् पूज्यतमानामनुग्रहरूपमेव सम्वृत्तम् ।

## लघुसिद्धान्तकौमुद्याः पद्यानुवादः

रचयिता—श्रीमन्तः शिवकुमार त्रिपाठिनः, प्रेषकाः–श्रीमन्तः सुधाकरत्रिपाठिनः, विश्वम्भरपुरवास्तव्याः

माहेश्वरेषु सूत्रेषु संज्ञा जाता अणादयः ।
प्रत्याहाराः इमे प्रोक्ताः, द्विचत्वारिंशदित्यलम् ।। १ ।।

अकारादि-लकारान्ताः, संज्ञा जाता अलादयः ।
वर्णाः सर्वे गताश्चैव, अजिति हलित्यादयः ।। २ ।।

महेश्वराणां सूत्राणाम्, अन्त्याः वर्णाः भवन्ति ये ।
हलन्त्यमिति सूत्रेण, इत् संज्ञकाः भवन्ति ते ।। ३ ।।

अदर्शनं लोपः सूत्रात् तेषा लोपः विचारितः ।
माहेश्वरेषु सूत्रेषु वैत्रित्र्यं योजितं बहु ।। ४ ।।

आदिरन्त्येन सहेता, सूत्रेण भवतीह वै।
सिद्धिश्च प्रत्याहाराणां, यथा ते अच् अक् हलादयः ।। ५ ।।

ऊकालोऽज्झ्रस्वेति सूत्रं यत् ह्रस्वादि विधास्यति ।
ऊकाल इव कालानां अचामेव हलांनहि ।। ६ ।।

स प्रत्येकमुदात्तादि भेदेन च त्रिधा भवेत् ।
सूत्रमुच्चैरुदात्तः स्याद्, उच्चारणविभेदतः ।। ७ ।।

नीचैरनुदात्तश्च समाहारः स्वरितस्तथा ।
नवविधस्सोऽपि द्विधा, नासायोगादयोगतः ॥ ८ ॥

इत्थं भेदा अकारस्य अष्टादश निश्चप्रचम् ।
एवमिउऋकाराणाम् अष्टादश भेदिता ॥ ९ ॥

तुल्यास्यप्रयत्नं सवर्णं सूत्रेण सवर्णता ।
ध्यानेनाव्यग्रचित्तेन, भूयो भूयो विचारय ॥ १० ॥

स्थानञ्च प्रयत्नश्च वर्णानाम् च परस्परम् ।
भिद्यते तुल्यते वापि अग्रे यत् कथयिष्यते ॥ ११ ॥

प्रयत्नः द्विविधः शास्त्रे बाह्याभ्यन्तरभेदतः ।
भवन्त्याभ्यन्तराः पञ्च, बाह्यास्त्वेकादशैव हि ॥ १२ ॥

विशेषेण सवर्णानां, सूत्रमेकं विनिर्मितम् ।
अणुदित्सवर्णस्य चाप्रत्यस्तत् सूत्रं शुभम् ॥ १३ ॥

वर्णोच्चारानुसारं हि संहिता संन्निकर्षतः ।
परः संनिकर्षः संहितेति सूत्रं विराजते ॥ १४ ॥

हलोऽनन्तरा संयोगः संयोगं प्रकरोति वै ।
सुप्तिङन्तं पदं सूत्रं पदसंज्ञां करोति च ॥ १५ ॥

सुबन्तश्च तिङन्तश्च पदसंज्ञं भवष्यति ।
संज्ञा प्रकरणं पूर्णं शिवशक्ति - प्रसादतः ॥ १६ ॥

संज्ञा प्रकरणं नाम प्रथमं यत् प्रकीर्तितम् ।
तदाधारतया एव पूर्णं व्याकरणं कृतम् ॥ १७ ॥

शब्दानुशासनं यच्च पूर्वमुक्तं महर्षिणा ।
परंपराह्निकमादाय प्रथमाधारमेव च ॥ १८ ॥

नीरसापि कृतिः स्वीया प्रिया भवति सर्वदा ।
इत्थमार्याः विचार्यैव दर्शयन्तु मतं स्वकम् ॥ १९ ॥

यदिदं धार्ष्ट्यमाख्यातं भवद्भि क्षम्यतां ध्रुवम् ।
अभ्यासं कर्तुमीहासीत् अतः सम्प्रेषितं मया ॥ २० ॥

आज्ञापयन्तु मां धीराः विद्वांसः करुणापराः ।
कीदृशं वा कृतं धार्ष्ट्यम् मया जिज्ञासुनाऽधुना ॥ २१ ॥

# धार्मिकता

श्रीमन्तः सेवाराम शास्त्रिणः

धैर्येणाधुनिककाले लोकेष्वातुरतोद्विग्नतयोः स्वरूपमङ्गीकृतम्। अनयैवातुरतया फलाभावे क्रोधरूपं स्वीकृतम्। तस्याः हृदये क्षमायै अवकाशदानमसह्यं प्रतीयते। सम्प्रति कुवृत्ति-पोषणं नाट्यते। व्यष्टिसमष्टी स्वदुर्वृतिदमनेऽप्रवृत्तिशीले लक्ष्येते। प्रत्येक जीवधारिणि प्रच्छन्नभावना सुव्यक्ता दृश्यते। चौर्यं सर्वत्र सामान्यकर्मणि परिकल्पितम्। कश्चिदपि प्रच्छन्नीभूय कस्मिन्नपि कर्मणि निजसफलतायाम् गौरवमनुभवति। आन्तरिकी तथा बाह्यीकी च पवित्रते एकरूपीभूय गृहस्वच्छतायाम् कलेवराडम्बरे तिरोहिते भवताम्। तदैव तु नागरिकतायाः साडम्बरवेशे सज्जनस्य दस्युजनस्य च परिचयो दुष्करः। इन्द्रियाणां-समुच्छृङ्खलत्वम् आधुनिकपरिवेशस्यप्रभावशालिमुख्यमङ्ग भूत्वा योग्यतायाःरूपे सम्मानितमस्ति व्यवहारे पटुतायाः प्रतीकं, तथा मैत्रीसम्मेलनेषु साधनमिव तत् सर्वस्थं विलोक्यते। क्वाद्य विवेकशालिनी मनीषा? अनात्मवीक्षणरता केवला कूटनीतिः दृश्यते। कूटनीतिनिपुणो मानव एव बुद्धिमान् मान्यते विद्याभ्यासःअवरुद्धः। जीवनस्य सामान्यं नगण्यं प्रशिक्षणमिव शिक्षा केवलं दम्भपोषणायैव स्तोकं स्तोकमात्मीक्रियते। लोकः सत्य जानात्येव न। नश्वरभौतिकावरणपोषणाय यत् किमपि कर्तुं शक्यते, तदेव सत्यम् जानाति। सामान्यप्रकृतिव्यवहारे सर्वत्रामर्षस्यैव साम्राज्यम् विद्यते। द्वेषदुष्प्रभावेण सर्वेषु स्वार्थवशात् पृथक्करणभावना समुत्पादिता। अस्मादेव कारणात् वर्तमाने धर्मनिरपेक्षभावाः स्वीकृताः। तस्य दशलक्षणानां मौलिकी परिभाषा-परिवेशः सम्प्रति समाजपरिवर्तितः अन्यादृश एवं स्वीकृतो वर्तते। पूर्वाचार्याणां धर्मलक्षणप्रणाली मृतप्राया घोषिता—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियानिग्रहः।
धीर्विद्यासत्यमक्रोधो दशकं धर्म लक्षणम्॥

सम्प्रति कथयन्ति—

अधृत्यक्षमेऽदमःस्तेयमशौचं नेन्द्रियग्रहः।
अधीरविद्याऽसत्यंचक्रोधश्च धर्मलक्षणम्॥

"धारणाद्धर्मः" "धर्मोधारयतिप्रजाः" "धर्म एव हतोहन्ति धर्मो रक्षति रक्षितः" इत्यादि सूक्तयः क्षीणा जाता तथा सः अधोगामी संवृत्तः। वस्तुतः पालनीयएव धर्म अत एव कथितम् "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"। धर्मस्य पारिपालनमेव मानवाय मुक्तदशायाः विलक्षणं सुखं प्रददाति। अन्यथा संकीर्णता दुःखम् संसारं नरककुण्डं विदधाति ततः तस्य विनाश एव भवति। धर्मस्य तात्त्विकं स्वरूपम् धार्मिके आचारे व्यक्तं भवति अन्यथा तद बोद्धुम् न शक्यते। अत एव लोकाः आदर्शमहापुरुषाणामाचारपरम्परायाः अनुकरणं कुर्वन्ति। तत्रैव धर्मस्य मौलिकं तत्वमवलोकयन्ति। अत एव सत्यमभिहितम— 'धर्मस्य तत्वं निहितं गुहायां, महाजनो येन गतःस पन्थाः" "आचारः प्रथमो धर्मः" "अहिंसा परमो धर्मः" इति। उक्तेषु निखिल वाक्येषु आचारस्य प्राधान्यं सुव्यक्तमेव। एतद् विपरीतक्रियाकलापाः

हेयाः । आचारस्य सुपरीक्षणं माहर्षिभिः शास्त्रेषु कृतम् तथातैः वेदोपनिषत्संमतस्मृति पुराण धर्मग्रन्थान् विलिख्य लोककल्याणाय मार्ग प्रदर्शनं कृतम् । यत्प्रभावादेव संसृतिरद्यापिजीविता ।

धर्मक्षीणतायाः प्रभावेण भारतदेशः परतन्त्र-तापाशेबद्ध अभवत् । एक सहस्राब्दाभ्यन्तरे एव भारतीयैऽ"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" अस्मै सिद्धान्ताय तिलाञ्जलिः वितीर्णः । स्वार्थ-कामिनी-काञ्चन-शासनानां लोभगर्ते निजाम् पातयित्वा स्वयं पतित्वा च भयावहांस्थितिस्वीकृत्य च धृणास्पदैः दीनैः हीनैःभारतीयैः धर्मः बलि-वर्करः विहितः । आर्येत्तरधर्मावलम्बने तैः संकोचो नैवाकारि । तात्कालिकैःप्रभावैः अनेके यवनाः बहवः ईसाईधर्मावलम्बिनः संजाताः । येषां बहु संख्या भारतीयधर्मस्य विरोधिनी जाता । धर्मस्य वास्तविकं स्वरूपम् शनैः-शनैः विकृतमभूत् । निम्नास्पृश्यजन-जातयश्चानेन प्रभावेण प्रभाविताः जाताः ।

तेष्वपि बहवो यवना -ईसायिधर्मावलम्बिनोऽभ-वन् । तेषां समानधर्मस्वभावक्रियाकलापप्रवृत्तिभिरयं देशः सुपवित्र आर्यावर्तः अनार्यः इव कृतः । वर्णचतुष्टयोऽपि उत्तरोत्तरं व्यक्ताव्यक्तरूपेण निप-तन् दृश्यते ।

यथाद्यतनी परिस्थितिर्विद्यते तथैव विद्वेषाग्नि-स्तस्मिन्नपि काले प्रचण्डरूपेण प्रज्वलित आसीत्, यदा देशोऽयमनेकशताब्दपर्यन्तं परतन्त्रोऽभूत् । चेदस्याः परिस्थितेः सुधारो नाभविष्यत् तर्हि जनवर्गोऽपि श्रेयो नाप्राप्स्यत् । परिणामतः परतन्त्रता सुनिश्चिता । तदा प्रदेशाः खण्डशः विभक्ता भूत्वा विभिन्नवर्गैः शासिता भविष्यन्ति । एकच्छत्रसाम्राज्यालिप्सा, भारतभूमिमजस्रयुद्धरक्तपातस्य क्षेत्रं विधास्यति । तदा न भविष्यति वंशो न च वेणुनादः । तात्पर्यमिद-मेव यत् जनानां स्वस्वढक्कानादः समाप्स्यति । एतदप्यसंभवं नास्ति यत् वर्णचतुष्टस्य रूपरेखापि-समाप्येत ।

महाकालस्य नियन्त्रणमपि स्ववशेन भवति । सति समये यदि मनोवैज्ञानिकसर्वजनप्रियजातिधर्म कर्तव्यैकताक्षेत्रे नवनिर्माणं न भविष्यति तर्हि प्राचीन-निर्देशनं पराजितं भविष्यति । पाशवी प्रणाली मानव-मात्रं पशुतान्वितं विधास्यति तथा च—वीरभोग्या वसुन्धरा इत्यस्यस्थाने 'दस्युभोग्या वसुन्धरा भवि-ष्यति । तस्मिन् समये जाति-धर्म-संस्कृति-संस्कार सात्विकादर्शमर्यादावर्णव्यवस्थापक्षपातिनां किं भवि-ष्यति देवप्रभावोऽपि अकर्मण्यानाम् कृते नैव भवति । तस्य संचयनं दृढसंस्कारे समाधृतो भवति । सत्संस्कारा सात्विकप्रवृत्तिभिः संचिताः भवन्ति । प्राब्धकर्म-सौभाग्यनिचयाः पुरुषार्थस्यैव सन्ततयः सन्ति । अतः यदि पुरुषार्थस्यावलम्बनं न भविष्यति तथा लोक-प्रकृतिं तादृशायां समुद्बोध्दुं क्रियाशीलां विधातुम् सततमुद्योगो न करिष्यते तर्हि सैव क्षोणा भूत्वा विना-शस्य कारणम् भविष्यति । "कर्मणेव हि संसिद्धिमा-स्थिता जनकादयः ' उद्धरेदात्मनात्मानम् नात्मानम-वसादयेत् "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः इत्यादि पूर्वजानां दूरदर्शितागुणगानप्रयोजन तदैव सिद्धं भवति यदा तेषां—विचारेभ्यः क्रियात्मकं रूपं दीयते । यथा चोक्तम् उत्तिष्ठत जाग्रत प्राप्य वरा-न्निबोधत इति ।

नीतिधर्मयोः प्राचीनाधुनिकप्रणाल्याः भूमि-गगनमिव महदन्तरम् यद्यपि भूतपञ्चकतत्पोषक पदार्थपरिधाननिर्वाहपद्धतिषु एकरूपतास्ति, यतश्च कश्चिदपि पञ्चभूतात्मकः प्राणी अन्नफलमांसजलादि

सेत्रनेमूकेनैव विधिना विदधाति, शरीराच्छादनप्रवृत्तिमपि वहति, दाम्पत्यजीवननिर्वाहप्रणालीमपि पालयति, शिक्षाभाषालपनप्रयोगमपि स्वस्वांशे एकेनैव माध्यमेन सम्पादयति यस्मिन् क्षेत्रीयप्रथासंस्कार सम्मेलनं भवति। पुनश्च धर्मजाति संस्काराणां तथा कासाञ्चित्परम्पराणाम् प्रयोजनमेव किमस्ति? याः भेदस्य जनन्यः जीविताः। उदाहरणार्थम् एकस्माद् घटाद् एकेनैव केनचित्पात्रविशेषेण सर्वाः जातयः समानरूपेण जलं पातुमसर्थाः सन्ति परन्तु एकस्मादेव कूपपात्रात् सर्वाः जातयः स्वस्वपात्रंप्रयूयं पानीयं पिबन्त्येव, नास्मिन् कश्चिद्दोषो लक्ष्यते। न चास्मिन् प्रकारे काचिद् रोगकारिका संक्रामकता। एवमेव भोजनवस्त्रनिवासफलादिषु पदार्थेषु न कश्चिद् दोषः। पुनश्च न ज्ञायते अस्य दुर्वारभेदस्य कोनाम जन्मदाता? अस्मादेव भेदकारणात्— आर्यानार्यास्पृश्यजातिषु घोरतरः प्राणघाती संघर्षोऽपि समभवत्। या शिरः पादविहीना वार्तास्ति। कर्मसिद्धये मानवैः नीतिमाश्रित्य धर्माधर्ममाश्रित्य विरोधं कुर्वाणैः शासनस्वार्थपूर्तिः सम्पादिता। अद्यपि च तत्कार्यते क्रियते च। गुणानां सत्वरजस्तमसां प्रवृत्तयः सर्वदा पृथग्भूता एवासन् तथा भविष्यन्ति च। रामकृष्णमन्तार एव सात्त्विकाः सम्प्रति नैतादृशो भावः। राजसास्तामसाश्चापि तदुपासकाः सन्ति। आत्मनश्च प्रभो भक्तान् मन्यन्ते तथा हिन्दुपदेनालं कुर्वन्ति। एवमेव मुहम्मदामतानुयायिनः स्वान् सात्विकान् घोषयन्त एव सापेक्षम् स्तुति निन्दे कुर्वन्ति। धर्मस्य पूर्णलक्षणं स्वस्मिन् प्रदर्शयितुम् सर्वे चेष्टन्ते। मन्दिरमज्जितगिरिजागृहाणि प्रायः समानानि तत्र इष्टका पाषाणं विहाय यदि किञ्चदस्ति स तु भावविशेष एवास्ति, प्रेम एवास्ति। केन चित्सत्यमेवोक्तम्—

न देवो विद्यते काष्ठे न पाषाणे न मृण्मये।
भावे हि विद्यते देवस्तस्माद् भावो हि कारणम्॥

एषभावः कस्यचित्स्थानविशेषस्य कृते नियतो नास्ति। एतत्कृते ऐन्द्रियमानसिकबौद्धिकात्मकसंयमोऽपेक्षितो भवति। एनमाश्रित्य सुकृद्दुष्कृद्भावद्वयस्य शाश्वतिकी स्थितिः संसृतौ भवति। तत्र दुष्कृतां नाशो ध्रुवः। लोकप्रकृतिनियन्त्रकः केवलो ज्ञाताज्ञातोभयभावरहितः प्रभुरेव। परमेश्वरस्य विलक्षणस्वभावात्मकाः पुरुषा एव संसारे भूत्वा कालानुसारं प्रभुत्वं समासादयन्ति तथा संक्रृतिं निममुः। धर्मं च स्थायन्ति। एकस्मिन्मानवशरीरे समग्रजातयो विलसन्ति याः विज्ञमानवैः दिनचर्यायाम् सुतरां द्रष्टुं शक्यन्ते। अद्भिःगात्राणि शुध्यन्ति विधिनानेन मनुष्यः पवित्रः भविष्यति पुनश्च कश्चिद् अस्पृश्यं मन्तुमात्मानमेवास्पृश्यम् कथयितुकामत्व मस्ति। सत्यामप्येतस्यामवस्थायाम् विश्वष्मिन् मानव जातेरेकता, गो-महिष-गर्दभ-पशुमात्र-जातित्वेऽपि भिन्नतैव, विरोधश्च स्वाभाविकः संलक्ष्यते। अस्य विषयस्य कारणं देशकालिकमूर्खता नास्ति किन्तु कारणविचारणैवाज्ञता। इयंतु सामाजिकी केवला प्रक्रियास्ति। अस्यामनवस्थादोषकल्पना मृषैव जल्पना। एकंशरीरमेव विलोक्य विश्वस्याखिलं विज्ञानं प्रस्तुतमभवत् विविधयन्त्राणामा विष्कारोऽभूत् आकाशपातालदूरता समाप्ता। शरीरे ऐन्द्रियपरिवर्तने महती भयंकरता असम्भवता आयास्यति। श्रेयो लाभलिप्सुना चरणः शिरसि न करणीयः किन्तु तमासने संस्थापनीयः। यदि चरणे ईर्ष्या आयाता तथा च तेन मूर्धा प्रोक्तः स्वकार्यं कर्तुम् तदा महान् अनर्थः भविष्यति। अतः एकतायाः भेदभावस्य चंक्रमणे न पतित्वा स्वधर्मः पालनीयः। काणकुब्जपङ्गु विषम

शरीरवत् सामाजिकवैषम्यम् हा स्यास्पदं चिन्तनीय-मकिञ्चितकरम् भवति। शरीरगृहप्रबन्धवत् लोक-देशप्रबन्धोऽपि भवति। समाजे कर्तव्यपालनं धर्म-व्यतिरिक्तप्रणाल्या कदाचिन्नैव करणयोम्। निर्धा-रित श्रेणीविनाशे श्रेण्या अभावः। एवं च उत्थान पतने, कार्याकार्यें, हानिलाभौ, स्त्रीपुरुषौ तथा जडचे-तने सर्वेऽपि एक श्रेणीकाः भून्वा कीदृशाः परिणाम-कारकाः भविष्यन्ति सुधियः स्वसुधिया विचारयन्तु धर्मस्य प्रभावेण कदाचित् अनिष्टानि न भवन्ति। समेषां जोवनं कस्याञ्चित् योनावपि भवेत् धर्मस्य पाललेन सुखान्वितमेव भवति। तथा च महर्षीणाम शुभकामनाः चरितार्थाः भवन्ति।

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।
सर्वेभद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत्॥



# विधवानां दायभागः

**श्रीब्रजकिशोरस्वाई ( धर्मशास्त्राचार्य श्रीसदाशिव केन्द्रीयसंस्कृतविद्यापीठम् पुरी**

१९७७ डिसेम्बरमासि गुर्जरदेशस्य जाम् नगरप्रान्ते सम्पलायामखिलभारतसंस्कृतभाषणस्पर्धायाममुं विषय-मधिकृत्य भाषमाणो लेखको रौप्यपदकेन विभूषितः पारितोषिकश्च लब्धवान् )

धर्मशास्त्रे विभागत्रयम्। आचारविभागो व्यवहार-विभागः प्रायश्चित्तविभागश्चेति। तत्र समाजे वर्तमानानां निखिलनियमाङ्गीकारप्रवणानां जनानां सत्यमनुसृत्य शास्त्रानुरुध्य च कश्चनातिशयो विधिराचाराध्याये वर्णितः तदर्थमुच्यते-आचारः परमोधर्मः[१]। अत्र राजधर्मस्य अन्तर्भावो गुणधर्मत्वेन स्वीकृत्य विहितः[२]। व्यवहार-विभागे सन्देहनिराकरणार्थं प्रयत्नों विहितो भवति। ततः कात्यायनेनोच्यते[3] —

वि नानार्थेऽव सन्देहे हरणाद्धार उच्यते।
नानासन्देहहरणाद् व्यवहारस्थिताविह॥

प्रायश्चित्तविभागे समाचरितदोषाणां दोषापगम-निमित्तं विहितं किञ्चित् नैमित्तिकं कर्म[४]। मनुनैतच्छ्रा-वितं यथा—

अकुर्वन् विहितं कर्म, निन्दितं च समाचरन्,
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः[५]।

प्रायश्चित्तस्य निर्वचनमङ्गिरसा कृतं यथा[६]–"प्रायो नाम तपःप्रोक्तं चित्तं निश्चय उच्यते" अष्टादशपदव्यवहारा-न्तर्गतस्य विभागस्य सम्पत्तिविभाजनप्रक्रियात्मकोऽत्र आलोचनाविषयीभूतो भवति। तत्र दायः विभागश्चेति इति पदद्वयस्य बहुमनीषपरिजृम्भितां व्याख्यां बहुशो भिन्नत्वेनोररी कुर्वन्ति। तत्र मूलतो मिताक्षराकारविज्ञाने श्वाराचार्यपन्थी, धर्मरत्नान्तर्गतदायभागकारजीमूतवाहन-पन्थी इति मतवादिनौ। तत्र दायस्य विभागस्य च सूचना-मात्रं दत्त्वा विधवाया दायप्राप्तिविषये आलोचयिष्यते,

१–मनुस्मृतिः १।१०८, २–मिताक्षरा १।१, ३–मन्वर्थमुक्तावली ८।१, ४–मिताक्षरा १।१, ५–मनुस्मृतिः ११।४४
६–आङ्गिरसस्–मृतिः उत्तरभागः १।१।

तत्राद्यो विज्ञानेश्वरो यथा—''तत्र दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते–स द्विविधः। अप्रतिबन्ध सप्रतिबन्धश्च। तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्वेन च पितामहधनं च स्वं भवतीति अप्रतिबन्धोदायः पितृव्यभ्रात्रादीनां तु पुत्राभावे स्वाम्यभावे च सम्भवतीति सप्रतिबन्धोदायः[७]। अत्र निघण्टुर्यथा—विभक्तव्यं पितुर्द्रव्यं दायमाहुर्मनीषिणः[८] इति। सङ्ग्रहकारो यथा—

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत्,
कथितं दायशब्देन तद्विभागोऽधुनोच्यते।[९]

धारेश्वरो यथा-दायशब्देन पितृद्वारा मातृद्वाराऽगतं च द्रव्यमुच्यते।[१०] अत्र स्वामिमरणात्स्वत्त्वमिति पक्षं प्रतिपादयिता जीमूतवाहनो यथा-ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वामिन्युपरमे यत्र द्रव्ये स्वत्त्वं तत्र निरूढो दायशब्दः इतः प्राक् ददातिप्रयोगो गौणः इति तेन व्याख्यातं मृतप्रव्रजितत्वादिषु अव्यापकत्वात्[११]। दायनिर्वचने यथा विप्रतिपद्यमाना व्याख्यातारः स्वस्वमतानि समुपस्थापयन्ति, तथा विभागनिर्वचनेऽपि। तद्यथा-विभागो नाम द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनमिति विज्ञानेश्वरः[१२]। दायविषयधर्मश्चात्र विभागलक्षणोऽभिप्रेतः 'स्त्रीपुंधर्मो विभागश्च इति पदोद्देशावसरे तयैस्व पूर्वमुक्तत्वात् इति देवणभट्टः[१३]। एकदेशोपात्तस्य भूहिरण्यादावुत्पन्नस्य स्वत्त्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः इति जीमूतवाहनः।[१४] एवं स्थालीपुलाकन्यायेन समुपस्थापितैः प्रमाणपटलैर्विचारमुपगच्छन् मित्रमिश्रस्तन्मत्या किञ्चित् समाधानं विधत्ते। विज्ञानयोगिमतानि परिष्कृत्य जीमूतवाहनस्य च निराकृत्य स्वामिमरणात् स्वत्त्वमिति पक्षं खण्डयन् जन्मना स्वत्त्वं व्यवस्थापयति। स्वत्त्वस्य लोकसिद्धत्वेनं गृहीतत्वात् लोकव्यवहारेषु अमुकस्य शिशोर्गृहमिति कथनाच्चमरणात्स्वत्त्वं दुष्टमिति तन्मतम्। जन्मना स्वत्त्वस्वीकारात् विभागात् स्वत्त्वमिति न विभागे स्वत्त्वस्यैकदेशवर्त्तितया व्यवस्थापितत्वात्। जीमूतवाहनधिया दायस्य यन्निरूढत्वं तद्दूषणम् -यथा[१५] निरूढत्वाङ्गीकारे दायददाति शब्दयोगौणत्वोपन्यासानर्थक्यात्। सर्वथाऽवयवार्थराहित्ये हि निरूढत्वम्। न च योगरूढत्वम्। अवयवार्थबाधस्य स्वयमेवोपन्यासात्। गौणमवयवार्थं परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्वमन्योन्याश्रयत्वमनुभवविरोधो व्याधातश्च। तत्स्वाम्योपरम इति च जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम्। विभागशब्दस्तु अनेकस्वाम्यानां द्रव्यसमुदायविषयाणां तत्तदेकदेशे शक्तः[१६]। दायतत्त्वकारस्य मतमपि अन्यसता अगत्या विज्ञानेश्वरमतं स्वीकर्तव्यमिति तेन प्रत्यपादि। अस्मद्गुरुचरणा धर्मशास्त्रसाहित्याचार्यवेदशास्त्रिणः श्रीकुलमणिमिश्रशर्माण एवमुचुः—सयुक्तिकं विज्ञानेश्वरमतं खण्डयितुं प्रवृत्तस्य जीमूतवाहनस्य चिन्तापराकाष्ठा समधिकपरिशीलनमपेक्षमाणा। नहि सर्वत्र मित्रमिश्रो जीमूतवाहनमतखण्डने सफलतां धत्ते, न वा सर्वत्र मतं तेन समलङ्कृतम् अपुत्रधनाधिकारि प्रसङ्गे पितुरधिकारविषये तद्दर्शनात्।

अतः स्वत्त्वं लौकिकं, जन्मना स्वत्त्वं भवति, बहुस्वामिकधने विभागेन तत् स्वत्त्वमेकदेशी क्रियते।

७. मिताक्षरा २११३, ८. स्मृतिचन्द्रिका (द्वितीयभागः) व्यवहारकाण्डम् पृ० ५९८, ९. Ibid १०. Ibid ११. दायभागः-पृ-५, १२. मिताक्षरा-२।११३, १३. स्मृतिचन्द्रिका-पृ. ५९८, १४. दायभाग-पृ-८, १५. वीरमित्रोदयः (व्यवहाराध्यायः) पृ. ५२२, १६. I bid पृ. ६६८।

अथ विधवानां दायभाग इति आलोच्यः। निखिलस्य त्रिव्यस्य वसुनः पुत्रगामित्वे मनुः प्रोवाच एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरिति। मनूक्तद्वादशविधपुत्राणामभावे निखिला सम्पत्तिः पत्न्यै गच्छति याज्ञवल्क्यवचनात्[19]

पत्नीदुहितरश्चैव पितरौ भ्रातरस्तथा,
तत्सुता गोत्रजा बन्धुः शिष्याः सब्रह्मचारिणः।

एतद्विषयस्य अपुत्रधनाधिकारे पठितत्वात् अपुत्रस्ता-त्र मृतपुत्रः अजातपुत्रो वेति[20] श्री विनायकधर्माधिकारी प्राह - यस्य पुत्रो नास्ति स अपुत्र इति कथयन्ति निरपेक्षा व्याख्यातारः, पुत्रपदमुपलक्ष्य प्रपौत्रपर्यन्ताभावे अपुत्रत्वं साधयति वृद्धमनुः-[21]

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते,
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्।

विज्ञानेश्वरजीमूतवाहन मित्रमिश्रप्रभृतय एवं व्याचक्षाणाः सन्ति। अस्मद्गुरुचरणा नैवमनुमन्यन्ते। तदुक्त्या-दशरथस्य जीवितावस्थायां चेत् रामचन्द्रः पुत्रमुत्पाद्य मृतः तर्हि तर्हि लवपुत्रपर्यन्तैरपुत्रस्य दशरथस्य सम्पत्तिः लब्धुं शक्या वृद्धमनुवचनात् किन्तु लवपौत्रस्याधिकारो नास्तीति विज्ञायते यदुक्तं तन्न। पुत्रमुत्पाद्य रामचन्द्रे मृते तत्परम्परया क्रमेण वर्त्तमानत्वान् नहि जातुचित् दशरथोऽपुत्रः भवितुमर्हति। अमृतन्यायेन पुत्रादिद्वारा अमृतत्वंलभानः पुरुषो नहि क्षयं प्राप्नोति, आत्मा च प्रदीपन्यायेन पितुः शरीरात् पुत्रशरीरं गच्छति। तेन पितापुत्रयोर्न कोऽपि भेदः। पुत्रस्य पुत्रस्तस्यापि पुत्र इति क्रमेण सर्वेष्वपि उत्तरपुरुषेषु आदि पुरुषस्य सत्ता विद्यते। अनेन प्रकारेण मरणशीलोऽपि मानवः अपत्यद्वारेण अमरणं (अमृतं) लभते इति धर्मविदां मस्तिष्कनिष्कर्षः।[22] अवश्यर्णत्रयेपरिशो-[23]धनकर्तॄणां पुरुषाणामियमेव दशा यत् स्वपुत्रादिभिः पित्रर्णं परिशोध्यते। वशिष्ठोऽप्येवमाहुः—१९।१

ऋणमस्मिन् सन्नयति अमृतत्वं च गच्छति,
पितापुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्।

ऋग्वेदेऽपि-प्रजाभिरग्नेरमृतस्य मश्याम् ५।४।१० अतः स भवति अपुत्रः यस्य पुत्रादिः पुत्रमनुत्पाद्य मृतः अर्थात् यस्मात् पुरुषात् उत्पादनं विघटितं, तत्रापुत्रत्वदोषो लगति ततश्च अमृतन्यायेन पुत्रपौत्रपरम्परायाः स्थितिवशात् प्रपौत्रपुत्रादिवान् दशरथो नापुत्रः। अतः प्रपौत्रपुत्रे लवस्य-पुत्रे विद्यमाने रामचन्द्रादारभ्य लवपुत्रपर्यन्तानामभावे दशरथे स्वर्याते स एव निरिवल वसु दशरथस्य गृहणीयात्। नहि अपुत्रत्वेन दशरथस्य तत्पत्नी कौशल्यादायभागिनीति। अस्मद्गुरुचरणा अपि एवमाकलयन्ति।

अपुत्रस्य धनं पत्नी लभते इति विवादस्य महान् विषयः। तत्र पत्नीस्त्रीयोषिदादिपर्यायभूतशब्देषु सत्सु केवलं पत्नी धनं लभते। यतः स्त्यै ष्ट्यै शुक्रशोणितसम्भवे इत्य-स्माद्धातोः स्त्यायते गर्भः अस्यामिति स्त्री नाम रक्षिता, यूषसेवायामितिधातोः सेविकारूपेण वर्तमाना योषित् योषा वा। पोईलि इति भाषायाम्। डुभृञ् धारणपोषणयोइति धातोः भ्रियत इति भार्या भरणीया इत्यादि। किन्तु पत्युर्नो यज्ञसंयोगे इति पाणिनिसूत्रात् यज्ञसंयोगहेतुना नुमागमान् अष्टविधविवाहे पाणिगृहीता एव पत्नी भवितुमर्हति। पाणिग्रहणलक्षणं तु मेधातिथिना कृतम्[24]—

१७. मनु- ९।१६३, १८. विस्तरश आलोचितो मामकीने लेखे पुत्रभेदा इत्यत्र-द्रष्टव्यम् देवयानः (द्वितीयसङ्ख्या) पुरी श्रीसदाशिवकेन्द्रीयसंस्कृत विद्यापीठधर्मशास्त्रविभागीय वार्षिक पत्रिका, १९. याज्ञवल्क्यस्मृतिः २।१३५, २०. दत्तकमीमांसा पृ. ३, २१. नन्लपण्डितोद्धृतश्लोकः २२. देवयानः (द्वितीयसंख्या), विषयः—अमृतम् ले—सुशान्तकुमारमहान्त्, १-१४, २३. एष ह्वा ब्राह्मणस्त्रिभि र्ऋणैर्ऋणवान् भवति। ब्रह्मचर्येणर्षिभ्यः प्रजया पितृभ्यः यज्ञेन देवेभ्य इति तैत्तिरीयसंहिता-६।३।१०।१ २४. मेधातिथिभाष्यम् मनुस्मृतौ—३।२०।

उपायतः प्राप्तायाः कन्याया दारसंग्रहार्थः संस्कारः सेतिकर्तव्यताङ्गसप्तर्षिदर्शपर्यन्तः पाणिग्रहणलक्षणो विवाह" इति। पत्नीभिन्नानां लक्षणं तु सरस्वती विलासधृतेन स्मृतिवाक्येन स्थिरीकृतं यथा—[२५]

क्रयक्रीता तु या नारी न सा पत्नीत्यभिधीयते
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः।

विधवायाः पत्न्या धनप्राप्तिर्विभक्तपरिवारविषय इति विज्ञानेश्वरादयः। तन्मत्या योगीश्वरेण "पत्नीदुहितर" इत्यादि श्लोकस्यविभागप्रसङ्गपरवर्त्तित्वात् संसृष्टिविषयपूर्ववर्त्तित्वाच्च। तदर्थं शङ्खवचनमुदाहृत्योक्तम्-अपुत्रस्य भ्रातृगामि द्रव्यंपितरौ हरेता ज्येष्ठा वा पत्नीति। एतद्वचसोऽविभक्तविषयत्वेन गृहीतत्वात् योगीश्वरवचनेन एकवाक्यतां सम्पादयितुमेतद्‌वचसोऽविभक्तविषयत्वेन गृहीतत्वमिति। ज्येष्ठा वा पत्नी इत्युक्तौ गुणज्येष्ठा इति विज्ञायते वृद्धमनुवचनात्—

अपुत्रा शयनं भर्तुः पालयन्ती व्रतेस्थिता
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च [२६]।

विभक्ताविभक्तोभयपरिवारे विधवा पत्नी अपुत्रस्य स्वामिनो धन लभत इत्याह जीमूतवाहनः [२७]। एतदर्थञ्च युक्तिमुपन्यसति यथा—[२८]

एकादशाध्यायः २८ बृहस्पतिस्मृतिः २६।९२-९४
आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः,
शरीरार्धं स्मृता जाया पुण्यापुण्यफलेसमा।
यस्य नोपरता भार्या देहार्धं तस्य जीवति।
जीवत्यर्धशरीरेतु कथमन्यो धनं हरेत्?
सकुल्यै विद्यमानैस्तु पितृमातृसनाभिभिः।
असुतस्य प्रमीतस्य पत्नी तद्‌भागहरिणी।
पूर्वं प्रमीताग्निहोत्रं मृते भर्तरि तद्धनम्।
विन्देत् पतिव्रता साध्वी धर्म एषः सनातनः॥इति॥

अविभक्तपरिवारे शङ्खवचनानुरोधेन भ्राता प्रथमतः प्राप्नोति इति यदुक्तं तदन्याय्यं प्रत्यासत्त्यतिशयाभावात्, साक्षात् शुक्रशोणित [२९] द्वारा अङ्गदानेन [३०] पित्रोः भ्रात्रपेक्षया मुख्यत्वमिति जीमूतवाहनस्वरसः। अतः शंखादिवचनेषु व्यवहितयोजना कार्या, अपुत्रस्य स्वर्यातस्य धनं ज्येष्ठो पत्नी हरेत् तदभावे पितरौ हरेतां, तदभावे भ्रातृगमिति [३१]। किन्तु मित्रमिश्रप्रभृतयो नात्र कामपि सुखकारिणीं युक्तिसिद्धां लोकप्रसिद्धां निष्पत्तिं प्रत्यपादयन्। अस्मद्‌गुरुचरणा एवमाहु :—स्वत्वप्राप्तिनिमित्तं व्याख्यातारो यथा व्याकुलीभूय विवेचनया निष्पातयन्ति, तथा विधवायाः पत्न्या अवलात्वेन पर्यायभूतनिष्पत्तौ तत्सुरक्षार्थं कांचन प्रयोजनां विदध्युः। तन्मत्या विज्ञानेश्वरोक्तिः स्पष्टा। अविभक्तपरिवारे पत्न्याः परिवाराधीनत्वात् तद्धनान्यपि तादृशानि। सम्पत्तिवत्परिवारे निखिलं वसु गृह्णन्तो यथा भ्रातरोऽवन्ति, तथा सम्पत्तिहीने स्वल्पसम्पत्तिके वा परिवारे असत्यपि धने स्वपरिवारजनत्वेन (रक्षेयुरिति) अतो विभक्ताविभक्तपरिवारनिर्विशेषेण पत्नी चेद् गृहणीयात्, सम्पत्तिहीने स्वल्पसम्पत्तिके वा परिवारे सा हीनस्था भवेत्। मुहुःव्यवहारो जघन्यतां प्राप्नुयाच्च। वङ्गप्रान्ते तु दायभागदिशा एतद्‌विधे स्वीकृतत्वात् सर्वत्र पत्नी आद्ये गृह्णाति। भारतेषु तु सर्वत्र विज्ञानेश्वरीयो राधान्तः समादृतोऽस्ति। विधवानां दायभाग इत्यत्र विधवेति उक्तौ पत्नी मुख्यया बोध्यते। अन्या, दुहित्रादयो विज्ञानेश्वरविचारणया याज्ञवल्क्योक्त्यनुरोधेन विविच्यते इति शम्॥

२५. सरस्वतीविलास :—पृ. ४०७., २६. Idid—पृ. ४०२, २७. दायभागः— २९. शुक्रशोणितसम्भवो मातृपितृनिमित्तकस्तस्यप्रदानविक्रयाधिकारेषु [मातापितरौप्रभवतः वसिष्ठधर्मसूत्रम्—१५।२, ३०. अङ्गादङ्गात् सम्भवसि हृदयादभि प्रजायसे मा आत्मा वैं तत्रनायासि त्वंजीवशरदः शतम् ३१. दायभागः—पृ० १६६।



# कर्ममीमांसादर्शनम् : क्रियापादः

**महर्षिः योगिराजस्वामी श्रीज्ञानानन्दमहाराजप्रभुः**

आद्यस्य वैज्ञानिकं स्वरूपमभिधत्ते—

**आद्यः स्वाभाविकः ॥ ३०१ ॥**

आद्यो ज्ञानजनितोभोगः स्वाभाविकः । संसारेऽत्र दृश्यते यत् राजानं राजप्रतिनिधिं वा द्वारीकृत्यापराधिने पुरुषाय दीयमानदण्डकाले, तदीय-शुभकर्मपारितोषिकदानसमये च प्रायः उच्यते यत् तवामुकस्याशुभकर्मकृते दण्डो दीयते किम्वा अमुकस्य शुभकर्मणःकृते पारितोषिकमर्प्यते, अथैत-न्नियमानुसारेण राजदण्डो यमदण्डः स्वर्गादिभोगाधिगमश्च स्वाभाविकः । कर्मविपाककाले एतस्या अवस्थायाः स्वाभा-विकत्वात् तादृशश्रेणिगो भोगोऽधिको भवति । देवासुरपितृ प्रेतनरकलोकेषु, तथात्र मृत्युलोकेऽपि गर्भावस्थायाम्, राज्ञः समाजस्य वा पुरतस्तिरस्कृति-पुरस्कृतिकाले, तादृशानेक-समये च ज्ञानसहिता भोगनिष्पत्तिर्जायते । एतादृशश्रेणि-भोगावसर एव जीवैः स्वजीवने समधिको लभ्यते ॥ ३०१॥

**प्रकृतिप्रसादजोऽन्यः ॥ ३०२ ॥**

अन्य अज्ञानजनितोभोगः प्रकृतेः प्रसादेन जायते इत्य-वधेयम् । पूर्वोक्तविचारमनुसृत्येदं निश्चितमेव यत् ज्ञान-जनितस्य भोगस्यावसरोऽधिकः, अज्ञानजनितस्य तु भोगस्य कालः स्वल्प एव, परन्तु सूक्ष्मदृष्ट्या विचारे क्रियमाणे निश्चितमेवेदं यत् अज्ञानजनितो भोगः प्रकारान्तरेणान्याय्यः प्रतीयते । यतो बोधमकारयित्वा तिरस्कारः पुरस्कारो वा न न्यायसंगतः । परन्तु तत्कारणान्वेषणेन प्रतीयत इदं यत् जगज्जननी परमकृपालुः प्रकृतिरेवं विधत्ते । उदाहरणरूपेणे-दमवधेयं यत् कस्यापि जीवस्य शुभाशुभभोगप्राप्तिकाले एतत् ज्ञानं स्याद् यत् कस्य कस्य जन्मनः केषां केषां कर्मणां फलमेतत्, तदानींमशुभफलभोगमात्रा शतगुणिताऽधिका वर्धेत, तथैव यदि शुभफलभोगकारणं ज्ञातं भवेत् तर्हि शुभ-फलभोगानन्दो ह्रासमुपगच्छेत् । शुभाशुभयोरुदाहरणं प्रदत्तम्, येन विज्ञानस्यैतस्य सुस्पष्टता सम्यगवगता स्यात् । यदि कस्यचिद् घोरव्याधिग्रस्तस्य जीवस्य व्याधिकारणभूतघोर-पापकर्मणः स्मृतिः संप्राप्ता स्यात् तर्हि घोरेण व्याधिना सहैव असहनीय आधिरपि समुत्पन्नो भवेत् । एवं हि स्त्री-विलासनिरतस्य जीवस्य पूर्वसंयोगवियोगस्मृतिं प्राप्तवतः स्वपत्न्या जन्मान्तरीय-मातृकन्यादिवम्बन्धस्मृतिः सम्भवेत् तर्हि तदीयं तत्सुखं तिरोदध्यात् । अत इदमङ्गीकर्त्तव्यं यत् जगज्जनन्याः कृपैव तत्स्मृतिनाशकारणम् ॥३०२॥

तत्स्वरूपस्य स्पष्टतां विधत्ते—

**सर्वो द्वन्द्वमूलो विचित्रश्च ॥३०३॥**

सर्वोऽपि ज्ञानजन्यो वाऽज्ञानजनितो वा भोगो द्विविध-श्रेणिरूपः कर्मविपाक इति वा द्वन्द्वमूलको विचित्रश्च भवति । द्विविधोऽपि भोगः पुण्यपापविचारतः सुखदुःखप्रदः, अतो द्वन्द्वमूलकः । प्रत्येकोऽपि अनेकभेदभिन्नत्वात् वैचित्र्यपरि-पूर्णश्च स्वर्गीयो नारकीयश्च भोगो द्वन्द्वस्योदाहरणम्, स्वर्लो-कस्य तदीयसुखस्य चानेके भेदाः, नरकस्य तदीयभोगस्य चानेके भेदाः, इत्थं सर्व भोगवैचित्र्यलक्षणोदाहरणम् ॥६०३॥

भोगहेतुभूतमाद्यमुच्यते—

**उन्नेतृ पुण्यकर्म ॥ ३०४ ॥**

पुण्यजनकं कर्म समुन्नतिकृदभिधीयते । पुण्य कर्म सत्त्व-गुणवर्द्धकमित्युक्तमेव । येन धारिका शक्तिः सुरक्षिता अभ्यु-दयनिःश्रेयसयोः पन्था निष्कण्टकः स्यात् तत्कर्म पुण्यमिति । सुतरां पुण्यकर्मणा मानवसमुन्नतिः सिध्यत्येव । परन्तु

तत्पुण्यकर्मभोगं भुञ्जानो जीवो यदि पापं कर्म न कुर्यात्तर्ह्यसौ जन्मनि जन्मान्तरे वा प्रतिक्षणमभ्युदयं प्राप्नुवन् उच्चैरप्युच्चतरं लोकं समुन्नताधिकारं चाधिगच्छन् परमं पदमुपैति । अतः सिद्धमिदं यत् पुण्यकर्मणा जीवोन्नतिरवश्यम्भाविनी ॥ ३०४ ॥

द्वितीयमभिधत्ते—

**विपरीतमन्यत् ॥ ३०५ ॥**

पापं कर्म पुण्यकर्मतो विपरीतम् । पुण्य कर्म चेत्समुन्नतिकरं तदा पापमधोगतिसाधकं सिध्यति । सत्त्वगुणवृद्ध्या धर्मस्तमोगुणप्रवर्धनेनाधर्म इत्यपि प्रागुदीरितम् । धर्मप्रदकर्मणा पुण्यमधर्मप्रदेन च पापमुत्पद्यते । सुतरां यद्येतत्सिद्धं यदि पुण्यं कर्म जीवानामूर्ध्वगामिस्त्रोतः परिरक्षति तदा पापं कर्म तु विपरीतत्वादवश्यमेव दैनन्दिनं जीवमधोगामिनं विदधाति । पापकर्मणा जीवः प्रेतनरकादिदुःखमयान् लोकांस्तु विन्दत्येव नीचैरवतीर्य स्थावरत्वमप्यासादयितुमर्हति ॥ ३०५ ॥

प्रसङ्गतः शङ्कां समाधत्ते—

**प्रायश्चित्ततोऽपसरन्ति कर्माणि हस्तितोहस्तिवत् ॥ ३०६ ॥**

यथा एकेन प्रबलेन हस्तिनाऽपरो हस्ती पलायते तथैव प्रायश्चित्तेन क्रियमाणेन पापं कर्म अपसरति नश्यतीत्यर्थः । जिज्ञासुरत्र शङ्कते यद् यदि पापं कर्म दुःखाधोगतिकरं तर्हि पापकर्मविमुक्तये तत्कर्म विपाकादात्मानं रक्षितुं शास्त्रीया प्रायश्चित्तव्यवस्था निर्मूलेति चेन्न । एतादृशशङ्कासमाहितय एव सूत्रकृन्महर्षिर्व्याचष्टे यत् प्रायश्चित्तेन सत्फलमवश्यमुदेति । यद्यपि क्रियमाणस्य पापकर्मणः शक्तिर्न नश्यति, यतो "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति शास्त्रे सिद्धान्तितत्वात् । किन्तु हस्तियुद्धवत् प्रायश्चित्तद्वारा पापकर्मविपाकोऽपसरति । यथैकस्योन्मत्तस्य हस्तिनोऽत्याचारादात्मनो विमोचनाय तत्सम्मुखमेकं ततोऽपि बलवन्तं शिक्षितं गजेन्द्रं समानीय युद्धे कारिते बलवता शिक्षितेन करीन्द्रेण पराजित उन्मत्तो गजः पलायते, तथैव प्रायश्चित्तानुष्ठानदानादिकेन प्रबलेन कर्मणा पापकर्मणोऽशुभो विपाकोद्वस्तदानीमपसरति । एतदेव प्रायश्चित्तादिशास्त्रोक्तोपायरहस्यमवधेयम् ॥ ३०६ ॥

पापवेगोऽनिरुद्धः किं करोत्यभिधत्ते—

**पापरंहः शिलाहतस्रोतो वेगवत् ॥ ३०७ ॥**

पापस्य कर्मणः रंहो वेगः शिलाभिराहतस्य स्रोतसो वेग इव वर्धत इति शेषः । यदि पापकर्मवेगो निरुद्धो न स्यात् अथवा पापकर्म संस्कारराशेरनन्तरं पापकर्मराशिः क्रमशः सञ्चितो भवेत्, किम्वा प्रायश्चित्तयज्ञतपोदानादिपुण्यकर्मद्वारा पापस्य प्रबलंरंहो निर्बलं न क्रियेत तर्हि पर्वतप्रदेशीय-शिलाहतनदीस्रोतोवेगवत् तत् शक्तिमद् भूत्वा नितरां प्रवर्धते । इदं प्रायशोऽवलोक्यते यत् पार्वत्यप्रदेशीयानां तरलतरङ्गिणीनां द्रुतगामिनीनां नदीनां वेगाविमुखं काचित् सुदृढा स्थिरा शिला समापतति, तदानीं तया शिलया नदीस्रोतो मूर्च्छितं सत् अधिकाधिकं प्रवर्धते, तथैव पापकर्म वेगोऽपि परेण पापकर्मणा संश्लिष्टो वावृध्यते ॥३०७॥

प्रसङ्गादुभयोर्भेदं व्याहरति—

**ज्ञाताज्ञाते ॥ ३०८ ॥**

उभयोरेव पुण्यपापयोः प्रत्येकस्य ज्ञातमज्ञातमिति भेदद्वयं ज्ञातव्यम् । पुण्यमपि ज्ञातमज्ञातम्, पापश्चापि ज्ञातम् अज्ञातं चेत्यर्थः ।

[ क्रमशः

# वाराणसेयसंस्कृतवाग्वर्द्धिनी सभा

जगन्नाथ शास्त्री—प्राध्यापकः-श्री रामानन्द पीठ
स० म० विद्यालय, कर्णघण्टा, वाराणसी

वाराणसिगीतामन्दिरे मिश्रपोखरास्थानस्थे प्रोक्त-सभायाः पाक्षिकमधिवेशनं" फाल्गुन-कृष्णाष्टम्यां मार्च-मासस्य द्वितीयदिवसे सुसम्पन्नम् । तत्र सर्वतन्त्रस्वतन्त्राः पण्डितप्रवराः पदवाक्यप्रमाणपारावारीणाः श्रीमन्तः 'केदारनाथ ओझा" महोदयाः सभाध्यक्षतापन्ना आसन् । श्रीशेषराजरेग्मीमुख्या विद्वांसः संस्कृतविद्यालयीय छात्राश्च तत्रोपस्थिताऽभूवन् । "सन्ध्योपासनमहत्वम्" इतिविषये छात्रैः सुभाषणानि कृतानि । तत्र सभयानया प्रथमद्वितीयतृतीयस्थानभाजः विशेषतः पुरस्कृताः, तत्र - चतुर्थ - पञ्चम - स्थानस्था स्वल्पपुरस्कारेण पुरस्कृताः । ते च छात्रा इमेः—श्री सन्यासि स० म० विद्यालये वेदाचार्य वर्षे अधीयानः "राममूर्ति चतुर्वेदः" प्रथमः । श्री दक्षिणमूर्ति सं० म० विद्यालयीयः आचार्य कक्षायामधीयानः श्री गायत्रीस्वरूप ब्रह्मचारी" द्वितीयः श्री रामानन्दपीठ सं० म० विद्यालये शास्त्री प्रथम वर्षे वेदान्तमधीयानः "श्री विश्वम्भर दत्त भट्टः" तृतीयः, इत्येते विशेषपुरस्कारभाजः । अन्ये च द्वौ सन्तोषपुरस्कारभाजौ चतुर्थपञ्चम-स्थानस्थौ क्रमशः श्री रामानुज सं० म० विद्यालयीय "श्री हरिप्रपन्न कण्डेल" श्री सन्यासि सं० म० विद्यालयीय-वेदान्त-विभागाध्यक्ष-जगन्नाथ-शास्त्रिणा कृतम् । प्राकृतविषये वदद्भिः काशी हिन्दूविश्वविद्यालयस्य भूतपूर्वप्राध्यापकैः श्री शेषराज रेग्मीभिः स्वरचितानि पद्यानि श्रावितानि । तत्रायं भावोऽभूत्—आर्या वयं शास्त्रप्रमाणकाः शास्त्रं विहायास्माकमाश्रयणीयं किमपि नास्ति । "अहरहः सन्ध्यामुपासीत" इति विधिदर्शनात् प्रत्यहं सन्ध्योपास्यते । वेदः खलु हितमेवानुशास्ति तस्मात् वेदोक्तमाचरणीयम् । वेदाध्ययनस्य सन्ध्योपासनस्य च सम्बन्धो दृढोऽस्ति । वेदाध्ययनार्थमेव हि गुरुरुपनीय गायत्रीमन्त्रमुपदिशति । गायत्रीमनुध्यायन् ब्राह्मणः निष्कारणं षडङ्ग वेदमधीयात् । उक्तञ्च महाभाष्ये "ब्राह्मणेन निष्कारणो धर्मः षडङ्गं वेदोध्येयोज्ञेयश्च" । इति नेपालदेशादागतैः पं० श्रीदीनानाथगौतमैरपि गायत्री-शब्दो व्युपादितः, एवं निष्कामकर्मणां महत्वमुपवर्णितम् ।

श्री गोयनका विद्यालयन्यायाध्यापकश्रीदामोदरनैयायिकैः छात्राणां मांसि रञ्जयद्भिः प्रसंगतःपरोपकारः पुण्याय इतिश्लोको व्याख्यातः । ब्रह्मचारिणा एतत्सभा संस्थापकेन श्री गायत्रीनन्दनेन सन्ध्यायां प्राणायामादिक्रियाणामुत्तमः क्रमोर्वणितः ।

सञ्चालकजगन्नाथशास्त्रिणा भाषणे इत्थमभिहितम् इतरमन्त्रापेक्षया गायत्रीमन्त्रस्य वैशिष्टयञ्च चतुर्वेद-पठितत्वम् बुद्धिप्राप्तिहेतुत्वञ्चास्ति । अन्येषु मन्त्रेषु देवानतिविषयीक्रियन्ते । निखिलजगत्स्रष्टुः परमात्मनो भर्गः ( तेजः ) अस्मिन् मन्त्रे ध्यायते तस्मात् ब्रह्मप्रकाशात् धियःसत्कार्येषु प्रेरणं प्रार्थ्यते, धीः खलु यत्र कुत्रापि प्रवर्त्तितुं शक्ता, तत्र प्रार्थ्यते सत्कार्येषु प्रवृत्तिः । वैदिक कर्मसु सन्ध्यामूलभूताऽस्ति । एतस्मिन् छिन्ने सर्वं छिद्यते । वेदाध्ययनं गायत्रीजपो बलिवैश्वदेवादिकं सर्वमाधार मित्तिकारूपं द्विजत्वप्रयोजकञ्च । सांप्रदायिक शिवादि मन्त्रजपस्यतु तत्र भित्तौ चित्रतुल्यता आधाराभावे यथा चित्रं न संपद्यते तथैव सामान्यधर्मस्याभावे विशेषधर्म-

स्वीकारोऽनुपपन्नः। "निर्विशेषं न सामान्यम्" इति हि न्यायः। नित्यानां कर्मणामकरणे प्रत्यवायोत्पत्तिरित्युच्यते अत्र विचार्यमस्ति। कारणाभावस्योत्पादकता कथं, तस्य तु तुच्छत्वेनाकिञ्चित्करत्वात्। अत एव अद्वैतिन अभावस्योत्पादकतां प्रति सन्दिहानाः अज्ञानस्य भावरूपतां स्वीचक्रुः। तस्मादकरणादभावरूपात् कथमुत्पत्तिः प्रत्यवायस्येति प्रश्नः पुरतोऽवष्ठिते।

अत्रोच्यते:—भवति निःसन्देहमभावस्यपि समुत्पादकता। सर्वत्रापि कार्ये प्रतिबन्धक प्रतियोगिकाभावस्य हेतुत्वेन प्रायः सर्वैः स्वीकारात्- तस्मादस्ति नित्यकर्मकरण स्यापि प्रत्यवायोत्पादकता। सन्ध्यावन्दनस्य "ऋषयोदीर्घसन्ध्यत्वात् दीर्घमायुरवाप्नुयुः" इत्युक्तत्वेन काम्यत्वमपि सिद्धचति। वैदिकं कर्म फलवदेव भवति "अकरणे प्रत्यवायः करणेन विशेषफलवन्त" इत्यभिधानेऽपि प्रत्यवायाभावस्यैव फलत्वं वक्तुमुचितम्। सन्धौ भवा वेला सन्ध्या तत्र क्रियामाणमुपासनं "सन्ध्योपसना"॥ इदञ्च सन्ध्योपासनं कर्मान्तरकरणे योग्यताधायकम्। "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु" इत्युक्तत्वे नैतदकरणेन कर्मान्तर-योग्यताभावश्च ज्ञायते। उषःकाले जागरणेन शारीरिकस्वास्थ्यमपि वर्द्धते। स्नानादिना शारीरिकमलं ध्यानेन च भगवतो मानसिकञ्च मलमपैति। गायत्र्यधिकारिणा भाववताऽपि प्रातरुत्थाय स्नात्वा भगवन्नाम ग्रहणं तद् ध्यानादिकमनुष्ठेयम् इति॥

**अध्यक्षीयम्—**

स्नानं सन्ध्योपासनं सूर्यार्घ्यादिकञ्चानिवार्यं नित्यं कर्म। एतादृशकर्माकरणेन प्रत्यवायो भवति। सन्ध्यादि सत्कर्मणामभावादेव लोके शान्त्यभावोऽस्ति। एतदभावेन द्विजत्वमेवापैति। "ध्यै" चिन्तायामिति धातोर्निष्पन्नत्वात् सन्ध्याशब्दस्य तत्र ध्यानं विशिष्यते। प्रणायामाभ्यन्तरे देवत्रयस्यध्यानम् विधातव्यम्। "जन्माद्यस्य यतः" इत्यादिना जगज्जन्मादिकारणत्वस्य ब्रह्मवृत्तित्वं निश्चितमिति गायत्र्यां सवितृपदस्यापि तदेवार्थो वाच्यः। निखिलं जगत् सवितृतत्वमस्य तत्रैव संभवात्। अतः सन्ध्योपासने ब्रह्मध्यातव्यमिति आयाति। इदानीन्तु छात्राः सन्ध्योपासनं हित्वा चौर्थं कुर्वन्ति। परीक्षायां प्रश्नोत्तरीद्वारा प्रश्नानुत्तरयन्ति नेयं रीतिः समीचीना। अनया खलु रीत्या शास्त्रं लुप्यमानमिव दृश्यते। अस्मिन् सङ्कटेमयेकाले संस्कृतं तत्रोक्तसन्ध्या वन्दनादिकञ्च यत्नतः परिरक्षणीयम्। तस्मात् छात्रैः समयस्य सदुपयोगं कुर्वद्भिः "क्षणशः कणश"श्चेतिरीत्या विद्याध्येतव्या। परीक्षायां चौर्यं न कार्यम्। इयं सभा इत्थमेवाग्रेऽपि चलतु एतदर्थं मदीयं यत्किमपि साहाय्यं ग्रहीतुं शक्यम्।

इत्थमुक्त्वा पूर्वोक्तभाषाणकर्तृ छात्रा रुप्यकपुस्तकात्मकपुरस्कारेण पुरस्कृताः। पुरस्कारार्थं द्रव्य प्रदानन्तु श्रीगायत्रीनन्दनब्रह्मचारिभिः कृतम्। वेदत्रय्यां सहस्तकण्ठस्वरंमादावन्ते च वैदिकमङ्गलमाचरन्तौ सन्यासिसंस्कृत-महाविद्यालयीयछात्रौ श्रीबुद्धिराज-शिवराजस्यालौ वालौ सभयानया पुरस्कृतौ। सञ्चालककृतं धन्यवादप्रदादनन्तु सर्वान्त्ये सम्वृत्तम्। इत्थं सर्वमपि प्रमोदकरमभूत्।



**卐 कालः पिबति तद्रसम् 卐**

यस्य यस्य हि कार्यस्य फलितस्य विशेषतः।
क्षिप्रमक्रियमाणत्वे कालः पिबति तद्रसम्॥

* विज्ञापनम् *

# सूर्योदयस्य

५५ तमसंवत्सरप्रवेशोत्कर्षाशेषसमुल्लासोपलक्ष्ये

## स्वातन्त्र्योत्तरसंस्कृतप्रगतिविशेषाङ्कः

### परमैश्वर्योत्सवतया

### संस्कृत-विश्व-वाङ्मय-विषयसामरस्यसंज्ञापकतया

### १९७८ ख्रीस्ताब्दस्यागस्तमासे सप्रश्रयं प्रकाशयिष्यते

अस्मिन् विविधनिबन्ध — निकुरम्बरमणीये कविताकमनीये
एकाङ्किकृत्यङ्किते स्वाध्यायसामग्रीसंगते ऐतिहासिके

### स्वातंत्र्योत्तरसंस्कृतप्रगतिविशेषाङ्के

वर्षेऽस्मिन भारतेऽन्यत्र विदेशेषु यथा च सा।
एकत्रिंशच्छरच्छुभ्रा प्रगतिः ज्ञापयिष्यते ॥

महनीया मनीषिणः, प्रज्ञाप्रकाशपरमैश्वर्योल्लासिता विद्वांसः, कलाकृतिकलापकलितकलहंमाः कवयः, ललितालोकालोकलावण्यलालसाः कृपालवः लेखकाः, ऐतिहासिकं तथ्यं दिदर्शयिषवः शिक्षाकोविदाः, तत्त्वानुसन्धित्सूनां शिरोमणयः सश्रद्धं समाहूयन्ते श्रीमन्तः सूर्योदयोदयाय संस्कृतसुभगरश्मिप्रसरप्रकाशप्रसारायेति प्रार्थना। तत्र विषयाः — स्वातंत्र्योत्तरसंस्कृतविकासः, गद्यकाव्यम्, चम्पूकाव्यम्, मुक्तकानि, स्तोत्राणि, खण्डकाव्यानि, महाकाव्यानि निबन्धाः लक्षणलक्ष्यग्रन्थाः, कोशेतिहासग्रन्थाः नास्तिकास्तिकदर्शनदर्शकग्रन्थाः तन्त्रग्रन्थाः, गणितफलितज्योतिषग्रन्था, व्याकरणप्रक्रियादर्शनविषयकाःग्रन्थाः पुराणेतिहासप्रकाशनानि, शासननीतिः अपरभाषाभ्यः संस्कृतेऽनूदितविषयाश्च तथान्यलेखकैरूह्या विषयाः भविष्यन्ति।

संस्कृतसेविसंस्थानां, संस्कृतसेवार्थं जीवनसमर्पकानां निःस्वार्थकार्य-सम्पादकानां सर्वातिशायिनां विदुषां परिचयः दैनिक-साप्ताहिकपाक्षिक-मासिक-त्रैमासिक-षाण्मासिकवार्षिकपत्राणां परिचयः इत्येतेषु सन्दर्भविभाजितेषु विषयेषु लेखान् संप्रेष्य सूर्योदयसम्पादकोऽनुग्राह्यः श्रीमद्भिरिति शम्।

पञ्जीकृत-संख्या--एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

**पत्र-संहिता—**

१. 'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश —(मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३/०० पृथक् प्रदेयानि स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-प्रथमाङ्कतः (जनवरीअङ्कतः) एव ग्राहकत्व स्वीक्रियते। माध्यमिकेन केनापि अङ्केन न स्वीक्रियेत।

३. आंग्लमासस्य २६ तमे दिनाङ्के सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४ लेख-कवितादीनां भाषया संयतया, सरलया, शुद्धया च भाव्यम्। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका— टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् येन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापनशुल्कम् -**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियते। | |

❀ संङ्केतः ❀

**'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी—१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी कैण्ट।
मुद्रण-स्थल—जयभारत प्रेस, बाँसफाटक, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

वर्षम् ५५

अङ्कः ६
जून १९७८

संरक्षिका
श्रीमती विद्यादेवीजी महोदया

प्रबन्धसम्पादिका
श्रीमती एस० बी० पाई०

वार्षिकं मूल्यम्
९/०० रूप्यकाणि

प्रत्यङ्कमूल्यम्
१/०० एकरूप्यकम्

सम्पादकः :— डॉ० परमहंस मिश्रः

सहसम्पादकौ :—
डॉ० कपिलदेव पाण्डेयः — श्रीश्यामविहारी त्रिपाठी


## व्यपनयतु स वस्तामसीं वृत्तिमीशः —

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं, या हविर्या च होत्री,
ये द्वे कालं विधत्तः श्रुतिविषयगुणा, या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वबीजप्रकृतिरिति यया, प्राणिनः प्राणवन्तः,
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥१॥

— अभिज्ञानशाकुन्तलम्

× × ×

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले, यः स्वयं कृत्तिवासाः,
कान्तासम्मिश्रदेहोऽप्यविषयमनसां, यः परस्ताद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः,
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥२॥

— मालविकाग्निमित्रम्

# अनुक्रमः



## सूक्तयः

विद्यावतां को विदेशः ?
सज्जनानां को द्वेषः ?
दिगम्बराणां को वेषः ?
सहिष्णूनां कः क्लेशः ?

लघुबालानां बोधनम्,
मनोमलानां शोधनम्,
कामनानाम् अवरोधनम्,
दुष्करं भवति ।

कुटुम्बिनां गृहभारस्य,
विलासिनां शृङ्गारस्य,
दयावताम् उपकारस्य,
गणना का ?

श्यामल – जलद – घटानाम्,
कुपित – फणीन्द्र – फटानाम्,
उच्छलदुदधि – तटानाम्,
छटा परम – रमणीया ।

मुग्धानां वदनेषु,
स्निग्धानां नयनेषु,
विदग्धानां वचनेषु,
मधुधारा प्रवहति ।

हिमालयस्य स्थिरतामपि,
सागरस्य गम्भीरतामपि,
आकाशस्य निस्सीमतामपि,
मनुष्यः अतिशेते ।

जनन्या वात्सल्यस्य,
शिशूनां चापल्यस्य,
उत्सवानां माङ्गल्यस्य,
सीमा कः ?

दुर्मदजन – प्राबल्यम्,
चाटुकार – चापल्यम्,
साधु - सुजन - दौर्बल्यम्,
त्रितयं जीवन - शल्यम् ।

रम्या आकृतिः,
सौम्या प्रकृतिः,
हृद्या व्यवहृतिः,
एकत्र दुर्लभा भवति ।

साधवः खलु—
अकारण – बन्धवः'
स्नेह - सुधा - सिन्धवः,
शारद – विमलेन्दवः

—श्री वासुदेव द्विवेदिशास्त्रिणाम्

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बानुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५५ तमे वर्षे ] वाराणसी, ज्येष्ठ २०३५, जून १९७८ [ अङ्कः ६

## 卐 इदं श्रेष्ठं ज्योतिषां ज्योतिः 卐

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा।
यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक्॥१॥
रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
समानबन्धू अमृते अनूची द्यावावर्णं चरत आमिनाने॥२॥
समानोऽध्वा स्वस्रोरनन्तस्तमान्यान्या चरतो देव शिष्टे।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे॥३॥
भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः।
प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा॥४॥

त्रैष्टुभे छन्दसि उषष्यं रहस्यं श्रुतिः समुद्घाटयति। जगत्यां यावन्ति ज्योतींषि स्वकीयाभिर्गभस्तिभिः प्रकाशराशिं प्रसारयन्ति, तेषु ग्रहनक्षत्रविद्युदिन्दुदिवाकरेषु इदम् उष आख्यं ज्योतिः प्रशस्यतमम् पारमेश्वरप्रकाशोपश्लेषेणैव प्रकाशमानत्वात्। विस्मयविमुग्धकरैः विचित्रैः संकेतप्रकेतैः कमनीयम् एतन्मरीचिमण्डलम् विश्वं विसृत्वरस्तया व्याप्नोति। यथा सूर्यः रात्रिं जनयति तथैव रात्रिरपि उषसः प्रसविनी कल्पते। अथवा रात्रिसकाशादुत्पन्ना उषा सूर्यस्य जन्मने प्रभवति च।

दीप्तिमती श्वेतवर्णा उषा देवता सूर्यं वत्सं स्वाङ्के निधाय आगच्छति, तथैव शाश्वतम् उषा समायाति। स्नेहमयी निशा च उषसे स्वहृदयदेशे एव स्थानं निर्धारयति। तमिस्राया उषसश्च सूर्य एव एकः बन्धुः। यदि एका उदेष्यता सूर्येण बन्धुतां साधयति तदाऽन्या अस्तंगतेनाहस्करेण प्रणाति। उषा निशाचोभये अमृते, दिवशिश्वद्गमनशीले स्तः। उभे च एकेनैवाकाशमार्गेण गच्छतः। एते मिथः भगिन्यौ च स्तः। प्रतीयते सूर्येणैव कलिता गतिशीलता शिक्षितैताभ्याम्। यद्यप्येते विपरीतस्वभावे तथापि मिथः वैमत्यं कदापि न वहन्ति।

सूनृतानां वाचामुत्पादयित्री उषा शश्वत्प्रकाशमयी विभाति। सा सर्वत्र चितिं तन्वती आराध्या भवति एवं विश्वेषां द्वाराणि व्यावृणोति। तमसावृतं विश्वं प्रकाशयन्ती उषा विश्वस्मै विभवानप्यर्पयति।

# श्रीमहर्षिज्ञानानन्दचरितं महाकाव्यम्

## स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणः

## [ त्रयोविंशः सर्गः ]

विद्वद्बोध्यावृत्तयो दर्शनानां दृश्यं तत्तद् दर्शनज्ञानचित्रम् ।
नैके ग्रन्थाश्चारचय्यप्रकाशं नीतास्तेन श्रीमहर्षेर्निदेशात् ॥ ६२ ॥

धर्मग्लानिं राजपक्षात्प्रपन्नां नैतां सेहे तद्विरोधे मनस्वी ।
सत्सम्मानादाङ्लसम्राट्प्रदत्तं तं चोपाधिं त्यक्तवान् यो विपश्चित् ॥ ६३ ॥

वेदान्ते यो नूतनं शक्तिभाष्यं विद्वत्सेव्यं चारचय्याप्रमेयम् ।
अद्वैतादीन् सर्ववादान् निरस्यन् शक्तिं चैकां सर्वमान्यां न्यगादीत् ॥ ६४ ॥

स्वस्मिन् काले भारतेऽस्मिन् समस्ते प्रख्यातो यः सर्वतन्त्रस्वतन्त्रः ।
विज्ञानाब्धिस्तर्करत्नाभिधानो धर्मप्राणो विज्ञपञ्चाननोऽपि ॥ ६५ ॥

काले काले श्रीमुनीन्द्रस्य पादं प्राप्य स्वेषां संशयानां सहस्रम् ।
उन्मूल्यासौ यत्नतस्तत्समूलं सान्द्रानन्दां चित्तशान्तिं प्रपेदे ॥ ६६ ॥

नैके चान्ये सन्ति शिष्यप्रशिष्या योगीन्द्राद् येऽधीतवन्तो बुधेन्द्राः ।
द्वारैतेषां प्रोक्तसद्ग्रन्थराशेर्नामान्याख्यातुं क ईशो बुधः स्यात् ॥ ६७ ॥

खाभ्राभ्रयुग्ममितवैक्रमवत्सरे तां कृष्णाष्टमीं तिथिमहोशुभदां प्रशस्ताम् ।
आरभ्य संग्रथितुमेतदहं प्रवृत्तः किन्त्वन्तरा निपतिता बहवोऽन्तरायाः ॥ ६८ ॥

प्रत्युद्गता बत यदा च यदा च काले विघ्नाः शतानि मम मानसयागनिघ्नाः ।
श्रीमन्महर्षिचरणस्मरणाग्निमध्येऽभूवन् करालवपुषः शलभायितास्ते ॥ ६९ ॥

विन्ध्येश्वरीतिपदसंवलितः प्रसादः सारण्यमण्डलविलासपुरस्य वासी ।
मिश्रो महर्षिपदपङ्कजचञ्चरीकस्तेनास्ति संनिगदितं चरितं महर्षेः ॥ ७० ॥

विमलचरितमेतत् कुम्भशुक्लत्रितिथ्यां त्रिपुरहरनगर्यां स्वर्णदीपुण्यतीरे ।
कुनयनखभुजाढ्ये वत्सरे विक्रमस्य शिवसहितशिवायाः पूर्तिमागात्प्रसादात् ॥ ७१ ॥

इति श्रीकविवर्यविन्ध्येश्वरीप्रसादशास्त्रिविरचिते
महर्षिज्ञानानन्दचरिते महाकाव्ये
त्रयोविंशः सर्गः ॥

॥ समाप्तं चेदं महर्षिचरितम् ॥

सम्पादकीयम्

# उपासनासाधनम् रुद्राक्षः—

किं नाम मानवजीवनस्य लक्ष्यम्? सूक्ष्मेक्षिकया प्रत्यक्षे परोक्षे वा समीक्षमाणे क्षेत्रक्षेत्रज्ञयोश्च क्षमत्वे परीक्षमाणे—इदमेव लक्ष्यते यत् क्षयाभिमुखेऽस्मिन् क्षमामण्डले यद्वस्तु जायते, अस्ति, विपरिणमते वर्द्धते तत्सर्वमपक्षीयते तत्पश्चात् विनश्यति च ! न कश्चित् शक्ष्यते स्थावरः जंगमो वा, चरः अचरो वा, पामरः पण्डितो वा क्षीणतां क्षपयितुमिति एतदेवाभिलक्ष्य पद्मनाभवक्त्रारविन्दमकरन्दमनोहरा वाग् शाश्वतिकी' वास्तविकतां व्याहरति— "जातस्य हि ध्रुवो मृत्यु" रिति।

विश्वस्मिन् सर्वासु योनिषु योग्यतमा मनुतनुजनुष्कता। यतो मनुतनुजनुषः एव प्रज्ञापारमितापारमैश्वर्यसंवलिताः शेमुषीशमितसमस्तकलमषकलापाः शबलं किमपि शिवशक्तिसामरस्यं साधितु शक्ताः शोभन्तेतमाम्।

सामरस्यसाधनसमीहैव साधकानां कृते एकां विश्ववैलक्षण्यलक्षितां पदवीं दिशति, यामनुसृत्य मानवाः मोक्षमधिगच्छन्ति।

अस्यां पदव्यां परिचलनम्, किमपि लक्ष्यं वीक्ष्य, किमपि विशिष्टम् इष्टं दृष्ट्वा तदुपलब्धिप्रयत्नः एवोपासना ! अस्मिन् उपासनावर्त्मनि गन्तुम् शास्त्राणि निर्दिशन्ति, गुरवः जागरयन्ति सिद्धाः सृतिसारल्यं शिक्षयन्ति। एवम् शास्त्रगुरुसिद्धजनसमुदिष्टदृष्ट्या एवेष्टस्वरूपसमवाप्तिचिन्तनमेवोपासना भवति। यल्लक्ष्यं निर्धार्यते तत्र निरन्तरं नियमितं स्वात्मनः समायोजनमेवोपासना। किं बहुना स्वेष्टानुसन्धानाद्रिश्रृङ्गेभ्यः समुद्गम्य हृदयाम्बुधिपर्यन्तम् प्रवहितः पुष्कलः त्रिपथगामृतप्रवाह एव, प्रवृत्तिधारैवोपासना। श्रुतिः समभिव्याहरति— "क्रतुमयोऽयं पुरुषः' तस्मात् क्रतुं कुर्वीत; "सर्व खल्विदं ब्रह्म, तज्जलान् इति शान्त उपासीत्" (छा० ३।१४।१) अर्थात् उपासना एव जीवनस्य मुख्यं कर्म।' शान्ततया उपासना कर्त्तव्या एव इति विधिः अत्र व्याहृतः दृश्यते। हिंकारेण, प्रस्तावेन, आना, उद्गीथेन निधनेन, प्रतिहारेण उपद्रवेण सप्तप्रकारा उपासना छान्दोग्ये समुपदिष्टा वर्तते। विचारणीयम् भवति—यत् किं सर्वे जनाः उपासनां कर्त्तुं शक्नुवन्ति? स्पष्टमेवोत्तरं न इति। यतः अत्र साधनाया यः पात्रं भवितुमर्हति स एवोपासकः भवितुमर्हति।

उदाहर्त्तुं शक्यते—यथा चक्षुषा रूपं गृह्यते, रसनया रसः, घ्राणेन गन्धः, त्वचा स्पर्शः, श्रुत्या शब्दः, नान्यथा, तथैवात्रापि आधिकारिकता अपेक्षिता भवति। यमेन, नियमेन, आसनेन प्राणायामेन, ध्यानेन, धारणया, च क्रमिकतया पुरुषः प्रयतते, प्रवृत्ति परिष्करोति, स्वात्म्यं सार्वात्म्येन समावरकान् मलान् आवरणानि कञ्चुकान् विक्षेपांश्च निश्चप्रचमपाकृत्य, स्मरणेन प्रत्यभिज्ञानेन ताद्रूप्यानुसन्धानेन तादात्म्यानुमानेन भक्त्या वा शारीरिकीं स्थूलसत्तां पारमार्थिकीं विधायैव साधकः सिद्धिं प्राप्तुं शक्नुयात्। तस्यामवस्थायामेव शरीरम् भगवत्प्राप्तियोग्यम् भवति। उच्यते च चिन्तकैः—ब्राह्मीयं क्रियते तनुरिति।

केन विधिनेयं तनुः ब्राह्मी क्रियते—अस्मिन् विषये श्रुतिषु उपनिषत्सु शास्त्रेषु बहुविचारितम् वर्त्तते नात्र तस्योपबृंहणम् लक्ष्यम् किन्तु निश्चितमेतत् यत् प्रवृत्तेः परिष्कारे, शरीरायसः तप्तदिव्यकाञ्चनकरणे रुद्राक्षः विशिष्टः साधनम् भवति। रुद्राक्षस्य माहात्म्यं विभिन्नेषु स्मृतितंत्रागमग्रंथेषु वर्णितमस्ति—तद्यथा—

रुद्राक्षान् कण्ठदेशे, दशनपरिमितान् मस्तके विंशतिद्वे, षट् षट् कर्णप्रदेशे करयुगलकृते द्वादशद्वादशैव।

बाह्वोरिन्दोः कलाभिः नयनयुगकृते त्वेकमेकं शिखायां,
वक्षस्यष्टाधिकं यः कलयति शतकं, स स्वयं नीलकण्ठः ॥

दे० भा० ११।३।१७

वक्ति देवीभागवते व्यासः--यत् यथाकथमपि समन्त्रकम् अमन्त्रकं वा रुद्राक्षधारणम् धारकस्य सर्वाणि पापान्यपाकरोति अतः अपरिमेयमाहात्म्यस्य रुद्राक्षस्य धारणमनिवार्यमेव। रुद्राक्षाणां स्पर्शने, धारणे, मालारूपेण ग्रहणे यावन्ति फलानि भवन्ति ततः लक्षकोटिशतानि फलानि—रुद्राक्षमालया मन्त्रजपे भवन्ति। रुद्राक्षधारकः साक्षात् शिव इव भवतीति बहुधा माहात्म्यज्ञैः कथ्यते। उपासनायां प्रत्यक्षसाधनरूपाः रुद्राक्षाः एकद्वित्रिक्रमेण चतुर्दशमुखाः परिलक्ष्यन्ते। तत्र एकमुखो रुद्राक्षः साक्षात् शिवः, द्विवक्त्रः महादेवः, त्रिवक्त्रः अग्निः, चतुर्वक्त्रः ब्रह्मा, पञ्चवक्त्रः रुद्रः, षड्वक्त्रः कार्त्तिकेयः, सप्तास्यः अनन्तः, अष्टवक्त्रः, गणेशः, नवमुखः भैरवः, दशवक्त्रः विष्णुः, एकादशास्यः एकादशरुद्ररूपः, द्वादशास्यः साक्षात् सूर्यः, त्रयोदशास्यः इन्द्रः तथा चतुर्दशास्यः रुदाक्षः साक्षात् भगवान् हनुमान् एव प्रसिद्धः। एतेषु कस्यापि धारणम् श्रेयः साधकं पापापहारकं भवतीत्यत्र नास्ति संशीतिलेशः।

समस्तशक्तिमन्त्राणां शिवमंत्राणां विष्णिवन्द्रादिदेवमन्त्राणां त्र्यम्बकादिमहामृत्युञ्जयादि—श्रुतिमंत्राणां किं बहुना सम्प्रदायप्रयुक्तमन्त्राणां च जपः रुद्राक्षेण ध्रुवं सफलः भवति। जपात् पूर्वं साधकः शुचिर्भुत्वा देशकालसंकीर्त्तनादिकं विधाय मन्त्रन्यासादिकं विधाय प्रयतः सन् रुद्राक्षमालां पूजयेत्—श्लोकांश्च पठेत्--

मां माले महामाले सर्वशक्तिस्वरूपिणी।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
अविघ्नं कुरुमाले त्वं गृह्णामि दक्षिणे करे।
जपकाले च सिद्धयर्थं, प्रसीद मम सिद्धये ॥

ॐ अक्षमालाधिपतये सुसिद्धिं देहि देहि, सर्वमन्त्रार्थान् साधय साधय सर्वसिद्धिं परिकल्पय परिकल्पय मे स्वाहा। ॐ ह्रीं अक्षमालिकायै नमः ॥ इति पठित्वा नमस्कृत्य जपेनोपासकः परां शान्तिं साफल्यं च लभते।

धार्मिकास्तु एवमेव रुद्राक्षं धारयन्ति। सम्प्रति रक्तचापादिग्रस्ताः द्राक्तरोपदिष्टाश्च रुद्राक्षमालिकां धारयन्ति। तदपि वरमेव। रुद्राक्षे महारोगापहारिका शक्तिः साक्षादेवानुभूयते। श्रीमन्तोऽपि धारयन्तु, जीवने सर्वथा शुचितां च स्वीकुर्वन्तु पश्यन्तु चाप्रत्याशितम् साफल्यमिति शम्।

# रुद्राक्षोपरि तस्कराणां कृपा

रुद्राक्षः न केवलं साधकेभ्य आधिभौतिकीमाधिदैविकीमेव समृद्धिम् वितरति, न केवलं पाप्मानमपाकरोत्यपितु आध्यात्मिकीं स्वतामपि समर्पयति। एतादृशि समृद्धि प्रदातरि वस्तुनि सर्वेषां स्वाभाविकमाकर्षणमित्यनुमातुमनायासेनैव शक्यते। जागतिकेषु जीवकदम्बकेषु तस्करा अपि महत्वपूर्णा एव जीवाः भवन्ति। अतएव श्रुतिरपि समादिशति "तस्कराणां पतये नमो नमः"। प्रतीयते वैदिकेऽपि युगे मन्त्रद्रष्टारः ऋषयोऽपि तस्करैरनुकम्पिता स्तुतिं प्रायुंक्त।

साम्प्रतिकं शासनमपि तस्करेभ्यः समांसमीनां सर्वसुहितिविधायिकां सुविधां प्रयच्छति। वर्त्तते तेभ्यः मुक्तः व्यापारप्रयोगावसरः। भीतिरियमेवात्र वर्त्तते यत् इमे क्वचित् शासनमेव नाधोमुखोर्ध्वपादं विदध्युः!

पश्यन्तु भवन्तः तस्कराणां चमत्कारम् ४-४-७८ दिनाङ्के काश्यां कोटिरूप्यकमूल्यमितः ८५ शणास्यूतपूरितः रुद्राक्षः गृहीतः। तत्सम्बन्धिसतीशचन्द्राग्रवालमहोदयाः श्रीफूलचन्द्रस्य प्रश्नोत्तरे (प्रश्नसंख्या २३१५) सन्दर्भे यदुदरन् तत् सर्वं तथ्यविहीनमेव आसीत्। अद्यावधि तद्रुद्राक्षराशेः किमभवदित्यत्र जनता तद्वृत्तवंचिता एव वर्त्तते।

काश्यां रुद्राक्षतास्कर्यम् साध्नोति यत्, प्रयागे पुर्यां, रामेश्वरे, द्वारिकायां, तथैव महानगरीषु मुम्बयी-कालिकाता-मद्रासादिषु चापि रुद्राक्षतस्कराणां स्तैन्यव्यापाराः निर्बाधं प्रवर्धिष्यमाणाः भवितुं शक्यन्ते ।

किं कुर्वन्ति शासनस्य विभागाः ? निष्क्रियास्ते शयाना एव स्थास्यन्ति वा तैरेव तस्करैः सम्मिल्य कूटाक्षैः देविष्यन्ति ।

वाराणस्यां विराजन्ते महनीयाः महात्मानः मौनीबावा-महोदयाः । तेषां निःस्वार्थप्रयासैः रुद्राक्षतास्कर्यं प्रति देशस्य दृष्टिः समाकृष्टा । तैरेव महात्मभिः नेतारः संसत्स-दस्याश्च प्रेरिताः लोकसभायां प्रश्नाश्च कारिताः ।

इदं शासनम् जनताशासनम् । जनता कथं न सूचिता काशीरुद्राक्षकाण्डे विषये—इत्याश्चर्यम्

रुद्राक्षतस्करव्यापारेण सर्वाधिकं पीडिताः सन्ति ते साधकाः, पण्डिताः ब्राह्मणा ये न पुष्कलं स्वर्णराशिं रक्षन्ति न कृष्णवाणिज्यं विदधते, अपितु समग्रं जीवनं स्वेष्टसमाराधने व्यतियन्ति, शास्त्रमर्यादायां जीवनं यापयन्ति किन्तु महर्घतया मूल्यं दातुं न पारयन्ति ।

सम्प्रति जपयोग्या रुद्राक्षमाला सार्द्धद्विरूप्यकविनिमयेन प्राप्यते । सामान्या अपि चत्वारिंशत्पंचाशत् शतरूप्यकमूल्येन मिलन्ति । एतस्याः महर्घतायाः कारणम् केवलं तस्कराणां कृपैव । परिणामतः जपस्य विधिविधानेऽपि विविधाः बाधाः समापतन्ति । तथा राष्ट्रस्य देशस्य संस्कारक्षीणता च जायते ।

सूर्योदयः शासनं जनतां जननेतॄन् अन्यांश्च विचारकान् आह्वयति रुद्राक्षस्तैन्यस्य समूलमुन्मूलनार्थमिति । इन्डोनेशियातः समायाते रुद्राक्षे, भारते ५० पणकारः प्रति KG मूल्यं भवति । किन्तु तस्कराः एतावत्येव विंशतिसहस्रमर्जयन्ति धार्मिकतां च विध्वंसयन्ति ! भगवन् ! त्वमेव रक्ष सर्वम् ।

पूर्वतोनुवृत्तम्—

# संस्कृतकाव्यानि

–श्री वि० कृष्णास्वाम्ययंगार्यः

## श्रीहर्षः

श्रीहर्षश्चायं न कान्यकुब्जाधिपतिर्नागानन्दादीनां नाटकानां कर्ता कविः, अपितु मामल्लदेव्या हरीस्य च पुत्रः कश्चिदन्य एवेति नैषधीयकाव्ये प्रतिसर्गान्तं—

"श्रीहर्षं कविराजराजिमुकुटालङ्कारहरीस्सुतं,
श्रीहरीस्सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तच्चिन्तामणिमंत्रचिन्तनफले, शृंगारभंग्या महा
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः" ।

इत्यादिरीत्योपनिबद्धा तस्यैव सूक्तिर्व्यनक्ति । चिन्तामणिमंत्रस्योपासनया प्रसन्नदेवतानुग्रहेण काव्यरचनाया मवतारितः प्रयत्न इत्यप्येषैव कवेरुक्तिर्व्याचष्ट । एष कविस्तावन्मम्मटभट्टस्य जामाता बभूव । नैषधीयकाव्यं विरचय्य काव्यप्रकाशकाराय श्वशुराय प्रादर्शयत् । सोऽपि प्रथमत एव काव्यमिदमुपादर्शिष्यत चेद्दोषप्रकरणे समुचितानामुदाहरणानामन्वेषणाय मे क्लेशो न समपत्स्यतेति काव्यमेतदभिननन्दे" ति काचित्कथा नैषधस्य विद्वद्दोषधत्वाद्दुरवगाहतया केषाञ्चिदसूयालूनां कलपना जागर्ति । अन्ये तु श्वेतरोगपीडितः श्रीहर्षः पीडापरिहाराय 'कर्कोटकस्य नागस्य

दमयन्त्या नलस्य च। ऋतुपर्णस्य राजर्षेः कीर्तनं कालिनाशनमि''ति सूक्ति स्मरन्नैषधीयमरचयत्। विमुक्ते च रोगे भृशमानन्देति वदन्ति। परे तु बुद्धिप्रकर्षमस्य विज्ञाय पितरौ माषापूपभक्षणमादिशताम्। अथाऽप्यस्य तीक्ष्णा मेधाशक्तिर्न जहास। केनचिन्माषभक्षणकारणमनुयुक्तः 'शेमुषीमुषं माषममश्नामी' ति प्रत्युत्तरितवान्। एतादृश्यस्य लोकविलक्षणा प्रतिभाशक्तिरित्याभाषन्ते। वस्तुतः काल्पनिकीभिः कथाभिरिमाभिर्न कालदेशादिकमस्य निर्णेतुं शक्यते। जयचन्द्रो नाम संयुक्तादेव्याः पिता पृथ्वीराजस्य श्वशुरः कान्यकुब्जाधिपतिः स्वदेशद्रोही। एतस्यास्थाने श्रीहर्षकविरसौ जीविकामवालम्बत। द्वादशशतकस्यांत्यभागे जयचन्द्रेणाहूते तुरुष्काधिपतौ पृथ्वीराजमुन्मूल्य कृतघ्नतया कान्यकुब्जमप्याक्रामति स्वदेशद्रोही नृपतिरसौ प्राणरक्षणाय पलायाञ्चक्रे। तस्यामेव राज्यविप्लवदुरवस्थायामास्थानकविरसावस्थानमरणं परिजिहीर्षुरसमाप्तायामपि कथायां परित्यज्य काव्यसम्पूरणप्रयासं देशान्तरं निरगात् इत्यनुमीयते। अस्य काव्ये द्वाविंशतिस्सर्गा अद्योपलब्धाः। शैली तावद्दुरवगाहैव। व्यख्यानमन्तरेणार्थाविगमो न सम्भवति। क्लिष्टा भाषा, प्रौढानि वर्णनानि। अथाऽपि काव्यमिदं रमणीयमेव दृश्यते षट्सु महाकाव्येष्वेकतमतया परिगणितञ्च। कालिदासस्य रघुवंशकुमारसम्भवौ भारवेः किरातार्जुनीयम्, माघस्य शशुपालवधम्, भट्टिकाव्यम्, श्रीहर्षस्य नैषधीयचरितञ्चेति षण्महाकाव्यानि प्रशस्तानि।

श्रीहर्षेणानेन खण्डनखण्डखाद्यमित्येको दार्शनिको (PhilosoPhic) ग्रन्थो व्यरचि। कविस्तार्किकश्चाहमिति दर्पेण श्रीहर्षः स्वीयं विज्ञानमात्मनैव प्रशंसति। उचितश्चायममुष्य दर्पः यत्तार्किकोऽपि सन् काव्यमलेखीत्।

## वेदान्तदेशिकः

कौशिकगोत्रीयोऽसौ वेङ्कटनाथनामाऽनन्तसूरितोतारम्बादेव्योस्सूनुरतिशयितप्रतिभः, कवितार्किकसिंहः, सर्वतंत्रस्वतंत्रः समस्यासहस्त्रीति नानाविधैर्बिरुदैरुपेतो रामानुजीयसिद्धान्तस्य पुनरुज्जीवनाचार्यः कविकुलशिरोमणिः १२६९-ए० डी० वर्षे 'तूप्पुल्' नाम्नि ग्रामे जन्मालभत। अस्य काव्येषु सर्वत्राऽपि कवितार्किकसिंहादीनि विरुदान्युपात्तान्यवलोक्यन्ते। एतस्य जीवनचरित्रादिकं मन्निर्मिते 'वेदान्तदेशिकः'' इति ग्रन्थे द्रष्टव्यम् ग्रन्थविस्तरभयादत्र कालमात्रमभिधाय काव्यान्यस्य विमृशामः।

**यादवाभ्युदयम्**—यादवाभ्युदयं नाम चतुर्विंशत्या सर्गैरुपेतं महाकाव्यमनेन व्यरचि, तस्मिंश्च काव्ये श्रीकृष्णस्यावतारादारभ्य सम्पूर्णा लीलाविनोदकथा वश्यवाचा कवितार्किकसिंहेन सम्यगुपवर्णिता। षष्ठे सर्गे विचित्राश्चित्रबन्धा माघभारविप्रमुखानां पण्डित्यमतिशयानाः काव्यमेतदास्वादनीयमापादयन्ति। रमणीया सरणिः काव्यान्तरेष्विव रसिकानामाह्लादिका। कालिदासवदेषोऽपि कविस्सरलया भाषया सर्वानप्यर्थान्विषयीकरोति, यदाह व्याख्याता चित्रमीमांसादिप्रौढग्रन्थरचयिता प्रसिद्धः पण्डितप्रकाण्डोऽप्पयदीक्षितः 'एवं विचिन्त्यास्सर्वत्र भावास्सन्ति पदे पदे। कवितार्किकसिंहस्य काव्येषु ललितेष्वपि' इति। एषा प्रशस्तिरेकैव काव्यस्यास्य मानोज्ञकमनुमापयितुमलम्भवतीति वाचकानामपरोक्षे विषये किं वृथा विलेखनप्रयासेन? काव्यरत्नमेतदादरणीयमित्येतावदभिधीयते।

**हंससंदेशः** – कालिदासस्य मेघसंदेशमनुसृत्य बहवस्संदेशकाव्यग्रन्थाः प्रकटीकृता। तेषु वेदान्तदेशिकस्य हंससंदेशकाव्यमतीव मनोरममस्ति। रावणापहृतां सीतां प्रति किष्किन्धायां मतङ्गाश्रमोपकण्ठं पर्वतगुहासु निवसन् श्रीरामचन्द्रो हंसमुखेन संदेशं प्रेषयति। स्वतांत्रा चात्र कवेर्वर्णनपद्धतिरनुकरणगन्धशून्या दृश्यते।। कस्तूरिकाजननशक्तिमृता मृगेण किमिति निषेवणीयस्सुमनसां गन्धः? कल्पनाशक्तिर्वर्णना चातुरी भाषाशैली चास्य कवेरप्रतिमा मनोहारिण्य उपलभ्यन्ते। अस्मिन्काव्ये ११० श्लोकाः सन्ति।

**सुभाषितनीवी**-प्रतिश्लोकमनेकानर्थानुपनिबध्य सुभाषितनीवी नाम कश्चिदुपदेशात्मको (Didactic) ग्रन्थः कविनाऽनेन निबद्धः। दुर्जनपद्धतिः दृप्तपद्धतिरित्यादयो विभागा बहवः सन्ति। अस्मिन्काव्ये १४४ श्लोकाः सन्ति। एकैकमपि पद्यं नानार्थं ग्रन्थस्यैकस्य तुलामर्थगाम्भीर्येण बिभर्ति। उद्यानपत्रिकायां व्याख्यायमानान्यस्य पद्यानि प्रेक्षमाणानां वाचकानां प्रत्यक्षमेव यत्कीदृशी वेदान्तदेशिकस्य कविताशक्तिरिरिति। निरुपमा प्रतिभासम्पत्तिरेतस्य समुत्कर्षे मूलम्। उदाहरणानि तु ग्रन्थविस्तरभयेन प्रकृते परित्यक्तानि। विस्तरस्तु 'वेदान्तदेशिकः'' इत्यस्मदीयग्रन्थपाठकैरनुसंधातव्यः।

**पादुकासहस्रम्**--एकदा 'कवितार्किकसिंह' इति विरुदमसहमानः 'मणवालप्पेरुमाल् नायिनार्'' नामा कविर्यो हि रात्रावेकस्यामेव श्रमतो रङ्गनाथस्य विषयमधिकृत्य सहस्रं रुचिराणि पद्यानि विनिर्माति, स एव कवितार्किकसिंह इति विरुदधारणमर्हति। यदि श्वः प्रभाते भवता सहस्रं पद्यानि निर्माय न प्रदर्श्यन्ते तर्हि तव विरुदमहमपहरिष्यामि इति जगर्ज। तस्यामेव रात्रौ महता क्लेशेन 'पदकमलसहस्रं प्रणिणीषुस्स ईर्ष्यालुः केवलं त्रीणि शतानि श्लोकानामकार्षीत्। वेदान्तदेशिकाचार्यस्तु 'पादुकासहस्र'' नामानं ग्रन्थं समाप्य रंगमारोपयामासुः। वादकोलाहले निर्जितस्स कविरमुं कवितार्किकसिंहमन्वर्थविरुदमङ्गीचकारेति प्रामाणिकी प्रतीतिजागर्ति। भगवतो रंगनाथस्य पादुकयोर्विषयमधिकृत्य स्तोत्ररूपमिदं काव्यं केवलवर्णनारूपं विनिर्मितम्। एकमेव विषयमवलम्ब्य महतः काव्यस्यैतादृशस्य निर्माणाद्वेदान्तदेशिकस्य कल्पनासामर्थ्यमनवद्यं निरवधिकं प्रकाशते। एतदपि काव्यमत्यन्तमनोहरम्, द्वात्रिंशद्भिः पद्धतिभिस्समेतम्, शाब्दिकैरार्थैश्चालङ्कारैः परिष्कृतमस्ति।

अस्य कवेर्वेदान्तविषयेषु महद्विज्ञानमस्ति। अनेन विनिर्मिताः परः शतं ग्रन्थाः समुपलभ्यन्ते। दिङ्मात्रमत्रोदाहरामः:-१ यादवाभ्युदयम् २ हंससंदेशः ३ सुभाषितनीवी ४४ सङ्कल्पसूर्योदयम् (नाटकम्) ५ पादुकासहस्रम् ६ अधिकरणसारावली ७ रहस्यत्रयसारः ८ गीताभाष्यतात्पर्यचन्द्रिका ९ न्यायपरिशुद्धिः १० न्यायसिद्धाञ्जनम् ११ सम्प्रदायपरिशुद्धिः १२ तत्त्वपदवी १३ रहस्यपदवी १४ तत्त्वमातृका १५ रहस्यमातृका १६ तत्त्वनवनीतम् १७ रहस्यनवनीतम् १८ तत्वसंदेशः १९ रहस्यसंदेशः २० सारसारः २१ सारदीपः २२ सारसंक्षेपः २३ तत्वरत्नावली २४ रहस्यरत्नावली २५ तत्वत्रयचुलकम् २६ प्रदानशतकम् २७ उपकारसंग्रहः २८ रहस्यशिखामणिः २९ अञ्जलिवैभवः ३० विरोधपरिहारः ३१ मुनिवाहनभोगः ३२ मधुरकविहृदयम् ३३ परमतभङ्गः'' इत्यादयो ग्रन्थाः। एतदतिरिक्तानि विष्णोर्नानारूपैरवतीर्णस्य पुण्यक्षेत्रेषु प्रतिष्ठितस्य च स्तोत्राणि ४२ संख्याकानि विरचितानि। एतेषु स्तोत्रेष्वपि स्फुटप्रतिभासा काव्यशैली दृश्यते। एषु स्तोत्रेष्वादृत्य द्विसहस्राधिकाः श्लोकास्सन्तीति निर्णीतम्। द्राविडभाषायामप्यस्य कवेर्बहवो ग्रन्थाः प्रख्याता दृश्यन्ते। यत्तु म्याग्डौनलकीथम्याक्स्मूल्लरप्रभृतयो विमर्शकाः कविकुलालङ्कारं तार्किकशिरोमणिमभ्यस्तसकलविद्यं विंशतिवर्षेष्वेव सर्वशास्त्रेषु कृतपरिश्रममेनं व्यस्मार्षुः, तत्र हि किं वा कारणमित्यविजानानानां नश्चित्रीयते चेतः। यतिराजसप्ततिस्तोत्रे वेदान्तदेशिकेन स्वयमेव—

पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे,
मीमांसामांसलात्मा समजनिषि मुहुस्सांख्ययोगौ समाख्यम्।
इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातंत्रकान्तारपान्थैरन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयन्तनीयः॥

इति प्रतिपादितमस्ति। अहो सर्वोत्कृष्टोऽस्य ज्ञानमहिमा।

**अन्यानि काव्यानि**-इतः परं विनिर्मितेषु काव्येषु रामणीयकमेव नास्तीति केषाञ्चिदन्याय्योऽधिक्षेपः। भट्टिकाव्य-

न्तावत् वैयाकरणानां नियमानामुचितान्युदाहरणानि यावदिच्छं प्रकाशयति । एष च भट्टिर्वलनगरे श्रीधरसेनस्यास्थाने काव्यासिदं जग्रन्थेति प्रमाणैर्द्रढितम् । एतच्च काव्यं ६४१ क्रि० श० वर्षे मृतस्य भर्तृहरेः कृतिरित्यन्ये कथयन्ति बहवश्च व्याख्यातारो मूलकारत्वेन भर्तृहरिमेव निर्दिशन्ति । श्रीधरसेनस्तावत् सप्तमशतकस्यादिभाग आसीदित्यतो भट्टेः कालोऽपि निश्चित एव । भट्टिकाव्यमिति नाम्नैव भर्तृहर्यादीनामेतत्काव्यलेखकत्वं न इति स्पष्टं प्रतीतावपि व्याख्यातृणां भ्रान्तौ कारणं नोपलब्धम् ।

पञ्चाशत्सर्गविशिष्टं हरविजयकाव्यं नवमशतकस्येन रत्नाकरनाम्ना काश्मीरदेशीयेन कविना विरचितम् । नलोदयनामकमन्यत्काव्यं कालिदासकर्तृकतया निर्दिष्टमुपलभ्यते । अस्मिन्काव्ये शब्दालङ्काराणामेव विशेषतः प्राधान्यं दृश्यते । भाषाशैल्यपि कर्तुर्नितरामर्वाचीनताङ्गमयति । तस्मात्कालिदासः नास्य काव्यस्य लेखको भवितुमर्हति । वास्तविकस्य ग्रन्थकर्तुर्नाम तु नास्ति विदितमधुनाऽप्यन्वेषकाणाम् । 'कविराजे' न विरचितं राघवपाण्डवीयाख्यं युगपद्रामायणमहाभारतयोः कथामुपवर्णयदेकं काव्यं श्लिष्टार्थमुपलब्धम् । अस्य कवेर्वास्तविकं नाम विरुदं वा कविराज इति, इत्यप्यनिर्णीतमेवावशिष्यते । प्रायोऽस्य कालः ८००वि. वर्षः। काव्यरचनायामतीव क्लेशस्सम्भावितोस्य कवेरुत्कर्षमादधाति, युगपदितिवृत्तद्वयनिबन्धस्य कष्टसाध्यत्वात् । अष्टादशसर्गपरिमितं मालवदेशराजस्य सिन्धुराजस्य नवसाहसाङ्कापराभिधानस्य कथां वर्णयत्, 'नवसाहसाङ्कचरित' मित्येकं काव्यं क्रि.श. १०००वर्षे पद्मगुप्तनाम्ना कविना व्यरचि । अत्र च सार्धसहस्रं (१४००) श्लोका उपलभ्यन्ते । घटकर्परकाव्यम् तावत् द्वाविंशत्यैव श्लोकैरुपेतं विक्रमादित्यास्थाने कालिदासादिभिस्साकमासीदिति पद्ये कस्मिंश्चिदुपात्तेन घटकर्परेण रचितम् । एष चान्ते "जीयेय येन कविना यमकैः परेण, तस्मै वहेयमुदकं घटकर्परेणे" त्येवं प्रतिजानाति स्म । अस्य कालो न विज्ञातः । चौरपञ्चाशिकादीनि बहूनि काव्यान्तराण्युपलब्धान्यपि रमणीयान्यपि ग्रन्थविस्तरभयान्न प्रकृते विमृश्यन्ते ।

इति श्रीमता कृष्णस्वाम्ययङ्गार्येण विरचितः 'संस्कृतकाव्यानी" ति ग्रन्थः समाप्तिमगात् ।

# कालिदाससाहित्ये सांस्कृतिकं वैभवम्

—कुञ्जबिहारी पाण्डेयः

को नु खलु जनः कविकुलललामभूतस्य कालिदासस्य संस्कृतसाहित्यमहाकाशभास्करस्य महनीयत्वं नानाविधमानस्वभावस्य जीवनदर्शनस्य च तस्य प्रकाशने सर्वथाऽप्रतिमवैशिष्ट्यं न जानाति । अयं तावन्निखिलकविकोविदकुलभूषणः स्वकीयासु सर्वास्वपि कृतिषु भारतीयसांस्कृतिकवैभवस्याशेषमानवीयचिन्तनततेः चित्रणे निजाद्वितीयं स्थानं गृह्णातीति सुव्यक्तमेव समेषां काव्यानुशीलनशीलानां सहृदयसचेतसां पुरस्तात् । अथ चिन्तनीयं हि प्राक् का नाम संस्कृतिः ? किं तस्याः स्वरूपम् ? कथङ्कारञ्च निरूपितं कालिदासीयसाहित्येषु कविप्रवरैः कालिदासपादैः । संस्कृतिः संस्करणं मनसः आत्मनो वेति । समुपसर्गककृधातोः क्तिन् प्रत्ययेन निष्पन्नं रूपमिदम् । सैव नाम

संस्कृतिर्या व्यपनयति मानवमनसोऽज्ञानमूलं, अपहरति सकलजनचित्तभ्रमं, प्रकाशयति ज्ञानज्योतिः, संस्थापयति चेतसि स्थैर्यं, दुर्भावदमनपुरःसरं कल्पयति शान्ति, दारयति दुर्गुणततिं, स्थापयति सत्याचरणं जीवनक्रमेषु, एवमेव सा नूनमशेषविश्वस्योपकर्त्री। संस्कृतिरेव किल त्रिविधाचारविचारवादव्याकुले जगतीह समेषां स्वान्तेषु सद्भावाविर्भावपूर्वकं विश्वबन्धुत्वं विश्वहितं विश्वोपकरणञ्च कल्पते। संस्कृतिमन्तरा न कोऽपि मानवः समाजो वा शान्तिमधिगन्तुं प्रभवति। इयन्तावद् भारतीयजीवनसरणिः, निखिलातिशायिगरिष्ठगुणगरिम्णा महाकविकालिदासस्य सकलासु रचनासु समस्तविश्वसंस्कृतिनभोमण्डले सावित्रं ज्योतिरिव देदीप्यते। समासेन संस्कारसम्पन्नं मानवस्वभावस्वरूपमेव संस्कृतिपदेनाभिधीयते। उक्तञ्चापि केनापि पाश्चात्यधीमता—

"Learned behavier of a people is Called culture"

मानवस्वभावस्य प्राकृतावस्था Nature इति आंग्लभाषायां कथ्यते तथैव कर्त्तनसंस्कारपुरःसरं संस्कृतलक्षणोपेतं स्वरूपं Nurture इत्यवगम्यते बुधैः। प्राकृतस्वरूपे यावान् सूक्ष्मः संस्कारः भवति, तावदेव संस्कृतेर्मूर्धन्यत्वं सम्पद्यते। प्राच्यभारतीयसंस्कृतेः परिधावत्रत्या धार्मिकभावना, पारलौकिकी चिन्ता, आध्यात्मिकी समुन्नतिः, वर्णाश्रमव्यवस्थे, सदाचारः, पुनर्जन्मवादः, मोक्षावाप्तिः, कर्मसिद्धान्तः, श्रुतेः प्रामाण्य, अहिंसासत्यत्यागादिपरिपालनं, तपोमयजीवनं मातृपितृगुरुब्राह्मणादिभक्तिप्रभृतयः समायान्ति।

अस्त्यसंशयं कवीन्द्रः कालिदासः भारतीयसंस्कृतेरपूर्वो विश्लेषकः। पदे पदे वयं तस्य समग्रासु रचनासु संस्कृतेः परिष्कृतं स्वरूपं प्रेक्षं प्रेक्षं भृशं मोदमनुभवामः। ख्याता एव कालिदासस्य रघुवंशमहाकाव्यं, कुमारसम्भवं, ऋतुसंहारः, मेघदूतं, अभिज्ञानशाकुन्तलं, मालविकाग्निमित्रं, विक्रमोर्वशीयञ्चेत्यादयस्सप्त कृतयः। तत्र प्रथमं धार्मिकभावनामधिकृत्य महाकवेश्चिन्तनमनूद्यते सम्प्रति। मानवेषु धर्मप्राधान्यमेव व्यवच्छेदयति तान् पश्वादिजन्तुभ्यः।

'धर्मो हि तेषामधिको विशेषः धर्मेण हीनाः पशुभिः समानाः'। 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म इति वैशेषिकदर्शनकृता महर्षिणा कणादपादेनापि ऐहिकमामुष्मिकञ्चोभयं क्षेमकरं धर्म इति निरूपितम्! सैव धार्मिकभावना मानवेषु विशिष्टा, न च सा पश्वादिषु संलक्ष्यते। भारतीयजीवनदर्शनस्य सारं विवृणुता श्रीमता कविप्रवरेण रघूणां जीवनमहो! कीदृशं हृद्यं परिष्कृतञ्च वर्णितम्—

'सोऽहमाजन्मशुद्धानामाफलोदय—कर्मणाम्।
आसमुद्रक्षितीशानामानाकं रथवर्त्मनाम् ॥ रघुवंशे—१-५

यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ १–६

त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजगीषूणां प्रजायै गृहमेधिनाम् ॥ १–७

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्धक्ये मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्' ॥ १–८

इत्थमेवैहिकधर्मस्वरूपं विवेचयता कालिदासेन नववधूधर्मश्चापि साधु व्याख्यातः।

'शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः' ॥

शाकुन्तले ४–१८

सप्तमेऽङ्के शाकुन्तले एव राजा दुष्यन्तः सविस्मयेन चेतसा तपस्वि – जनानामाचरणं वीक्ष्य प्रसन्नतामुपयाति—

'प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंन्निधौ संयमो,
यत्कांक्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥'

शाकुन्तले ७—१२

भारतीयसंस्कृतेः यादृशी समुन्नतभावना विक्रमोर्वशीयाख्यनाटकावसाने समुपलभ्यते तन्नूनमेव जगतः आदर्शभूताऽनुकरणीया च सर्वथा मानवैः । अतः परं किं वक्तुं पार्यते सुधीभिः—

'सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु ॥ विक्र.५ २५

इदं खलु भारतीयजीवनदर्शनस्य सर्वस्वं केषां धीमतां सहृदयानां चेतांसि नावर्जयति । जीवने निःस्पृहाचरणशीलस्य गृहस्थस्य धर्मं प्रति निर्दिशति कविप्रवरः कालिदासः—

'भूत्वा चिराय सदिगन्तमहीसपत्नी,
दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं,
शान्त्यै करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥'

शाकुन्तले ४–१९

निखिलमपि संस्कृतवाङ्मयमाध्यात्मिक्या भावनयाऽऽपूरितमिति नाविदितं तत्रभवत्सु विद्यावारिधिपारङ्गतेषु-विद्वद्धौरेयेषु । अध्यात्मप्रवृत्त्यैव प्रवर्त्तते मनसि सहृदयता सहानुभूतिरौदार्यादिकञ्च । इह लोकस्य सुस्पष्टं यत् स्वरूपं रघुवंशे प्रतिपादितं महाकविना तत्तु ध्रुवमेव विविधदर्शनानां सारस्वरूपं संलक्ष्यते ।

तद्यथा—'मरणं प्रकृतिः शरीरिणां,
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्,
यदि जन्तुर्ननु लाभवानसौ ॥' रघुवंशे ८-८७

अस्माकं भारतीयसंस्कृतेर्नितान्तं सूक्ष्मं तत्त्वन्तावदत्या परलौकिकी भावना पुनर्जन्मव्यवस्था च । इमे खलु भौतिकविषयाः नापातरम्याः पर्यन्तपरितापिनश्च भवन्ति। एषामाश्रयणेन पतनं सुलभं, दुःखावाप्तिस्सुनिश्चिता, सुखन्तु शशश्रृङ्गमिव नितरां दुर्लभमेतस्मादेव कारणात् धीराः वीराः, सुकृतिनः महान्तो जनाः स्वकर्त्तव्यं प्रमुखं मन्वानाः, तृणवत्प्राणानविगणय्य स्वकर्मानुष्ठातुं प्रयतन्ते। कालिदासीयचरित्रेषु सर्वत्रैतस्याः भावनायाः परिपोषणं दरीदृश्यते । अभिज्ञानशाकुन्तले कविकुलचूडामणिः कालिदासः समेषां कल्याणं कामयमानः कथयति—

'प्रवर्त्ततां प्रकृतिहिताय पार्थिवः,
सरस्वती श्रुतिमहती महीयताम् ।
ममापि च क्षपयतु नीललोहितः,
पुनर्भवं परिगतशक्तिरात्मभूः ॥

शाकुन्तले ७–३५

एवमेव पुनर्जन्मवादस्य प्रचारोऽपि भारतीयसांस्कृतिकधरातलस्य नितान्तमुत्कृष्टं चिन्तनं प्रति मुहुर्मुहुः समाकर्षति जनभावनाम् ।

'जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च' इति भगवद्गीतोक्तदिशा सर्वस्यापि प्राणिनः कर्मानुरूपं पुनर्जन्म सम्भवति । एतामेव जन्मान्तरभावनां प्रति सीता निजाभिप्रायमभिव्यनक्ति—

'कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥'

रघुवंशे १४–६२

अग्रे सीता कीदृश्योदात्तभावनया पतिप्रेम्णा च पूरिता सती जननान्तरेऽपि राममेव भर्तृत्वेनावाप्तुमभिलषति। एषा एतद्देशीया मर्यादा। अहो ! धन्यं भारतं वर्षं, यत्रैतादृश्यः पतिपरायणा नार्यः निजाभिरामचरित्रैः आदर्शजीवनपद्धतेरुदाहरणं प्रस्तुवन्ति--

'साहं तपःसूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्त्ता न च विप्रयोगः॥

रघुवंशे १४–६६

सदाचारपरिपालनं वर्णाश्रमव्यवस्थे चेति राष्ट्रस्यास्य संस्कृतेर्महनीयं तत्त्वमित्यपि सुविदितमेव तत्रभवत्सु विद्वज्जनेषु। 'आचारः परमो धर्म' इति सिद्धान्तसरण्या सदाचारः सर्वोत्तमं तप इति सर्वतोभावेन स पालनीयः। ब्रह्मचर्यादिपालनेनेन्द्रियनिग्रहो मनसो दमश्च नूनमेव कल्पनीयः। वर्णव्यवस्थाऽऽश्रमव्यवस्थेत्युभे अपि प्राच्यभारतीयसंस्कृतेः व्यवस्थितां जीवनपद्धतिं प्रकटयतः। कथितमेव गीतायाम्—

'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'।

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णास्तथा च ब्रह्मचर्यगृहस्थवानप्रस्थसन्यासाश्चत्वार एते आश्रमास्सन्ति। रघुवंशस्य चतुर्दशसर्गे मनुप्रणीतवर्णाश्रमधर्मपालनं प्रति निर्दिशति कालिदासः--

'नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमपेक्षणीया॥

रघुवंशे १४–६७

प्राचीनभारतीयतपोवनानां तत्रस्थानां वा जनानां कीदृशं मनोहारि चित्रणं विहितं कालिदासेन—

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः,
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः,
तोयधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः॥

शाकुन्तले १–१४

राजा दुष्यन्तः स्वक्षात्रधर्मं पालयति सत्करोति चोदारतया तपस्विजनान् ब्राह्मणाँश्च। यथा हि—

'शमप्रधानेषु तपोवनेषु गूढं हि दाहात्मकमस्ति तेजः'।

शाकुन्तले २–७

एवमेव सः शाकुन्तलस्य प्रथमाङ्के—

'कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु॥

शाकुन्तले १-२३

राज्ञः दुष्यन्तस्य राजर्षित्वं सुप्रतिपादितं शाकुन्तले तद्यथा—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये,
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः॥

शाकुन्तले २–१४

यज्ञकर्माग्निहोत्रविधिश्च कालिदासेन साधु व्याख्यातः। सर्वैरेव गृहस्थैः पञ्चयज्ञाः दैनिककर्त्तव्यत्वेनानुष्ठेयाः। यज्ञानुष्ठानेन देवप्रसादनमात्मोन्नतिश्च भवति। कण्वाश्रमे यज्ञवेदीदृश्यं कीदृशं रमणीयं स्मारयत्यस्मान् प्राच्यजीवनपद्धतिम्।

'अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः
प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पान्तु' ॥ शाकुन्तले ४-८

तपस्विजनानां हृदि समेषां प्राणिनां कृतेऽवितथमेव दयाहिंसापरोपकारभावना भवत्येवेति न तिरोहितं भारतीयजनानाम्। प्रथमेऽङ्के शाकुन्तले वैखानसः हस्तमुद्यम्य मृगप्रहरणशीलं राजानं तत्कार्यतः निरुध्य तस्य कर्त्तव्यं

स्मारयति । अवश्यमेव तपोवनस्थानां ब्राह्मणबटूनां निर्भयत्वमार्द्रहृदयत्वञ्च श्लाघ्यमद्यापि जीवने सर्वैरनुष्ठेयमस्ति---

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्,
मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
क्व बत हरिणकानां जीवनं चातिलोलं,
क्व च निशितनिपाताः वज्रसाराः शरास्ते ॥
शाकुन्तले १-१०

तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि ।। शाकुन्तले १-११

अस्माकं जीवने त्यागस्य तपसः मातृ-पितृ-अतिथि-गुर्वादिभक्तेरस्ति नाल्पं महत्वम् । मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, इत्यादिरूपेण देववदेतेषां बहुमानत्वं विद्यते बहुव्याख्यातं पुराकालिकसंस्कृतग्रन्थेषु । महाकविकालिदासश्च भारतीयसंस्कृतेरेव प्रतिपालकः सर्वत्रैव स्वचरित्रेषु वर्णनेषु वा अन्विष्यान्विष्य चिरन्तनसांस्कृतिकवैभवं वर्णयति, रञ्जयति च मनांसि पाश्चात्यानामपि किमुत भारतीयानां विबुधानाम् । मातृपितृभक्तेरादर्शस्वरूपं मर्यादापुरुषोत्तमस्य श्रीरामभद्रस्य चरित्रे रघुवंशाख्येऽपूर्वमहाकाव्ये कालिदासेन बहुचर्चितं तथापि न तृप्तिमाजगाम सः । रघुवंशस्य द्वादशे सर्गे रामस्य मुखभङ्गिमा यादृशः राज्याभिषेककाले आसीत्तथैव वनवासवृत्तश्रवणेऽपि । स खलु महात्मा मातापित्रोराज्ञां शिरसि निधाय वनं प्रस्थितवान् । किमन्यत्र साहित्ये मातृपितृभक्तेरीदृशं स्वरूपं दृश्यते ? नैवेति सर्वथा कल्पनीयम्—

दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ।। रघुवंशे १२-८
स सीता लक्ष्मणसखः सत्याद्गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकं च सतां मनः ।। रघुवंशे १२-९

अतिथिं प्रति चक्रवर्त्तिनः महाराजाधिराजस्य रघोः विनयं विलोक्य को नु खलु जनः तस्य प्रशंसां न विदधाति । कथयति राजा रघुः कौत्सं प्रति—

तमर्चयित्वा विधिवत् विधिज्ञः तपोधनं मानधनाग्रयायी ।
विशाम्पतिर्विष्टरभाजमारात् कृताञ्जलिः कृत्यविदित्युवाच ॥
रघुवंशे ५-३
अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे ! कुशली गुरुस्ते ।
यतस्त्वयाज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥
रघुवंशे ५-४

इत्थमेव धनादि वैभवं प्रति राज्ञः रघोः त्यागः-कौत्सस्य निःस्पृहत्वं स्तुत्यमेवेति विदाङ्कुर्वन्त्येव सर्वे । यथाहि—

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥
रघुवंशे ५-१

एवमशेषतः कालिदाससाहित्ये दृष्टिनिक्षेपेण तस्य वाङ्मयस्य गभीरानुशीलनेन च पदे पदे भारतीयसंस्कृतेः वैशिष्टचं समुपलभ्यते । अस्य कृतिषु प्रतिपादितो वैदिकसनातनधर्मः विश्वहिताय मानवहिताय च प्रवर्त्तितः नूनमद्यापि देशदेशान्तरेषु युगयुगान्तरेषु चाभिनन्द्यते । अस्मादेव कारणात् कालिदासस्य वर्चस्वं निखिलसाहित्यवियन्मण्डले प्रचण्डमार्त्तण्डरश्मिवत् प्रस्तुतं देदीप्यते । भारतीयचिन्तनस्य जीवनदर्शनस्य संस्कृतेर्वाऽन्वाख्याने वेदवेदाङ्गपुराणादय नालम्भूतास्तस्यैव हृद्यं मनोज्ञमनुकरणीयञ्च स्वरूपं सूपपादितं श्रीमता कविताकामिनीकान्तेन कालिदासवर्येण ।

भवति हि संस्कृतेरुभयात्मकं स्वरूपंम् । आद्यन्तावत्स्थूलमपरञ्च सूक्ष्मम् । संस्कृतेः स्थूलस्वरूपं जीवनस्य बाह्यक्षेत्रे आचारविचारे खाद्याखाद्यविवेके वस्त्राभूषणे जनानां पारस्परिकव्यवहारे संलक्ष्यते । तत्खलु संस्कृतेः स्थूलरूपमत्र न विवेचितं न वा स्पृष्टं विस्तरेण गौरवभिया । अत्र तावदपरं सूक्ष्मं चिन्तनात्मकं स्वरूपमेवावलम्ब्य किञ्चिन्मया स्वाभिप्रायः प्रकटितः भवतां पुरस्तात् ।

# उपनिषत्काव्ये—केनोपनिषत्

डी०-शेषगिरि शर्मा—नरसारावुपेट

## तृतीयः खण्डः

### मूलम्

१—ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ।

### अनुवादः

दिविजासुरयोः पुरा महान्,
समरोऽजायत दीर्घवासरः ।
विमुखाः परतत्त्वदर्शने
न किलार्हन्ति जयं सुरारयः ॥
दिविजाः परमात्मनिर्भराः
जयमर्हन्ति किलेति साक्षि तत् ।
व्यतरद्विजयं दिवौकसां,
न विदन्तिस्म पराऽत्मचेष्टिम् ॥
वयमेव जयस्य हेतवा,
वयमेवेति सुरा मदं ययुः ।
बुबुधुर्निखिलस्य कारणं,
न तु हृत्साक्षिणमीश्वरं विभुम् ॥

२—तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव, तन्न व्यजानत किमिदं यक्षमिति ॥
अलीकगर्वावृतदेववृन्दं,
प्रशास्तुकामं किल "तत्त्व" मत्र ।
अवातरीदद्भुत-धामरूपं,
न ज्ञातमेतत्किमितीन्द्रमुख्यैः ॥

३—ते ऽग्निमब्रुवन् जातवेद ! एतद्विजानीहि किमेतद्यक्षमिति, तथेति ।
उपसृत्य सुरा मरुत्सखं,
ननु वह्ने ! किमिदं महाद्भुतम् ।
उपजातमुपेत्य सन्निधिं,
किमु तद्विद्ध्यनिदं पुरा महः ॥

४—तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ।
स तथेत्युपसृत्य यक्षम—
भ्यपतत्तन्निजगाद को भवान् ?
अवलोकय जातवेदसं,
प्रथितञ्चाग्निपदेन मामिति ॥

५—तस्मिँस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ।
तदुवाच शुचिं मनस्विनं,
किमु वीर्यं त्वयि भद्र ! विद्यते ?
यदिदं पृथिवीतलेऽस्ति त—
च्छृणु धक्ष्यामि समक्षमेव ते ।

६—तस्मै तृणं निदधावेतद् हेति, तदुपप्रेयाय सर्वजवेन, तन्न शशाक दग्धुं, स तत एव निववृते, नैतदशकं विज्ञातुं यदेतद्यक्षमिति ।
तदा यक्षमेकं तृणं सन्निधाय,
दहैतत्कृशानो ! समर्थो यदि त्वम् !
वदत्येव तस्मिन् स सर्वं स्ववीर्यं,
प्रयुज्यापि, दग्धुं न शक्तो, निवृत्तः ॥

७—अथ वायुमब्रुवन् वायवेतद्विजानीहीति, किमेतद्यक्षमिति, तथेति ॥

अथ मारुतमूचिरे सुरा,
ननु वायोः त्वमतीव वीर्यवान्।
व्रज यक्षमवेहि किं भवेत् ?
स उपेयाय हि यक्षसन्निधिम् ॥

८—तदभ्यद्रवत्तमभ्यवदत्कोऽसीति, वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ।

९—तस्मिँस्त्वयि किं वीर्यमित्यपीदं सर्वमाददीय यदिदं पृथिव्यामिति ।

तमवेक्ष्य जगाद तन्महो,
वद कस्त्वम् ? श्रुणु मां प्रभञ्जनम्।
तव वीर्यमवैमि किं भवेत् ?
पृथिवीस्थं सकलं प्रकम्पये ॥

१०—तस्मै तृणं निदधावेतदादत्स्वेति, तदुपप्रेयाय सर्वजवेन, तन्नशशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥

यक्षं तदा पूर्ववदेव किञ्चित्—
तृणं निधायाह समुद्धरैतत्।
स सर्ववीर्येण निपत्य तत्र,
नैवाशकच्चालयितु बतैतत्।
स भग्नवीर्यो भृशलज्जितात्मा,
निवृत्य मौनेन सुरानभाणीत्।
न शक्यते यक्षविशेषशक्ति,
रस्मादृशैर्ज्ञातुमिमं क्षमध्वम् ॥

११—अथेन्द्रमब्रुवन् मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥

१२—स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम् । तान् होवाच किमेतद्यक्षमिति ।

अथ देवगणा व्यजिज्ञपन्,
सुरराजं समवाप्य विह्वलाः।
अवगच्छतु देव ! यक्षमित्यथ,
यक्षं समियाय देवराट् ॥
बत यक्षमभूत्तिरोहितं सुरनाथस्य मदं व्यपोहितुम् ॥
द्रुतमेव ददर्श खे स्त्रियं गिरिजाऽभामवदत् किमित्यदः ।

इति तृतीयः खण्डः

## अथ चतुर्थः खण्डः

### मूलम्

१—ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विषये महीयध्वमिति, ततो हैव विदाञ्चकार ब्रह्मेति ।

२—तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्तेह्येनन्नेदिष्ठं पस्पर्शुस्तेह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ।

३—तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् सह्येनन्नेदिष्ठं पस्पर्श सह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति।

४—तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीन्न्यमीमिषदा३ इत्यधि देवतम् ।

५—अथाध्यात्मं, यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरतीत्यभीक्ष्णं सङ्कल्पः ।

६—तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाभिहैनं सर्वाणि भूतानि संवाञ्छन्ति ।

७—उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं वाव त उपनिषदम ब्रूमेति ।

८—तस्यै तपो दमः कर्मेति प्रतिष्ठा, वेदाः सर्वाङ्गानि, सत्यमायतनम् ।

९—योवा एतामेवं वेदाप्रहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ।

तदेव धात्रादिपिपीलिकान्त-
व्याप्तं चिदानन्दपरात्मरूपम् ।
तस्यैव वीर्येण जयो रिपूणां
मा ते मदो भूदिति सा जगाद ॥
प्रथमं शुचिवायुवज्रिणो ह्यतिनेदिष्ठमिदं यदस्पृशन् ।
विदिताऽऽत्मविभूतयोऽभवन् सुरमुख्या इति ते प्रथां ययुः॥
गदितं परतत्त्वदर्शनं द्रुतविद्युत्प्रसृतिर्यथाऽद्भुतम् ।
क्षणगोचरवन्निमेषवत् क्षण आविर्भवनं तदाऽभवत् ॥
इह विद्युदुदाहृतेस्तथा निमिषप्रक्रमसाम्यदर्शनात् ।
अधिदैवमुपासनं श्रुतिर्महदध्यात्ममुपासनं जगौ ॥
यदिदं मन आत्मसन्निधिं व्रजतीवेति समीक्ष्यते जनैः ।
तत एव समीपवर्ति तत् स्फुरति ब्रह्म विकल्पवर्जितम् ।
समस्तलोकस्य हि प्रत्यगात्मता
स्थितं परं ब्रह्म विचिन्त्य तद्वनम् ।
उपास्यते येन समस्तचेतना
विदन्ति तं ब्रह्मतयाऽऽत्मदर्शिनम् ॥
इत्थं शिष्टश्शिष्य आचार्यमाह
वेदान्तानां ब्रूहि तत्त्वं रहस्यम् ।
उक्तं यद्यत्तत्तदेव स्वरूपं ब्रह्माख्यस्य प्रत्यहं दर्शनीयम् ॥
दमकर्मतपांसि संश्रयो निगमा अङ्गयुतास्तदाश्रयाः ।
ऋजुभाषणमेव मन्दिरं ह्यधिगच्छोपनिषत्तनुं पराम् ॥
इत्थं यस्तु ब्रह्मविद्यां विबुध्येत्,
हत्वाऽविद्यां जन्मकर्मप्रदात्रीम् ।
स्थैर्यं याति ब्रह्मणि स्वात्मरूपे
नित्यानन्दे निर्मले स्वर्गधाम्नि ॥
केनोपनिषदर्थाढ्यं काव्यं शेषगिरीरितम् ।
दृष्ट्वा प्राज्ञाः प्रसीदन्तु दिशन्तु जनुषः फलम् ॥
इति चतुर्थः खण्डः । समाप्ता केनोपनिषत्

ॐ तत् सत्



# गोविन्द-नागेशवामनाचार्याणां तुलनात्मकं समीक्षणम्

**ले०—वाचस्पतयः श्रीमन्तः शशिधरशर्माणः, चण्डीगढ़ विश्वविद्यालये संस्कृतप्राध्यापकाः**

निखिलालङ्कारिकमौलिमुकुटालंकारायितः, सकलनिगमागमपारदृश्वा, ध्वनिप्रस्थापनपरमाचार्यः, 'वाग्देवतावतारः' इति मनसोऽपि दवीयसीं पदवीं दधत् अदूष्यवैदुष्यभास्वान् तत्रभवान् श्रीमान् मम्मटभट्टो ध्वनिप्रस्थानप्रस्थापनामाय्य अविवक्षितवाच्यस्याऽर्थान्तरसंक्रमितात्यन्ततिरस्कृतभेदौ निरूप्य, विवक्षितान्यपरस्यालक्ष्यक्रमं प्रकारं सप्रकारं विशदय्य, संलक्ष्यक्रमं शब्दार्थतद्द्वयशक्त्युद्भवेति त्रैविध्येन न्यरूपयत्—

अनुस्वानाभसंलक्ष्य—क्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥[1] इति

शब्दशक्तिमूलत्वं चैतदेव यत्तेनैव शब्देन तदर्थप्रतीतिर्न तु पर्यायान्तरेणाऽपि । एतद्वैपरीत्यं चार्थशक्तिमूलत्वं न

१. काव्यप्रकाशः ४।३७

त्वभिधया तत्प्रतीतिरिति [१]। अवच्छेदकभेदेनोभयान्वयव्यतिरेकानुविधायित्वादुभयसंबन्धसंवलेन तूभयशक्तिमूलत्वं द्रष्टव्यम्। तत्राद्यस्य वस्तु अलंङ्कारश्चेति द्वौ भेदौ। द्वितीयस्तु तद् (वस्त्वलङ्कार) रूप एव स्वत संभवी, कवि प्रौढोक्तिसिद्धः, तन्निबद्धवक्तृप्रौढोक्तिसिद्धश्चेति षड्विधो वस्त्वलंकारौ व्यञ्जयन् द्वादशदशायते।

अर्थशक्त्युद्भवोऽप्यर्थो व्यञ्जकः संभवी स्वतः।
प्रौढोक्तिमात्रात् सिद्धो वा कवेस्तेनोम्भितस्य वा।[२]
वस्तु वाऽलङ्कृतिर्वापि षड्भेदोऽसौ व्यनक्ति यत्।
वस्त्वलङ्कारमथवा तेनाऽयं द्वादशात्मकः।[३] इत्युक्तेः।

तत्र स्वतः सम्भविना वस्तुना वस्तुनो ध्वनिं निदर्श्य तादृशेनैवाऽलङ्कारेणाऽलङ्कारध्वनिमलङ्कारेण वस्तुध्वनिनिरूपणपुरस्सरं निरूपयन्;

गाढकान्तदशनक्षतव्यथा-सङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्॥

अत्र विरोधाऽलङ्कारेणाऽधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता, मम क्षत्याप्यन्यस्य क्षतिनिवर्ततामिति तद्बुद्धिरुत्प्रेक्ष्यते" इति वाग्देवताऽवतारो व्याजहार। अत्र बालबोधिनीकारः—

विरोधालङ्कारेणेति। विरोधाभासालङ्कारेणेत्यर्थः। ओष्ठविषयकयोर्दशनमोचनयोर्विरोधः (यो हि निजमप्यधरं दशति स कथं परेषामधरान्मोचयतीति विरोधः) ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्। प्रतियोगिभेदेनाभास इति बोद्धव्यम्।

तुल्ययोगितेति। वीरानुभवत्वेन प्रकृतयोः स्वाधरदशन शत्रुव्यापादानयोरेककालिकत्व -- रूपैकधर्मसंबन्धेन तुल्ययोगितालङ्कार इत्यर्थः। व्यजत इति शेषः इत्युद्योतसुधासागरयोः स्पष्टम्। उक्तं च विवरणे—ओष्ठदशनेन ओष्ठदशनव्यथामोचनं विरुद्धम्। विरुद्धं च ओष्ठदशनव्यथामोचनक्रिययोः कारणकार्ययोरपि समकालिकत्वमिति। तेन च स्वाधरदशनशत्रुव्यापादनयोरेककालित्वरूपैकधर्म-सम्बन्धात्तुल्ययोगितेति। व्यङ्ग्यान्तरमपि दर्शयति मम क्षत्यापीति। मम नृपस्य। अन्यस्य वैरिवधूजनस्य। तद्बुद्धिः नृपबुद्धिः उत्प्रेक्ष्यते इतीति उत्प्रेक्षणादित्यर्थः। उत्प्रेक्षा चेति। व्यज्यत इति शेषः। चकारेण समुच्चयार्थकेन तुल्ययोगितोत्प्रेक्षयोः संसृष्टिः सूच्यते"।[४]

टीकाकृतां वरिष्ठोऽदूष्यवैदुष्यगरिष्ठो गोविन्दस्तु प्रकृतं प्रकाशं—

'अत्र निजाधरदशन - वैरिवधूजनोष्ठव्यथामोचनयोः कारणकार्ययोः पौर्यापर्याभावलक्षणयाऽतिशयोक्त्याऽलङ्कारेण, दशनसमकालमेव शत्रवो व्यापादिता इति 'समुच्चयोऽसौ सत्वन्यो युगपद्या गुणक्रिया' इत्युक्तलक्षणसमुच्चयालंकारो द्योत्यते। एष एव च तुल्यकालं योगितेति व्युत्पत्या तुल्ययोगितेति कैश्चिदुच्यते। मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामिति तद्बुद्धेरप्युत्प्रेक्षणादुत्प्रेक्षाप्यत्र व्यङ्ग्या। इति व्याचख्यौ।[५]

तत्र व्यञ्जकांशीयः प्रकाशः शोधनिबन्धान्तरे निकषविषयीकृत इत्याद्यव्यङ्ग्यांशीयोऽत्र विवेचनविषयतामीषन्नीयते। तत्र तत्रभवतः प्रदीपकृतोऽयमाशयः—

'नियतानां सकृद् धर्मः सा पुनस्तुल्ययोगिता'।

इति लक्षणं तुल्ययोगितायाः।

अत्र धर्म इत्यनन्तरं 'यदुपादियत' इति शेषः। यथा वा पूर्वसूत्रात् 'वृत्तिः' इत्यनुवर्तते तच्च "अर्थवशाद्विभक्तिविपरिणामः" इति न्यायेन 'वर्त्यते' इति विपरिणम्यते।

१. स एव ४।३९-४० २. काव्यप्रकाशः ४।४० ३. स एव ४१:०-४१ ४. तत्रौवोदाहरण श्लोकः क्रमाङ्कः ६३। ५. बालबोधिन्यां पृ० १३९। ६. सोद्योते प्रदीपे [पृ० १४३-४४।] आनन्दाश्रम संस्करणे। ६. तत्रैव पृ० ५००

वर्त्यते उपादीयत इत्यर्थः। पुनः शब्दस्त्वर्थे। तथा च नियतानां वर्ण्यत्वेन प्रकृतानामेव अन्योपमानत्वेन अप्रकृतानामेव वा धर्मः साधारण धर्मः (गुणक्रियान्यतररूपः गुणक्रियादिरूपो वा) सकृद् एकवारमेव यत् उपादीयते—सा धर्मस्य सकृदुपादानरूपा तुल्ययोगितेत्यर्थः। एवं च केवलप्रकृतानां केवलाप्रकृतानां वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगितालङ्कार इति भावः। प्रकृताप्रकृतयोरपि साधारणधर्मस्य सकृदुपादाने प्रथमं दीपकम्; प्रकृतानामेव अप्रकृतानामेव वा साधारणधर्मस्य सकृदुपादाने तुल्ययोगिता इत्यनयोर्भेदः।[1]

न च 'गाढकान्ते' त्यादिनि पदये गुणक्रियान्यतररूपः कश्चनैको धर्मो निबद्धः। प्रकृतनृपकर्तृकं स्वाधरस्य दशनं शत्रुवधूजनोष्ठानान्तु दशनव्यथामोचनाञ्चात्र कविकर्मविषयताङ्गतम्। तुल्ययोगिताया लक्षणे च धर्मो गुणक्रियान्यतररूप एवेप्सितः। तस्मात् तुल्ययोगिपदस्य अधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यमेककालमिति यावत् योगः सम्बन्धो ययोस्तौ तुल्ययोगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कार इत्यर्थः। अधरनिदर्शन-वैरिव्यापादनक्रिययोर्यौगपद्य प्रतीतेः। तथा च धीधनानां धुरीणो नागेशः—

प्रकृतानामप्रकृतानां वैकधर्मसंबन्धरूपतुल्ययोगितायाः प्रकृतेऽसंभव इति भावः। योगिता योगः।[2] इति। अग्रे तु तेनाङ्कितम्—

केचित्तु वीरानुभावत्वेन प्रकृतयोः स्वाधरदशनशत्रुव्यापादनयोरेककालिकत्वरूपैकधर्मसंबंधात्तुल्ययोगितात्र। न च तत्र धर्मो गुणक्रियान्यतररूप एवेत्यत्र मानमस्ति कालोपाधेरपि सूर्यक्रिययोपाधिफत्वाच्चेत्याहु"[3] रित्याहः।

अत्राहु" रित्युक्त्या नेयं युक्तिर्नागेशेन स्वयमुक्ता, प्रत्युताचार्यान्तरेणोक्ता, तेन चानूदितैवेत्यवसीयते। तत्र नागेशस्य संमतिर्विमतिर्वा न व्यक्तमुक्ता। परन्तु, कुत्सार्थकेन किमा निर्देशात् "केचि" दिति, तस्याऽसंमतिरवसीयते। अस्वारस्यमवसाययितुं हि स तथा—निर्दिशति परिभाषेन्दुशेखरमर्मप्रकाशिकादौ।

परन्तु—अस्वरसस्थले 'चिन्त्यमिद' मित्याद्युक्त्वा नागेशस्तदुपोद्बलनाय युक्त्यावलीराविस्तरां विस्तारयति। अत्र तु तथा न कृतम्। बहूनां विद्यावयोवृद्धानां तथाभिमतिसंभवात्तत्रादरबुद्धिं व्यंक्तुं 'केचि' दाहुरिति किमो बहुवचनस्य च प्रयोगः। उत्तरोत्तरमुत्कर्षः सारः इति सिद्धान्तात् सारभूतत्वाच्च पर्यन्तेऽयमुपन्यासोऽदसीयः। एवञ्चास्यैव मतस्य नागेशदृशा प्रकृते प्रामाण्यमित्यभिप्रायेणैव नव्यासु टीकासु एकोनविंशतिव्याख्यासारसर्वस्वमञ्जूषासङ्काशायां बालबोधिन्यां-वस्तुतस्त्वबालबोधिन्यां—प्रादीपमभिप्रायं पूर्वपक्षत्वेनोपन्यस्य—"तत् सर्वं चिन्त्यमेव—तुल्ययोगितायां धर्मो गुणक्रियान्यतर एवेत्यत्र मानाभावाच्च कालोपाधेरपि सूर्यक्रियारूपत्वाच्चेति नागेशभाषितमविकलप्रायमनुभाषितम्।[4]

तत्राऽस्य रसस्यपक्षे तस्य किम्मूलम्? नागेशेन तु तन्नोक्तमिति तस्य गवेषणं पक्षान्तरे च तस्य समीक्षणं निबन्धस्याऽस्य निबन्धने प्रयोजकायते।

प्रकृते गोविन्दगवीमस्वीकर्तुं द्वौ हेतू। तत्र प्रथमः—तुल्योगितायां धर्मो गुणक्रियान्यतररूप एवेत्यत्र मानाभावरूपः। कालोपाधेरपि सूर्यक्रियारूपत्वं द्वितीयः। प्रथमं प्रथममेवालोचनाऽर्हः—

"धर्मो गुणक्रियान्यतररूप एव तुल्योगितायामित्यत्र मानाभावः" इति यदुक्तं तदलंकारशास्त्रालंकर्मीणाः न क्षमन्ते। तद्धि-तदिति हासानवबोधमूलकमेव। समग्रमलंकारशास्त्रपारम्पर्यमेव ह्यत्र प्रामाण्यं बिभर्ति। भामहः प्रथम आलंकारिकः। तेनेत्थं तुल्योगिता लक्षिता—

१. काव्यप्रकाशे बालबोधिनी पृ. ६४२ २. सोद्योतप्रदीपे पृ० १४३ ३, सोद्योते प्रदीपे आनन्दाश्रम प्रकाशिते पृ० १४३-४४।
४. काव्यप्रकाशस्य बालबोधिनी, पृ० १३९।

न्यूनस्यापि विशिष्टेन गुणसाम्यविवक्षया ।
तुल्यकार्यक्रियायोगादित्युक्ता तुल्ययोगिता ॥[१]

न्यूनस्यापि स्वाधिकेन गुणैस्तुल्यत्ववचनेच्छया तुल्यकार्यया क्रियया योगात्तुल्ययोगितेत्यर्थः । दण्डी तु स्तुत्यर्थामिव निन्दार्थामपि तां जगौ—

विवक्षितगुणोत्कृष्टै—
र्यत् समीकृत्य कस्यचित् ।
कीर्तनं स्तुतिनिन्दार्थं
सा मता तुल्ययोगिता[२] ॥ इति ॥

उपमाप्रकरणे च स्तुतिनिन्दानैरपेक्ष्येण एकक्रियाकारितया न्यूनगुणस्य पदार्थस्याधिकगुणकेनार्थेन साम्यमानीयोक्तिस्तुल्ययोगोपमेति तेनाभिदधे—

अधिकेन समीकृत्य
हीनमेकक्रियाविधौ ।
यद् ब्रुवन्ति स्मृता सेयं
तुल्ययोगोपमा ( यथा )[३] ॥ ॥इति ॥

वामनोऽपि विशिष्टेन सहायकृष्टस्य साम्यहेतोः सहकालिकं क्रियायोगं तुल्ययोगितेति लक्षयाम्बभूव[४] ।

विशिष्टेन साम्यार्थमेककालिकाक्रियायोगस्तुल्ययोगिता[५] इति भोजदेवश्च दण्डिनमेवानुगतः ।

अथोद्भटः —

उपमानोपमेयोक्ति-
शून्यैरप्रस्तुतैर्वचः ।
साम्याभिधायिप्रस्ताव--
भाग्भिर्वा तुल्ययोगिता ॥[६]

इति वदन्नुपमानोपमेयवचनाविराणामप्रकृतानां, प्रकृतानां वा तुल्ययोगितां जगाद । अस्यैव लक्षणस्य परिष्कृतं स्वरूपं मम्मटलक्षणम् तत्र प्राचां "नियताना" मिति नासीन्नियमः । तस्य मम्मटभट्टः प्रथमो विधाता ।

अलंकारसर्वस्वकार उद्भटमम्मटाधारेणैव लक्षयन् प्रकृताप्रकृतयोः सामान्यधर्मस्य गुणक्रियात्मना तां चतुर्विधां विदधौ—

औपम्यस्य गम्यत्वे प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता[७] इति । 'इवाद्यप्रयोगे ह्यौपम्यस्य गम्यत्वम् । तत्र प्राकरणिकानामप्राकरणिकानां वाऽर्थानां समानगुणक्रियासम्बन्धे अन्वितार्था तुल्ययोगिता[८] इति सूत्रं विमर्शिनी च ।

वाग्भटो वामनम्, पीयूषवर्षश्चोद्भटमेवासारप्रियः, विश्वनाथश्च मम्मटम् । कुवलयानन्दकारोऽपि सर्वस्वकारानुसारेणैव प्रथमं लक्षणं चकार । द्वितीयभेदं तृतीययोः पुनः स भोजदेवस्य दण्डिनश्चाऽनुससार सरणिम् तद्यथा यथाक्रमम्--

'वर्ण्यानामितरेषां वा
धर्मैक्यं तुल्ययोगिता[९] ।'
'हिताहिते वृत्तितौल्य
मपरा तुल्ययोगिता[१०] ।'
'गुणोत्कृष्टैः समीकृत्य
वचोऽन्या तुल्ययोगिता[११] । इति च ।

अथालङ्कारसारस्वतसारस्यैकधुरीणः, निखिलतन्त्रपरतन्त्रः, स्वाधीनविचारचातुरीकलाकलाधरः 'पण्डितराज' पदवीं यथार्थां दधानो जगन्नाथः—

"प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता"[१२]

१. काव्यालङ्कारः-३।२७ २. काव्यादर्शः-२।३३० ३. स एव २।३८ ४. काव्यालंकार सूत्रवृत्तिः, ४।३।२६ ५. सरस्वतीकण्ठाभरणम् । ६. काव्यालंकार संग्रहः, पञ्चमवर्गः । ७. अर्थालङ्कारप्रकरणे सूत्रं २४, चौखंभा संस्करण पृ० २३६ । ८. तदेव ९. कुवलयानन्दः ४१ । १०. कुवलयानन्दः ४३ । ११. स एव ४७ । १२. रसगङ्गाधरे तुल्ययोगिताप्रकरणम्

इति लक्षयन्संशयावसरमेव जहार। अस्मिंल्लक्षणे 'आदि' पदेन न यत्किञ्चिच्छक्यमुपादातुम्। अपितु

'त्वयि पाकशासनसमे
शासति सर्वं वसुन्धरावलयम्।
विपिने वैरिवधूनां
वर्षन्ति लोचनानि च दिनानि ॥

इत्यादौ उभयसामान्यगुणक्रिययोरभावाच्छब्दमात्रं श्लेष मूलाभेदाध्यवसानेन पिण्डीकृतोऽर्थो वा परं ग्राह्य इति तेनैव स्फुटं प्रतेने[१],

तस्मात् प्राकरणिकाप्राकरणिकांशे नैयत्यवैमत्येऽपि यदा आभामहात् आ च जगन्नाथात् गुणक्रियारूप एवोररीकृतस्तदा तत्र मानाभाव इति कथनेऽसिद्धो हेतुः। गाढकान्तेः-त्यादौ तादृशहेतोरभावात्—"अत्र विरोधालङ्कारेण तुल्ययोगिता व्यज्ज्यते" इति मूलग्रन्थो न सङ्गच्छत इत्याचार्यगौरववशम्वदेन विनयविद्याद्वयमूर्तिना प्रदीपकृता तदन्यथाकृत्य व्याख्यातं–तुल्यकालं योगिता तुल्ययोगिता समुच्चयालंकार इत्यर्थं कुर्वता। तद् व्याख्यातृभिस्तु कर्तव्यभरनिर्भरपरवशैस्तदाशयः स्फुटीकृतः।

एवञ्च वामनाचार्येण तुल्ययोगिता व्याख्यायां टिप्पने यदुट्टङ्कितं 'आदि पदेन (धर्मः साधारणधर्मः गुणक्रियान्वयरूपः) एककालिकत्वादिपरिग्रहः। स्पष्टीकृतमिदं चतुर्थोल्लासेगाढकान्तः' इति ६३ उदाहरणे इति[२], तदपि यत्तोत्तरमवसेयम्।

गुणक्रियारूप एव धर्मस्तुल्ययोगितायां विवक्षितो मम्मटाचार्यस्येति तादृशयोरेवोदाहरणयोराहरणादपि व्यक्तीभवति। न च गाढकान्ते० त्युदाहरणमन्यत्र दत्तमेवेति भ्रमितव्यं, तस्याऽलंकारलक्षणोदाहरणप्रकरणाभावात्। तस्मादेव तत्र प्रदीपकृतोऽर्थान्तरकरणप्रवृत्तिः। 'अलङ्कारेणार्थेन स्वतः सम्भविना तादृशस्यार्थस्य व्यक्तिः इति खलु तत्र प्रकरणं-यदनुरुध्य 'गाढकान्ते' ति काव्यप्रकाशकृता समुदाहृतम्। तादृशेनालङ्कारात्मनार्थेनालंङ्कारार्थस्य व्यक्तिश्च प्रदीपकृता साधिष्ठं साधितेवेति निरर्थकमालङ्कारिकपरम्परापरिर्यपीडनम्।

'धर्मः' इति प्रकाशस्य, 'धर्मः गुणक्रियादिरूपो वा' इत्ययं विधाय, पुनः 'आदि' पदेन एककालिकत्वादिरूपः इत्येक कालिकत्वमपि वामनोऽसन्तुष्टमना 'आदि' पदेन पुनरपि विशिषन्ननवस्थायामेवावतिष्ठते। तथाभ्युपगते च नियतामनियतानां वा यत्किञ्चिद्वर्णनं तुल्ययोगिताभावं व्रजेत्? तदुक्तः सम्बन्धो हि यत्र कुत्रापि सुलभः। तस्मादलमलङ्कारसम्प्रदाय बाधनेत।

कालोपाधेरपि सूर्यक्रियोपाधिकत्वाच्चेति यदुक्तं तदपि न सारवत् प्रतीयते। अतिव्यापकत्वात्। न हि तादृशमेककालिकत्वसम्बन्धं न लब्धं यत्र कुत्र शक्नुयुः।[१] वस्तुवस्तु 'कालोपाधेरपि सूर्यक्रियोपाधिकत्वाच्चेति वदद्भिस्तुल्ययोगितायां धर्मो गुणक्रियान्यतरूप एवेत्यकामयमानैरप्युपेयते। 'तस्यां धर्मो गुणक्रियात्मैव। तत्र विवादविषये पक्षे गुणविषयकस्यासम्भवः। गुणक्रियारूपोऽपि न। एककालिकत्वरूपोऽवश्यं सम्भवति, परं तस्यापि न क्रियात्मतेति, कालोपाधेः मूर्यक्रियारूपत्वमाधारीकृत्य तस्य क्रियात्मकतां कथङ्कथमपि प्रसाध्य तुल्ययोगितालक्षणयोगं नेतुमेव सर्वः संरम्भ इति घट्टकुटीप्रभातन्यायः साधु तेषामायातः। तस्माद्व्यङ्ग्यांशविषये-प्रदीपकारदिशैव प्रकाशो योजनीय इति नागेशभट्टस्य किमः प्रयोग उक्तहेतुकमस्वरसं सूचयितुमित्युपगम एवोचितः प्रतिभातीत्यलमौचित्यप्रियेषु॥

१. उक्तमेव। २. बालबोधिनी पृ० ६४२, टिप्पणम्।

१. आत्मनः स्वरसविषयं मतं नागेशभट्टाः 'परे तु' इत्युपक्रमन्ते इति साम्प्रदायिकाः। परशब्दो हि श्रेष्ठार्थकोऽपि—'दूरानात्मोत्तराः पराः' इति कोशात्।

# साहितत्वमीमांसा

श्री गिरीशदत्तपाण्डेयः आचार्यः (ल०स्व०प०) जू०रि० फेलो (साहित्ये) सं०सं०वि०वि० वाराणसी

'शवारूढां महाभीमां खड्गिनीं लोकपालिनीम् ।
नीलेन्दीवरहस्तां तां वन्दे नीलसरस्वतीम् ॥१॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यतेकिञ्चित्रानपेक्षितमुच्यते ॥२॥

मयूराण्डरसन्यायेन विश्ववैचित्र्यप्रसवित्री परा प्रतिभा परया वाचा संयुक्ता अवतिष्ठते । तयोः संयोग एव शब्दार्थवैचित्र्यमयकविसृष्टेरुपादनकारणम् । सृष्टेः शब्दपरिणामतामाम्नायविदो वदन्ति । साहित्यनये कपालद्वयसंयोग इव घटस्य, विवक्षिताकर्थवाचकताविशिष्टस्य शब्दस्य रसपरिष्पन्दरमणीयार्थस्य च दोषहानगुणोपादानरसलङ्कारावियोगरूपः सयोग एव काव्यसृष्टेरपि मूलम् जगतोऽपि । तर्हि शब्दार्थौ काव्यमिव 'शब्दादेवप्रमितः इत्यत्रार्थपदाभावः कथमितिचेत् ? तत्र शब्दः साभिप्राय एव न तु निरभिप्रायः । तेनार्थाविनाभूतत्वमर्थादेवसिद्धम् । शब्दार्थयोः शक्तिशिवयोरिवाविनाभावसम्बन्धस्वीकारात्तस्यैव च साहित्यपदार्थत्वम् । यदाह मुनिः संयोगात् रसनिष्पत्तिः । गोधूमन्यायेन संयोगस्य रसपर्यायता । काव्यशब्दनिष्पीडनादभुज्यमानरसस्याधिष्ठानभूतत्वात्काव्यशब्दोऽपि परमप्रयाजनीभूतं रसमेवाभिव्यञ्जयति । ततश्च 'काव्यं साहित्यं रसः इति शब्दाः अन्तरङ्गसाक्षितया साम्यार्थभाजः । संयोगपदस्य संयुक्तत्वसामान्याभिधायित्वे चमत्कारजननानर्हत्वात् कविकर्मबहिर्भावापत्तेर्नोपमादिकानां निष्पादकता जाघटीतीति परस्परोत्कर्षजनकत्वमेव संयोगपदार्थः । तादृशसंयोगस्यालङ्कारातिरिक्तस्थलेऽपि चमत्काराधायकत्वात् शास्त्रस्यास्य साहित्यशब्देन व्यवहारः । अतएव 'वागर्थाविव संयुक्तौ" इति प्रायुङ्क्त महाकविः ।

ननु शब्दार्थयोः साहित्यं निसर्गसिद्धम् । तस्याभिधानस्य सिद्धसाधनत्वात्प्रयासवैयर्थ्यमितिचेत् न । नह्यस्माभिः वाच्यवाचकलक्षणौत्सर्गिकसम्बन्धनिबन्धनं तदित्युच्यते । तथात्वे कष्टकल्पनोपरचितधर्मब्रह्मशब्दसूत्रेष्वपि काव्यत्वापत्तिः । हालिकप्रयुक्तशब्दानामर्थबोधकत्वात्तत्रापि सामान्यं साहित्यमस्त्येव । तेन पदवाक्यप्रमाणव्यतिरिक्तः संयोगविशेषः साहित्यमित्युच्यते । नहि कविकर्मकौशलकाष्ठाधिरूढरमणीयस्याद्यावध्यपि कश्चिदपिविपश्चिदपश्चिमः परमार्थतां निरणैषीद् । तस्मात् तदेव काव्यतत्वस्य परमरहस्यं रसपरिष्पन्दजीवितायमानं किमपि सहृदयहृदयप्रस्फुरितं तत्वं साहित्यमुच्यते ।

वाच्यप्रतीयमानौ द्वावपि सहृदयश्लाघ्यौ काव्यार्थौ । उभयोरपि परस्परमहमहम्पूर्विकया स्पर्धमानयोः शोभाकारि परस्परसाम्यसुभगमवस्थानं साहित्यम् । काव्यलक्षणस्य वाक्ये परिसमाप्तत्वात् वाचकस्य वाचकान्तरेण वाच्यस्य च वाच्यान्तरेण संयोगः न तु वाचकस्य वाच्यान्तरेण, वाच्यस्य च वाचकान्तरेण साहित्यमभिप्रेतम् ।

ननु वाच्यवाचकयोः सम्बन्धस्यैव प्रसिद्धत्वात् वाच्येन वाचकान्तरस्य वाच्यस्य च वाचकान्तरेणापि सम्बन्धः साहित्यमस्त्विति चेन्न । क्रमोत्क्रमे समन्वयाभावात्कविप्रयोजनाभावाच्च । एवञ्च शब्दार्थयोर्यथास्वं स्वसम्पत्सामग्रीसमुदायः सहृदयाह्लादकारी परस्परस्पर्धयाधिरोहति, सैव साहित्यनामभाक् । कुन्तकाचार्यरीत्या 'विशिष्टविन्यासस्सम्पत्' साहित्यम् । यदाहुः–

मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः ।
अलङ्करणविन्यासो वक्रतातिशयान्वितः ॥
वृत्यौचित्यमनोहारि रसानां परिपोषणं
स्पर्धया विद्यते यत्र यथास्वमुभयोरपि ॥
सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा ।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥ (व.जी.)
साहित्यात्प्रकृतेः पुंसः संसारो जायतेऽखिलः ।
साहित्यादेवमोक्षश्च जीवात्मपरमात्मनोः ॥

साहित्यविभुः १।५

भोजराजस्तु— शब्दार्थयोर्द्वादश समर्थाः (सम्बन्धाः) साहित्यमिति प्रतिपादयति । तथा हि—

"अभिधाविवक्षातात्पर्यप्रविभागव्यपेक्षा सामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादानालङ्काररसावियोगाः द्वादश समर्थाः साहित्यम्" (शृङ्गारप्रकाशे)

ततश्च सम्बन्धः (संयोगः) साहित्यमिति फलति । सम्बन्धश्च सम्बन्धिभिन्नः द्विष्ठो नित्यश्च । स च

संयोगसमवायात्मकः। 'हलोऽनन्तरा संयोगः' समवायेन समवैति इति पाणिनिः। समवायः संयोगविशेष एव। तादात्म्यमपि स एव। 'शिवः शक्त्या युक्त' इत्यत्र युक्तत्वमपि संयोगः। बन्धोऽपिसंयोगः। वाग्योगः व्यवहारे फलति। वाचि वाक्यं शब्दार्थरूपं तिष्ठति। सम्यग्वाग्योगश्च संयोगः। ततश्च साहित्य-संयोग-सम्पर्कसमवाय-तादात्म्य-सम्बन्ध-बन्ध-योगाः सामान्यार्थप्रतिपादकाः। शास्त्र-प्रस्थानभेदेन पारिभाषिकत्वाङ्गीकारेऽपि सर्वविद्यानिष्यन्दे साहित्ये तेषां समानप्रवृत्तिनिमित्तकत्वे सत्यपि विपरीतानुपूर्वीकत्वे न दुष्यति। विगलितवेद्यान्तराह्लादस्य रसस्यापि संयोगजत्वात् रसस्यापि साहित्यसंज्ञा साहित्यदर्पण-काव्य-प्रकाश-रसगङ्गाधरादिलिङ्गात् बोध्या। रसस्याह्लादाभिन्नत्वं रसः साहित्यमिति वीचीतरङ्गन्यायोपपन्नम्। वाच्य प्रतीयमानयोरर्थयोः साहित्येनालौकिकचमत्कानिष्पत्तिः। तयोरेवोभयोः सहृदयश्लाघ्योरर्थयोः व्यंग्य व्यञ्जकभावः। शब्दानां व्यञ्जकत्वमर्थानां व्यञ्जकत्वम्, उभयोरपि व्यंजकत्वञ्चेति शाब्दिकाः। अत्र अर्थयोरपि-इति विशेषः। यत्रार्थावबुबोधयिषया पूर्वम् अर्थोपस्थितिस्तत्र व्यञ्जकः (वाचकः) शब्दः, व्यङ्ग्यश्चार्थः। यत्र शब्दप्रयुयुक्षयापूर्वमर्थोपस्थितिस्तत्र अर्थः व्यञ्जकः। अतएव 'अयं शब्दः अमुमर्थं बोधयतु" अयमर्थः अस्माच्छब्दादवधारणीयः" इति द्विविधा विवक्षा सङ्केत इति मुक्तावल्याः शब्दखण्डे निर्णीतम् मम्मटाचार्यस्तु—

'स्याद्वाचिको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा।

'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते'

'एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता'

इति स्फुटमाहुः। ततश्च पूर्वोपस्थितिकत्वं व्यञ्जकत्वमनन्तरोपस्थितिकत्वं व्यंग्यत्वञ्चेति सिद्धम्।

विशिष्टादृष्टजन्मन आत्मगुणोद्भूतिहेतोरनादिवासनारूपस्याहङ्कारस्य रसत्वमैक्यञ्च निषिद्धम्। न तु कूटस्थात्मस्वरूपस्यानन्दस्यैकरूपस्य भेदो वक्तुं शक्यते। भेद एवौपाधिक अङ्गीक्रियते। कान्तालिङ्गनादिजनितरसभावनया न परमरसप्राप्तिः। एतद्भावनया तत्प्राप्तिरितिकोऽयं नियम इति चेन्न। तस्याशक्तेः शब्दार्थभावनाया एव शक्तत्वात्। न हि स्वभावः पर्यनुयोज्यः। श्रूयते हि साहित्यज्ञानादभिमतलक्ष्याभिधानपरमसुखलाभः। तथा हि—

सक्तुमिव तितउना पुनन्तो यत्रधीराः मनसा वाचमक्रत। अत्रासखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि॥

अत एवोक्तम्—

आविर्भूतज्योतिषा ब्राह्मणानां ये व्याहारास्तेषु मा संशयोऽभूत्।

भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता नैते वाचं विप्लुतां धारयेयुः॥

तदेवं काव्यार्थभावनया रसेन स्वनिरतिशानन्दलाभस्य कविवचनेषु भद्राया लक्ष्म्या निधानस्य च श्रवणात् कविकाव्ययोर्महत्त्वम् रसिकस्य च प्रयोजनं श्रुतिसिद्धमेवेति सर्वं समञ्जसम्।

काव्यमूलं साहित्यं सौन्दर्यरूपम्। तदेवान्तर्बहिः-सौन्दर्यभेदाभ्यां विभज्यते। 'काव्यं ग्राह्यमलङ्कारात्' 'सौन्दर्यमलङ्कार' इति वदन्तःवाच्यवाचकरूपस्य बहिः-सौन्दर्यप्राधान्यं वदन्ति। द्वितीये पुनः मुक्ताफलविच्छुरितच्छायाप्रतिमं व्यङ्ग्यं) प्रतीयमानमेवर्थ प्रधान्येन परिचिन्तयन्तस्तदाधारकमेव बाह्य सौन्दर्यमिति व्यवस्थापयन्ति। 'रसो वै सः' 'का ते अरङ्कृतिः ? इति श्रुतिमूलकौ द्वावेव साहित्यसम्प्रदायौ साहित्यशास्त्रे भवतः।

साहित्यशास्त्रे विविधसम्प्रदायवादिनस्तु अन्धगजन्यायेन दन्तपुच्छजठरादिकमिवालङ्कारगुणरीत्यादीन्नङ्गितयाख्यापयन्तो भ्रान्ताः एव। प्रकृतिविपर्ययादिदोषपरित्यागे समुचिते औचित्ये परिस्फुरति तनुषङ्गिणि शब्दार्थचमत्कारे च वश्यवाचः कवेः स्वयमनुगमनेविधायिनि स्वयमेव किमपि सारस्वतं तत्त्वं प्रादुर्भवतीति रसप्रधान्यवादिनामाचार्याणां मते 'रसपरिस्पन्द रमणीयत्वमेव' साहित्यशब्दापर्पर्यायतया प्रतिष्ठामासादयतीति निर्विचिकित्सः सिद्धान्तः इति श्रीमद्ब्रह्मविद्यावदाताः श्रीबटुकनाथशास्त्रिखिस्तेनामानः विद्यागुरुवो वदन्ति। ततस्तन्मतानुसारिभिरस्माभिरपि "रसः आत्मा ययोस्तयोर्वाच्यवाचकयोर्व्यङ्ग्यव्यञ्जकयोः-साहित्यं काव्यम्।" इत्युच्यते। अतएव संयोगात् इत्यस्य साहित्यादित्यर्थकरणे न किमप्युत्सूत्रम्।

विभावादीनां रत्यादीनाञ्च रसबोधोपयिकसामग्रीकत्वम्। रत्यादीनां स्थायिनां रससूत्रेऽनुपादानात् 'स्थायीभावो रस' इतिसिद्धान्तस्तूत्सूत्र इति प्रतिभाति। वयन्तु सर्वभावेषु कस्याप्येकस्य सामग्रीपरिपदोषाद्रसत्वमित्युत्पश्यामः। विस्तरस्तु 'रसमीमांसायां' स्फुटी भविष्यति।

# पुस्तकसमीक्षा

पुस्तकनाम—**श्रीनिधि ग्रन्थमाला** ( तृतीयं चतुर्थं पञ्चमंसुकुसुम् )

ग्रन्थकारः— श्री U-VE VILLUR NADADOOR
आशुकविसार्वभौमः
श्री भाष्यसिंहासनाधिपतिः
श्रीनिधिस्वामी

प्रकाशकः— वी० एस् करुणाकरणः B. E.
13 Vivekanand colony
Mehdipatanm Hyaerabad 500028

न ज्ञातमासीत् यदमूल्यानि कुसुमानि अप्रत्याशितं चाक्षुषप्रत्यक्षीकृतानि अञ्जसा चेतांस्यपि चोरयिष्यन्तीति । अनायासेनैव शब्दाधिकरणाधिष्ठितपरमार्थरसास्वादसौहित्यसौभाग्यात् ध्यानावस्थिततद्गततया याथार्थ्येन परमहंसत्वमधिगतं मया नाम्नैव केवलं परमहंसेन ।

अस्मिन् तृतीये कुसुमे 'मङ्गलस्तवः' 'नावल्पाकमणिमाला' 'देशिकपञ्चदशी', कवचशतकम्' विष्णगरप्पनविंशतिः" इत्येतेषु शीर्षकेषु महाकवेः प्रातिभप्राभाव्यसंभूतिसार्वभौमता पदे पदे सविशेषं व्यज्यते । कुसुमकोषसंचितमकरन्दमाधुरीलोलुपः हंसोऽपि निसर्गरक्तं परमगुरुपाणिपद्मम् (कवचशतक ८०) अवलोक्य मधुपवृत्तितामङ्गीकरोति ।

चतुर्थं कुसुमं तु श्रीमहादेवी-महाप्रसाद-परिमलितं कमपि मलिनं निर्मलं कर्तुं समर्थमिति सकलं संवाञ्छितं सदैव वर्षति । नमाम्यहं परमहंसगतिं तुरीयाम् इतिकृत्वा अस्मिन् चतुर्थे कुसुमे स्थितां तुरीयां-गतिं प्रसन्नतया परिचिनोमि । संस्कृते साहित्ये स्तोत्रसाहित्यस्य महन्महत्त्वं सर्वैः स्वीक्रियते । अत्र मुद्रितेषु पद्येषु सरसभक्तिमकरन्दमहाप्रवाहसंवलितेषु काव्यकलाकमनीयताऽपि सहृदयहृदयानि तरलीकर्तुं कल्पते सर्वतः ।

पंचमे कुसुमे 'गोपालत्रिंशत्' 'चिलुकूरस्तुतिः' हयग्रीवस्तुत्यादि शीर्षकाष्टकैः शोभिता रचनाः प्रकाशिताः सन्ति ।

समग्रे प्रस्तुते प्रकाशने भक्तिरसमहाप्रभावः भूरिशः भावकान् भक्तिभावितान् विदधाति । कल्पनायाः कमनीयेऽन्तरालालवाले लालित्येन विरोपितः भक्तिप्ररोहः प्ररूढः पल्लवितः सन् सम्प्रति पुष्पितः सम्प्रति स्वकीयं रसपीयूषं दिगन्तरालेषु वितरन् विराजते ।

कुसुमशब्दशय्यासु संशोभमाना श्रीनिधिसरवस्ती संस्कृतसाहित्यसम्पदं सम्यक्तया विपूर्ति ।

यद्यपि समग्रेयं कृतिः स्तोत्रसाहित्यमेवालङ्करोति नात्र काव्यरचनाचमत्कारचाकचिक्यप्रदर्शनकामनाऽपि कवेः प्रतिभाति तथापि स्थले स्थले स्थलारविन्द। सौन्दर्यमादधती कृतिरियम् रमणीव रमणीयतया सुमनसां मनःसु रामणीयकं विभर्ति भक्तिप्रवणतां च विशदयति ।

पदगुम्फनकलाप्रगल्भः महाकविरेकत्रैव शब्दमालिकासु पौराणिकचित्रस्फटिकमणीन् गौरवतया ग्रथयति -"वेदोद्धारण, मंदराग भरण, श्लाघ्यक्ष्माधारण !
प्रह्लाद स्थितमानसात्ममहिमश्रीगोपनैकव्रत।
श्रीमच्छी भृगुवंशजात ! वरद ! श्रीलक्ष्मणातिप्रिय !
श्रीमदनांमनुकर्षणाप्तमधुर स्वामिन् कलेः पाहि नः ॥

श्लोके समग्राणमवताराणां चित्रणं कृतं वर्त्तते। सत्यमेव पी० बी० अण्णंगराचार्य महाभागाः महा-

कवीनां विषये समुद्गिरन्तिः—

श्रीनिधिस्वामिनां सूक्तिसौवादवं शंसितुं कस्य वाधिक्रिया स्यात् कवेः ? इति !

मयापि तदुदितमेवैकं श्लोकमुद्धृत्य विरम्यते निरवद्यहृद्यवाचां गुम्फगाम्भीर्यमद्भुतं दधतीः श्रीनिधिगुरुवरविरचितकृतिविततीः साधु चिंतयन् मोदे ॥

## श्री रामानुज स्तोत्ररत्नावली

**लेखका—श्रीभाष्यसिंहासनाधिपतयः श्रीनिधिस्वामिनः**

ग्रन्थेऽस्मिन् अष्टादशशीर्षकेषु भगवद्विभूतीनां स्वयं ज्योतिषां विशिष्टाद्वैतसिद्धान्ताविष्कृतां श्री शैलकरुणापूर्णालब्धरामायणार्थकाणां श्रीभाष्यादि महाग्रन्थकर्तॄणाम् अनन्तश्रियां यतिसाम्राज्य-चक्रवर्त्तिनां रामानुजाचार्याणाम् एकषष्टयधिक-नवशतकजयन्त्युत्सवसमारोहावसरे भगवत्पादानां षोडशतमषष्टयब्दपूर्त्यवसरे देवगिरा गुम्फिताः चरित-प्रशस्तिश्लोकाः मुद्रापिताःसन्ति नागपुरस्थितया भगवत्पदसभया प्रकाशिताः ।

ग्रन्थोऽयं न केवलं श्रीरामानुजाचार्यसमुदाचार-वतां कृत एव उपयोगी अपितु काव्यकौशलकमनीयता लालित्यकलितललितचेतसां कृतेऽपि सौहित्य-संविधायकः ।

ग्रन्थेऽस्मिन् मुद्रिता 'यतिपतिषष्ण्वति' कृतिः भगवदवतारकल्पानां श्रीरामानुजाचार्याणां षोडशीं षष्टिपूर्तिमेव प्रथयति ! सत्यम् इयम् कृतिः सुगुणा शुद्धा सुवृत्तजातयुता ब्राह्मीं श्रियं वहन्ती सदा सतां कण्ठाभरणतां प्राप्स्यत्येव ।

आंग्लभाषाभाष्येण आंग्लभाषाध्यायिनां महांल्लाभो भविष्यति । संस्कृतज्ञास्तु मूलश्लोकैरेव रसचर्वणचम-त्कृताः भविष्यन्ति । हिन्दी-भाषाभाष्यस्याभावः ग्रन्थस्यास्य लोकप्रियत्वं चेदभविष्यत अथ हिन्दीव्याख्यया-कोटिकोटिजनता लाभान्विता अभविष्यत इति प्रकाशकमहोदयमेतदर्थमावाहयामि ।

## हास्यविनोदवाटिका

पुस्तकमिदम् संस्कृतसाहित्यस्य विविधग्रन्थेभ्यः संकलितानां पद्यानां संग्रहमात्रमेव तथापि सर्वैः संस्कृतज्ञैः संग्रहयोग्यम् ।

अस्य संग्रहस्य सम्पादकाः संस्कृत--भाषायाः भविष्यदुत्कर्षसदुद्देश्यसमुपलब्धये समर्पितस्वात्म-सर्वस्वाः स्वनामधन्याः वासुदेवद्विवेदिमहाभागा एव सन्ति ।

विहाय रसराजं रसेषु हास्यं सर्वान् अतिशेते । वैदिकसाहित्यादारभ्य अद्यावधि निर्मितासु संस्कृत-कृतिषु हास्यरसस्य प्रचुरा सामग्री विकीर्णा वर्त्तते । वाटिकेयं सस्कृतताटङ्करूपा काव्यघंटापथे स्वकीयां घाण्टिकतां घटयति ।

विविधासु विषमसमस्यासु संव्यापृताः स्वात्मनी-नमस्तित्वं सुरक्षितुं संलग्नाः, महर्घतया मुहुर्मुहुः मारिताः संकृतविद्वांसः केन प्रकारेण स्वाधरेषु महनीयाममृतकलां स्मितिमानयेयुः—इत्यत्रापि दृष्टिप्रदानेन द्विवेदिमहाभागाः सत्यं सामस्त्येन सर्वै-रस्माभिरभिनन्दनीयाः ।

अस्याः प्रकाशकः सार्वभौम संस्कृतप्रचारकार्यालयः एव । सज्जा चास्याः शोभना । मुद्रणं मोदावहम् । परिशिष्टं चास्याः मौलिकतां व्यवकलयितुं निश्च प्रचमनिवार्यमासीत् । तद्दत्तं सत् बाटिकायाः महत्त्वं वर्द्धयति । मूल्यम् मात्रं सार्द्धद्वयरूप्यकमेव ।

### चक्रवत् परिवर्त्तन्ते

लेखकः—श्रीविद्याधरद्विवेदः ।

प्रकाशक संस्था—सार्वभौम संस्कृतप्रचारकार्यालयः

मूल्यम्—रूप्यकद्वयम् ।

मुद्रणम्--शोभनं स्वाभाविकमाडम्बररहितम्
अशुद्धयादिदोषविरहितम्

विषयः—औपन्यासिकललितकलाविलसितम्

'चक्रवत्परिवर्त्तन्ते' इत्यनुपमेन शीर्षकरत्नेनानेन प्रत्यग्रमेव स्वाभाविकी जागतिकी गतिशीलता

सुविशदं व्यज्यते। चक्रनेमिक्रमेण उपरि, अधस्ताच्च; कदापि नीचैः कदाप्युचैश्च चंक्रमणशीला समुन्नतिरवनतिर्वा निश्चप्रचं प्रचलत्येवेति नास्त्यत्र संशीतिलेशः।

वासवदत्ता-महासेन-उदयनयौगन्धरायण-सुदर्शनारुणिकथाप्रसङ्गेन जनैरुदाहृतेन कथानकेन तथ्यमिदं सुस्पष्ट सुव्यक्तमक्रियत कृतिकारैरिति शक्त्या वक्तुं शक्यते। साहित्यविश्रुतानामेतेषां जीवने घटिता या सामवायिकी कथा वर्णनाक्रमे स्वीकृता सा निश्चयेन सुपरिचिता पूर्वत एव प्रायशः संस्कृतज्ञैः। ये न जानन्ति कथामिमां तैरपि अधीत्य कथ्यमनुभविष्यते।

कथायाः षट्तत्त्वानि समीक्षकैः स्वीकृतानि सन्ति। आधुनिकैरपि प्रारभ्य चरमोत्कर्षपर्यन्तम् गतिप्रवाहः सादरं स्वीक्रियते। पुस्तकेऽस्मिन् सामरस्यतः सामस्त्येन वा सर्वतत्त्वव्रातानां स्वाभाविके संप्रयोगे विनियोगे च सफलः सुलेखकोऽयं ध्रुवं धन्यवादसाधुवादार्हः।

सत्यमेवागादि द्विवेदमहाभागैः स्वकीये स्वागतशुभाशिषां सन्दर्भे यत् अद्य महती आवश्यकता वर्त्तते सरलसंस्कृतानवद्यगद्यमाध्यमेन कथादिलघुलघुसमुपनद्धनिबन्धनिवहैः जनमनः सुसंस्कृतं संस्कृतिञ्च प्रतिष्ठापयितुम्। पिपूर्त्तीयं कृतिः स्पृहां स्पृहणीयतयेति सूर्योदयोपि साधुवादं समभिव्याहरति।

**१—चिन्तन और चङ्क्रमण**

**२—यह दुनिया एक कहानी है।**

**३—दर्शन साहित्य और इतिहास।**

१—लेखक-शान्तिस्वरूपगुप्तमहोदयः

२—प्रकाशक संस्था-अ० भा० विक्रमपरिषद् ४३ उत्तर बेनियाबाग, काशी,

३—मूल्यम् क्रमशः १५।००, ५।००, १०।००

त्रयाणामेतेषां हिन्दीग्रन्थानां लेखका-प्रसिद्धव्यवसायाध्यवसायिनः श्रीमन्तः शान्तिस्वरूपगुप्ताः सन्ति।

संस्कृतपत्रे हिन्दीग्रन्थानां समीक्षायाः अस्ति वरेण्यं कारणम्। ग्रंथा इमे संस्कृत-साहित्य-गहनस्वाध्याय-परिपक्व-सुमधुरफलरूपा एव सन्ति।

यद्यपि लेखकस्य बहवो विचाराः सर्वैः स्वीकर्त्तुं न शक्ष्यन्ते तदापि स्वतन्त्रेण स्वात्मप्रकाशनपरं श्रीमन्तंशान्तिस्वरूपगुप्तं साधुवादेनाहं समायोजये। विशेषतः ब्रह्मशक्ति-स्वरूप-साक्षात्कारसंबन्धिषु लेखेषु वेदविषयकेषु लेखेषु च व्यक्ताः विचारा व्यंजयन्ति यत् लेखकस्य स्वानुभववैशिष्टयमेवात्र चित्रितम् वर्त्तते। लेखकः कमपि गुरुंविधाय स्वाध्यायमकरोत् स्वतः ज्ञानमर्जयित्वा? अर्थं सार्थकं चकार वा यद्भवतु पठन्तु संस्कृत विद्वांसः ग्रन्थानेतान् पश्यन्तु च साम्प्रतिकीं विचारपद्धतिं यामनुसृत्य युगः प्रचलति।

**डॉ परम हंस मिश्रः**



मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥
यो मां पश्यति सर्वत्र, सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि, स च मे न प्रणश्यति॥

* विज्ञापनम् *

# सूर्योदयस्य

५५ तमवत्सरप्रवेशोत्कर्षाशेषमुल्लासोपलक्ष्ये

## स्वातन्त्र्योत्तरसंस्कृतप्रगतिविशेषाङ्कः

परमैश्वर्योत्सवतया

संस्कृत-विश्व-वाङ्मय-विषयसामरस्यसंज्ञापकतया

१९७८ ख्रीस्ताब्दस्यागस्तमासे सप्रश्रयं प्रकाशयिष्यते

अस्मिन् विविधनिबन्ध — निकुरम्बरमणीये कविताकमनीये
एकाङ्किकृत्यङ्किते स्वाध्यायसामग्रीसंगते ऐतिहासिके

## स्वातंत्र्योत्तरसंस्कृतप्रगतिविशेषाङ्के

वर्षेऽस्मिन् भारतेऽन्यत्र विदेशेषु यथा च सा।
एकत्रिंशच्छरच्छुभ्रा प्रगतिः ज्ञापयिष्यते ॥

महनीया मनीषिणः, प्रज्ञाप्रकाशपरमैश्वर्योल्लासिता विद्वांसः, कलाकृतिकलापकलितकलहंसाः कवयः, ललितालोकालोकलावण्यलालसाः कृपालवः लेखकाः, ऐतिहासिकं तथ्यं दिदर्शयिषवः शिक्षाकोविदाः, तत्त्वानुसन्धित्सूनां शिरोमणयः सश्रद्धं समाहूयन्ते श्रीमन्तः सूर्योदयोदयाय संस्कृतसुभगरश्मिप्रसरप्रकाशप्रसारायेति प्रार्थना। तत्र विषयाः — स्वातंत्र्योत्तरसंस्कृतविकासः, गद्यकाव्यम्, चम्पूकाव्यम्, मुक्तकानि, स्तोत्राणि, खण्डकाव्यानि, महाकाव्यानि, निबन्धाः लक्षणलक्ष्यग्रन्थाः, कोशेतिहासग्रन्थाः नास्तिकास्तिकदर्शनदर्शकग्रन्थाः तन्त्रग्रन्थाः, गणितफलितज्योतिषग्रन्थाः व्याकरणप्रक्रियादर्शनविषयकाःग्रन्थाः पुराणेतिहासप्रकाशनानि, शासननीतिः अपरभाषाभ्यः संस्कृतेऽनूदितविषयाश्च तथान्यलेखकैरूह्या विषयाः भविष्यन्ति।

संस्कृतसेविसंस्थानां, संस्कृतसेवार्थं जीवनसमर्पकानां निःस्वार्थकार्य-सम्पादकानां सर्वातिशायिनां विदुषां परिचयः दैनिक-साप्ताहिकपाक्षिक-मासिक-त्रैमासिक-षाण्मासिकवार्षिकपत्राणां परिचयः — इत्येतेषु सन्दर्भविभाजितेषु विषयेषु लेखान् संप्रेष्य सूर्योदयसम्पादकोऽनुग्राह्यः श्रीमद्भिरिति शम्।

पञ्जीकृत-संख्या -- एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

**पत्र-संहिता—**

१. 'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश —(मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३/०० पृथक् प्रदेयानि स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीन-प्रथमाङ्कतः (जनवरीअङ्कतः) एव ग्राहकत्वं स्वीक्रियते। माध्यमिकेन केनापि अङ्केन न स्वीक्रियेत।

३. आंग्लमासस्य २६ तमे दिनाङ्के सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषया संयतया, सरलया, शुद्धया च भाव्यम्। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गाजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका—(टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनोयम् येन उत्तरलाभे मुधा विलम्बो न भवेत्।

**विज्ञापनशुल्कम् -**

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-द्वितीय तृतीयपृष्ठयोः | १५०) | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियते। | |

**संकेतः**

**'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी—१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी कैण्ट।
मुद्रण-स्थल—जयभारत प्रेस, बाँसफाटक, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

वर्षम् ५५
卐
अङ्कः १२
卐
दिसम्बरः १९७८
卐
पौषः २०३५
卐
वार्षिकं मूल्यम्
९/०० रूप्यकाणि
卐
प्रत्यङ्कमूल्यम्
१/०० एकरूप्यकम्

सम्पादकः — डॉ० परमहंसमिश्रः



## 卐 तस्मै सुभद्रश्रवसे नमो नमः 卐

यत्कीर्त्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः ॥

विचक्षणा यच्चरणोपसादनात् सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।
विदन्ति हि ब्रह्मगतिं गतक्लमास्तस्मै सुभद्रश्रवसे नमो नमः ॥

तपस्विनो दानपरा यशस्विनो मनस्विनो मन्त्रविदः सुमङ्गलाः ।
क्षेमं न विदन्ति विना यदर्पणं तस्मै सुभद्रश्रवसे नमो नमः ॥

किरातहूणान्ध्रपुलिन्दपुल्कसा,
आभीरकङ्का यवना खसादयः ।
येऽन्ये च पापा यदुपाश्रयाश्रयाः ।
शुध्यन्ति तस्मै प्रभविष्णवे नमः

श्रीमद्भागवतम् २।४।१५-१८

## विषय-सूची



■

## परापूजा

पूर्णस्यावाहनं कुत्र सर्वाधारस्य चासनम्।
स्वच्छस्य पाद्यमर्घ्यं च शुद्धस्याचमनं कुतः?॥
निर्मलस्य कुतः स्नानं वस्त्रं विश्वोदरस्य च।
निरालम्बस्योपवीतं पुष्पं निर्वासनस्य च?॥

निर्लेपस्य कुतो गन्धो रम्यस्याभरणं कुतः?।
नित्यतृप्तस्य नैवेद्यं ताम्बूलं च कुतो विभोः?॥
प्रदक्षिणा ह्यनन्तस्य ह्यद्वयस्य कुतो नतिः?।
देववाक्यैरवेद्यस्य कुतः स्तोत्रं विधीयते?॥
स्वयं प्रकाशमानस्य कुतो नीराजनं विभोः?।
अन्तर्बहिश्च पूर्णस्य कथं नाम विसर्जनम्?॥
एवमेव परापूजा सर्वावस्थासु सर्वदा।
एकबुद्ध्या तु देवेशे विधेया ब्रह्मवित्तमैः॥

### 卐 शुभाशंसनम् 卐

…सूर्योदयः मम हृदि सर्वदा उद्दीपनं जनयति। हनुमज्जयन्ती' भाषां 'विलास,' विद्यावतां भागवते परीक्षा एते लेखा उत्कृष्टाः। श्रीकृष्णमणित्रिपाठि महोदयस्य ईदृशं लेखनं पठित्वा मम लिप्सा द्रुततरं वर्धते।………

'हनुमज्जयन्ती' सम्पादकीयम् अत्यन्तम् सम योचितम्, अर्थ गौरवन्वितं सुव्यक्तञ्च। ….'भाषां विलासः''—भवतां परम्बायां परां निष्ठां दर्शयति 'सूर्योदयः' महती प्रतिष्ठां लभते।

आर० पी० मुजुमदारः
२/५ बकुल लल्लूभाई पार्क रोड
वेष्ट अन्धेरी बम्बई ४०००५८

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

५५ तमे वर्षे ] वाराणसी, पौष २०३५ दिसम्बर १९७८ [ अङ्कः १२


##卐 अग्निमीडे पुरोहितम् 卐

मन्त्रद्रष्टा मधुच्छन्दा ऋ. १।१-४

अग्निमीडे पुरोहितम्, यज्ञस्य देमृत्विजम्।
होतारं रत्नधातमम् ॥१॥

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।
स देवाँ एह वक्षति ॥२॥

अग्निना रयिमश्नवत्, पोषमेव दिवेदिवे।
यशसं वीरवत्तमम् ॥३॥

अग्ने ! यं यज्ञमध्वरं, विश्वतः परिभूरसि।
स इद्देवेषु गच्छति ॥४॥

अहम् आहवनीयरूपेण पुरस्तादवस्थितमभीष्ट-सम्पादकं देवमग्निम् ईडे। अग्निर्वै देवानां होता' इत्यनुसारं देवानां होतृनामकमृत्विजं साधकोऽहं स्तौमि। ऋतुविपाकरूपाणां रत्नानां धारयितारं देवम् पौनःपुन्येन यजमानोऽहं स्तौमि।

पुरातनैराधुनिकैश्च ऋषिभिः स्तुतः देवोऽग्निः आवाहितान् देवान् यज्ञेषु प्रापयति।

एतादृक्षेण हुताशनेनानुगृहीता यजमानाः यशोवर्द्धकं, वीरतादिवैशिष्टयसमन्वितपुत्रपौत्रादिपरम्परया प्रतिक्षणं प्रतिदिनं वर्द्धमानं धनं प्राप्नुवन्ति।

हे अग्निदेव ! हिंसारहितं यं यं यज्ञ त्वं परितः व्याप्य तिष्ठसि, निश्चप्रचम् स एव देवानां तृप्त्यै तेषु तेषु मन्त्र-विनियोगनिर्धारितेषु देवेषु गच्छति।

# श्रीगुरुगीता

## [ शिष्यकर्त्तव्यम् ]

आविष्कारकाः—भगवत्पूज्यपादाः स्वामिवर्याः ज्ञानानन्दमहर्षिगुरुवर्य्याः

आसनं शयनं वस्त्रं वाहनं भूषणादिकम् ।
साधकेन प्रदातव्यम् गुरोः सन्तोषकारणात् ॥५६॥

गुरुपादोदकं पेयं गुरोरुच्छिष्ट - भोजनम् ।
गुरुमूर्त्तेः सदाध्यानं गुरुस्तोत्रं सदा जपेत् ॥५७॥

ऊर्ध्वं तिष्ठेद्गुरोरग्रे लब्धानुज्ञो वसेत् पृथक् ।
निवीतवासा विनयी प्रह्वस्तिष्ठेद्गुरौ परम् ॥५८॥

गुरौ तिष्ठति तिष्ठेच्च, उषितेऽनुज्ञया वसेत् ।
सेवेताङ्घ्री शयानस्य गच्छन्तञ्चाप्यनुव्रजेत् ॥५९॥

शरीरं चैव वाचं च बुद्धिन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद् वीक्षमाणो गुरुर्मुखम् ॥६०॥

नित्यमुद्रितपाणिः स्यात् साध्वाचारः सुसंयुतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥६१॥

हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ ।
उत्तिष्ठेत् प्रथमं चास्य चरमं चैव संविशेत् ॥६२॥

दुष्कृतं न गुरोर्ब्रूयात् क्रुद्धं चैनं प्रसादयेत् ।
परिवादं न श्रृणुयादन्येषामपि कुर्वताम् ॥६३॥

नीचं शय्यासनं चास्य सर्वदा गुरु सन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥६४॥

चापल्यं प्रमदागाथामहंकारं च वर्जयेत् ।
नापृष्टो वचनं किंचिद् ब्रूयान्नापि निषेधयेत् ॥६५॥

गुरुमूर्ति स्मरेन्नित्यं गुरुनाम सदा जपेत् ।
गुरोराज्ञां प्रकुर्वीत गुरोरन्यं न भावयेत् ॥६६॥

गुरुरूपे स्थितं ब्रह्म प्राप्यते तत्प्रसादतः ।
जात्याश्रमयशोविद्यावित्तगर्वं परित्यजेत् ॥
गुरोराज्ञां प्रकुर्वीत गुरोरन्यं न भावयेत् ॥६७॥

गुरुवक्त्रे स्थिता विद्या गुरुभक्त्यानुलभ्यते ।
तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु ॥६८॥

नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न च वास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥६९॥

# जीवनस्य विनियोगः

मानवसमाजे अद्य महती अनवस्था अवलोक्यते यस्याः समवस्थानम् कथं भवितुं शक्ष्यति इति सर्वे विचारकाश्चिन्तिताः सन्ति । नाद्य जीवने काचित् आस्था वर्त्तते, न श्रद्धा दृश्यते न वा किंचिदुद्देश्यं लक्ष्यते । जीवनम् जीव्यते कया जीवातुभूतया जीवन्तिकया ज्यायस्या ज्ञानज्योत्स्नया इति सम्प्रति विस्मृतमिव दृश्यते ।

साम्प्रतिके जगति जनाः जीवन्ति, श्वसन्ति, प्रचलन्ति, वलन्ति च सांयोगिकेन सन्दर्भेण । अद्य तन्त्रमपि शासनस्य दुःशासनप्रदर्शितमेव दरीदृश्यते । संयोगत एव कश्चित् शासकः भवति, संसदः सदस्यः भवति, राष्ट्रपतिः भवति, कुलपतिः भवतिः यद्वा तद्वा भवति । वायुः वाति, तृणं वर्त्तमानमन्तरालमन्तरायं वा तीर्त्वा एकत्र पतति, तत्रत्यः अधिकारी भवति पुनः प्रभञ्जनजवादुज्जासितः जीर्य्यति कदाचित् जलाशये वा निमज्जति ! इय सांयोगिकी अनवस्था सम्प्रति विश्वं कर्मकालुष्यकलङ्कातङ्कपङ्किलं करोति इति मनीषिणां सम्मतम् ।

नास्ति भारतीयेयं जीवनपद्धतिः । अत्र जीवनस्य विनियोगः कृत आसीत् यथा उपासनायां मन्त्राणां विनियोगः क्रियते, तथैव आचारेऽपि जीवनस्य विनियोग आवश्यकः भवति । अविनियुक्तः उच्चारितः मंत्रः निष्फलो भवति, तथैव अविनियुक्तं जीवनम् निष्फल भवति । जीवनस्य विनियोक्ता धर्मः कथ्यते । मानवे धर्मस्य प्राभाव्यं परमावश्यकम् इति विचारकाः कथयन्ति । भगवता श्रीकृष्णेन "स्वधर्मे निधन श्रेयः परधर्मो भयावहः" इति सिद्धान्तः प्रतिपादितः यदुद्दिश्य, तद् धर्मे जनानां विनियोगदृशा एव सिद्धान्तितः ।

चातुर्वर्ण्यव्यवस्थायां मानवसमुदायस्य विनियोग एव कृत आसीत् । चतुर्धा विभक्तः समाजः स्वकर्मसु निरतः जीवनं शिवसंकल्पसमन्वितः सन् समुपाभुङ्क्त समुपाव्रुभुजच्च । नात्र कश्चिद्वीरः विरक्तः इष्ट आसीत् । अर्जुनं युद्धाद्विरक्तं भगवता यदुदीरितंतत्सर्वं पद्मनाभ-मुखपद्मविनिःसृतं गीतामृतम् अद्यापि मनुतनुजनुषं सिञ्चति किन्तु सम्प्रति जीवनस्य समाजस्य वा कर्मधर्म-विनियोगाभावात् न कस्यापि मर्म स्पृशति इति चित्रम् !

अद्य का दशा वर्त्तते जीवजगति मूर्धन्यतामुपागतस्य मानवसमुदायस्य ? न किमप्युत्तरदायित्वनिर्वाहनिष्ठाकुंठतया तिष्ठति तत्र !

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्यैक - विंशतितमे दीक्षान्ते समारोहे प्रो० रामचन्द्रनारायणदाण्डेकर महाभागैः स्वकीये दीक्षान्तभाषणे एष विषयः प्रौढतया समुपस्थापितः । शिक्षायाः प्रयोजनसन्दर्भे तैरिदं शाश्वतं सत्यं समभिव्याहृतं यत् "ज्ञानं नाम असंशयम् महती शक्तिः, किन्तु अस्याः शक्तेर्यो विनियोगः, तस्य नियन्त्रणम् मार्गदर्शनं च शीलाधिष्ठितं भवितुमर्हति ।"

वस्तुतः शिक्षया ज्ञानशक्तिः प्रस्फुरति । ज्ञानं भारः क्रियां विना इत्यनुसारम् क्रियायास्वत्र समावर्त्तनमनिवार्यतः परमावश्यकम् । ज्ञानक्रिययोः प्रवर्त्तने इच्छाशक्तेः समावेशः प्रयोजकतया प्रत्यग्रतया च प्रबोधव्य इति इच्छाज्ञानक्रियारूपाणां शक्तीनां पीठभूतं मानवहृदयं शिक्षया परिष्कार्यं भवति । शिक्षयैव जीवितमूल्यानां परिचयः भवति । जीवितमूल्येषु परिचितेषु तेषां विनियोजनमपि सुकरं तिष्ठति । अनेन व्यवहारेण प्रकारेण वा शिक्षा सहजतया सुविपाका भवति ।

किन्तु अवस्था सम्प्रति विपरीतैव प्रतिभाति । शिक्षायाः लक्ष्यं किं सेवायाः शासनप्रक्रियायाः रिक्तस्थानेषु शिक्षितानां नियुक्तिरेव केवलं भवति ? एतद्विषयेऽपि दाण्डेकर महाभागाः समर्थतया समभिव्याहरन्ति यत् "शोचनीयं खल्विदं यत् शिक्षा विषयिणी आदर्शप्रवाना विचारसरणिः न केवलं सामान्यतः शिक्षा विषयिणी किन्तु उच्चशिक्षा विषयिण्यपि, सम्प्रति महता वेगेन तिरोधीयमाना दृश्यते । शिक्षाविषये एवमस्तु अथवा एवं मास्तु इति वक्तुमविकारवन्तो ये शिष्टाः ते सम्प्रति शिक्षाचर्य्यायां 'लाभोद्देश्यको धनविनियोगः' इत्यादीनां वाणिज्यसंज्ञानां प्रायेण प्रयोगप्रवणाः दृश्यन्ते ।··· ····उपलब्धेषु वृत्त्यवकाशेषु युवजनं स्थापयितुं तदनुकूलप्रशिक्षणपरः शिक्षायाः प्रयासो मास्तु ।

इत्यादिषु विचारेषु अनुचितः विनियोगः भर्त्सित, अदूष्यवैदुष्यैः अपश्चिमविपश्चिद्भिः दाण्डेकरमहाभागैः ।

भारतवर्षे पुरा ऋषिभिरिदमेव विनिवारितमासीत् । ब्राह्मणः सत्यतः तथ्यतः कर्मणा धर्मेण आचारेण च ब्राह्मणः भवतु ! भवतु नाम तस्य ब्रह्मकर्मणि विनियोगः, तथैव क्षतात् त्रायत इति क्षत्रशब्दार्थान्वितर्थत्वसंवलितः क्षत्रियः स्यात् क्षात्रकर्मणि तस्य विनियोगः स्यात् । एवमेव कर्मव्यवस्थया वैश्याः शूद्राश्च व्यवस्थापिता स्युः स्वकमधर्मेष्विति जातिविनियोग-व्यवस्थया प्रचलितः सनातनोऽयमार्यधर्मः शाश्वत कालात् प्रचलित वर्त्तते । पुरा इयं व्यवस्था जीवन यज्ञव्यवस्था आसीत् । श्रुतिः व्याहरति—"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" इममेव प्रथमधर्मम् समाश्रित्य सताव्यवहारेण मानव जीवनस्य शुभः विनियोगः कर्त्तुं शक्यते अद्यापीति शम् !

# सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य एकविंशतितमे दीक्षान्त समारोहे

## प्रो० रामचन्द्रनारायण दाण्डेकर महोदयानाम् दीक्षान्त—भाषणम्

नमः सदसस्पतये प्रतिकुलाधिपतये तथा कुल पतये, विद्योतमानविविधकलाकलापेभ्यो विद्योद्यानमयूरेभ्यो विद्वद्भयश्च ।

प्रिया : स्नातकाः,

किञ्चित्कालात् पूर्वं वृत्तपत्रपठनप्रसङ्गेन कस्यचिद् विश्वविद्यालस्य दीक्षान्ताभिभाषणस्य वृत्तान्तो मम दृष्टिगोचरोऽभवत् । मन्ये एतादृशप्रसङ्गेषु क्रियमाणानां मध्ये तेन अभिभाषणेन लघुतमेन भाव्यम् । वाक्यद्वयमात्रशरीरकमित्थं किल अभिभाषकमहोदयस्य अभिभाषणमासीत्—'भोः युवसखाः, संपादितानि सन्ति युष्माभिर्विश्वविद्यालयसकाशात् पदवीपत्राणि । अधुना इतो निर्गत्य संपाद्यतां किञ्चिद् ज्ञानम्' नाहं तत्रभवान् इव सर्वतुच्छवादी, न वाहमस्मिन् विश्वविद्यालयेऽनुष्ठीयमानस्य विद्यादानस्य प्रतिष्ठां लघूकर्त्तुमिच्छामि । सोऽहं तस्यां तस्यां परीक्षायां प्रदर्शितगुणविभवानां स्वगुणार्जितपदवीकानां यशस्विनां स्नातकानां हार्दमभिनन्दनं विदधामि । किन्तु एवं दृष्टिवर्धनेन समकालमेव तानहं तैतिरीयब्राह्मणगतां तां सुविदितामिन्द्रभरद्वाजकथामपि स्मारयितुमिच्छामि । इत्थं हि श्रूयते—"भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । तं ह जीर्णिं स्थविरं शयानमिन्द्र उपव्रज्य उवाच । भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमनेन कुर्या इति । ब्रह्मचर्यमेव अनेन चरेयमिति ह उवाच । तं ह त्रीन् गिरिरूपानविज्ञातान् इव दर्शयाञ्चकार । तेषां ह एकैकस्मान्मुष्टिमाददे । स होवाच भरद्वाज इत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः । एतद् वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरदननूक्तमेव" ( ३।१०।११।३४ ) इति । मन्ये सुस्पष्टमस्याः कथायास्तत्पर्यम्, इदं खलु यथार्थज्ञानस्य अन्यतमं फलं यत् तत् पुरुषमात्मनोऽज्ञानपरिमाणस्य सर्वथा अभिज्ञं करोति । आपाततो भासमानोऽपि नाऽत्र कोऽपि वदतो व्याघातः। इदं खलु पुरुषस्य वास्तवं बलस्थानम्, यत् स्वबलमर्यादानां परिज्ञानं नाम ।

यत्सत्यम्, यदिदं ज्ञानसंपादनं नाम न तत् शिक्षाया एकमात्रमुद्देश्यम्, न वा प्रधानमपि । दूरेण ह्यवरमिदमित्यपि वक्तुं शक्यते । यत् तु शीलनिबन्धनम्, यद्वा व्यक्तिमत्त्वविशेषस्य विकासनम्, तदेव खलु परमं महत्त्वं बिभर्ति। शिक्षया हि मनः प्रबोधनीयमेव, परं विशेषतया व्यक्तिमत्त्वं समृद्धतामापादनीयम् । जीवितमूल्यानां परिचये, तेषां च रसवद्विभावने छात्राः प्रोत्साहनीयाः । यद्यत् शिवं सुन्दरं वा, तद्दर्शिनी दृष्टिस्तैरुपार्जनीया । ज्ञानं नाम असंशयं महती शक्तिः, किन्तु अस्याः शक्तेर्यो विनियोगः, तस्य नियन्त्रणं मार्गदेशनं च शीलाधिष्ठितं भवितुमर्हति । काममस्माकं विद्यापीठेषु किमपि विद्यावितरणं भवति; तथापि इदमभ्युपगन्तव्यमेत्र यत् स्वार्थलम्पटताया वा सर्वानादरवादस्य वा, निराशाप्रवणताया वा धैर्यण विरोधार्थं ये संस्काराः संस्कारक्षमे नवे वयसि आवश्यकाः, तेषामाधाने न तानि विद्यापीठानि समर्थानि सन्ति । छात्रैरध्यापकैश्च उभाभ्यामपि नेदं विस्मर्तव्यं यद् बुद्धेः संस्करणं ज्ञानं जनयति । आत्मनः संस्करणं तु शीलसम्पदं व्यक्तिमत्त्वविशेषं च जनयति । सुष्ठु च खलु इदमुच्यते यदात्मनः संस्कृतिरेव खलु संस्कृतेरात्मा इति ।

यदि एतादृशे समावर्त्तनसमारोहप्रङ्गेऽहं संस्कृतविषये किञ्चिदभिभाषेय, यथा—संस्कृतभाषायाः, संस्कृतसंस्कृतेश्च माहात्म्यम्, अथवा संस्कृतस्य अध्ययनसंशोधनयोः कर्तव्यतया अवशिष्टानि अभीष्टानि, तर्हि तत् परम्परानुरूपं भवेदपि। किन्तु संस्कृत-विश्वविद्यालयस्य स्नातकानभिभाषमाणो य एवं कुर्यात्, स मन्ये गङ्गाजलं वाराणसीमयत आनेतुं समीहेत। अतः परिह्रियते मया तच्चापलम्। तथापि साम्प्रतिकीं भारतीयां शिक्षापद्धतिमधिकृत्य मम कांश्चित् स्थूलान् विचारान् एतद्विश्वविद्यालयस्य तैस्तैर्घटकैः संविभाजयितुमिच्छामि।

शोचनीयं खल्विदं यत् शिक्षाविषयिणी आदर्शप्रधाना विचारसरणिः—न केवलं सामान्यतः शिक्षाविषयिणी, किन्तु उच्चशिक्षाविषयिण्यपि—सम्प्रति महता वेगेन तिरोधीयमाना दृश्यते। शिक्षाविषये 'एवमस्तु' अथवा 'एवं मास्तु" इति वक्तुमधिकारवन्तो ये शिष्टाः, ते सम्प्रति शिक्षाचर्चायां 'लाभोद्देश्यको धनविनियोगः', लाभांशः' इत्यादीनां वाणिज्यसंज्ञानां प्रायेण प्रयोगप्रवणा दृश्यन्ते। शैक्षणिकनीतेरेतादृशमतिमात्रं व्यवसायाभिमुखीकरणं शिक्षाया वास्तवं प्रयोजनं तिमिरयति इव। उपलब्धेषु रिक्तेषु वृत्त्यवकाशेषु युवजनं स्थापयितुं तदनुकूलप्रशिक्षणपरं शिक्षाया प्रयासो माऽस्तु। शिक्षया खलु तथा प्रयतितव्यम्, यथा युवजनः समाजस्य आकाङ्क्षाणामभिज्ञः, समाजऋणस्मरः, नवनवीनव्यवसायोत्पादनक्षमश्च भवेत्। उदारशिक्षायाः सांस्कृतिकशिक्षाया वा उपहासो नाम सम्प्रति काचित् शिष्टसंमता रीतिरेव संवृत्ताऽस्ति। किन्तु नैतद् विस्मर्तव्यं यदुदारशिक्षा कस्यापि वृत्तिविशेषस्य क्षमतामाधातुं न प्रवर्तते। परं यः कोऽपि वृत्तिविशेषोऽन्ततो गत्वा स्वीकार्यो भवतु, तत्कृते सर्वसाधारणीं क्षमतामियं शिक्षा नैव न निर्माति। महान् भारतीयः शास्त्रज्ञो भाभामहोदयः सदैव साग्रहं प्रत्यपादयत्, यद् अध्ययनाध्यापनं तात्कालिकलाभसंभवानपेक्षमखण्डमनुष्ठानमर्हति। ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इत्येव अस्माकीनं प्राचीनाध्ययनादर्शमनुबध्य समादेश आसीन्ननु?

किञ्च नास्माभिस्तादृशी शिक्षाप्रणाली अनुमन्तव्या, यया छात्रः शिक्षाप्रक्रियायामुदासीनघटकतामापाद्यते। यत्सत्यम्, शिक्षा नाम किञ्चित् संभूयसमुत्थानम्, यत्र उभौ अध्येतृ-अध्यापयितारौ सोद्यमं व्याप्रियेते। नहि शिक्षा नाम कश्चिद् निष्क्रिये छात्रे अध्यापकेन आचरणीयो व्यापारविशेषः, यथा गोबीजनिवेशनम्, यथा वा अङ्गसंवाहनम्। यथाध्यापकः छात्रं स्वात्मन्यनुष्ठातुमुत्साहयति सा खलु शिक्षा। कः खलु शिक्षकाणां धुरि प्रतिष्ठापयितव्यः? न सः, यस्य छात्रास्तेषां पुरतः स्थापितानामधिकतमानां प्रश्नानामुत्तराणि सुखेनैव दातुं शक्नुवन्ति; किं तर्हि सः, यस्तादृशानां भूयिष्ठानां प्रश्नानां पृच्छाकरणे छात्रान् प्रेरयति, येषां प्रश्नानां समाधाने स स्वयमप्यसमर्थः स्यात्। शिक्षाहि वस्तुतः सन्नन्तः शक्तिः, द्योतयति च सा, यद् गुरुः शिष्ये स्वशक्तीनामभिज्ञतां जागरयति। 'तेजस्वि नावधीतमस्तु" इत्येषा प्राचीना प्रार्थनाऽपि गुरुशिष्यौ सहव्यापृतौ विधत्ते।

विद्यार्थिनामशोभना स्वदायित्वप्रतिबोधशून्यता अस्माकं साम्प्रतिक्याः शिक्षापद्धतेर्वैफल्यस्य निमित्तमिति मतमधुना सुरूढमिव संजातमस्ति। भारतीयो युवजनः किल राष्ट्रस्य नैराश्यास्पदं संवृत्तोऽस्ति इति सर्वैरुद्घुष्यते। अहं तावदिदं वक्तुमुत्सहे यत् राष्ट्रमेव युवजनस्य नैराश्यास्पदं संवृत्तमस्ति। नीतिमत्ता, अनुशासनम्, तथा च सदाचार इत्येतां गुणसंपदमात्मनि भावयितुं संवर्धयितुं च युवानो युवतयश्च उपदिश्यन्ते। किन्तु विरलादर्शे अस्माकं साम्प्रतिके समाजे एतादृशस्य गुणगणस्य आत्मसात्करणार्थं कस्य वा अनुकरणं तैः कर्तव्यम्? आत्मानमेव प्रथमं शासतु शासितारः। प्रयतन्तां च ते भाविभारतस्य आकाङ्क्षास्तरुणजने साक्षात्कर्तुम्। नहि शिक्षकैर्नेतृभिश्च मतसघर्षं प्रति अमर्षः प्रकटीकर्तव्यः, यतो मतभेदशून्यो विद्यापीठपरिसरो बौद्धिकव्यापारवञ्चितः सन् तावातांशेन मुमूर्षुरेव अवगन्तव्यः। एवं सत्यपि छात्राणां या नास्तिगर्भा एव उत्थानशीलता दृश्यते, सा न केवलं न प्रोत्साहनीया, न सोढव्याऽपि। एवं ह्याहुः 'किमस्तु' इति विषये भारतीयाः छात्रा न तथा निश्चितात्मानः सन्ति यथा किं मास्तु' इत्येतद्विषये।

उच्चशिक्षणसंस्थानां लोकतन्त्रात्मिका पुनर्घटना कर्तव्येति निर्बन्धोऽन्तरान्तरा श्रूयते। अत्र तावदिदमवश्यनिर्देशार्हं यद् लोकतन्त्रं नाम एका राजकीया संकल्पना अस्ति। एतत्संकल्पनानुसारेण सर्वोऽपि जनः—यः कोऽपि स भवतु—केवलं बहूनामन्यतमो भवति, नासौ ततः

किमपि अधिकं मूल्यं धारयति । यदा च मताधिक्यानुसारेण सकृत् कश्चिद् निर्णयः क्रियते, तदा स सर्वैरवश्यं परिपालनीयो भवति । एतादृशे लोकतन्त्रे राजनीतौ स्वीकृतेऽपि न तावन्मात्रेणेदमर्थादायति यत् सर्वा एव महत्त्वपूर्णाः सामाजिक्यः संस्था राजकीय-लोकतन्त्रानुसारेण सचालयितुं शक्या इष्टा वेति । तथा हि—सेनया वा धर्मेण वा, कुटुम्बेन वा, विद्यालयेन वा स्वं स्वं कार्यं यथावत् कर्तव्यमिति अभिप्रेयते चेत्, न शक्यं एताः संस्था लोकतन्त्रानुसारिण्या पद्धत्या संघटयितुम् । लोकतन्त्रात्मकं विद्यापीठं संभवति, परं केवलं नैतिकभूयिस्ठेन अभिप्रायेण । यथा राजकीयसमाजे नागरिका व्यवहरन्ति, तथा विद्यापीठेऽव्यवहरत्सु अपि छात्रेषु यदि तेषां शैक्षणिकानुभवस्य अधिकतरामर्थवत्तामापादयन्तः सहभागीकरणप्रकारा आयोज्येरन्, तर्हि तावतापि लोकतन्त्रस्य आत्मा विद्यापीठे वरीवर्त्तितुं प्रभवेत् । अध्येतृ-अध्यापयित्रोः बौद्धिकप्रामाण्यस्य समीकरणप्रयत्नो विकृतः, अनैसर्गिकः अतश्च प्रामादिकोऽपि । किं तर्हि वस्तुत आवश्यकम् ? यथा स्वाभिमानिषु व्यक्तिविशेषेषु व्यवह्रियते, तथा छात्रेष्वपि सदा व्यवहर्तव्यम् । तैः सह सदा संमन्त्रयितव्यम् । तेषां वचः सदा सादरं श्रोतव्यम् । यत्र च विषये तेऽधिकारवन्तः स्युः, तत्र तेषां वयोऽनुसारेण परिपक्वतानुसारेण च तेषु सदा महत्त्वपूर्णः कार्यभारो निक्षेप्तव्यः । छात्राणामपेक्षा अध्यापकाः परिचिन्वन्तु तत्र तत्र च दत्तावधाना भवन्तु, किन्तु एवं कुर्वाणैस्तैर्न स्वीया भूमिका कदापि परित्यक्तव्या, न वा तस्याः प्रामाण्यं क्षणमपि शङ्कनीयम् । यथा कश्चित् शिक्षाविद् आह—न खलु अध्यापकैरात्मा स्वीयायाः कातरताया बन्दीकर्तव्यः ।

आदर्शवादमनुसरता मया उच्चशिक्षामधिकृत्य एका त्रिसूत्री प्रणीताऽस्ति एकं सूत्रमुद्देशविषयकम्, अपरं स्वरूपविषयकम्; तृतीयं च इतिकर्तव्यताविषयकम् । अस्या त्रिसूत्र्या द्वे सूत्रे प्राचीनशास्त्राद् उपात्ते स्तः—एकं श्रीमद्भागवतात्, अपरं च श्रीभगवद्गीतातः । एतयोर्मूलभूतः सन्दर्भस्तावदन्य एवास्ति । मया तु एते उच्चशिक्षाया विषये विनियुक्ते स्तः । तृतीयं तावत् सूत्रं मयैव ग्रथितमस्ति ।

उच्चशिक्षाया उद्देश्यविषयकं मम प्रथमं सूत्रमेवं वर्तते—'सत्यं परं धीमहि' । सत्यस्य अनुसन्धानम्, उच्चतमस्य सत्यस्य अनुसन्धानमेव उच्चशिक्षाया उद्देशो भवितुमर्हतितमामिति मे निश्चितं मतम् । भवतु तत् सत्यं 'ज्ञानं' विषयकम् (यद् मानवीयैः सामाजिकैश्च शास्त्रैर्गवेष्यते ), भवतु वा 'विज्ञान' विषयकम् ( यद् भौतिकैस्तान्त्रिकैश्च शास्त्रैः संशोध्यते ) इदं सत्यान्वेषणं नाम सदाऽनुवर्तमाना कदापि चाऽनुपरमन्ती काचित् प्रक्रिया । शश्वदेवेदं मे प्रतिभातमस्ति यत् सत्यं वै क्षितिजसदृशं वर्तते । 'एते वयं तन्निकटं प्राप्ताः स्म' इति मन्यमानानामस्माकं तद् दूरतरमपसरति इव । एवं सत्यपि—अथवाऽस्मादेव हेतोः—इदं सत्यान्वेषणं नाम तादृशं वस्तु यद् युगपदेव विलोभयति, आयासयति च । सत्यान्वेषणं खलु किञ्चिदाह्वानमेव, यस्य हेतोर्जीवितमर्थवद् भवति प्रयोजनवच्च ।

अत्र सूत्रे 'धीमहि' इति यत् पदं वर्तते, तस्य अर्थविशेषं स्फोरयितुमिच्छामि । स शब्दो न केवलं बौद्धिकमाकलनमाह, अपि तु साक्षाद्दर्शनम् । नहि केवलं बौद्धिकं ग्रहणमन्तिममूल्यस्य पदवीमर्हति । ज्ञानं तदैव साफल्यं भजति, यदानुभवपथमवतरति, यदा तज्जीवने प्रतिबिम्बितं भवति । विचारसण्या जीवनपद्धतेश्च द्वैधीभावं न कदापि भारतीया परम्पराऽनुमन्यते ।

तस्यां तस्यां परिस्थितौ तस्मिंस्तस्मिंश्च अनुभवस्तरे सत्यस्य अन्यानि अन्यानि रूपाणि परमसत्यतया व्यज्यन्ते । तदा तदा प्रतीतानामेतेषां सत्यानां प्रामाण्यपरीक्षणस्य एक एव पर्याप्त उपायः—स नाम तेषां जीविते आचरणम्, तेषां सर्वार्थेन 'जीवसात्करणम्' । एवं परीक्ष्यमाणानि तानि सत्यस्य आंशिकानि रूपाणि यदि विगुणान्यपर्याप्तानि वा सिद्ध्येयुः, तर्हि तेषां त्यागेनैव नवानां सत्यानामन्वेषणं प्रारम्भणीयं भवति । अन्तिमसत्यं दिदृक्षुर्मानवो जगन्नाम्न्यामस्यां प्रयोगशालायामेकमनु द्वितीयम्, अनन्तान् प्रयोगान् कुर्वन्नास्ते । अयमेव जीवनार्थः । गान्धिमहात्मना अयं दृष्ट आसीत् । अत एव तेन आत्मचरितस्य 'सत्यान्वेषणप्रयोगाः' इति नामधेयं कृतम् ।

सत्यान्वेषणं नाम पवित्रं व्रतमेव किञ्चित् । अतश्च तत् काञ्चिद् आचारसंहितामपेक्षते । अमेरिकायां वर्तमानस्य एकस्य महाविद्यालयस्य ध्येयवाक्य इयमाचारसंहिता सम्यगमिहिताऽस्ति—

From the cowardice which shrinks from new truth,

from the laxuess which is content with half truth,
From the arrogance which thinks that it knows all truth,
O God of Truth, deliver us.

अस्य संस्कृतानुवादो मया एवं कृतोऽस्ति—

**नवसत्यात् परावृत्तिरर्धसत्येन तोषणम् ।**
**सर्वसत्यज्ञतागर्वो न मे सन्तु कदाचन ॥**

मम द्वितीयं सूत्रमुच्चशिक्षायाः स्वरूपविषयकमस्ति । तच्च इत्थम् 'ज्ञानं विज्ञानसहितम्' । प्रस्तुते 'ज्ञानं विज्ञानं च' इत्येतौ शब्दौ मया पारिभाषिकत्वेनानुयुज्येते । स्थूलतया 'ज्ञानं' नाम माननीयानि सामाजिकानि च शास्त्राणि, विज्ञानं च भौतिकानि तान्त्रिकाणि शास्त्राणि । नात्र उभयोराशयस्य तुलना मुख्यतया अभिप्रेता, किन्तु उभाभ्यां जनितयोर्मनोवृत्तिविशेषयोः । 'विज्ञानं' जनितं बौद्धिकमौद्धत्यं तथा च आक्रमणशीलता इत्येतद् ज्ञानोत्पन्नेन चिन्तनात्मना संयमेन आदर्शवादेन च मृदु कर्तव्यम्, या च ज्ञानचोदिता स्वप्निला कल्पनातरङ्गारोहणशीलता, तथा च निरुद्यमता, तस्यां प्रयोजनवती प्रेरणा, तथा च आत्मविश्वास इत्येताभ्यां विज्ञानधर्माभ्यां बलाधानं प्राणधमनं च कर्तव्यम् । अत्र 'मार्क्स बोर्न' विषयिणी एका कथा मम स्मृतिमारोहति । अस्य सुप्रसिद्धस्य जर्मनीदेशीयस्य वैज्ञानिकस्य त्रयः शिष्या आसन्, यैर्गच्छता कालेनाणुसंशोधने परं नैपुण्यमवाप्तम्, ये च साक्षात् परोक्षं वा अण्वस्त्रस्य जनकतां ययुः—इटलीयः फेर्मी, स्कण्डिनेह्वीयो नीलबोरः, तथा अमेरिकीय ओपेनहायमरः । ( अस्य ओपेनहायमरस्य सविधे धम्मपद–भगवद्गीते सदैव आस्तामिति प्रसङ्गत उल्लेखनीयम् । यदा च विश्वघस्मरं तदण्वस्त्रं साध्यमानावस्थमासीत्, तदैव तस्य भाविनं प्रस्फोटप्रकारमुत्प्रेक्षमाणेन तेन तद्विषये 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता' इति गीताश्लोक उद्धृत आसीत् ।) एतान् त्रीन् शास्त्रज्ञानान्तरेण एवं किल पश्चाद् दन्दह्यमानचेता मार्क्सबोन उज्जगार इति श्रूयते—'असंशयं तन्मे महाभाग्यम्' यन्मया तादृशा निपुणाः शिष्या लब्धाः । किन्तु मन्ये शोभनतरमभविष्यद् यदि ते किञ्चिदिव न्यूननैपुणाः सन्तोऽपि प्रज्ञावत्तरा अभविष्यन्' ।

मानवी खलु बुद्धिः ( या नैपुण्यस्य मूलम् ) शक्याशक्ये विचार्य अशक्यतया प्रतीयमानं वस्तु शक्ये परिणमयितुं हठात् प्रयतते । प्रतिबोधस्तु ( यः प्रज्ञाया मूलम् ) युक्तायुक्ते विविच्य यत् किञ्चित् शक्यं न तद् नियोगतो युक्तं स्यादिति साग्रहं प्रतिपादयति । नहि अभीप्सितस्य साफल्यसंपादनं यथार्थगौरवाय, किं तर्हि युक्तस्य सिषाधयिषा । विज्ञानं हि ज्ञानं विना अन्धं भवति, ज्ञानं च विज्ञानरहितं पङ्गु । अत उभाभ्यामन्धपङ्गु न्यायेन सांमनस्येन मार्गाक्रमणं कर्तव्यम् ।

अथ तृतीयम् । उच्चशिक्षया खलु सर्वदा पुरोगतिशीलया भवितव्यम् । अस्ति पूर्वैः संभृता विद्यासंपत्, उच्चशिक्षया तस्याः संवर्धनसमुन्नमनयोरनुकूलया भाव्यम् । अत इदं मे तृतीयं सूत्रम्—'गातुर्योगप्रयोगाभ्याम्' । अत्र सूत्रे वर्तमानं 'गातु'शब्दमहं प्रगतिपर्यायितया अवगच्छामि । मानवजीविते वै इदं प्रधानं प्रवृत्तिद्वयं दृश्यते-एका योगरूपा, यया अप्राप्यं प्राप्यते; अपरा च क्षेमरूपा, यया प्राप्तस्य परिरक्षणं भवति । प्रकृते हि योगप्रवृत्तिर्नवनवस्य ज्ञानस्य आसादनाय निष्पादनाय वा भवति । क्षेमांशमात्रे रममाणः, तावतैव च परितुष्यन्नस्माकं देशो योगांशात् पराङ्मुखः संस्कृति सभ्यतयोराजिधावने पृष्ठतोऽवहीन इत्येव भारतीयविद्येतिहासः कथयति ।

किञ्च, ज्ञानं तदैव वर्धिष्णु भवति यदा तद् व्यवहारे उपयुज्यते प्रयुज्यते वा, यदा च तत् सर्वत्र अनिर्बन्धं प्रसार्यते । द्रव्यकृपणाद् वै ज्ञानकृपणः पापीयान् । उक्तमेव च प्राग् यन्न ज्ञानजीविते परस्परेण अस्पृष्टे पृथक् स्थापनीये इति । उपलब्धं ज्ञानं यदा साक्षाद् जीविते उपयुज्यते, तदैव पुरुषस्तस्य वैगुण्याभिज्ञो भवति । तदैव च स्वभावत एव स नवीनतरस्य प्रमाणतरस्य च ज्ञानस्य अन्वेषणाय अन्तः प्रेरणामनुभवति ।

'सेन फ्रेन्सिस्को स्टेट,कालेज' इत्यस्य महाविद्यालयस्य अध्यक्षेण प्राध्यापक-हायाकावामहाभागेन आदर्शभूतस्य विश्वविद्यालयस्य एकं शब्दचित्रं रेखितमस्ति । तेन चित्रेण मम मनो नितरां प्रभावितम् । महाभागो भणति—'अहं विश्वविद्यालयेषु तादृशस्य 'वायुमण्डल'स्य निर्मितिं द्रष्टुमिच्छामि, यत्र उभये अध्येतारोऽध्यापकाश्च एकस्यैव

शैक्षणिकसमाजस्य समानावयवतया सममृध्येयुः । वैचारिकाः संघर्षास्तावत् तत्र भूयसा भवन्त्येव, किन्तु समकालमेव उभये अन्योन्यमाद्रियेरन्नपि । अयं च विद्यालयीयः समाजः क्वचिद् विषये स्थितिवादी स्यात्, क्वचिद् विषये तु अतिभूमिगामी, क्वचिन्निविष्टचेता गभीरश्च, क्वचित् सोल्लासो मुक्तचिन्तश्च, सर्वत्र तु अयं निर्व्याजमतिस्तीक्ष्णबुद्धिश्च स्यात् । तादृशस्य च भाविजगतो निर्मितये सेवायै च अयं सत्यनिष्ठो विद्यापरायणः समाजः समर्पितजीवितः स्यात्, यस्मिन् सर्वोऽपि जनः सांस्कृतिकदृष्ट्या संपन्नतरः, सामाजिकदृष्ट्या न्यायाधिष्ठिततरः, समताप्रधानश्च भविष्यति' इति ।

एष एव आदर्शोऽस्य विश्वविद्यायलस्य मार्गदर्शको भूयात् ।

# चन्द्रविज्ञानम्


## आचार्यवर्याः श्रीमतन्श्चन्द्रशेखरस्वामिनः

### सम्पूर्णानन्द संस्कृतविश्वविद्यालये योगतन्त्रविभागे प्राध्यापकाः


[ सम्प्रति प्रस्तूयन्ते आगमविज्ञानगौरवाणां शास्त्ररहस्य-रत्नाकरावगाहनगृहीत-सूत्रमणिगणानां स्वामिमहाभागानां शैवमहाभावसमावेशविमर्शावसरे गुरुकृपया स्वतः स्फुरितानि चन्द्रविज्ञान सूत्राणि । एकैकस्मिन्नपि दृश्यते एतेषु महानुभूतिभास्वरता, समाविस्तरीया च सामरस्यसुस्वरतेति स्वाध्यायिभिरवश्यमेवानुभविष्यतेऽतलस्पर्शप्रसन्नता । सं० ]

१—ॐनमश्चन्द्रिकायै
२—चन्द्रस्याधकला जीवस्वरूपा
३—चन्द्रशक्तिस्तु कला
४—कलायोजकस्तु चन्द्रशेखर :
५—कलायांस्फुरणशक्तिरेव चन्द्रिका
६—सा तु स्वात्मस्वरूपिणी
७—तस्याः कृपैव शक्तिः
८—सा द्विविधा स्वरूपा विरूपाचेति
९—स्वरूपा निरवयवा
१० सा स्वरूपे तिष्ठति
११—एतयोसंघट्टादेवार्थोत्पत्तिः
१२—शान्तः स्पन्द एव कलाशक्तिकेन्द्रम्
१३—तत्र स्वात्मस्वरूपशक्तिरेव कलनायाः कारणम्
१४—स्वात्मस्वरूपस्तु शिव एव
१५—तिष्ठति सः स्थितिस्थापकत्वेन
१६—स एव चन्द्रशेखरः
१७—प्रथमकलना विन्दुस्वरूपिणी
१८—द्वितीयकलना नादस्वरूपिणी
१९—कलनासमावेशवशाद्रूपम्
२०—रूपमपि द्विविधम्
२१—अक्षरस्वरूपन्तु नित्यम्
२२—कलारहितम् ह्रासवृद्धिविहीनञ्च ।
२३—एकः साकारश्च
२४—एकोप्यनन्तायते
२५—तस्याधीना कलाशक्तिः
२६—स एव स्वतंत्रः कर्ता
२७—स नित्यकलायुक्तः
२८—सहजकलनमस्येच्छा
२९—नित्यकलैव स्वरूपशक्तिः
३०—इच्छा ज्ञानक्रियास्वरूपा ।
३१—अखण्डज्ञानेच्छाक्रियास्वरूपत्वमेवाक्षरपुरुषलक्षणम्
३२—अक्षरपुरुष एव क्रीडार्थं क्षरो भवति ।
३३—क्षरोप्यनन्तः बहुधाविभक्तश्च
३४—स एककलात्वेन देशकालभेदभिन्नो भवति
३५—क्षरः पुरुष एव पशुः
३६—क्षरस्वरूपेऽप्यक्षररूपत्वम्
३७—अक्षररूपस्त्वन्तरात्मा
३८—रूपरहितोऽपि रूपे क्रीडति
३९—प्राणविशिष्टः क्षरः
४०—अक्षरपुरुषस्याक्षरबोधोऽपि लीयते
४१—एषैव विकलावस्था
४२—विकलाशक्ति जडस्वरूपिणी
४३—सा च प्रकृतिः
४४—प्रकृतिस्तु परिणामशालिनी
४५—षोडषधा विकला
४६—प्रथमया चेतनबोधः

[क्रमशः]

# कर्मविज्ञानविमर्शः

श्रीव्रजकिशोरस्वाईं (धर्मशास्त्राचार्यः)

श्रीसदाशिवकेन्द्रीय-संस्कृत-विद्यापीठम् पुरी, उत्कल

सहसम्पादकः---उत्कलसंस्कृतगवेषणासमाजस्य

भारतीयसंस्कृतौ षड्दर्शनानि आस्तिकत्वेन स्वीक्रियन्ते। तत्र उत्तरमीमांसा वेदान्तनाम्ना, पूर्वमीमांसा च मीमांसानाम्ना ख्याते। उत्तरमीमांसायाः वेदव्यासः, पूर्वमीमांसाया जैमिनिः, साङ्ख्यस्य कपिलः, योगस्य पतञ्जलिः, न्यायस्य गौतमः, वैशेषिकस्य कणाद इत्येते प्रवर्तयितारः सन्ति। वेदेभ्यो जातान्यपि दर्शनानि एतानि जगत्कारणं भेदेन आमनन्ति। तत्त्वविषयनिर्धारणार्थोद्देश्यत्त्वात् सर्वेषां वेदमूलकत्वेन प्रामाण्यमस्ति। एवं च निखिलानि मतानि समाश्रित्य स्वसिद्धान्तं विज्ञापयन्ति सर्वेषां ध्येयं वस्तु एकमिति विवेचका निश्चिन्वन्ति। यथा महानाटके--१।४४

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनः
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः॥

मुख्यतो मीमांसानुसारं कर्म हि सर्वस्य माध्यमवस्तु इति स्वीक्रियते। कर्म विहाय कैश्चिदपि स्थातुं न शक्यते। यतो हि गीतायाम्--

"न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्"।

अतः सत्त्वानां कर्मणा सह इत्थमविच्छेद्यः सम्पर्कोऽस्ति दुःखसुखयोरपि सर्वस्मिन् कर्मणि तदेव भवति मौलम्। यद्यपि दुःखकर्मणि क्षिप्तो भवेज्जनस्तत्रैव भवति रक्षकः कर्म केवलम्। यतो हि--

जगत्स्थितेरेव नृभिर्मुहुर्मुहु—
र्भवेत्कृतं कर्म विचिन्तयन्न वा।
पतेदवश्यं हि विपत्पथे यदा
तदा भवेत्तस्य च कर्मरक्षकः॥

अतः सार्वजनीनदृष्ट्या कर्मणो व्यवहारः स्यात्, मनुष्यादने प्रायण सर्वे प्राणिनः कर्म समाश्रयन्ति, किन्तु मनुष्यस्य तेषु कृत्याकृत्यधर्माधर्मग्राह्याग्राह्योपायसाधकतवमस्ति। सुतरां मनुष्यकृते केवलं धार्मिककर्मणामधिकारो दत्तः शास्त्रकारैः। तदनुसारं स्वजीवनं परिचालयेत् अन्यथा प्रायश्चित्तापत्तिर्भवेत्। यतो हि मनुः— ११।४३

अकुर्वन् विहितं कर्म निन्दितञ्च समाचरन्
प्रसक्तश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥

यद्यपि मीमांसादर्शनं कर्मानुकूल्येन धार्मिककर्मभिरेव मानवानां परमं श्रेय इति प्रतिपादयति, तथापि लौकिकालौकिकव्यवहारतया मन्वादिप्रणीतानि धर्मशास्त्राणि स्पष्टतया धार्मिककर्माणि निरूपयन्ति। बहुभिरुपायैर्बहुभिश्च धर्मशास्त्रकारैः विकल्पतया अनेकानि कर्माणि करणीयानि निर्दिष्टानि च सन्ति। तान्येव श्रुतिस्मृतिवचोभिरनुमोदितानि निर्धारितानि भवन्ति धर्मपदवाच्यानि। अत उत्कल-भागवतकारेण यदुक्तमस्ति "भो देव कर्मपदे सेव कर्म हैं, नाहिं आन देव" इत्यत्र कर्म हि धर्म एव शास्त्रानुमोदितत्वात्। अस्य षड्विधत्वं मिताक्षराकारेण विज्ञानेश्वरेण दर्शितम्। यथा–

वर्णधर्मः आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः साधारणधर्मश्चेति । वर्णधर्मो यथा-ब्राह्मणो नित्यं मद्यं वर्जयेत् । आश्रमधर्मः--अग्नीन्धनभैक्षचर्यादिः । वर्णाश्रमधर्मः--पालाशोदण्डो ब्राह्मणस्य । गुणधर्मः--शास्त्रीयाभिषेकादिगुण-युक्तस्य राज्ञः प्रजापालनादिः । निमित्तोधर्मः–विहिताकरणप्रतिषिद्धसेवननिमित्तं प्रायश्चित्तम् । साधारणो धर्मः--अहिंसादिः । न हिंस्यात् सर्वभूतानि इति वचनात् । निम्नाभिमुखित्वं जलस्य सर्वैः स्वीक्रियते, तर्हि जलस्यास्य धर्मत्वमुत कर्मत्वम् ? गौः खादति, मनुष्योऽपि खादति । गौरुपसृजति (call of nature) मनुष्योऽपि । तर्हि अनयोः धर्मकर्मसम्बन्धः कीदृशः इत्याकाङ्क्षायां गोप्रभृतीनां पशूनां धार्मिकविचारनिश्चयराहित्यात् तेषां कृते सर्वाणि कर्तव्यानि कर्माण्येव, किन्तु मुख्यतो मनुष्येषु या कर्तव्याकर्तव्यविवेकबुद्धिरस्ति तया शास्त्राणि सम्यग्रूपेण विचार्य कर्मणामनुष्ठानं धर्मानुष्ठानमिति श्रुतमेव शास्त्रेषु मानवानामधिकारात् । पुनः सत्सु बहुविधेषु शास्त्रेषु साधुकर्मणि सर्वे प्रवृत्ता भवेयुरति न लोकभेदेन प्रवृत्तिभेदात् । ततो हि उक्तम् –सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः । तस्माद् दीक्षितेन सत्यमेव वदितव्यम् । तन्मनुष्येभ्यो देवावुपैति इति । ( ऐतरेय ब्राह्मणम् ) स्वतः प्रवर्त्तनया कुकर्मणि मानवस्य प्रथमप्रवेशो विद्यते । शास्त्रानुमोदितप्रथानुसारं तेषां कर्माणि निःश्रेयसाय कल्पन्ते । यतो हि–

**न मांसभक्षणे दोषो न मद्ये न च मैथुने ।**
**प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥मनुः ५।५६**

अत्र धर्मशास्त्रस्य सम्पूर्णभावमनवगम्य मानवस्य धर्मः (स्वतः) मांसभक्षणं मद्यपानं च । तत्र दोषो नास्ति इति कथयन्ति किन्तु निवृत्तिद्वारा महाफलसम्प्राप्तिर्भवति इति तद्वाक्येन नान्वयं कुर्वन्ति । यतो हि योगीश्वरेणोक्तम्--

**सर्वान् कामानवाप्नोति हयमेधफलं तथा ।**
**गृहेऽपिनिवसन्विप्रोमुनिर्मांसंविवर्जनात् ॥१।१८१**

मांसभक्षणजनितदोषश्रवणेऽपि औत्कटचमनुभूयते ।

**यो यस्य मांसमश्नाति स तन्मासाद उच्चते ।**
**मत्स्यादः सर्वभक्ष्यादः तस्मान्मत्स्यान् विवर्जयेत् ॥ मनुः ५।१५**

एतादृशं धार्मिकं मानवीयं कर्म नित्यमेव 'मनुष्येन संसाधयितव्यम् नित्यस्य फलवत्वाभावात् नैमित्तिककाम्यकर्मणोः भोगार्थं शरीरावश्यकतया मनुष्यस्य मनुष्यरूपत्वम् । विना भोगेन तस्य क्षयो न सञ्जायते । नहि कर्म क्षीयत इति वचनात् । प्रारब्धकर्मणां भोगादेव क्षय इति मीमांसावचनानुसारं सिद्धान्तितत्वाच्च । "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति वचनबलं गीतायाचेत् सुस्थं तर्हि कर्मत्यागः कथं शास्त्रेषु निर्दिष्टः ? मैवम् । कर्मफलत्यागो हि श्रुतिस्मृतिप्रसिद्धः । उक्तं च गीतायाम् —

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥२।५०**

किन्तुप्रतिप्रसवत्वेन (मोक्षादीनां) काम्यकर्मणां त्यागो व्यपदिष्ट आस्ते । तद्यथा—

**काम्यानां कर्मणां न्यासः सन्न्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ (गीता–१८।२)**

उप्तेऽपि बीजे सर्वसौलभ्यावच्छिन्ने सति अनुदिनं कुतोऽङ्कुरोद्गमचिन्ता इति नयेन कृते कर्मणि फलं निश्चितं, साधुकर्म चेत् न्याय्यफलम् असाधुचेत् तदनुरूप विपाकः, फलदायकत्वात् कर्मणां यतो हि—

**यन्मनसा ध्यायति तद्वाचा वदति**
**यद् वाचा वदति तत्कर्मणा करोति**
**यत् कर्मणा करोति तदभिसम्पद्यते ॥ इति**
**तैत्तिरीयसंहिता-६।५०**

कर्मफलप्रापणाकाङ्क्षायाः कालान्तरलभ्यपरिणामे दुःखं सुखं वा नानुभवितव्यम् । यतः-हृष्टो दर्पति धर्ममतिक्रामति धर्मातिक्रामे खलु पुनर्नरकः, आपस्तम्बधर्मसूत्रम्—॥६।३।४ । संसारस्य परिणामित्वे दुःखस्य अनिवार्यत्वात् उक्तं तत्—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः । पातञ्जलयोगदर्शनम्–साधनपादः २।१५ निरन्तरार्यप्रवृत्तिप्रवृत्ताः सन्तोऽबाधितपरम्परागतसदाचारानुकरणे धर्मः शाश्वतो रक्षणीयः । शुद्धहेतुतया कर्माण्यपि शुद्धतामाप्नुयुः । यतोहि—

सर्वजनपदेष्वेकान्तसमाहितमार्याणां वृत्तं सम्यग्विनीतानां वृद्धानामात्मवतामलोलुपानामदाम्भिकानां वृत्तसादृश्यं भजेत"

आपस्तम्बधर्मसूत्रम्-१।७।२०।८

शुद्धशास्त्रीयकर्मानुसरणे हि जनाः शिष्याः भवन्ति । यतोहि बौधायनः शिष्यः खलु विगतमत्सरा निरहंकाराः कुम्भीधान्याः अलोलुपा दम्भदर्पलोभमोहक्रोधविवर्जिताः

१।१।।१।५

कर्मणः फलमूलत्वात् कर्मणि प्रवृत्ताः सन्तः अवश्यं स्वर्गं नरकं वा लभन्ते । किन्तु साधुकर्मजन्यपुण्यशेषात्पुनरपि संसारमागच्छन्ति ते । क्षीणे पुण्ये मर्त्यलोकं विशन्ति इति गीतोक्त्या । नहि स्वर्गनिवासिनो देवाः स्वतः भगवतः सृष्टाः, अपि तु कर्मवशात् (कर्मदेवाः) । मनुष्या अपि देवभूयस्त्वं प्राप्नुवन्ति । यतो हि उक्तम्–औचित्याद् देवतामूयम् ।

"सह देवमनुष्या अस्मिन्नलोके पुरा बभुवुः । अथ देवाः कर्मभिर्दिवं जग्मुरहीयन्त मनुष्याः । तेषां ये तथा कर्माण्यारभन्ते सह देवैर्ब्राह्मणाश्चामुष्मान् लोके भवन्ति । अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच । प्रजानिःश्रेयसाय चेति ।।" इति आपस्तम्बोक्तेः २।७।१६।१ । सत्यमेव जयते नानृतं, सत्येन पन्था विततो देवयान इति श्रुतेश्च । ये तु जना मोक्षं समीहन्ते ते फलमुज्झित्वा कृत्यकर्माणि-समपर्यन्तो देवयानमार्गेण परमे ब्रह्मणि लीयन्ते, किन्तु ये जना मुमुक्षवस्ते नाशवन्तं स्वर्गफलम् जुगुप्सन्ते । यतो हि-

**कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम् ।**
**विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ॥**

भागवतम् ११।१७।८

कर्त्तव्यं च यत्कर्म सर्वं चेद् भगवदर्पणं भवेत् तदा कर्मणा सह आसक्तिभावो नोत्पद्यते । यतो हि—

**मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम् ।**
**मय्यर्पणं च मनसः सर्वकामविवर्जनम् ॥**

भागवतम्-११।१९।२२.

अतो मुक्तिकामी अनेनोपायेन कर्मबन्धान् मुक्तो भवति । यतो हि-न मां कर्माणि लिंपन्ति न मे कर्मफले स्पृहा । भगवदर्पणान्तरं सर्वेषां सुखदुःखानां फलं भवति भगवान् । भक्तदायित्ववहनशक्तिमत्वात्-यतो हि—

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥**

गीता ९।२२

भगवान् यस्य कृते यत् करोति, तेन लब्धुः किमपि अलभ्यं न भवति । यतो हि—

**एवं धर्मे मनुष्याणामुद्धवात्मनिवेदिनाम् ।**
**मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते ॥** भागवत ११।१९।२४

किं च यल्लब्ध्वा पुमान् सिद्धो भवति, अमृतो भवति तृप्तो भवति । नारदीयभक्तिसूत्रम् ११९

किन्तु मनुष्यजीवने सर्वमस्तु नाम, श्रद्धाभक्तिपूर्वकं कम परत्रेह च अभ्युदयाय कल्पते। परमपुरुषान्वेषणे ऐकान्तिकव्याकुलतारूपिण्या भक्त्या परमपदमश्नुते जनः। यतो हि—"नारदस्तु तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलतेति"—नारदभक्तिसूत्रे (३।१९) उक्तम्। वारितकर्मपरायणा जनाश्चेत् कुटिलात्मककर्मणि प्रवृत्ताः सन्तः शास्त्रमधीयानाः भवन्ति, शेषतः कर्माणि च कुर्वन्ति, तेषां कर्मफलं चेत् उपयुक्तं शोभनायां बुद्धौ आगतायामपि निष्फलम्। यथा पक्वेषु धान्येषु निष्फला प्रावृषो गुणा इति नारदस्मृत्युक्त—(१।६३) वचनात्। किन्तु कालान्तरीयजीवने दुर्वृत्तितो निवृत्तो भवति। अतः शास्त्रेषु मोदितं कर्म कर्त्तव्यं दैवरूपत्वात्--Korm is God सत्यसाई बाबा "शेषत इदमेव कथयितुं निष्कर्षत्वेन शक्यते यत्--1. God cereated man and established the eternal laws (Vedism) 2. God is both in determinate and determinate ( Upanisats ) 3. Law is an integral and etornal factor in the Universe and everything in this World from the gross to the Subtle beings is guided and controlled by low (Mimamsa) 4. The four fold Values, equity (Dharma), wealth (Artha), pleasure (Kama) and Salviation (Moksa). Enable man to lead a wholisome life (Dhormasastra) and 5. The prehender of the Self enJoys freedom and bliss.

(Spiritualism in modern age by Dr. M. D. Balsubrahmauyam in Chintanapragna, the Journal of Sriksetra chintana chaur edited by prof RaJ Kishor Ray)

तपस्यात्मककर्मणि निष्ठितो जनः कर्मबन्धात् निर्मुक्तः सन् दारुणक्लेशमपि सहमानः परमं पदं प्राप्तुमर्हति। यतो हि--

**तदस्त्वगस्तभ्रातासौ ग्रीष्मे पञ्चाग्निमध्यगः।**
**भास्करे दत्तदृष्टिश्च मौनव्रतसमन्वितः॥**
**तिष्ठन् कनिष्ठिकाङ्गुल्या वामपादश्च निश्चलः।**
**ऊद्र्ध्वबाहुर्निरालम्बस्तपस्तेपेऽतिदारुणम् ॥**

भविष्यपुराणम् १०८।१-९

पुनरपि काव्यललामभूते रामायणे--

**पञ्चवर्षसहस्राणि सूर्यं चैवान्वर्त्तत।**
**तस्थौ चोर्ध्वं शिरोबाहुः स्वाध्याये धृतमानसः॥**

बहुषु शास्त्रेषु बहुविधोपायाः दर्शिताः शास्त्रकारैः। स्वकीयाभिरुचितया तुल्यबलक्षेत्रे वैकल्पिकन्यायेन (तुल्यबलविरोधे विकल्पः --गौतमधर्मसूत्रम्) बलाबलक्षेत्रे देशकालपरिस्थितिदृष्ट्या शास्त्रीयवाकोवाक्याभ्यां स्थिरकरणीयं स्वकीयं कर्मेति दिक्।

श्रीजगन्नाथार्पणमस्तु।

# प्राचीन-साहित्ये क्रीडाविशेषाः

कप्पगन्तुल-लक्ष्मणशास्त्रिणः

[ प्रौढतया सन्दृभ्यमानेऽस्मिन् निबन्धे पुराऽस्मिन् देशे प्रचलन्त्यः क्रीडाः समुपवर्णिताः वर्त्तन्ते । लेखेनैतेन लेखकमहोदयानां महत्स्वाध्यायाध्यवसायः पूर्णतया परिलक्ष्यते । सत्यमेष विषयः भारतीयपुराचारपद्धतिसम्बद्धः महदनुसंधानमपेक्षते । इमं विषयमाश्रित्य लेखनेन लेखकललामाः श्रीमन्तो शास्त्रिणः साधुवादैः समलंक्रियन्तेऽस्माभिः । प्रार्थ्यन्ते च सूर्योदयोदयाय सततं सहयोगप्रदानाय च । सं० ]

ऋग्वेदादारभ्य भारतीयसाहित्ये स्त्रीणां–पुरुषाणां–बालानां च क्रीडाविशेषाः वर्णिताः । गृहक्रीडाः-बहिर्द्वार-क्रीडाश्च सन्ति । स्त्रियः कन्दुक–कन्दुकेतरक्रीडाः, केवलं कालयापनार्थं क्रीडन्त्य आसन् । इमाः क्रीडाः अद्यापि सन्ति । ता न मुख्याः ।

श्रान्तस्य शरीरस्य विहारार्थं मानसोल्लासार्थं च क्रीडाः प्रवृत्ताः । उदाहरणतयाऽद्य बालक्रीडाससन्दृभ्यन्ते । बालैः प्रवर्तिताः क्रीडास्तु यथाकालं यथारुचि च परिवर्त्यन्ते । तथैवाऽदिमानवसङ्घैः स्वविनोदार्थं सृष्टाः क्रीडाः विभिन्ना दृश्यन्ते । आत्म–रक्षणार्थं, जीविकाऽर्थं वा प्रारब्धानां क्रियाणां कालक्रमेण आवश्यकताया अभावेऽपि ताः मानव-जीवने विनोदत्वेन परिणताः । ताः नित्यकृत्येषु विनोद-मानन्दञ्चोदपादयन् ।

अश्व–रथाऽदियानानां–पोत-नौकाऽऽदीनाञ्च स्पर्धा-सदृशाः प्राचीनक्रीडा आसन् । इदानीं ता एव, सैकल्–मोटर्–मोटर् सैकल् यानाऽदीनां स्पर्धाक्रीडात्वेन परिणताः । जलतरण–पर्वताऽरोहणाऽदयः परिसरप्रकृतिं जेतुं मानव-समाजः समभ्यस्यत् ।

काश्चन कलाऽऽत्मकाः, शृङ्गाररसस्फोरकाश्च रास–जलक्रीडाऽऽदयो दृश्यन्ते । इमाः क्रीडाः शरीरस्य व्यायामेन सह अभीप्सितार्थसिसाधयिषाद्वारेण मनः समाह्लादयन्ति । क्रीडानां विवरणं दुष्करम् । देशकालाभिरुचिमनुसृत्य क्रीडा अनन्ता उत्पन्नाः, उत्पद्यन्ते च ।

अष्ट–शत–सहस्र–नेत्रावधानाऽदयः, गूढचतुर्थ–पाद–बिन्दुमती–अक्षरच्युतक--मात्राच्युतक--प्रहेलिका–समस्या--पूरण–निषेधाक्षर–व्यस्ताक्षर–गूढोत्तराऽदयो बौद्धाः क्रीडाः नैका दृश्यन्ते ।

मृगयाऽपि प्रथममाहारसम्पादनार्थं, रक्षणार्थं च प्रवृत्ता । अत एवास्य मृगयेति सार्थं नामास्ति । (तदुभयार्थं) मृगाः मृग्यन्ते–अन्वेष्यन्ते इत्यर्थः । मृगयायां रहस्यानि, उपायाश्च आवश्यकाः । को मृगः कस्मिन् स्थानके स्थितो हन्तव्यः ? न यत्र कुत्रापि स्थित्वा । परं, प्रत्यक्षं स कथं हन्तव्यः ? इत्यादयो मृगयुनाऽवश्यं ज्ञातव्याः । नेदानीं प्राचीनकाल इव मृगया खेल्यते, अपितु, तदद्युना केवलं विनोदखेलनं सञ्जातम् । सा हि भयङ्करक्रीडा । अतः, स्त्रियस्तत्र न प्रवर्तन्ते ।

मृगयाखेलनार्थं सङ्गीतमपि विनियोज्यत इति 'उत्सादगीतमिवेन्द्रियमृगाणाम्' इति कादम्बर्यां बाणभट्टो वदति । उदयनराजस्य वीणानादः आखेटके गजमाचकर्षेति स्वप्नवासवदत्ते भासोक्तिरप्यस्ति ।

गौतमबुद्धः नियुद्धे, बाणप्रयोगे, भेरीस्फोटने, जलतरणे, आरोहणावरोहणयोः, चेतनाचेतनद्यूते, लङ्घितप्लावित–

जविताऽदिषु च सर्वानतिशेतेस्मेति ललितविस्तरे वर्णितम्। चन्द्रापीडोऽपीदृशीः क्रीडाः खेलतिस्मेति कादम्बर्यां वर्णितम्।

कितवाः द्यूतक्रीडया विजह्रुरिति, द्यूतकरः पत्न्या प्रबोधितः अक्षक्रीडामुत्सृज्य कृषिकर्मणि प्रवृत्त इति च ऋग्वेदे कितवसूक्ते वर्णितम्। महाभारते युधिष्ठिरेण नलेन च प्रवृत्ता अक्षक्रीडा तु प्रसिद्धैव। द्यूतं व्यसनमिति प्राचीनैः निषिद्धमपि, जनानां मनः प्रकृत्या द्यूते प्रावर्तत एवेति, तस्याः क्रीडायाः कार्त्तिक-शुक्लप्रतिपदि प्रतिवर्षं विहितत्वेन ब्रह्माण्डपुराणे अनुमोदितम्। यथा—

**"शङ्करश्च पुरा द्यूतं ससर्ज सुमनोहरम्।
कार्तिके शुक्लपक्षे तु प्रथमेऽहनि भूपतेः॥
जितश्च शङ्करस्तत्र जयं लेभे च पार्वती।
अतोऽर्थाच्छङ्करो दुःखी गौरी नित्यं सुखोषिता॥
तस्मात् द्यूतं प्रकर्तव्यं प्रभाते तत्र मानवैः।
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः॥
पराजयो विरुद्धस्तु लब्धनाशकरो भवेत्॥' इति।**

गाथा सप्तशत्यामपि—

**शुनकप्रचुरे ग्रामे हिण्डमाना नवकृतेन सा बाला।
पाशकशारीव गृहं गृहेण कदाऽपि खादिष्यते॥' इति**

पाशकशारीतिश्लिष्टं पदं—पादे बद्धः शारिकापक्षी-पाशके लग्नाशारी (द्यूताङ्गं काष्ठखण्डं) मृच्छकटिके—

**"कत्ताशब्दो निर्माणकस्य हरति हृदयं मनुष्यस्य।
ढक्काशब्द इव नराधिपस्य प्रभ्रष्टराज्यस्य॥' इति**

तत्रैव—

**"जानामि न क्रीडिष्यामि सुमेरुशिखरपतनसन्निभं द्यूतम्।
तथाऽपि खलु कोकिलमधुरः कत्ताशब्दो हरति हृदयम्॥"**

इति संवाहकेन देवकुले दारुप्रतिमापृष्ठतश्छन्नेन द्यूतं पश्यता पाशकशब्दो वर्णितः (कत्ता इति पाशकः)। मृच्छकटिक एव, वसन्तसेनागृहस्थितं पाशकपीठं मणिमयशारिका शोभितमिति वर्णितम्।

"अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते।" इति मनुर्वक्ति। प्राणिद्यूतं-एडक-कुक्कुट-कुरवक-कपिञ्जलाऽदिभिः कारितमपि तत्र तत्र साहित्ये दृश्यते, यथा-कादंबर्यां प्रेमाभिरामादिषु च।

वनपतिराजेन ख्रिस्ताब्दीय सप्तदशतमशतकीयेन अष्टभाषा' 'बहिरी'-'गोपालरायकविना विरचिते' 'शृङ्गारमञ्जरीभाणे सजीवद्यूतं वर्णितम्। तत्र कुक्कुटयुद्धक्रीडा यथा—

**"निशित शरशस्त्र संयुतचरणा चरणायुधद्वयी योद्धुम्
इतरेतरामवेक्ष्य त्वरते भटबाहुयन्त्रिताऽतिदृढम्॥"**

तत्रैव एडकयुद्धक्रीडा यथा—

**"एडकयोः स्वशिरोभ्यां ताडकयोः
प्रतिहतावहेडकयोः।
क्रीडकयोर्युधि विपुलक्रोडकयोरत्र
भवति सन्नाहः॥**

इत्थमेव महिषयुद्धक्रीडाऽपि तस्मिन्नेव भाणे यथा—

**"सङ्घट्य गाढमितरेतुङ्गशृङ्ग-
सङ्गोद्भवद्घणघणा-स्वनमुत्तमाङ्गे।
संयुध्यतः कटुरुषाऽतिकषायिताक्षौ
सत्त्वोद्धुरावहह! सम्प्रति सैरिभेन्द्रौ॥"**

मृच्छकटिके लावकपक्षिक्रीडा 'नियोध्यन्ते लावकाः' इति वर्णिता। मल्लक्रीडा व्यायामोपयोगिनी, बलप्रदर्शनी च तत्र तत्र साहित्ये दृश्यते। अतिप्राचीनायां गाथासप्तशत्यामेवं वर्णिता। यथा—

"युद्धचपेटामोटित जर्जरकर्णस्य जीर्णमल्लस्य ।
कक्षाबन्ध एव भीरुमल्लहृदयं समुत्खनति ।।इति ।

शृङ्गारमञ्जरी भाणेऽपि यथा—

"आस्फालयन्यसकृदंसयुगं कराभ्याम्
क्ष्वेलाऽऽर्भटीभिरभिपूरयते दिगन्तान् ।
संक्षोभयत्युरुपदाऽहतिभिर्धरित्रीम्
उत्क्षिप्तमुष्टिरभिगर्जति चैष मल्लः ।।" इति ।

मृगयाऽपि बहुधा वर्णितेति पूर्वमुक्तम् । गाथासप्तशत्यां मृगया वर्णिता । कादम्बरीकार एवैतस्या वर्णने इतरकवीन् सर्वानप्यतिशेते । मृगया व्यसनमिति बहवो वदन्ति । कालिदासः शाकुन्तले नेदं व्यसनं, अपितु, शरीरपुष्टिसन्धायकमिति, विनोद इति च वर्णयति—

"भेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्वानामिह लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षस्य च धन्विनां यदिषवस्सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ?"

वीटा क्रीडा—(दीर्घकाष्ठेन लघुकाष्ठमुत्क्षिप्य पातनं वीटा क्रीडा) । इयं धार्तराष्ट्र-पाण्डवैः क्रीडिता । लघुकाष्ठं कूपे पतितं द्रोणो बाणेनोत्क्षिप्य बालानां चमत्कारमुत्पादयति । आदिपर्वणि—क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा । यथा—

पपात कूपे सा वीटा तेषां वै क्रीडतां तदा ।।
... ... ... ... ... ... ... .... ... ... ...
भेत्स्यामीषिकया वीटां,तामिषीकां तथाऽन्यया ।
तामन्यया समायोगे वीटाया ग्रहणं मम ।।

इति द्रोणाचार्येणोक्त्वा वीटा उद्धृता । चूतलतिकाक्रीडगाथासप्तशत्यां यथा—

"नवलताप्रहारमङ्गे यत्र यत्र इच्छति देहो दातुम् ।
रोमाञ्चदण्डराजिः तत्र दृश्यते वध्वाः ।।"

सेयं चूतलतिकानाम्नी क्रीडेति सरस्वतीकण्ठाभरणे भोजः ।—'तत्र हि कस्ते प्रियतमः ?' इति पृच्छन्तीमिर्नवलताभिः 'प्रियो जनो हन्यते' इति व्याख्याता 'गङ्गाधरः' विवृणोति ।

कन्दुक क्रीडा—स्त्रियः पुरुषा इमां क्रीडन्तीति बहुत्र साहित्ये दृश्यते । अथापीयं क्रीडा स्त्रीष्वेव बहुधा प्रचलति । स्वप्नवासवदत्ते—

चेटी—"कुञ्जरिके ! कुत्र भर्तृदारिका पद्मावती ? किं भणसि ? एषा भर्तृदारिका माधवीलतामण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति ।" इयं क्रीडा स्त्रीणां सर्वाङ्गव्यायामं सम्पादयति । कालिदासः तपस्यन्तीं पार्वतीमेवं वर्णयति कुमारसम्भवकाव्ये —

"क्लमं ययौ कन्दुकलीलयाऽपि या
तथा मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चन पद्मनिर्मितं
मृदुः प्रकृत्या च ससारमेव च ।।"

भर्तृहरिः नीतिशतके कन्दुकपातमेवं चमत्करोति—

"यथा कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ।।"इति

गुप्तमणिक्रीडा—स्त्रीणां बालानामेवेयं क्रीडा वर्णिता—यथा मेघसन्देशे कालिदासः—

"मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भिः,
मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेप-गूढैः,
सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ।।"इति

व्याख्यातृसार्वभौमो मल्लिनाथः इमां क्रीडामेवं व्याख्याने विवृणोति—

"रत्नादिभिर्वालुकाऽऽदौ गुप्तैः द्रष्टव्यकर्मभिः ।
कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता ।।

**रासक्रीडा गुप्तमणिः गुप्तकेलिस्तु लायनम्।**
**पिच्छकुन्दक-दण्डाद्यैः स्मृता देशिककेलयः॥**
**इति शब्दार्णवे।**

श्रीमद्भागवतपुराणे रासक्रीडा विविधा वर्णिताः यथा 'रासगोष्ठी हल्लीसकं-रासमण्डली-रासकं इति।

जलक्रीडा रघुवंशे कालिदासेन हरिवंशे व्यासेन च वर्णिताः बहुधा। दोलाऽऽरोहणं मालविकाग्निमित्रादिषु सुन्दरतया वर्णितम्। एताः स्त्रीपुरुषैर्मिलित्वा खेलयन्ते।

बालक्रीडासु-उत्फुल्लिका-शकटिकाऽऽदयः सन्ति। उत्तानं शयानस्य पादयोरुपविष्टानां बालानां मुहुः पतनोत्पतनरूपा क्रीडा उत्फुल्लिका यथा-उत्फुल्लिकया खेलतु मैनां वारयत ! भवतु परिक्षामा।"

इतीयं क्रीडा गाथा सप्तशत्यां वर्णिता।

शकटिका क्रीडा--मृच्छकटिके चारुदत्तकुमारं खेलयन्ती दूती रदनिका एवं प्रस्ताविता शूद्रककविना-"एहि वत्स ! शकटिकया क्रीडामः।।

दारक--(सकरुणम्) रदनिके ! किं ममैतया मृत्तिका-शकटिकया ? तामेव सौवर्णशकटिकां देहि इति।

चतुरंगक्रीडा-वेदकाले-भारतकाले वा चतुरङ्गक्रीडा नासीदिति ज्ञायते। यद्यासीत्, तर्हि युधिष्ठिरः तामेव क्रीडां खेलतिस्मेति महाभारते वर्णितं स्यात्। परन्तु, वेदकालात् प्रचलिता अक्षक्रीडैव चतुरङ्गस्य प्रातिपदिक-क्रीडेति वक्तुं शक्यते। चतुरङ्गक्रीडा भारतीयोपज्ञमेव। भारतीयेभ्य इमां क्रीडां अरबदेशीयाः समभ्यस्यन्। तेषां सैन्यै रथाः नासन्। अतः रथप्रत्याम्नायतया ते उष्ट्रान् उपयुञ्जते स्म। अरबस्थानीयेभ्य इमां चतुरङ्गक्रीडां पाश्चात्याः अभ्यस्यन्। तेषां सैन्ये गजा न सन्तीति गजस्थाने ते दुर्गाणि समुपायुञ्जत। एवं चतुरङ्गक्रीडा भारतदेशात् विश्वे सर्वत्र संव्याप्य क्रीड्यमाना आसीत्। इदानीं सा सर्वस्मिन् जगति लोकप्रिया सञ्जाता।

'मोसेस् महाशस्य जन्मनः पूर्वमेवेयं चतुरङ्गक्रीडा-भारतीयैः ज्ञाता प्रचालिता चेति, पारशीक-चक्रवर्तिना 'नौषेर्वान्' महोदयेन भरतदेशात् चतुरङ्गफलकानि, क्रीडाऽङ्गानि च निन्ये इति 'आन्धुलसाङ्घिक चरित्र' इति ग्रन्थे की-शे-श्रीमता सुरबरं प्रतापरेड्डि महोदयेनोपवर्णितम्। तिथ्यादितत्वग्रन्थे चतुरङ्गक्रीडकमेवं वर्णितमिति शब्दकल्पद्रुम, निघण्टौ उट्टङ्कितम्। यथा--

**युधिष्ठिर उवाच--**

**'अष्टकोष्ट्यां च या क्रीडा तां मे ब्रूहि तपोधन।**
**प्रकर्षेणैव मे नाथ चतूराजी यतो भवेत्॥**

**व्यास उवाच--**

**'अष्टौ कोष्टान् समालिख्य प्रदक्षिणक्रमेण तु।**
**अरुणं पूर्वतः कृत्वा दक्षिणे हरितं बलम्॥**
**पार्थः पश्चिमतः पीतमुत्तरे श्यामलं बलम्।**
**राज्ञो वामे गजं कुर्यात् तस्मादश्वं ततस्तरिम्॥**
**कुरु कौन्तेय पुरतो युद्धे पत्तिचतुष्टयम्॥**
**कोणे नौका द्वितीयेऽश्वः तृतीये तु गजो वसेत्॥**

इति विस्तरेण तत्र कथितम्-एतेन प्रथमं चतुरङ्गक्रीडायां रथाः नाऽसन् अपितु गजाः अश्वाः, नौकाः तथा भटाश्चाऽमन्निति स्पष्टं ज्ञायते। इदं तिथ्यादि तत्त्वं कुत्रत्यमिति न ज्ञायते। इत्येतादृश्यः क्रीडाः प्राचीनसाहित्ये बह्व्यो दृश्यन्ते। ताः अनुसंधातव्या विद्वद्भिरिति शम्।

# शिवतैव दृष्टा

**भेदप्रथाभिन्नमिदं विचित्रं वेद्यात्मकं कल्मषराशि रूपम्।**
**मायीयसंकोचकलङ्कितं तत् जगन्न दृष्टं शिवतैव दृष्टा॥**

# संस्कृताध्ययनस्यानुसन्धानस्य च दिशो व्यवस्थाश्च"

**विश्वनाथमिश्रः**

आचार्यः, शार्दूल संस्कृत विद्यापीठे, बीकानेरः

[ सम्प्रति संस्कृतसमुत्कर्षप्रक्रियां परिष्कर्त्तुं न केनापि प्रयत्यते। ये प्रयतन्ते तेऽपि समस्यायाः वैषम्याद् बाध्यन्ते। संकल्पसमुत्तेजकोऽयं लेखः संस्कृतसमुत्कर्षसाधक इति मे मतिः।

निबन्धेऽस्मिन् मनीषिणा मिश्रेण यत् सम्मर्शितम् तदुपरि विचारयितुं संस्कृतज्ञानविज्ञानवैदुष्यभूषिता आचार्यवर्याः समाहूयन्ते-स्वसम्मति-प्रदानेनास्मिन् विषये करणीयतानिर्णयार्थमिति। सं० ]

साम्प्रतं स्वातन्त्र्य-सरिदवगाह्माने भारते वर्षे यत्र यत्र देशस्य सर्वविध-विकासाय क्रियन्तेऽनेके समुपायाः, प्रत्यहमनुष्ठीयन्ते विभिन्नानि कार्याणि, सफलीक्रियन्ते योजनाबद्धानुष्ठानानि, तत्रैव विमृश्य चेदं चेखिद्यते चेतो यद् भारतीयसंस्कृतेः प्राणास्पदं संस्कृतं जराजीर्णमिव रुजाक्रान्तमिव, भग्नमनोरथमिव, किं बहुना विगतप्राणं कङ्कालमिव समुद्वेजयति मनांसि सुमनसाम्।

नात्र चित्रं चेदस्माकं देशस्य मुकुटमणिर्हिमालयो भवेद्ध्वस्तः कथञ्चन, सीमान्तपाला गभीरसलिलसाराः पारावाराः स्युः शुष्यमाणाः! कदाचिन्नैतादृशी हानिर्भारतस्य, यादृशी संस्कृतमणिमञ्जूषापिहित-रत्नराशिनाशेन।

भारतवर्षे साम्प्रतं प्रचलति द्विविधा संस्कृत-शिक्षा एका तु आंग्लविद्यालयेषु विश्वविद्यालयेषु च। अपरा च प्राचीनपरम्परामवलम्ब्य संस्कृतमहाविद्यालयेषु संस्कृत-विश्वविद्यालयेषु च। तत्रांग्लविद्यालयीय-संस्कृतशिक्षा यत्र हिन्द्यां किं वा आंग्लभाषायामेव वा मम्मटः कुत्र कदा प्रादुर्बभूव? कालिदाससमये किं भोज्यं किञ्च लेह्यमासीदित्येवं रूपेण याप्यते कालस्तत्र मूलमपहाय पत्रगणनापरायणैः संस्कृतं रक्षिष्यत इति दुराशामात्रम्। अतोऽपहायपरम्परामिमां संस्कृत-विद्यालयेषु विश्वविद्यालयेषु प्रचाल्यमानां संस्कृताध्ययनपरम्परामेवाधारीकृत्य प्रस्तूयते किमपि। एतदुक्रमे महता कष्टेन तथ्यमिदं सुस्पष्टं शक्यते वक्तुं यदद्यत्वे संस्कृतसंस्थानेषु प्रचाल्यमाना संस्कृतशिक्षा सर्वथा विफलतां गता वर्तत इति। तत्रत्यमध्ययनमध्यापनञ्च केवलमाभासमात्रं विलुप्तप्रायमेवेति शक्यते वक्तुं निश्चितम्।

कस्याश्चिदपि भाषाया अध्ययनस्योपकल्पितानि चत्वारि फलानि। तानि च भाषाज्ञानजीवनसंस्कारजीविकार्जनक्षमता-रूपाणि सन्ति। पतञ्जलिनाऽपि आगमकालेन स्वाध्यायकालेन, प्रवचनकालेन व्यवहारकालेन च विद्योपयुक्ततां प्रतिपाद्य तान्येव फलानि व्याहृतान्यध्ययनस्य।

इदं प्रथमतयाऽध्यनपथमानीयमानाया भाषाया व्याकरण-शुद्धं ज्ञानं नान्तरीयकतामापद्यते। तद् विना तस्यां भाषायां लेखनं भाषणं परिसम्वादादिकं वा किमप्यनुष्ठातुं न शक्यते। अपि च भाषाज्ञानरहितस्य निखिलं प्रयोगक्षेत्रमनर्थाकुलितं भवत्युद्वेजकं विपश्चितां कृते। अतो भाषाज्ञानं कस्याप्यध्ययनस्य प्रयोजनत्वेनावधार्यते।

विषयज्ञानमध्ययनस्य द्वितीयं प्रयोजनम्। यद्यधीतस्य विषयस्य तलावगाहि निर्भ्रान्तं ज्ञानं नोपजायते, तर्हि तदध्ययनं सर्वथैवापार्थं नातिरिच्यते दिष्टततिभ्यः। विषयस्य यथार्थज्ञानपुरःसरं प्रचालयितुं तदीयामविच्छिन्न-

परम्परामेव स्थाप्यन्ते विद्यालयाः, उद्घाटचन्ते पुस्तकालयाः, संचाल्यन्ते विभिन्नसंस्थानानि, व्ययीक्रियन्ते विपुलान्यर्थजातानि। तदुपर्येवावृतः सर्वविधशैक्षिको विकासः। अतोऽधीत-विषयस्य विशिष्टं वैदुष्यं प्रतिभाप्रकर्षश्च फलत्वेनोपकल्पितमध्ययनस्य।

तृतीयं फलमध्ययनस्य मन्यते जीवनसंस्कारः। कस्मिंश्चिज्जने मानवतामाधातुमाचरणीया ये गुणगणाः स्वीकृता सन्ति तेषां जीवनस्य प्रत्येकं क्षेत्रे सुचारुतयाऽऽचरणमध्ययनस्य महत्वपूर्णं प्रयोजनम्। अत एव श्रूयते — यस्तु क्रियावान् पुरुषः स विद्वान्॥

अध्ययनस्य चतुर्थं फलमस्ति — अध्ययनोपलब्धयोग्यतामवलम्ब्य जीविकोपार्जनक्षमता। भूयांसं कालमतिवाह्य शिक्षामुपगतो जनस्तादृशीं योग्यतामुपेयात् ययाऽसौ सुचारुतया जीवनस्य भारं निर्वोढुं शक्नुयात् प्राप्य समुचितां वृत्तिम्।

एषां चतुर्णां फलानां यदि स्यादनुपलब्धिस्तर्हि व्यर्थमध्ययनं, व्यर्था सा शिक्षा यदर्थं कृता समयहत्या। किं बहुना तादृशं जीवनमेव व्यर्थमिति वदन्ति विज्ञाः।

यदि अनया दृष्टचा विचारः क्रियते, तदा दृष्टवा आधुनिकं संस्कृताध्ययनं नैराश्यमेव भवति हस्तगतम्। जायते च कष्टमेव प्रतिपादम्। नतानि च भवन्ति शिरांसि समवलोक्याधुनिकान् संस्कृतज्ञान्।

परां काष्ठां गता भाषाज्ञानस्य दुर्दशेदानीम्। प्रथमश्रेण्यां शास्त्र्याचार्यपरीक्षोत्तीर्णा अपि शुद्धभाषया स्वकीयपरिचयमपि दातुमशक्ताश्छात्राः कलङ्कयन्तीवाचार्योपाधिम्। प्रतिवर्षं संस्कृतसंकायादिषु पठचन्ते परीक्षकाणां प्रतिवेदनानि। तत्र च शास्त्र्याचार्यकक्षस्थैश्छात्रैः 'वायुस्य' भ्रातृस्य'' सदृशानि पदानि लिखितानि कं नोद्वेजयन्ति नमयन्ति च केषां न संस्कृतानुरागिणां शिरांसि?

समुज्जृम्भाणे एतादृशे भाषाविषयकाज्ञाने विषयज्ञानस्य कथा तु वक्तुमप्यशक्या। फलतः चक्षुषी विस्फार्यावलोक्यतां यदद्यत्वे संस्कृतमधीयानानां मध्ये कियन्तो भवन्ति क्षमाः परिभाषेन्दुशब्देन्दुव्युत्पत्तिवादावच्छेदकत्वनिरुक्तिप्रभृतिग्रन्थानध्यापयितुम्? व्याकरणाचार्या अपि सम्यक्तया लघुकौमुदीं पाठयितुं शक्ताः सन्ति किम्? साहित्याचार्या अपि लक्षणाया ज्ञानरूपत्वं शाब्दत्वमार्थत्वं वा विवेचयितुं स्थिराः सन्ति किं?

यदि चोच्यते का आवश्यकतेदानीं शेखरमञ्जूषाकाव्यप्रकाशव्युत्पत्तिवादादिग्रन्थानां रहस्योद्घाटनस्य? अनुपयोगिनः खल्विमे ग्रन्थाः पाठचन्तां यथाकथञ्चित्। बहिष्क्रियन्तां वा परीक्षातः। शिरः शूलोत्पादकेनैतेषामध्यापनेनालम्। परं नैतत्समीचीनं, यतो हि-अपाकृतेषु प्रौढिसम्पादकग्रन्थरत्नेषु हितोपदेशपञ्चतन्त्रादिकमपि पाठयितुं कथं सम्पादयिष्यन्ते? के वा भवेयुस्तेषां सम्पादयितारः? इत्यप्यालोच्यताम्? पल्लवग्राहित्वमेव संस्कृतमिति मन्यसे चेत्-संस्कृतवाङ्मयविशालभाण्डागारखचिता भारतीयसंस्कृति-मणिमञ्जूषा अनुद्घाटितैव स्यात्।

नेदं विस्मर्त्तव्यं यदद्यत्वे रघुवंश-पञ्चतन्त्र-संस्कृतकथासंग्रह-सदृशानि पुस्तकानि पाठयितुमपि जनाः प्रौढैरेव विद्वद्भिः सम्पाद्यन्ते। समूलोन्मूलितायां प्रौढपरम्परायां संस्कृतं भविष्यत्यपि न वा जगति इति जाज्वल्यमानः प्रश्नः सुस्थिरः पाषाणखण्ड इव स्थास्यति पुरस्तात् सर्वेषाम्। सन्धिसमासविवेकपुरःसरं ग्रन्थपंक्तिवाचनेऽसमर्थाः कथमपि व्याख्यातुमप्रभवो जायाप्रतिग्राहितगन्धमाल्यामिति पदं संस्कृतं रक्षिष्यन्तीति दुराशामात्रम्।

एवमेव धर्मसंस्कृतिसदाचारविषयेऽपि अकिञ्चित्करं संस्कृताध्ययनमपार्थमेव जीवनाचरणे। तस्मात् तृतीयमपि फलमत्र खपुष्पायितमेव।

जीविकार्जनदृष्ट्याऽपि न सफलमिदमध्ययनमित्यचिरादेव स्पष्टं करिष्यते। तस्मादुपर्युक्त-चतुर्षु फलेषु एकमपि फलं न सिद्ध्यति साम्प्रतं संस्कृताध्ययनेनेति स्पष्टं शक्यते वक्तुम्।

ननु किमेतस्य निदानमिति चेत्-पञ्चसूत्रात्मकं कारणं वर्तेतेऽस्या अनर्थपरम्पराया इति मे मतिः। तानि च पञ्चसूत्राणि सन्तीमानि—

१—अनियोज्यनियोजनम्।

२—पी-एच्. डी. उपाधेर्महत्वम्।

३—वेतनक्रमे वैषम्यम्।

४—परीक्षापद्धतेः दुरवस्था।

५—प्राथमिकशिक्षाया दुर्दशा।

अथेदानीं व्याख्यायन्ते पञ्चसूत्राणि समासतः।

१—संस्कृतज्ञानां कृते मुख्यं जीविकासाधनम्-अध्यापनम्। तत्र च भवन्ति अध्यापनस्थानानि परिमितानि। प्रत्याशिनश्च भूयांसः। कुत्रापि स्थानेऽध्यापिपयिषया, न वा शास्त्रीया प्रौढिरपेक्ष्यते, अपितु डाक्टरोपाधिः काम्यते, तत्रापि स्वकीयत्वमेव लोचनपथगोचरीक्रियते। प्रणाल्यानया कवलितानि भवन्ति निखिलस्थानानि प्रसाधन-चतुरैः शास्त्रज्ञानशून्यैर्विडम्बनाप्रधानैः। ततः सीदन्ति पठितारः उपेक्षिता ज्ञातारः, दूरमुत्सारिता विदग्धता, अवाकृता च भवति शास्त्रीया प्रौढिः। एवं रीत्या अनियोज्यनियोजने जागरूके, यदाकृतभूरिपरिश्रमैः स्वाधीतविषयसूक्ष्मतम-रहस्योद्घाटनपरायणैः कथमपि विशिष्टं स्थानं लब्धुं पारयिष्यत एव नहि तर्हि कथं केनापि पठ्यतां संस्कृतम्? कथं वा क्रियतां पञ्चत्वसाधकः श्रमः कठिनतमग्रन्थावबोधने। कथमिव वा क्रियतां शिरः-स्फोटनं फक्किकामर्मवेदने? फलस्वरूपं संस्कृताध्ययनं निष्फलमुपेक्षणीयं हेयं निन्दनीयञ्च कथं न भवेदिति शान्तेन मनसा विचार्यताम्।

२—अयञ्चापरो गण्डस्योपरि विस्फोटः संस्कृतसर्वनाशायोपकल्पितः पी-एच्. डी० उपाधेरनिवार्यत्वं पाठयितुं यत्र कुत्रापि संस्कृतम्। हं हो कियती विडम्बना? शेखरमहाभाष्यरसगंगाधरव्युत्पत्तिवादसदृशानां ग्रन्थानामध्यापने किमुपकरिष्यति पी-एच्, डी. उपाधिधारी जन इति न वेद्मि। कल्प्यतामेकः शाब्दज्ञानलवलेशहीनः पाणिनिसमये भोज्यलेह्य-नामान्यादाय निर्माय च तेषां सूचीपत्रं लब्धवान् पी-एच्० डी० उपाधिं नियुक्तः पाठयितुं व्याकरणं शेखरस्य पङ्क्तिवाचनेऽप्यसमर्थः कियतीं हत्यां विधास्यति व्याकरणशास्त्रस्येत्यपि विचारितं केनापि? एवमेवान्यशास्त्रविषयेऽपि पी-एच्० डी० महाभागानामेषैव गतिः। सार्धद्विशतपृष्ठात्मकं गुरुकलेवरमपि अन्तःसारहीनं बहुव्ययसमयसाध्यं केनापि धीमता कदापि कथमप्यनवलोकनीयं पुस्तकालयानां भारभूतं पुस्तकाभासं लिखित्वैव यदि कोऽपि भवति मान्यते च योग्यतमस्तर्हि हताशा वदान्या वास्तविकयोग्यता कुत्र शरणमवाप्स्यतीति शोचनीयो विषयः। अस्यामवस्थायां संस्कृत-सुरक्षा गगनकुसुमायिता कथं न भवेत्? रोगोन्यत्र उपचारश्चान्यत्रेति किमस्त्यौषधमत्रेति चक्षुषी निमील्यावलोक्यतामन्तर्दशा।

३—आंग्लविश्वविद्यालयेषु संस्कृतमध्यापयन्तो जनाः प्रति सप्ताहं विंशतिहोरां ततो न्यूनां होरां वा पाठयन्ति इति विश्वविद्यालयीयो नियमः। तत्रापि एकेन जनेन एकमेव पुस्तकं वेदान्तसारमन्यद् वा पाठ्यते। वेतनञ्च लभ्यते हि सहस्रमुद्रात्मकं, सार्धसहस्रमुद्रात्मकं वा। एतादृशमेव वेतनमुपकल्पितं संस्कृतविश्वविद्यालयेष्वपि। अल्पीयसा श्रमेण नानासौविध्योपेतं विपुलं वेतनम्। अपरत्र संस्कृतमहाविद्यालयेषु अध्यापयता जनेन प्रत्येकं दिने होराषट्कमभिव्याप्य नैकपुस्तकोपेतानि नैकानि पत्राणि पाठ्यन्ते, वेतनञ्च लभ्यते, अधिकादधिकं षट्शतं पञ्चशतं वा। महता श्रमेणाल्पीयान् लाभः। कियद् वैषम्यम्!

उभयत्राध्ययनपरायणेषु छात्रेषु कुत्र योग्यता वैशिष्ट्यमिति विदितचरमेव सर्वेषाम्। तावताऽपि वेतनदृष्ट्या संस्कृत-विदुषामवमाननं लज्जास्पदं संस्कृतविकासप्रतिबन्धकं च कथं न स्यात्। फलतः संस्कृतं यदि नश्यति तर्हि वर्तते कस्य दूषणम्?

४—संस्कृतस्य विनाशे परीक्षा पद्धतेरपि महत्वपूर्णं स्थानम्। श्रूयते 'पूर्वं विदुषां समवाये शास्त्रकारपरीक्षा' इत्युक्त्यनुसारं प्राचीचलत् पूर्वं मौखिकी योग्यतापरीक्षा। अत एव तदानीं पाणिनिकात्यायनगदाधरपक्षधरसदृशाः समभूवन् विद्वांसो येषां कृतयोऽद्यापि संस्कृतं गौरवान्वितं कुर्वन्ति। इदानीञ्च प्रचलति कुत्सिता लिखितरूपा परीक्षा। अत्र प्रतिशतं षट्त्रिंशदङ्का भवन्त्यपेक्षिता उत्तीर्णतायै। तत्रापि अनुचितानामवैधानाञ्चोपायानामाश्रयणं परां काष्ठां गतं वर्तते। फलस्वरूपं लभन्तेऽयोग्या अधिकाङ्कान्, योग्याश्च ततो न्यूनानिति विडम्बना मथ्नातीव चेतांसि विदुषाम्। अस्यां स्थितौ भूयांसं श्रमं कृत्वाऽपि योग्यतायाः प्रत्यक्षं तिरस्कारं दृष्ट्वा योग्याश्छात्रा विमनायन्ते यदि संस्कृताध्ययनात् तर्हि किमत्र चित्रम्। योग्यताहत्या सर्वथाऽनर्थकरी संस्कृतविनाशिकेति सुस्थिरम्।

५—एतत्क्रमे प्राथमिकशिक्षाया दुरवस्थाऽपि मनागालोक्यताम्। नाद्यावधि निर्णीतं यत् संस्कृतशिक्षामन्दिरे प्रविविक्षूणां छात्राणामध्यापनं कथं क्रियतामिति। वैज्ञानिकेऽस्मिन् युगे शिक्षाविज्ञानगवेषकाणां सर्वसम्मतं मतमिदं यत् प्राथमिकी-शिक्षाप्रचारे सौकर्यमासादयितुं शक्यते। दृश्यते तावदांग्लादिभाषाणां प्रत्यहं प्रचारबाहुल्यम् पूर्णं भाषाज्ञानं तदनु व्याकरणमिव्यनुभवसिद्धपरम्परामपहाय सुबन्ततिङन्तकृदन्तादिज्ञानाभाववतश्छात्रस्य पुरतः स्थाप्यन्ते लघुकौमुदी-सदृशानि पुस्तकानि घोषणार्थम्। न च दीयते किञ्चिदपि ध्यानं तदुपरि। स चोपेक्षितोऽर्थज्ञान-शून्यो बालो नेत्रे निमील्य कण्ठस्थीकरणपरायणः कतिपयदिवसव्यापिन्यां कण्ठस्थीकरणप्रक्रियायां शिरः शूलमवाप्य पलायते शालातः ख्यापयति च सर्वत्र अतिकठिनं संस्कृतं कथं पठ्यतामिति।

इदं पञ्चसूत्रात्मकं प्रत्यवाय-चक्रवालं निखिलं संस्कृत-जगत् कवलयितुमुद्यतमिवाद्य दरीदृश्यते। यद्येतस्य प्रतिकारो न विधास्यते तर्हि संस्कृतं भविष्यत्यपि न वेति वक्तुमप्यशक्यम्। अतोऽनर्थपरम्परा मूलभूतस्य कारण-चक्रवालस्यापाकरणार्थं समासतः प्रस्तूयन्ते केचन विचाराः। संस्कृतस्य निखिलो गतिविधिः स्वस्थः शान्तश्च विधीयताम्। यद् यद् भवति आंग्लसंस्थानेषु तत्सर्वं संस्कृत-संस्थानेष्वपि स्यादिति कामना सर्वथाऽनर्थकरी। सामान्य-शिक्षया सह संस्कृतस्य घर्षणमुन्मत्तमहिषस्य पादे भद्रपुरुष-बन्धनतुल्यमेवास्ते। अस्यां स्थितौ संस्कृतं यदि आधुनिक-शिक्षाया अनपेक्षितधावनिकातो दूरं न स्थास्यति तदा आत्मनो रक्षामपि कर्तुं न शक्ष्यतीति निश्चप्रचम्।

अत्र तु इदं प्रथमतयाऽऽवश्यकमिदं यद् संस्कृतस्य वास्तविकविद्वांसो निर्मिताः स्युः। तदथमेव प्रयत्नो विधीयताम्। अपाक्रियतां लेखनव्यामोहोऽत्र। न्याय-व्याकरणादि-सकलशास्त्रेषु पूर्वाचार्यैः नागेशकैयटगदाधरादिभिर्यद् किमपि लिखितमास्ते तस्यैव यथार्थं ज्ञानं स्यादित्यद्यत्वे महत्व-पूर्णोपलब्धिः। ततोऽधिकं लेखिष्यति कोऽपीति कथनं केवलं वञ्चनामात्रम्। अद्य तु प्राचीनग्रन्थावबोधक एव दुर्लभ इति कृत्वा ग्रन्थरहस्योद्घाटनपटवो विद्वांसः प्रौढा यथा स्युस्तथा क्रियतां प्रयत्नः। प्रौढविद्वांस एव संस्कृतस्य विशिष्टतमे पदे सादरं समाहूय नियोज्यन्तां, सत्क्रियन्ताञ्च पुष्कलेन वेतनेन। साक्षात्कारसमये च मध्येसभं कठिनतमं ग्रन्थं पाठयित्वा वास्तविकयोग्यता परिचीयताम्, पक्षपातः सर्वथापाक्रियताम्, अयोग्यता विदुष्यताम्! यस्य पुरतः स्फुरति सरहस्या वैयाकरण-सिद्धान्त-कौमुदी येन च करतलामलकीकृतं तत्तच्छास्त्रीयं रहस्यं. तादृशा एव

विद्वांसस् तत्तच्छास्त्रस्याधिकारिणो विद्वांसो मन्तव्यां: सभाजनीयाश्च योग्यतानुरूपं स्थानं प्रदाय। दूरतो नमस्क्रियन्तां डाक्टरोपाधिधारिणः। अनुमन्यताञ्च डाक्टरोपाधिः संस्कृत जगद्ध्वंसकधूमकेतुरूपेण। विरचय्य प्रत्यब्दं शास्त्रार्थप्रतियोगितां भविष्णवश्छात्राः पुरस्क्रियन्तां, प्रोत्साह्यन्ताञ्च गभीरवैदुष्यावाप्तये। प्राथमिक-शिक्षा च सरला बोधगम्या च तथा विधीयतां यथा अहमहमिकया छात्राः लभन्तां प्रवेशं संस्कृत पठितुम्।

अर्थयुगेऽस्मिन् संस्कृतज्ञा अपि अर्थेन योज्यन्तामिति समीहया समावेशनीया आधुनिका अपि विषया संस्कृत-पाठ्यक्रमे इति मन्यसे चेत् कामं क्रियतां सन्निवेशः आधुनिक-विषयाणां, परं संस्कृतस्य मौलिकं स्वरूपं सुरक्षितं यथा स्यात् तथा यतनीयम्। समारोप्यन्तां वृक्षाः किन्तु प्रसन्न-विमला, शाश्वतिकदिव्यसौरभ - प्रसाधित - दिगन्तरा पारिजातवल्लरी न विनाश्यताम्। कुल्याः निर्मीयन्तां किन्तु दिव्यपयःप्रवाहपूरिता शीतलावगाहनपरितृप्तमानव-मनोहारिणी मन्दाकिनी-कलकलधारा नावरोध्यताम्। सर्वस्मिन् वस्तुनि प्रात्यक्षिकलाभ एव स्यादिति मानसी वासना अपाक्रियताम् मूलं सिच्यतां, न तु पत्राणि, मन्ये पथानेनाचरद् संस्कृतजगत् विकसद् सुरक्षितं समृद्धं च स्थास्यति।

यावद् वर्ततेऽनुसन्धानस्य प्रश्नस्तत्रेदं निश्चितं शक्यते वक्तुं यदाधुनिकमनुसन्धानं सर्वथा दिग्भ्रान्तं शिक्षा जगतोऽनिष्टायैवोपकल्पितम्। तस्मात् किमपि विशिष्टं तत्त्वमादाय तादृशमभूतपूर्वमनुसन्धानं विधेयं यत् किमपि गूढतमं रहस्यं सत्यापयितुं शक्येत। स्पृहणीयं च भवेत् सर्वेषां कृते। तद्यथा वेदेषु वर्णितानि पुराणेषु पुष्टानि रामायणमहाभारतादिपूल्लिखितानि निखिलानि तत्त्वान्यद्य संशयदृशा समवलोक्यन्ते। क्रियतामनुसन्धानमेषां सत्यत्वमापादयितुम्।

चन्द्रमसो जलतत्त्वेनाभिभवादग्रहस्तत्रोष्णस्पर्शस्येति न्यायसिद्धान्तमुक्तावल्यां विश्वनाथः। आधुनिकैः वैज्ञानिकैश्च चन्द्रमसि जलतत्त्वं निषिध्यते। विधीयतामेतद् विषयेऽनुसन्धानम्। यदि लिलेखयिषा वर्तते व्याकरण-शास्त्रे तर्हि तत्रापि नाल्पता विषयाणाम्। "व्याकरणे इष्टयः" "आचार्याः कृत्वा न निवर्तन्ते" कैयटनागेशयो र्विप्रतिषेधता, इत्येवं रीत्या गभीरविवेचनसापेक्षा वरीवृत्यन्तेऽनेके विषया येऽनुसन्धातुं शक्यन्ते। एवमेव सर्वेषु शास्त्रेषु नास्त्यल्पताऽनुसन्धेयविषयाणाम्। जायमाने एतादृशविषयानुसन्धाने संस्कृतश्री र्वर्धिस्यत एव। लाभश्चस्यादधिजिगांसूनाम्।

पी-एच्. डी. उपाधिमन्तरा भृत्या न मिलतीति बुद्धचा यत् किमपि यतः कुतश्चिदादाय क्रमहीनेनासारेण संग्रहेण देशस्य कोऽपि लाभः कालत्रयेऽपि केनापि कर्तुं न शक्यत इति त्रैकालिकं सत्यम्।

एवं रीत्या समासतः प्रदर्शिता संस्कृताध्ययनानुसन्धानयोः साम्प्रतिकी स्थितिस्तन्निराकरणोपायाश्चेत्यलम्।

## 卐 नित्योदिते शैवसमाधिभावे 卐

**अनर्थता किं, चरितार्थता वा, का हानिराहोस्विदमेयलाभः?**
**नित्योदिते शैवसमाधिभावे, किं जीवनं का च महासुषुप्तिः?॥**
**अपूर्णताख्यातिमयं मनोज्ञं, जगद्यदान्वेष्टुमहं प्रवृत्तः।**
**तदुन्मुखः प्रान्वभवं यदेतत्, न किञ्चिदास्तेऽन्यदहंविमर्शात्॥**

# क्षणिकविज्ञानाद्वयब्रह्माद्वयवादयोः साधर्म्यवैधर्म्यविमर्शः

—निबन्धा श्री पं० शिवकुमार शास्त्री

ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना जनसुतः कीकटेषु भविष्यति ॥
वादैर्विमोहयति यज्ञकृतोऽतदर्हान्,
देवद्विषां निगमवर्त्मनि निष्ठितानाम् ।
पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः,
लोकान्घ्नतां मतिविमोहमतिप्रलोभं,
वेषं विधाय बहु भाष्यत औपधर्म्यम् ॥

इति श्रीमद्भागवताद्युक्तदिशाभगवदतारभूतस्य भगवतो बुद्धस्य 'सौत्रान्तिकवैभाषिकयोगाचार-माध्यमिकनामानश्चत्वारः शिष्याबभूवुः सोऽयमवतारोऽनधिकृत पुरुषाणामनधिकृतवैदिकधर्म मर्यादा प्रवेशनिवारणेन वैदिकमर्यादा संरक्षणार्थ एव । वैदिकमार्गमनुप्रविश्य यथेष्टार्थ-प्रकल्पनैस्तथाविधैरनाचारैश्च वैदिकीं मर्यादामेवमानीनशन्' इति अवतारस्य अस्य मुख्यं प्रयोजनम् । वेदविरुद्धं भाषितमिव प्रतीयते तदर्थम् ।

स एषोऽर्थः पद्ययोरुपरितनयोः स्फुटः । तथाविध-तत्त्वप्रतिपत्तिवशात् सौत्रान्तिक - वैभाषिक - योगाचार माध्यमिक-नामसु शिष्येषु सौत्रान्तिक वैभाषिकयोर्बाह्यार्थानां परोक्षत्वापरोक्षत्व-विप्रतिपत्तावपि तदस्तित्व प्रतिपत्तौ न संशीतिः । स्थूलमतयोसौत्रान्तिक-वैभाषिकाः सर्वबाह्यार्थास्तित्ववादेन शून्यतायामवतारिताः। ततोव्युत्पन्ना योगाचारास्तु ज्ञानमात्रास्तित्वेन शून्यवादभाषिताः । ततोऽपिसूक्ष्ममतयो माध्यमिकास्तु साक्षादेव शून्यतत्त्वं ग्राहिताः।

'देशनालोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधालोकउपायैर्बहुभि पुनः ॥
गम्भीरोत्तानभेदेनक्वचिच्चोभयलक्षणा ।
भिन्नापि देशनाऽभिन्नाशून्यताऽद्वयलक्षणा ॥
बोधचित्त विवरणम्

सर्वास्तित्ववादः' विज्ञानास्तित्ववादः' सर्वशून्यतावादः' तत्र सर्वास्तित्ववादिनोः सौत्रान्तिकवैभाषिकयोर्मते बाह्याभ्यन्तराभेदेन द्विविधं वस्तु' भूतं भौतिकं चेतिबाह्यम् । चित्तं चेतिआन्तरम् । तत्र पृथिवी जलादि भूतम् । रूपादयश्चक्षुरादयश्चभौतिकपदवाच्याः । पृथिव्यादि-परमाणवः स्नेहोष्णचलनस्वभावाः क्षणभङ्गुराः पृथिव्यादि-भावेन संहन्यन्ते । रूपविज्ञानवेदना संज्ञासंस्काराः पञ्चस्कन्धाः ख्यातास्तेषाम् आध्यात्मिकसमुदाये । 'अहम् अहम्' इत्याकारालयविज्ञानप्रवाह एव विज्ञानस्कन्धः। सविषयाणि इन्द्रियाणि एव रूपस्कन्धः । रूप्यन्त एभिरितिव्युत्पत्त्या रूपस्कन्धत्वेन सविषयाणान् इन्द्रियाणामेव अभिमतत्वात् । सुखादेरनुभवो वेदनास्कन्धः चित्तम् आत्माविज्ञानस्कन्धः । रूपवेदनासंज्ञा संस्काराश्चैत्ताः । अखिलं बाह्यम् आभ्यन्तरं च यद् वस्तु तत् सत् क्षणिकं दुःख च विद्युदादिवत् । विज्ञानात्मनोविषयराहित्येन प्रवाहो मोक्षः । सौत्रान्तिक-वैभाषिकयोर्बाह्यार्थाभिनिवेशं दृष्ट्वैव बाह्यार्थवाद उपदिष्टो भगवता सुगतेन । वस्तुतो विज्ञानैकस्कन्धवाद एव-सुगतस्य भगवतोऽभिप्रेतः । अयमेव पक्षो योगाचारानुसृतः खलु ।

विज्ञानवादे च आभ्यन्तरं ज्ञानमेव बाह्यपदार्थरूपेण अवभासते । अन्तःस्थ एव च सकलप्रमाण-प्रमेयफल व्यवहारः । बाह्येऽर्थे सत्यपि आन्तर-ज्ञानारोहमन्तरेण ग्रहीतुमशक्यत्वाद् बाह्यार्थानां व्यवहारस्य । ज्ञानस्य विषय सारूप्ये हि विषयाकारस्य ज्ञानावरुद्धत्वादेव व्यर्था बाह्यार्थकल्पना । यच्च येन सहोपलभ्यते नियतं'' न तत् ततो भिद्यते । नियत सहोपलब्धिकं च ज्ञेयं ज्ञानेन । एकस्मिन् हि चन्द्रे द्वितीयचन्द्रप्रतीतिवत् । नातोऽपि बाह्यार्थस्य ज्ञानाद् भेदः । अपि च बाह्यार्थमन्तराऽपि यथा स्वप्ने विविधाः प्रत्यया उपलभ्यन्ते । एव जागरितगोचराअपि अभ्युपगन्तव्याः । प्रत्ययत्वाविशेषादेव । बाह्यार्थंविनापि वासना वैचित्र्यादेव च एतत्प्रत्ययवैचित्र्यम् । एष च विज्ञानवादि-योगाचारमतसंक्षेपः ।

अथ इदानीं ब्रह्माद्वयवादि-वेदान्तिमतमतिसंक्षेपेण निदर्श्यं विज्ञानवादिब्रह्माद्वयवादिनोर्मते साधर्म्य-विषय-

मुपक्रम्य विचारयिष्यते । तत्र सत्यं ज्ञानमनन्तं ब्रह्म' विज्ञानमानन्दं ब्रह्म' अयमात्मा ब्रह्म' नेहनानास्ति किञ्चन' नान्योऽतोऽस्ति द्रष्टा' आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम् । इदग्वं सर्वं न यदयमात्मा' आत्मैवेदं सर्वम् । इत्यादिश्रुतिशतैर्निरस्तविशेषं ब्रह्मैव सोपाधिकं सद् आकाशाद्यात्मनाविवर्तते । तच्च जगदभिन्नोपादान-कारणम्' आत्मनः कर्तृत्वभोक्तृत्वाद्यपि अविद्याप्रत्युपस्था-पितमेव न स्वतः । ब्रह्मणोऽनन्यत्वमेव च जगतो वस्तुतः । अविद्यात्मकोपाधिपरिच्छेदापेक्षमेव नानात्वम् । ईश्वरस्य ईश्वरत्वं सर्वज्ञत्वं सर्वशक्तिमत्त्वं च । न परमार्थतो विद्यया निरस्तसमस्तोपाधिस्वरूप आत्मनि ईशितव्य-ईशितृव्यवहारः सम्भवति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा इति मायोपाधिकमेव ब्रह्मणो जगत्का-रणत्वम् । ब्रह्मणोभिन्नोऽयमात्मा' तत्त्वमसि' इत्यादि महावाक्येभ्यः ।

प्रातिभासिकव्यावहारिक-पारमार्थिक-सत्येषु जगतो-व्यावहारिकसत्यत्वमेव अभिप्रेयते न पारमार्थिकसत्यत्वम् । ब्रह्मणोऽनन्यत्वेन वस्तुतस्तस्य पृथक्सत्ताया एवाभावात् । जीवब्रह्मणोश्च अविद्याकृत एवभेदः । नित्यविज्ञान स्वरूप-मेव ब्रह्म । ब्रह्मात्मैकत्वप्रतिपत्तिरेव जीवस्यकृत कृत्यता । अविद्याध्यास एव प्रमातृ-प्रमाणप्रमेय-व्यवहार एव हेतुः । पुरुषः प्रकृतिस्थोहि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्यसदसद्योनिजन्मसु एतद्विनाशपूर्विका आत्मै-कत्वप्रतिपत्तिरेव वेदान्तानां मुख्यं प्रयोजनम् ।

अथ इदानीं योगाचाराभिप्रेत-क्षणिक-विज्ञानाद्वय-वादस्य वेदान्ति-अभिमत-ब्रह्माद्वय - ( नित्यविज्ञानाद्वय ) वादेन साधर्म्यं वैधर्म्यं वा इति विचार्यते । तत्र ब्रह्माद्वयवादे बाह्यार्थोपलब्ध्या बाह्यार्थो व्यावहारिकरूपेण स्वीक्रियत एव । ज्ञानस्य विषयसारूप्ये सत्यपि विषयनाश एव नाभ्यु-पगन्तुं शक्यते । सर्वैश्च प्रमाणैर्बाह्यार्थ उपलभ्यते । सहो-पलम्भेऽपि ज्ञानविषययोरुपायोपेयभाव-हेतुकता एव, नाभे-दहेतुकता । घटपटादिज्ञाने विषयभेदस्य स्फुटम्प्रतीय-मानत्वात् । न तत्र ज्ञानभेदमेव प्रतीमः । ज्ञानातिरिक्त-विषयस्य अनभ्युपगमे च पूर्वोत्तरकालिकयोर्भिन्नयोर्ज्ञानयो-र्ज्ञापनेनैव उपक्षीणयोः परस्परम् एकस्य ग्राह्यत्वम्, अपरस्य ग्राहकत्वञ्च अनुपपन्नं स्यात् । ततश्च विज्ञानभेदक्षणिकत्वा-द्यभ्युपगमोऽसङ्गत एव स्यात् । विज्ञानानुभवस्वीकारे बाह्यार्थानुभवो न कथमपि अपह्नोतुं शक्यते । किञ्च क्षणिकानित्यविज्ञानस्य जन्मादिमत्त्वेन घटपटादिवद्-ग्राहकस्य आकाङ्क्षानिरपेक्षस्य साक्षिणोऽभावे क्षणिक-विज्ञानभेदसिद्धिरेव कथं स्यादित्यपि समाधेयं सौगतैः । क्षणिक-विज्ञानवादिनो योगाचारस्य नित्यविज्ञानवादिनो वेदान्तिनश्च, इदमपि महदन्तरम् ।

यद् विज्ञानं हि क्षणिकम् उत्पत्तिविनाशसमन्वितम् । भवन्ति हि योगाचाराभिमतस्य विज्ञानस्य उत्पत्त्यादयो धर्मा इति अस्य फलत्वेन ज्ञातृत्वमपि दुर्वचम् । न हि कर्तृ-फलभावयोरेकत्र सम्भवः । एवञ्च ज्ञेयवज् ज्ञानस्य परसंवे-द्यत्वे ज्ञानसत्तावज् ज्ञेयसत्तापि सिद्धा इति बाह्योऽर्थः सिद्ध एव । वेदान्तिनस्तु नित्यविज्ञानरूपस्य कूटस्य चिदात्मनः स्वयं सक्षिणो नान्यसाक्ष्यपेक्षा स्वयम्प्रकाशत्वात् । प्रदीपादि प्रकाशसाक्षी यथा चक्षुरादिसाधनोऽन्यः कश्चिदभ्युपेयते । तथा क्षणिकविज्ञानस्यापि उत्पत्त्यादिधर्मवतोऽवभासनीय-त्वाविशेषेण साक्षी अपेक्ष्य एव । साक्षी तु स्वय ज्ञाता स्वयं सिद्धो नान्यापेक्षः । क्षणिक-विज्ञानं तु उत्पत्तिप्रध्वंसादि-विशेष-विशिष्टत्वेन प्रदीपवद् अन्यज्ञेयमेवेति क्षणिकं विज्ञानं न असाक्षिकम् अभ्युपगन्तुं शक्यते । ततोऽपि प्रदीपादिवत् तस्य अन्यज्ञेयता एव । जडप्रदीपप्रथन साक्षि स्वीकार इव उत्पत्त्यादि-धर्मविशिष्ट-क्षणिक-विज्ञानस्य साक्षी एष्टव्य एव । वेदान्तिनस्तु कूटस्थ नित्य चैतन्यरूप विज्ञानस्य स्वयं साक्षित्वान्नान्य साक्ष्यपेक्षा । न हि तत्र उत्पत्तिविनाशरूपौ धर्मौ स्तो येन अन्यः साक्षी अपेक्ष्येत । इत्यपि महदन्तरमनयोः ।

यदुक्तम्प्राङ् निरालम्बन-स्वप्नादि-विज्ञानवन्न जाग्रद्-विज्ञानमपि बाह्यार्थापेक्षि' इति तदपि परीक्ष्यताम् । स्वप्नादि-दृष्टान्तो न जाग्रद्विज्ञाने विरुद्धधर्मतया सम्भ-वति, स्वप्नविज्ञानस्य बाध्यत्वेऽपि जागरितवस्तुनो व्यावहा-रिकरूपेण बाध्यत्वाभावात् । जाग्रद् विज्ञानापेक्षत्वाच्च स्वप्नविज्ञानस्य' अश्रुतस्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति' वासना वैचित्र्यमपि न बाह्यार्थोपलब्धिमन्तरेण कल्पयितुं क्षमम् । संस्काररूपा हि वासनाः कथमाश्रयमन्तरेण कल्प्येरन् । वासनानामाश्रयत्वेनाभ्युपगतम् आलयविज्ञानमपि क्षणिकत्वान्न विचारसहम् । तस्य स्थिरत्वाभ्युपगमे तु आलय-विज्ञानस्य क्षणिकत्वसिद्धान्त एव व्याकुप्येत । पूर्वक्षणे निरुद्धे च तस्य उत्तरक्षणस्य हेतुत्वमपि कथम् । एतदपि क्षणिकवादे असमञ्जसम् । तस्मादपि ब्रह्माद्वय ( नित्य विज्ञानद्वयवादेन योगाचाराभिप्रेतक्षणिक विज्ञाना-द्वयवादस्य न सर्वथा साधर्म्यम् । वैधर्म्यं तु प्राग दर्शितमेवेति विरम्यते विद्वत्सु बहुजल्पनात् ।

# स्वाभाविकाः गुणाः ( साहित्ये )

--डा० उमारमणझा, एम० ए० पीएच्० डी० न्यायाचार्यः
श्रीरणवीर केन्द्रीय संस्कृतविद्यापीठम्, शास्त्रीनगर, जम्मूतवी

केषुचिद् ग्रन्थेषु नायिकायाः स्वाभाविकगुणानां विवेचनं दृश्यते। सप्तगुणाः अकृत्रिमरूपेण नायिकायाः भवन्ति। ते तावत्—

शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥

इति विश्वेश्वरेण रसचन्द्रिकायामुक्तम्[1] शोभा, कान्तिः, दीप्तिः, माधुर्यम्, धैर्यं, प्रागल्भ्यम् एवं औदार्यम् इति सप्त स्वाभाविकाः गुणाः अयत्नजाः भवन्ति।

अलङ्कारचिन्तामणौ अलङ्करणमङ्गानां शोभेति। परिकीर्तितम्' इति शोभायाः लक्षणं दृष्टिपथमायाति।[2]

रसचन्द्रिकायाम् रूपयौवनलावण्यंरूपभोगोपबृंहितम्ः।
अलङ्करणमङ्गानां शोभेति परिकीर्तितम् ॥[3]

इत्युक्तम्। रसमञ्जर्याः टीकायामपि उक्तम्—

अङ्गान्यभूपितान्येव कङ्कणाद्यैर्विभूषणैः।
येन भूषितवद्भान्ति तद्रूपामिति कथ्यते ॥

अतः शोभा रूपस्यैव नामान्तरम् इति केषाञ्चिन्मतम्। साहित्यदर्पणे शोभामधिकृत्य—

"रूपयौवनलालित्य-भोगाद्यैरङ्गभूषणम्।
शोभा प्रोक्ता"[4] इति लक्षणं दृश्यते।

नायिकायाः द्वितीयो स्वाभाविको गुणः लावण्यमस्ति। रसचन्द्रिकायाम् विश्वेश्वरः लावण्यमधिकृत्य लिखति–

मुक्ताफलेषुच्छायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिति श्रुतम् ॥[5]

कर्पुरमञ्जर्यां श्लोकेऽस्मिन् लावण्यस्य स्वरूपं द्रष्टुं शक्यते—

तथास्ति नितम्बविस्तरो यथा न भाति कञ्चीलता।
तथा स्तनस्य तुङ्गता यथा नैति दृष्टिः पदम् ॥
तथा नयनवृद्धिता यया न किमपि कर्णोत्पलम्।
तथा च मुखमुज्वलम् द्विशशिकी यथा पूर्णिमा ॥[6]

केषाञ्चिन्मते लावण्यं शोभेव : केषाञ्चिन्मते लावण्यं कान्तिः।

अलङ्करचिन्तामणौ कान्तिमधिकृत्य—

"अतिरागरसापूर्णा कान्तिः शोभैव सा यथा ॥

इत्युक्तम्। साहित्यदर्पणे-सैव कान्तिर्मन्मथाप्यायितद्युतिः" इति लक्षणं कृतम्।[7] रसचन्द्रिकायां विश्वेश्वरो लिखति–'विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्मथा ॥[8] द्रष्टुं शक्यते—

माञ्जिष्ठी ओष्ठमुद्रा धनघर्षणसुवर्णोज्वला अङ्ग-लक्ष्मीः,
वृष्टिर्वालेन्दुलेखा धवलिमजयिनी कुन्तलाः कज्जलाभाः।
इत्थं विज्ञानलेखा विहरति हरिणी चञ्चलाक्ष्याश्च तस्याः
कन्दर्पो जीवदर्पो युवजनजयने बद्धलक्ष्यो विभाति ॥[9]

(१) रसचन्द्रिका पृ०८९ (२) अङ्गालङ्करणंशोभारूपतारुण्यतो यथा इति अलङ्करचिन्तामाणौ पृ. ३२६। (३) रसचन्द्रिका पृ. ८९ (४) सा. दा, पृ० ८१ (५) रसचन्द्रिका पृ. ८९ (६) द्रष्टव्य र. च. पृ. ९० (७) सा. द. पृ. ८४ (८) र. च. पृ. ८९ (९) र. क. पृ. ९०।

साहित्यदर्पणे विश्वनाथः दीप्तिमधिकृत्यालिखन्—
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते।"[१०]

'अलङ्कारचिन्तामणावपि अजितसेनः लिखति —
कान्तिरेव च विस्तरागता दीप्तिर्यथा मता।' इति[११]
शृङ्गारमञ्जर्याः श्लोकद्वारा विश्वेश्वरो ऽस्य उदाहरण-
मपि स्पष्टीचकार।[१२]

माधुर्यस्य लक्षणं विश्वेश्वरो रसचन्द्रिकायां लिखति—
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च।
अनुल्बणत्वं चेष्टायाः माधुर्यमिति संज्ञितम्॥[13]
आचार्यविश्वनाथेनापि साहित्यदर्पणे उक्तम्—
सर्वावस्थाविशेषेषु माधुर्यं रमणीयता। इति। प्रताप-
रुद्रीये विद्यानाथोऽपि लिखति-
अभूषणेऽपि रम्यत्वं माधुर्यमिति कथ्यते।[14]

अलङ्कारचिन्तामणौ माधुर्यं रम्यताश्लाघ्यवस्तुयोगेऽपि तद्-
यथा॥ इति वाक्यं दृश्यते। [15] अस्योदाहरणं श्रीहर्षय
रत्नावल्याः श्लोकेन रसचन्द्रिकायां पूरितं दृश्यते।[16]

प्रतापरुद्रीये शीलाद्यलङ्घनं नाम धैर्यमित्यभिधीयते'
इति लक्षणं कृतम्।[17] आचार्यविश्वेश्वरस्तु अस्य लक्षणं
नैव कृतवान्, केवलं उदाहरणमेव प्रदर्शितवान्।

चत्वरगृहिणी प्रियदर्शना च तरुणी च प्रोषितपतिका।
असती सहचरी दुर्गता च न खलु खण्डितं शीलम्॥[18]
अलङ्कारचिन्तामणौ अस्य विवेचनम् इत्थं दृश्यते—
चलनेनाहृतं चित्तवृत्तं धैर्यं भवेद् यथा॥[19]
साहित्यदर्पणे विश्वनाथोऽलिखत्—
उत्कात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला।[20] इति।
विश्वनाथेन प्रागल्भ्यस्य लक्षणमेवं प्रकारेण कृतम्—
निःसाध्वसत्वं प्रागल्भ्यमिति। अलङ्कारचिन्तामणौ-
"त्रपोत्पन्न-भयत्यागः प्रागल्भ्यं भणितं यथा।" इति
अजितसेनेन प्रतिपादितम्। रसचन्द्रिकायामाचार्यविश्वेश्वरः
यथार्हप्रतिभानं प्रागल्भ्यम् इति लक्षणमकरोत्।[२१]
नैषधस्य श्लोकेऽस्मिन् अस्योदाहरणं स्फुटीभवति—
वृथा परिहासप्रगल्भता न नेति च त्वादृशि वाग्विगर्हणा।
भवत्यवज्ञा च भवत्यनुत्तरादतः प्रदित्सुः प्रतिवाचमस्मि ते॥
औदार्यस्य लक्षणं विश्वनाथः करोति-औदार्यं विनय-
स्सदा इति।[२२] आचार्यविश्वेश्वरेण स्थूललक्षत्वमौदार्य-
मिति लक्षणमुक्तम्। अलङ्कारचिन्तामणौ-बह्वयासेऽपि
चौदार्यं विनयोत्कर्षता यथा" इति लक्षणं दृश्यते। नैषध-
महाकाव्यस्य श्लोकेनास्योदाहरणं पूरितम्।[२3]
एवं प्रकारेण स्वाभाविकगुणानां विवेचनं काव्यलक्षण-
ग्रन्थेषु दृष्टिपथमायाति।

(१०) सा० द० पृ ८४ (११) अ० चि० पृ० ३२७ (१२) धावति पुरतः पुरतो मुखज्योत्स्नायास्तव प्रवाहः
वदनावरणनिरसनमध्यममार्गप्रणालेन॥

(१३) र० च० ९१ (१४) प्र० रु. पृ१७५ र. च. पृ. ९० (१५) अ. चि. पृ. ३२८

(१६) भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रतिभेदकारिहसितं नोक्तं वचोनिष्ठुरम्।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्नविस्फारितम्
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः॥

(१७) प्र. रु. पृ. १७५ (१८) र. च, पृ० ९१
(१९) अ. चि. पृ. ३२८ (२०) सा. द्र. पृ. ८९
(२१) र. च पृ. ९१ (२२) सा. द. पृ. ८४

(२३) प्रातर्वर्णनयानया निजवपुर्भूषा प्रसादात्तदाद्देवी वः, परितोषितेति निहतामन्तः पुरिक्या पुरः।
सूता मण्डनमण्डलीं परिदधुर्माणिक्य-रोचिष्त्विपः, क्रोधावेशसरागलोचनरुचा दारिद्र्यविद्राविणीम्॥
(र. च. पृ. ९२ उद्धृतम्)

पञ्जीकृत-संख्या--एल॰ आर॰ एन०/१०२

# सूर्योदयस्य नियमाः

पत्र-संहिता--

१—'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकनवकं वर्तते। धनादेश—( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३/०० पृथक् प्रदेयानि स्युः।

२--आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनप्रथमाङ्कतः (जनवरी-अङ्कतः) एव ग्राहकत्वं स्वीक्रियते। माध्यमिकेन केनापि अङ्केन न स्वीक्रियते।

३—आंग्लमासस्य २६ तमे दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कान्तरं वयं सूचनीयाः।

४--लेख-कवितादीनां भाषया संयतया, सरलया, शुद्धया च भाव्यम्। प्रकाशनीयलेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका—( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५—सम्पादकीय-विषयसम्बन्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय-पत्र-व्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् येन उत्तरलाभे मुधा विलम्बो न भवेत्।

विज्ञापनशुल्कम्--

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञानस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण- तृतीयपृष्ठस्य | १५०) | प्रथमद्वितीयावरणपृष्ठे विज्ञापनं न स्वीक्रियते। | |

संङ्केतः

'सूर्योदय'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-१

सम्पादकः, प्रकाशकः, मुद्रकश्च--डॉ॰ श्री परमहंसमिश्रः,
श्रीभारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-२२१००१
मुद्रण-स्थल--जयभारत प्रेस, बाँसफाटक, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

५९ तमे वर्षे ] वाराणसी जनवरी १९८२ नववर्षप्रवेशाङ्कः पौष २०३८ [ अङ्कः – १

[ जयतु सुरभारती ]

वार्षिकं मूल्यम्
दशरूप्यकाणि
१०/००

प्रत्येकाङ्कस्य
एक रूप्यकम्
१/००

आजीवन शुल्कम्
शतं रूप्यकाणि
१०१/००

प्राणः प्रजानामुदयत्येष सूर्यः

शत० ६।७।६।२०

सम्पादकः
डॉ० परमहंसमिश्रः

## • जगतोवासन्तिक परिहासे •

महाकविः मायाप्रसादत्रिपाठी

( रागविहागः )

अविगणय न मानवपरमाणुम् ॥ १ ॥
जडतापरमाणुवनोर्जा भुवि, स्फुटयत्युल्वणभानुम् ॥ २ ॥
यदि स्फुटति तु चेतनपरमाणुः तस्य तु का शक्तिकथा ॥ ३ ॥
शोषणविपिने घर्षणवह्नौ तस्य तु का ध्वंसकथा ॥ ४ ॥
तुङ्गं वमनं पर्वतदलनं रचयति विस्फूर्जथुता ॥ ५ ॥
अणुवलवज्रैः कम्पेते भूः, नभसो रत्नप्रभुता ॥ ६ ॥
परमाणुयुगे परमाणुरवे, विश्वं जातं नूतनम् ॥ ७ ॥
मृन्मयमूल्यं नीतेर्नमनं ध्वस्तं सर्वं प्रत्नम् ॥ ८ ॥
सङ्कुलतायां वसतौ वसतौ दीपोपेक्षितलघुता ॥ ९ ॥
जागरयति निद्राणान्दिवसान् नवनृपनीतेः पटुता ॥१०॥
नवरविरचने नवविधुवचने पूजय सर्षपमानम् ॥११॥
जीवनघोषे शम्पापीडे त्वजंय सुमसंमानम् ॥१२॥
वासन्तिक परिहासे शमय च किंशुककपटकृशानुम् ॥१३॥
अविगणय न मानवपरमाणुम् ॥

## विषय-सूची



# देवि ! निभालय बालम्

## —हरिः अरविन्दः, कोडरास्थः

भवभीतं चरणविनीतं हिमगिरिनन्दिनि ! दुर्गति दुःख निकन्दिनि !
देवि ! निभालय बालमिमम् ॥
मार्गनिक - चलन-परिखिन्नं मानस - संशय - वासम्,
लक्ष्यच्युतमवलम्बनभिन्नं निखिलानन्द - निराशम्,
अतिदीनं भक्तिविहीनं महिषासुर दानव मान विमर्दिनि !
नोदय नोदय मामबलम् ॥
कुरु सन्मार्ग निदर्शनमीश्वरि ! चालय चाङ्गुलिदानम्,
भर मां मोदय रक्ष निजाङ्के पालय दुग्धनिपानम्,
मदपीनं मोहनिलीनं निर्जचिन्तामणि शुभधामनिवासिनि !
लालय लालय लालमिमम् ॥
हित्वा तव करुणाकलिताङ्कं परं पलायितुकामम्,
रुन्धि रुन्धि दुष्कृतिपरमन्धं तव शिक्षाहित - वामम्,
वृजिनेशं मञ्जुलवेषं शिवसङ्गिनि ! परमानन्दतरङ्गिणि !
ताडय शिक्षय बालमिमम् ॥

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५९ तमे वर्षे ] वाराणसी जनवरी--१९८२ [ वर्षप्रवेशाङ्कः १

## ❋ शिवे ! ❋

त्वमेका त्रैलोक्यं चरसि सततं मे शुभभवा अनन्ता सा चातीन्द्रियगणधना नागवसना।
श्रियं दातुं नित्यं विचलति रश्मिस्तव शिवे ! शिवाह्लादानन्दा जड़िततमभङ्गं कुरु मुदा॥ ८॥
महालोभं पापं हर हर हरे हीरकनिभे ! विषानन्दोद्दाता मम तनुरियं वेशवशिनि !।
सुधानन्दं देहि क्षयमपि हरक्रोधमतुलं यदा कामं मोहं कुलजननि ! दिव्यं वितर तत्॥ ९॥
तपस्या सद्भावं त्वमपि च ददासीह यदि बा प्रदीप्ता सद्व्याप्ता भवति तव दाने मम मनः।
प्रफुल्लातिश्रीदे जय मम नु भक्तिं निजशुभां समीड़े त्वामेकां भुवनजनरक्षां कुरु सदा॥१०॥
विचार्य्या स्वे तन्त्रे रचयसि सुखं नित्यमिलितं महाखङ्गप्रख्या त्रिभुवनकरा रुद्रदयिता।
सुराणां संरक्षां यदि कुरु मुदा पीठनिकरे मणिद्वीपे तेजोमयि हि मणिपूरेऽमलपदम्॥११॥
महाक्षेत्रे युद्धोत्सवभयहरा त्वं कुलकला किराती सर्वाणी मम कुलगतं पालय लये।
लयज्ञानानन्दं रचय हृदये योगजननि ! यतीनां रक्षायै कुलयुवति विद्ये ! त्वमपिहि॥१२॥
प्रतिष्ठा कीर्त्तिस्ते त्वमव तमसि त्रासि तिमिरात् न जाने त्वत्तत्त्वं तरुणि ! महिमानं सुखमयम्।
महापारावारां निधिभवजलेशं कुरु जयं हिरण्याह्लादस्था त्वमसि करुणासागरमयि !॥१३॥
विधातारंष्णुं सुरचरणविवन्दीन् परजनान् प्रपासि त्वं सिद्धा सुखभुवनभङ्गक्षयकरी।
किरन्ती सानन्दा किरणशतकोटिं त्रिभुवने त्वमेका कल्याणी गिरिशरमणी ! पाहि सततम्॥१४॥

रुद्रयामलम् ४७।८-१४

# ✻ श्री शक्तिगीता ✻

भगवत्पूज्यपादाः महर्षयः स्वामिनः ज्ञानानन्दगुरुवर्याः

[ चित्कलाविज्ञानयोगवर्णनम् ]

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ।
अभेदश्चानुपश्यन्ति योगिनस्तत्त्वदर्शिनः ॥ ५१ ॥
सत्प्रेम्णैव सती नारी यथा ब्रह्मण्यहं तथा ।
पत्यौ तन्मयतामेत्य पुरुषत्वं प्रपद्यते ॥ ५२ ॥
प्रेम्णोऽस्ति त्रिविधो भेदस्तत्राद्यः स ममेत्ययम् ।
अहं तस्येत्ययं मध्यः सोऽहमस्मीति चान्तिमः ॥ ५३ ॥
इहाद्वैतदशायां हि स्वानुभूत्येकगोचरः ।
ब्रह्मणस्तस्य शक्तेश्च भेदाभावः प्रसिध्यति ॥ ५४ ॥
दाम्पत्यप्रेम्ण एवैषा दशा सर्व्वोत्तमा मता ।
द्वैतसङ्कुलसंसारे प्रेमाऽयमतिदुर्लभः ॥ ५५ ॥
परमज्ञानजननी महामायैव सर्वथा ।
सर्व्वोत्तमपतिप्रेम्ण आदर्शो विद्यते स्वतः ॥ ५६ ॥
सती द्वैतदशायां हि शिवहृद्वासिनी शिवा ।
नार्य्यादर्शोऽस्ति तद्दुर्गा देवीषु परमा मता ॥ ५७ ॥
स ममेत्यहमस्येति परिशुद्धे उभे दशे ।
चरित्रे विमले तस्याः शिवायाः पूर्णतां गते ॥ ५८ ॥
अहमस्य भवामीति विज्ञानस्यानुसारतः ।
सतीभावे सदागौरी विद्यारूपैव विद्यते ॥ ५९ ॥
अत एव च सा देवी पतिनिष्ठा पतिव्रता ।
पत्युर्निन्दां निशम्यैव स्वकीयं वपुरत्यजत् ॥ ६० ॥
अनन्यप्रणयेनैव शिवे ब्रह्ममये शिवा ।
विद्यास्वरूपा सा देवी वर्त्तते विमलाशया ॥ ६१ ॥
सर्व्वशक्तिमयी दुर्गा स ममास्तीति बोधतः ।
ब्रह्मणो निखिला शक्तिः स्वतस्तत्र प्रकाशते ॥ ६२ ॥
कार्त्तिकेयो बलेशोऽतो गणेशो बुद्ध्यधीश्वरः ।
लक्ष्मीर्धनेश्वरी विद्याधीश्वरी च सरस्वती ॥ ६३ ॥

सम्पादकीयम् —

# सूर्योदयः

अयं सूर्योदयः। सूर्योदये सत्येव तमिस्रा विनश्यति। वस्तुतस्तु एतादृक्षः कोपि क्षणः नास्ति, यस्मिन् सूर्योदयः नहि भवति, नास्ति च एतादृक्षः क्षणः यस्मिन् सूर्यास्तः न सम्भवति। कालस्य कलनायां धरासूर्ययोः शाश्वतिकः सम्बन्धः विज्ञानसिद्धः। सूर्यस्य परिक्रमणे अनुपलं परायणा धरणी प्रतिपलं सूर्योदय–सूर्यास्त-सौन्दर्य–सामरस्य–समृद्धि-मनुभवति! उभयविधभव्याभव्य संभूतिभव्यतया भाविता दिवसश्रियमपि स्वाक्रोशकुशेशये शाययति, शर्वरीमपि शश्वत्सुधांशुशिरस्यां विदधती स्वाङ्के निवेशयति।

किन्तु एतेन किम्? भवतु नाम सर्वंसहा जगतां, निशीथिन्याश्च निवेशनी; जगन्ति तु सुतरां समीहन्ते सहस्रांशुसाम्राज्यम्, प्रकाशपारमैश्वर्यम्, वरेण्यां रोचिष्णुताम्, अनारतरमणीयताप्रियाण्यपि क्रान्तिकर्मण्यताम्!

अयं सूर्योदयोऽपि तथैव जगतां प्रियः। सर्वजनप्रिय एषः संस्कृत सर्गस्वानां सारस्वतसौहित्यसंविधायकः, सांस्कृतिकसंदेश–संवाहकः सहृदयानां हृदयानन्ददायकः सुरगवीगौरव-गायकः संस्कृतपत्रेषु प्राचीनतमः ज्येष्ठः प्रेष्ठः वरिष्ठश्च संस्कृतविहायसि विभावसुरिव भासमानः आवर्षं प्रकाशते।

यथा नीलनीरद–नीहार–निकुरम्बैः नेपथ्यायिते नभसि, प्रायशश्च पूर्णोपरागसंगोपितगगनगौरवे, नक्तनिसर्ग-निष्प्रभेऽनन्ते सुरवर्त्मनि, सत्यपि सूर्योदये नीलाम्बरत्वं चरितार्थतामुपयाति, तथैव सूर्योदयोप्ययं संबाधित इव शनैः शनैः साम्प्रतं समुदेतीति तथ्यमङ्गीकृत्य समभ्यर्थ्यते भवानी पतिः भव्यतया संभरणाय भविष्णुताम्।

अनेनैवाङ्केन सह सम्प्रति प्रविशति सूर्योदयः स्वायुष एकोनपञ्चाशत्तमे संवत्सरे। कस्यचिदपि पत्रस्य कृते भवति सुखावहोऽयं विभवः यत् सत्यपि प्रातिकूल्यकदम्बके पत्रमेतदग्रे सरति शुभायतो।

ग्रहाणां वक्रदृष्टिः जातकं विपद्विजुगुप्सितं विदधाति। सूर्योदयस्य संचालकसंस्था च ग्रहाणां घातप्रतिघातैः संप्रधर्षिता वैरूप्यमवाप। न मासि मासि प्रकाशनं सम्भवमासीत्। द्वौ संयुक्ताङ्कौ प्रकाश्य कथं कथमपि नैरन्तर्यं निरवाह्यत। अस्यामेवावस्थायां कयाचिदौच्यत–मासिकीयं त्रैमासिकी स्यात्, कैश्चिदुक्तं–प्रकाशनावरोध एव वरः। मुण्डे मुण्डे मतिर्वैभिन्न्यमवधार्य संस्कृत सारस्वत–सौहित्य-सामरस्यरसास्वादरहितानां कुदृष्टिमभिलक्ष्य तूष्णीमेव स्थितेन सम्पादकेन ८१ आवर्षम् अद्यावधि च श्रीवेणीमाधवपुर–न्यासानुदान–साहाय्येन स्वतो वा व्ययेन सूर्योदयः प्राकाश्यतामानीतः।

नववर्षप्रवेशाङ्कोऽयं प्रकाशते। भविष्यद्–वैषम्यं प्रति शङ्कितमनाः सूर्योदयः संचालकसंस्था-सदस्यान्, वर्त्तमानान् निवर्त्तमानान् अन्यांश्च मान्यान् महानुभावान् समाह्वयति सुरगवी सेवायै, तथा च सूर्योदयस्य सम्यक् यथावत् समुदयाय।

श्री भारतधर्ममहामण्डलम् भारतवर्षस्य एका वैराज्यरंजिता प्रतिष्ठया वरिष्ठा च संस्था अस्ति। अस्याः संस्थायाः संस्थापकाः अनन्त श्री विभूषिताः भगवत्पूज्यपादाः महर्षयः विविधदर्शनाविष्कारकाः समाधियोगे प्राप्तदत्तवराः स्वामिनः ज्ञानानन्दगुरूवर्याः। तेषामप्रतिमप्रतिभावता महामेधाविनां संस्कृतसंस्कृति-सेवा विश्वविश्रुता। तेषां वात्सल्येन सुसमाप्यायितोऽयं सूर्योदयः प्रकाशितः अभवत्। तेषां महर्षीणां तदुत्तरकार्यभारधुरं संवोढुं सक्ष-

मायाः परमादरणीयायाः श्रीमत्याः विद्यादेवीजी महोदयायाः आशीर्वादेन च सूर्योदयः संप्रसारितः ।

सौभाग्यात् विश्वसंस्कृतप्रतिष्ठानस्य साभापत्यमलंकुर्वन्तः भारतीयसंस्कृतिसर्वस्वाः काशिराजवर्याः श्रीमन्तः विभूतिनारायणसिंहदेवा अस्याः संस्थायाः अपि सर्वोच्च सभाध्यक्षाः । सत्स्वप्येतेषु महानुभावेषु सूर्योदय एषः दौर्मनस्यदौर्भाग्य–भर्त्सितः मा भूयाद्–एतादृश एव सत्प्रयत्नो विधेयः सर्वैः ।

इदमपि सहर्षमुद्घोष्यते यत् यदि सम्पादकं प्रति काचिदपि विप्रतिपत्तिः कस्यचिदपि मनसि भवेत्, तदात्र अन्यः कश्चित् योग्यतमः नियोक्तव्यः, परन्तु चलतात् चारुतया सूर्योदयः इत्येव समीहा वर्त्तते । वर्त्तमाने युगे संस्कृत प्रचारप्रसारस्य महती आवश्यकता वर्त्तते । प्राक् सुसंचालितोऽयं सूर्योदयः करालकालगह्वरे मा विलीयेत–इत्येव प्रार्थना ।

पराम्बायाः परमानुकम्पया एव श्वसन्ति सर्वे शरीरिणः ! जीवन्ति जन्तवः, स्थीयन्ते स्थाणवः, किं बहुना सर्वं सुस्पन्दनमपि तस्या एव महादेव्याः महाप्रभावात् स्पन्दितं दृश्यते । प्राणापानयोः उभयविसर्गारणिरूपतापरामर्शोऽपि तस्याः वात्सल्यद्रवितायाः प्रसाद एव ।

सा च परमोपास्या करुणावरुणालयाऽम्बा कातरतया संस्तूयते यच्चलतु चलतात् शश्वत् सूर्योदयः ।

अस्मिन्नेव सन्दर्भे कृपालवः पाठकाः अनुग्राहकाः ग्राहकाः सहृदयाः सज्जनाश्चार्हयन्ते प्रह्वतया यत् ते स्वकीयं दायं धनादेशयन्तु सहृदयाः अधीयानाश्च नव नवान् ग्राहकान् निर्मापयन्तु येन सूर्योदयः स्वकीयैरेवांघ्रिभिः दिग्दिगन्तमण्डलेषु संप्रधावतात् विश्वविश्रुतश्च भूयादिति शम् ।

# तन्त्रालोकः

## [ प्रथमाह्निकम् ]

### श्रीमन्महामहेश्वराचार्याभिनवगुप्तपादाचार्यविरचितः

ननु सिद्धे प्रकाशे भावाभावरूपस्य ज्ञेयस्य तदेकपरमार्थत्वं सिद्ध्येत्, स एव पुनः केन प्रमाणेन सिद्धः इत्याशङ्क्याह

प्रकाशो नाम यश्चायं
सर्वत्रैव प्रकाशते ।
अनपह्नवनीयत्वात्
किं तस्मिन्मानकल्पनैः ॥५४॥

अपूर्वार्थविषयं खलु प्रमाणम् । यदाहुः—
'अनधिगतविषयं प्रमाणमज्ञातार्थप्रकाशो वा'

इति प्रकाशस्य अपूर्वत्वेन प्रकाशो नास्ति सर्वदैव तस्य प्रकाशमानत्वेन 'अनपह्नवनीयत्वात्' इति व्यर्थं तत्र प्रमाणपरिकल्पनम् । तथाहि तदा तस्य अपूर्वत्वेन प्रकाशः स्यात्, यद्यसौ पूर्वमनधिगतत्वेन अप्रकाशमानः स्यात्, तथाभावश्च तद्रहितपूर्वकालस्मृतौ सत्यां भवेत्, स्मृतिरपि एवंरूपमनुभवं विना नोत्पद्यते, अनुभूतविषयासंप्रमोषात्मकत्वात्तस्याः, न च प्रकाशरहितत्वेन पूर्वकालमनुभवोऽस्ति, तस्यैवानुभवस्य प्रकाशात्मकत्वात्, स एव हि प्रकाशः इति कथं पूर्वमपि तद्भावः, अतश्च सर्वदास्य अवभासमानत्वेन आदिसिद्धत्वात्

न प्रमाणसव्यपेक्षा सिद्धिः। स एव च 'प्रकाश एव प्रकाशकः प्रमाता' इति नीत्या परप्रमातृरूपः परमेश्वरः शिवः इति युक्तमुक्तम् 'ज्ञेयस्य च परं तत्त्वं यः प्रकाशात्मकः शिवः।' इति ॥५४॥

न केवलमेतत्सिद्धौ प्रमाणानामनुपयोगो यावत्प्रत्युत एषां तदधीना सिद्धिः इत्याह––

प्रमाणान्यपि वस्तूनां
जीवितं यानि तन्वते।
तेषामपि परो जीवः
स एव परमेश्वरः ॥५५॥

इह वस्तूनां नीलपीतादीनां प्रकाशनिरपेक्षेण स्वस्वरूपेण तावत्स्वयमन्योन्यं वा न कश्चिद्विशेषः। नहि स्वात्मनि नीलं नीलं पीतं वा पीतम्। यदि नाम हि स्वात्मनि नीलं पीतं स्यात्पीतं वा नीलं, तत्किमिव न विरुद्धमापतेत्। अथ यथैव यत्प्रकाशते तथैव तत्स्वात्मनि परिनिष्ठितं स्यात् इति न नीलं पीतं, पीतं वा नीलम्, इति चेत्-एवं तर्ह्येषां स्वात्मनि विशेषो न कश्चिदुक्तः स्यात्, अपि तु प्रकाशते इति–इति प्रकाश एवैषां रूपं तत्तन्नियतस्वरूपप्रतिष्ठानिबन्धनत्वात् जीवितं वितनुयात् येन नीलमिदं पीतमिदम् इति सिद्ध्येत्। स च नीलाद्युपरागेण नियतरूपतामवलम्बमानः प्रमाण-शब्दव्यपदेश्यो भवेत्। न चास्य स्वात्मसिद्धिं प्रति अन्यद-पेक्षणीयं–प्रकाशरूपत्वात् प्रकाशस्य च स्वपरप्रकाशकत्वात्, तथा-भूतोऽप्यसौ प्रकाशो विमर्शरूतां विना नार्थस्य आत्मनो वा प्रकाशरूपतायां प्रतिष्ठास्पदं स्यात्, नहि प्रकाशः इत्ये-वासौ स्वपरात्मनोः प्रतिष्ठापको भवेत्, एवं हि नीलमपि न नीलम् इत्येव कृत्वा तथा स्यात्। तस्मात्स्वपरप्रकाशता सिद्धौ तस्यापि अहंपरामर्शात्मा जीवितभूतः प्रकाशोऽभ्युप-गमनीयो–येन सर्वं सिद्ध्येत्। यदुक्तं—

'प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः।'

इति। स एव च परप्रकाशात्मा परमेश्वरः शिवः इत्युक्तं 'तेषामपि परो जीवः स एव परमेश्वरः' इति॥५५

एवमादिसिद्धत्वादस्य न केवल साधकं प्रमाणमकिंचि-त्करं, यावद्बाधकमपि इत्याह–

सर्वापह्नवहेवाक-
धर्माप्येवं हि वर्तते।
ज्ञानमात्मार्थमित्येत-
न्नेति मां प्रति भासते ॥५६॥

'सर्वेषां' ज्ञातृज्ञानज्ञेयानाम् 'अपह्नवो' निराकरणं तत्र 'हेवाक' एव 'धर्मः' स्वभावो यस्यासौ बौद्धः। तत्र त्रयाभाववादिनो माध्यमिकाः। ज्ञातृज्ञेयाभाववादिनो योगा-चाराः। ज्ञात्रभाववादिनो वैभाषिकाः। सोऽपि 'ह्येवं ज्ञान-मात्मार्थम्' इत्येतत् मां संवेदन स्वभावत्वाद् विचारयितारं प्रति नेति भासते–नास्ति इति प्रतीतिरूपो वर्तते अवतिष्ठते इत्यर्थः, तेन आत्मादेर्निराकरणे साधने वापि अवश्यमेव साधयिता पूर्वकोटावाक्षिप्तः सिद्धः' नहि साधयितारमन्तरेण अर्थानां साध्यतैव स्यात्, स च स्वतः सिद्धः प्रकाशात्मा परमार्थरूपः परमेश्वरः शिव एव ॥५६॥

अतश्च तत्र व्यर्थमेव बौद्धस्यापि प्रमाणस्य परिकल्पनम् इत्याह—

अपह्नुतौ साधने वा
वस्तूनामाद्यमीदृशम्।
यत्तत्र के प्रमाणाना-
मुपपत्त्युपयोगिते ॥५७॥

'वस्तूनां' ज्ञातृज्ञानज्ञेयात्मनाम् 'आद्यम्' आद्यसिद्धत्वात् 'ईदृशं' परप्रमातृरूपं 'तत्र' इति आदिसिद्धे प्रमातरि। प्रमेयं खलु प्रमिण्वत्प्रमाणमुच्यते, प्रमेयं च विभिन्नप्रकाशा-धीनसिद्धिकमिदन्ताविमृश्यं च भवति। न चैवंरूपत्वं प्रमातु-र्येन प्रमाणपरिच्छेद्यः स्यात्, स हि अर्थपरिच्छेदादौ प्रवृत्तः

स्वप्रकाशरूपत्वान्न प्रकाशाद्भिन्नो, नापीदन्ताविमृश्यः—अहं-प्रत्यमर्शमयत्वात्, स च यदि प्रमाणप्रमेयः स्यात् तत्रापि प्रमितिक्रियायां प्रमात्रा अपरेण भाव्यं, तत्राप्यन्येन इत्यनवस्थानं स्यात्, तस्मान्नात्र प्रमाणस्य प्रवृतौ काचिदुपपत्तिः। यत्तु भावनोपदेशादौ 'सकृद्विभातोऽयमात्मा प्रमाता' इत्यादिरिन्तया व्यवहारः स न वास्तवः—तत्र तस्य साक्षावप्रतीतेः, अहन्ताव्यवधानेन हि तत्रासौ प्रतीयते इत्यास्ताम्, एतद्धि पदे पदे वितनिष्यते। प्रमाणानुपयोगस्त्वादिसिद्धत्वात् समनन्तरमेव दर्शितः, इति न पुनर्वितानितः ॥५८॥

न केवलमत्र युक्तिरेवास्ति यावदागमोऽपि इत्याह—

कामिके तत एवोक्तं
हेतुवादविवर्जितम् ।
तस्य देवातिदेवस्य
परापेक्षा न विद्यते ॥५९॥
परस्य तदपेक्षत्वा-
त्स्वतन्त्रोऽयमतः स्थितः ।

ततः इति तत्र प्रमाणानामुपपत्त्युपयोगयोगयोरभावात्, हेतोः अनुमानस्य वादेन विवर्जितम्। अत एवाह—तस्य इत्यादि, परस्य प्रमाणादेः, अतः इति परानपेक्षत्वलक्षणाद्धेतोः ॥ ५९ ॥

एवमस्य परानपेक्षत्वाद्यथा न प्रमाणान्यवच्छेदकानि, तथा प्रमेयाण्यपि इत्याह—

अनपेक्षस्य वशिनो
देशकालाकृतिक्रमाः ॥६०॥
नियता नेति स विभु-
र्नित्यो विश्वाकृतिः शिवः।

वशिनः स्वतन्त्रस्य इति विशेषणद्वारेण हेतुः। अत्रापीति परानपेक्षस्य, प्रकाशात्मन शिवस्य हि देशकालाकारैर्भेदाभेदविकल्पोपहतत्वादवच्छेदाधानमशक्यम् इत्युक्तं—नियता न इति। अत एव च स एवंविधः इत्याह—विभुर्नित्यो विश्वाकृतिः इति। विभुः इति देशावच्छेदशून्यत्वात्। नित्य इति अतीतादिकालावच्छेदविगलनात्। विश्वाकृतिः इति चिदचिदाद्याकारवैचित्र्योल्लासकत्वात् ॥६०॥

एतदेव प्रपञ्चयति—

विभुत्वात्सर्वगो नित्य-
भावादाद्यन्तवर्जितः ॥६१॥
विश्वाकृतित्वाच्चिदचि-
त्तद्वैचित्र्यावभासकः ॥

अत एवास्यागमेषु नानारूपत्वमुच्यते इत्याह—

ततोऽस्य बहुरूपत्व-
मुक्तं दीक्षोत्तरादिके ॥६२॥

तदेवाह—

भुवनं विग्रहो ज्योतिः
खं शब्दो मन्त्र एव च ।
बिन्दुनादादिसंभिन्नः
षड्विधः शिव उच्यते ॥६३॥

भुवनं तत्तद्भुवनाधिष्ठेयं भोगाधाररूपम्। विग्रहशब्देन उपचाराद्विग्रहिणो लक्ष्यन्ते। तेषां च रुद्र-क्षेत्रज्ञादिनानारूपत्वेऽपि तत्तत्सिद्धिदानसामर्थ्यादिह रुद्रादीनि कारणान्येव। ज्योतिः बिन्दुः

'कदम्बगोलकाकारः स्फुरत्तारकसन्निभः।'

इत्यादिनास्य ज्योतीरूपत्वेनाभिधानात्। खं शून्यं-शक्ति-व्यापिनी-समनालक्षणम्। शब्दो नादात्मा। मन्त्रः अकारोकार-मकारात्मा। अस्य विशेषणं—बिन्दुनादादिसंभिन्नः इति। यदुक्तं

'बिन्दुर्नादस्तथा व्योम मन्त्रोभुवनविग्रहौ।
षड्वस्त्वात्मा शिवो ध्येयः फलभेदेन साधकैः ॥'

इति। तथा

'उन्मना तु परो भावः स्थूलस्तस्यापरो मतः।
पुनः शून्यं च व्योमात्मा संस्पर्शं च ततः परम् ॥
शब्दो ज्योतिस्तथा मन्त्राः कारणा भुवनानि च।'

इति । तथा

'व्योम-विग्रह बिन्द्वर्ण-भुवनाध्वविभेदतः ।
लक्ष्यभेदः स्मृतः षोढा ··························।।'

इत्यादि ।। ६३ ।।

अत्र च

'यो यत्राभिलषेद्भोगान्स तत्रैव नियोजितः ।
सिद्धिभाक्··········· ···।'

इतिन्यायेन यस्य यत्र निष्ठा तस्य तत्प्राप्तिर्भवति इत्याह—

यो यदात्मकतानिष्ठ-
स्तद्भावं स प्रपद्यते ।
व्योमादिशब्दविज्ञानात्-
परो मोक्षो न संशयः ।।६४।।

यः साधको, यस्य भुवनादेः, आत्मकतायां तद्रूपतायां, निष्ठितः, स तद्भावं-तत्तद्भुवनादिरूपत्वेन नियतां सिद्धिमेति इत्यर्थः । तदुक्तं —

'भुवनं चिन्तयेद्यस्तु वक्ष्यमाणैकरूपकम् ।
भुवनेशत्वमाप्नोति······· ··· ··········।।'

इत्युपक्रम्य

'ब्रह्मादिकारणानां तु विग्रहं यः सदा स्मरेत् ।
पूर्वोक्तलक्षणं यच्च तन्मयत्वमाप्नुयात् ।।
मन्त्रैश्च मन्त्रसिद्धिस्तु जपहोमार्चनाद्भवेत् ।
पूर्वोक्तरूपकध्यानात्सिध्यत्यत्र न संशयः ।।
ज्योतिर्ध्यानात्तु योगीन्द्रो योगसिद्धिमवाप्नुयात् ।
तन्मयत्वं तदाप्नोति योगिनामधिपो भवेत् ।।
शून्यध्यानाच्च शून्यात्मा व्यापी सर्वगतिर्भवेत् ।
समनाध्यानयोगेन योगी सर्वज्ञतां व्रजेत् ।।'

इति । एषां च षण्णामपि शिवात्मकत्वात्

'···················शिवं ध्यात्वा तु तन्मयः ।'

इत्याद्युक्तेः शिवैकमयतयैकैकानुप्रवेशेऽपि शिवात्मकस्वस्वरूपलाभो भवेत् इत्याह व्योमादिशब्दविज्ञानात् इत्यादि । व्योमादीनाम् एषां षण्णां शब्दानां शब्दनं शब्दः-परो विमर्शः, तदात्मकतया यत् विज्ञानम्-अनुभवः, तस्मात् परो-विमर्शैकसारशिवैकात्म्यापत्तिलक्षणो, मोक्षो निःसंशयं भवेत् इति वाक्यार्थः । व्योमादिषट्क इति पाठे तु व्योमादेः षट्कस्य विशिष्टादनवच्छिन्नाज्ज्ञानात् इति व्याख्येयम् । न च अत्र भुवनादीनां क्रमो विवक्षितः इतीह व्योमादि इति प्रयुक्तम् ।। ६४ ।।

ननु यद्ययं विश्वाकृतिस्तत्कथमस्य षड्विधत्वमेवोक्तम् इत्याशङ्क्याह—

विश्वाकृतित्वे देवस्य
तदेतच्चोपलक्षणम् ।
अनवच्छिन्नतारूढा-
ववच्छेदलयेऽस्य च ।। ६५ ।।

उपलक्षणम् एव भवति, अनेनैव निखिलविश्वसंग्रहसिद्धेः । न केवलमेतद्विश्वाकारतायामेवास्योपलक्षणं यावदन्यत्रापि इत्याह—अनवच्छिन्नतारूढौ इत्यादि । अवच्छेदलये इति अवच्छेदानां संकोचाधायिनां भुवनादीनां लये विश्वोत्तीर्णतायाम् इत्यर्थः विश्वमयत्वेऽप्यस्य स्वस्वरूपान्न प्रच्यावः इत्याशयः । नन्वेवमुभयथापि अस्य नियतात्मकत्वावगमादवच्छेद एवोक्तो भवेत् इत्याशङ्कयोक्तम् अनवच्छिन्नतारूढाविति । अस्य हि विश्वमयत्वेऽपि विश्वोत्तीर्णत्वादनवच्छिन्नतायामेव प्ररोहो भवेत्, एक एव हि स्वतन्त्रो बोधस्तथा तथा प्रस्फुरेत् इति ।। ६५ ।।

ननु कथमेकदैव एकस्य विश्वमयत्वेऽपि विश्वोत्तीर्णत्वं संगच्छते इत्याशङ्काशान्त्यर्थमागमं संवादयति—

उक्तं च कामिके देवः
सर्वाकृतिर्निराकृतिः ।
जलदर्पणवत्तेन
सर्वंव्याप्तं चराचरम् ।। ६६ ।।

दर्पणाद्यान्तः प्रतिबिम्बितं घटादि यथा दर्पणादिव्यतिरेकेण प्रकाशमानमपि दर्पणाद्यनतिरिक्तमेव, अन्यथा

दर्पणघटयोरन्योन्यं वैविक्त्येन भानं स्यात्, तथैव प्रकाशात्मना शिवेनापि स्थावरजङ्गमात्मकमिदं विश्वं स्वेच्छया स्वस्वरूपातिरिक्तायमानत्वेन अवभासितं सत्, व्याप्तं प्रकाशमानतान्यथानुपपत्त्या स्वस्वरूपानतिरेकेणैव क्रोडीकृतम्, अत एवायं विश्वमयत्वेऽपि विश्वोत्तीर्णस्तदुत्तीर्णत्वेऽपि तन्मयः इत्युभयथापि न कश्चिद्दोषः। अत एवोक्तं सर्वाकृतिः विश्वोत्तीर्णः। आवृत्त्या तत्त्वेऽपि तदुत्तीर्णः— इति च। तदेवमयमेक एव प्रकाशात्मा परमेश्वरः सर्वतो जृम्भते इतीश्वराद्वयमेव परमार्थतः ॥ ६६ ॥

ननु भावानां तदपेक्षया पृथक्प्रकाशानुपपत्तेर्मा नाम तदतिरेकेण सत्ता भूत् इति भावापेक्षया प्रकाशात्मक एक एवेश्वरः इत्यास्तां तावदेतत्। यत्पुनर्विभुत्वादि धर्मजातं तस्योक्तं, तदपेक्षया धर्मधर्मिणोर्धर्माणां च परस्परं भेदस्य अनपह्नवनीयत्वाद् योऽयं भेद उल्लसितः स कथं वार्यते येन एक एवेश्वरः इत्यद्वयवादनिर्वाहः स्यात् इत्याशङ्क्याह—

न चास्य विभुताद्योऽयं
धर्मोऽन्योन्यं विभिद्यते।

न च विभुताद्योऽयं अस्य स्वरूपातिरिक्तस्तदतिशायकः कश्चित् धर्मः अपि तु स्वरूपमेवैतत्। विभुत्वं हि व्यापकत्वमुच्यते, तच्च स्वव्यतिरिक्ते व्याप्ये सति स्यात्, न च परं प्रकाशमपेक्ष्य दिगादि किंचित्संभवेत् इति किं नाम व्याप्नुयात्। नित्यत्वमपि नास्य धर्मः—तस्य कालत्रयानुगामिरूपत्वात्, अत्र चाकालकलितत्वात्। यदभिप्रायेणैव 'सकृद्विभातोऽयमात्मा' इत्याद्युक्तम्। एवं विश्वाकृतित्वमपि। नहि एतदपेक्षया विश्वं नाम किंचिदस्ति, यदाकारत्वमप्यस्य स्यात्। एवं चैषां परप्रकाशापेक्षया कथंचिद्भेदायोगात्पारस्परिकोऽपि भेदो नास्ति इत्युक्तं—न चान्योन्यं विभिद्यते इति ॥

ननु यद्येवं तत्कथमस्य विभुर्नित्यो विश्वाकृतिः इत्यादिधर्मभेद उक्तः इत्याशङ्क्याह

एक एवास्य धर्मोऽसौ
सर्वाक्षेपेण वर्तते ॥ ६७ ॥
तेन स्वातन्त्र्यशक्त्यैव
युक्त इत्याञ्जसो विधिः।

अस्य खलु एक एवासौ अहंप्रत्यवमर्शाख्यो हि स्वभावभूतो धर्मोऽस्ति, यः सर्वं विभुत्वादिधर्मजातमाक्षिपेत्। अत्रायमर्थः—अयं हि नाम प्रकाशस्य अहंप्रत्यवमर्श उच्यते यदयं स्वस्य परस्य वा प्रकाशने परं नापेक्षते इति। अत एवास्य स्वातन्त्र्यरूपं तत्तद्देशकालाद्यवभाससहस्रोल्लासतोऽपि संकुचितः प्रमातृवर्गः स्वापेक्षा व्यापकत्वनित्यत्वादि व्यवहरेत्, वस्तुतः पुनरप्यहंप्रत्यवमर्शाख्या स्वातन्त्र्यशक्तिरेवास्यास्ति येन—

'स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः।'
(प्र० १ अ० ५ आ० १३ श्लो०)

इत्याद्युक्तम्। अत एवाह तेन इत्यादि ॥ ६७ ॥

ननु सर्वत्रैवास्य इच्छाद्यनन्तशक्तियोगित्वमुक्तमिति तत्कथमिहैकयैव स्वातन्त्र्याख्यया शक्त्या योग उच्यते? इत्याशङ्क्याह

बहुशक्तित्वमप्यस्य
तच्छक्त्यैवावियुक्तता ॥ ६८ ॥

स्वातन्त्र्यशक्तिरेव हि तत्तदेषणीयाद्युपाधिवशान्नानात्वेन व्यवह्रियते इति तच्छक्तियोगितैवास्यानन्तशक्तित्वम्। यदुक्तम्—

'या सा शक्तिर्जगद्धातुः कथिता समवायिनी।
इच्छात्वं तस्य सा देवि सिसृक्षोः प्रतिपद्यते ॥
एकापि सत्यनेकत्वं यथा गच्छति तच्छृणु।'

इत्याद्युपक्रम्य

'एवमेषा द्विरूपापि पुनर्भेदैरनन्तताम्।
अर्थोपाधिवशाद्याति चिन्तामणिरिवेश्वरी।'

इति ॥ ६८ ॥

[ क्रमशः

# श्री कृष्णकर्णामृतम्

डॉ० राजेन्द्र त्रिवेदी
संस्कृत, पालि एवं प्राकृत विभाग जबलपुर विश्वविद्यालय, जबलपुर

दक्षिणभारते श्रीकृष्णकर्णानन्द-काव्यस्य महान् प्रचार: बहो: कालादुपलभ्यते । केरलीयकवि-विल्वमङ्गलस्येयं कृति: कृष्णराजकविराजस्य सारङ्गदा, गोपालभट्टस्य कृष्णवल्लभा चैतन्यदासस्य प्रबोधिनी प्रभृति टीकाभि: इमं विपश्चितां मनांसि मोदयति । इयं रचना १९७१ तमे ख्रीष्टाब्दे डॉ० प्रमोदगणेशलाले महोदयै: राष्ट्रभाषायामनूद्य प्रकाशिता । प्रथमत एवं हिन्दी भाषायामियं दृष्टिपथमागता । ग्रन्थकर्तु: पूर्वाभिधानं तु लीलाशुक आसीत् । सन्यासदीक्षानन्तरं अस्य संज्ञा विल्वमङ्गलेति सञ्जाता । परमभागवतोऽयं कविरासीत् इत्यत्र नास्ति संशीतिलेश: । अस्यान्ये ग्रन्था अपि विद्वत्समाजे समादृतास्सन्ति । अस्यां रचनायां दर्शनपारदृश्वनां तत्वावगाहिनी क्षमता साहित्यिकानां रसस्रोतस्विनी प्रतिभा च पदे पदे परिलक्ष्येते । सरस्वती कण्ठाभरणस्य टीका, पुरुषकार: ( दर्शनग्रन्थ: ), कृष्णचरितावली, श्रीचिह्नमहाकाव्यम् प्रभृति ग्रन्थानां परिचय: श्रीलाले महोदयै: हस्तलिखितग्रन्थानां तालिकामनुसृत्य विहित: ।

मुक्तककाव्यपरम्परायां कृष्णकर्णामृतम् इत्यन्यतमा रचना । अस्यां श्रीकृष्णस्य शृङ्गारिकचेष्टामाधुर्यं वर्णितम् । त्रिषु आश्वासेषु ललितैर्विविधच्छन्दप्रयोगै: प्रभाविता: श्रोतारस्तु रसाप्लुता: भवन्ति । राधावल्लभीयसिद्धान्तानुसारिरचनाविधित्वात् पदे-पदे भक्तिप्रवणता परिलक्ष्यते । राधाकृष्णयोरपरिमितं सौन्दर्यमात्मसात्कर्तु कविना स्वकीया भक्तिरुदभाविता । अस्यकवेराविर्भावो गीतगोविन्दकर्तु: प्राक् संभाव्यते । अतो यादृशी स्थूलशृङ्गारवर्णनपद्धति: गीतगोविन्दे दृश्यते न तादृशी ग्रन्थेऽस्मिन् प्राप्यते । अत्रत्यमद्भुतं शृङ्गारविलसनं हृदयावर्जकम् वर्तते । इयं कृति: मुक्तकाव्यसरण्यां स्तुतिप्रधाना । अत: श्रीकृष्णस्य तुष्टिरेव कर्तु: प्रतिपाद्यं प्रतीयते ।

अस्यां कृतौ राधाकृष्णयो: क्रीडारससरस्तटे गोपवनितानां मनोहारिचित्रणं जीवात्मपरमात्मस्थिरसंबंधख्यापनायैव लभ्यते । गोपाङ्गनाभिर्विना तु अनयो: प्रेमप्रसङ्गस्यका कथा ? वस्तुतस्तु आत्मजीवसंबंधख्यापनायैव एतासां वर्णनमकारि काव्यकारेण । परमार्थत एतासां स्थिति: पृथक् वर्तते । मोहासक्तरूपमेव गोपवधूनां श्रीमद्भागवतानुसारि वर्णनं समुपलभ्यते । तासां वर्णनं जडचेतनरूपेणाऽपि समायाति । प्राकृतिकवर्णनप्रसङ्गावसरे लतागुल्मरूपेण गोपाङ्गनानां चित्रणं दृश्यते । यथा राधा स्वकीयां परकीयांवा आत्मानं प्रकटीकरोति तथैव गोपवध्व: यथावसरं स्वकीयां परकीयां वाऽऽत्मानं समुपस्थापयन्ति । कृष्णस्य सौन्दर्यस्य विलास एव विल्वमङ्गलस्य अभीष्ट: प्रतीयते ।

कृष्णकर्णामृते उपासनामूलं कृष्णस्य सार्वकालिकं सौन्दर्यमेव । इयं सौन्दर्यतरङ्गिणी विविधरूपैव । कविस्तन्नीलाभं-बालकं स्तौति यत्-स: चञ्चलापाङ्गेन मोहावर्जककटाक्षेनास्य मनोहारित्वं भजते । यस्य दृष्टि: सौन्दर्यामृतवीचिभि: विचित्रा । स: अभिरामत्वात् रमाया: कटाक्षपात्रं भवति । स: यमुनातटे रमते । कामस्य जनकोऽपि भवति ।

चातुर्यैकनिधानसीमचपलापाङ्गच्छटामन्थरं
लावण्यामृत वीचिलालितदृशं लक्ष्मीकटाक्षादृतम् ।
कालिन्दीपुलिनाङ्गण-प्रणयिनं कामावताराङ्कुरं
बालं नीलममी वयं मधुरितं स्वाराज्यमाराध्नुमः ॥
१-३

यस्य तेजो रूपं बहिः मनसि च प्रकाशमानम् । यस्य केशपाशः मयूरपिच्छेन सुशोभितः । विकसनशीलश्चयौवनं यस्य--

बर्होत्तंसविलासिकुंतलभरं माधुर्यमग्नाननं
प्रोन्मीलन्नवयौवनं प्रविलसद्वेणु-प्रणादामृतम् ।
आपनीस्तनकुड्मलाभिरमितो गोपिभिराराधितं
ज्योतिश्चेतसि नश्चकास्ति जगतामेकाभिरामाद्भुतम्
१-४

यस्य रूपं वाङ्मयस्य प्राणसंचारणे समर्थः, गोपाङ्गनानां सौंदर्यातिशायिभिः दृष्टिक्षेपैः आकृष्यते—

व्रजबधूनयनाञ्चलवञ्चितं
विजयतां मम वाङ्मयजीवितम् ॥ १-८

कविः कृष्णस्य दृष्टिक्षेपैरभिभूतः सन् तस्यानुग्रहत्वं अभिलषति—

त्वयि प्रसन्ने किमिहापरैर्न-
स्त्वय्यप्रसन्ने किमिहापरैर्नः ॥ १-२६

अथवा—

दयाम्बुधे देव भवत्कटाक्ष—
दाक्षिण्यलेशेन सकृन्निषिञ्च ॥ १-३०

कृपाकटाक्षस्य एकः अंशोऽपि अनुग्रहाय अलम् ।

कृष्णसौन्दर्यस्य महत्संबलं तस्य वेणुः तस्य च नादे वर्तते । कविः कथयति--

तत्किं करोमि विरणन्मुरलीविलास--
मुग्धं मुखाम्बुजमदीक्षितुमीक्षणाभ्याम् ॥
१-३२

कविः कृष्णस्य वेणुविलासैरभिभूतो आत्मानं विस्मृतं मन्यते । स न जानाति किं करणीयम् किं न करणीयम् ? किं कथनीयं किं न कथनीयम् कृष्णस्य वेणुध्वनिमाकर्ण्य व्रजाङ्गनानां स्थितिस्तु विचित्रैव भवति ।

ता निमग्ना भूत्वा अनेकाः रोमाञ्चकारिण्यः क्रियाः कुर्वन्ति--

आमुग्धमर्धनयनाम्बुजचुम्ब्यमान-
हर्षाकुलव्रजवधूमधुराननेन्दोः ।
आरब्धवेणुरवमादिकिशोरमूर्तेः-
राविर्भवन्ति मम चेतसि केऽपि भावाः ॥
१-१९

न केवलं व्रजवधूनां एतादृशी स्थितिर्भवति अपितु समाधिनिष्ठानामपि मुनीनां विषमा मनःस्थितिर्भवति । मुरलीरवस्तु तेषां मनांसि चञ्चलानि विदधाति--

मम खेलति मदचेतसि मधुराधरामृतम्--१-१८

करुणासागरः कृष्णः कविना स्वयं प्रकटरूपेण दृष्टो न वा ? कोऽयं जानाति । किन्तु कवेः कल्पनाभूमौ तस्याकृतिरवश्यमेव आसीत् । स आकांक्षति यत् तस्येष्टः स्वयमेव तं पश्येत्—

लीलायताभ्यां रसशीतलाभ्यां
नीलारुणाभ्यां नयनाम्बुजाभ्यां ।
आलोकयेतदद्भुतविभ्रमाभ्यां
बालः कदा कारुणिकः किशोरः ? ॥ १-४५

श्रीकृष्ण कर्णामृते श्रीकृष्णस्य बालयुवारूपयोः वर्णनम् सम्यक् रीत्या प्राप्यते । श्रीकृष्णस्य बालचरितं माधुर्येण चापल्येन संवलितम् । अयमेव चञ्चलस्वभावः कृष्णस्यालङ्कारः । यस्य विविधाः लीलाः हठात् मनांसि आवर्जयन्ति--

माधुर्यादपि मधुरं
मन्मथता तस्य किमपि कैशोरम् ।

चापल्यादपि चपलं

चेतो मम हरति हन्त किं कुर्मः ? ।। १–६५

कविना कृष्णभक्तिराध्यात्मिकदृष्ट्या वर्णिता। इत्थं कृष्णस्याद्भुतसौन्दर्येण गूढज्ञानस्य महत्त्वमपि प्रकाशितं भवति—

उपासतामात्मविदः पुराणाः

परं पुमांसं निहितं गुहायाम् ।। २–५४

श्रीकृष्णकर्णामृते भक्तिप्रवणता पदे-पदे दृश्यते। भक्तेर्विविधाः पक्षा अनेनोद्घाटिताः। भक्तेः सख्य-दास्यादिरूपेण समग्रा नवभेदा यथास्थानं कविना निबद्धाः। समग्रस्य बालभावस्य योजने कृतिकारः साफल्यं भजते। समस्ता लीला रोमाञ्चयुक्ता रस प्रवणाच वर्तन्ते काव्येऽस्मिन् ललितभावनायाः यादृशं हृदयावर्जकं वर्णनं विद्यते तादृशं विधानं दुर्लभमन्यत्र। अस्य रसानुगुणतावरेण्या—

चिकुरं बहुलं विरलं मधुरं

मृदुलं वचनं विपुलं नयनम्।

अधरं मधुरं वदनं ललितं

चपलं चरितं नु कदाऽनुभवे ।। १–६१

इत्थं सरस पद-भाव–वाहिनी कृष्णलीलाशुकस्येयं कृतिः कृष्णभक्तिकाव्येष्वन्यतमा। मुक्तककाव्यपरम्परायां श्रीकृष्णकर्णानन्दस्य काव्यस्य उत्कर्षः स्पृहणीयः।

# संस्कृतप्रगतौ अन्तरायास्तेषां निराकरणं च

अध्यापकः श्रीलक्ष्मीधरद्विवेदी

सम्पादकः संस्कृतपरिषदः, बलाङ्गीरस्थः

अतीतेष्वपि द्वात्रिंशत् वर्षेषु भारतस्वाधीनतायां इदानींयावत् भारत-भारती न स्वकीयमुपयुक्तमासनं प्राप्तवती तत्कारणत्वेन केचित्कालं, एके शासनम्, अपरे ब्राह्मणान्, अन्ये पण्डितान् वा दोषिणः कुर्वन्ति। वस्तुतः "अधिष्ठानं तथा कर्त्ता करणञ्च पृथग्विधं विविधाश्च पृथक् चेष्टा दैवञ्चैवात्र पञ्चमम्" इति भगवदुक्तदिशा संकृताधोगत्यै समेषां हेतुता विद्यते।

निर्दुष्टं बीजं भूमि-जलोत्ताप-वायुभिः प्ररोहति न तु कीटदष्टम्। निर्दुष्टमपिच बीजं भूमि–जलोत्ताप–वायुषु एकतमस्याभावेन प्ररोढुं न प्रभवति ध्रुवं, तथापि रोहणाय बीजं यथा उपादानकारणम् भवति तथैव संस्कृतज्ञा विद्वांस एवं संस्कृतस्योन्नत्यै अवनत्यै वा हेतवो भवन्ति मुख्यतया इति निश्चप्रचम्।

काश्चिदङ्गुलिगण्यान् विहाय शास्त्र्याचार्योपाधिमण्डिता अपि पण्डिताः संस्कृतेन वक्तुं लिखितुं वा शुद्धभावेन दश पङ्क्तीः न प्रभवन्ति। येषां संख्या प्रतिशतं ९०।९५ वा स्युः। नेयं स्थितिः केवलनामुत्कलानाम्। स्मरामि, द्वादशेभ्यः वर्षेभ्यः पूर्वं ग्रीष्मावकाशे वाराणसेय-संस्कृत-विश्वविद्यालयंप्रति गतवता मया संस्कृतेन पृष्टा अपि च्छात्रा हिन्दया एवोत्तरमयच्छन्; यद्यपि ते साहित्ये व्याकरणे वेदान्ते च आचार्योपाधियुताः।

कंवा ब्रूमः ? चिन्तनेन महद्दुःखमुत्पद्यते चेतसि। दैनिकसंस्कृतपत्रिकायां सुधर्मायां "An Appeal"

"you too can contribute ! It is easy !!" 'For the attention of Subscribers' इत्यादयो लेखाः सम्पादकस्य निस्सरति । न पुनः "निवेदनमेकम्" "अनुनयो" वा "भवानपि प्रभवति सहायकोऽनायासेन" "ग्राहकाणामवगत्यै अवधानाय वा" ।

वाराणसीतः प्रकाशिते गाण्डीवे "आवश्यकता है" इत्यादीनि निस्सराति । न तु "प्रयोजनम्," संस्कृतविश्वविद्यालयोऽपि स्वविज्ञापनानि हिन्द्यां प्रकाशयति ! वणिजां वृत्तं भिन्नम् ! हन्त ! कुलटायाः पातिव्रत्योपदेशवत् गोघ्नस्य गोसेवोपदेशवत् ईदृशां पत्रिकाणां विश्वविद्यालयानां वा कः प्रभाव आपतेत् ?

पण्डितानां कथा त्याज्या । एतदप्रियमपि सत्यम् । "मा ब्रूयात्सत्यमप्रियम्" इतिमानकं वचनं पालयितुं न शक्यते । यथार्थपण्डितानां संख्या अतीव विरला । भ्रूकुंसा यथा स्त्रिय इव भावं हावं प्रदर्शयन्तोऽपि न प्रजननसमर्थाः क्लीवत्वाभावात् तथा वेशभूषया उपाधिना वा पण्डिता अपि बहवः संस्कृतप्रगतौ पराङ्मुखाः पण्डित्याभावात् । अन्येऽपि केचित् मत्कुणा यथा शरीरात् रक्तं चूषित्वा परिपुष्टा भवन्ति न शरीरस्य कञ्चिदुपकारं कुर्वन्ति तथैते संस्कृतेन जीवन्तोऽपि संस्कृतं प्रति कर्त्तव्यं दायित्वं वा स्वप्नेऽपि न स्मरन्ति । स्वसन्तानान् न पाठयन्ति संस्कृतम् । एषां गृहेषु आंग्ल्याः प्रादेशिक-भाषाया वा पत्रिकाः क्रीयन्ते न तु संस्कृतस्य ।

पण्डितम्मन्याः केचित् स्ववैशिष्ट्यं प्रतिपिपादयिषवः पत्र सङ्केतं आङ्ग्ल्या लिखन्ति । कदाचित्कतयाऽशुद्धाऽपि आंग्लोभाषा एषां मुखान्निःसरति । हाधिक् । स्वर्गतलक्ष्मीकान्तचक्रदेव—पण्डितगुलामदस्तगीर कपिलदेवशर्म—वासुदेवद्विवेदिजगन्नाथशास्त्रि तैलङ्गावाइव यदि साम्प्रतिकपण्डितेषु प्रतिशतं पञ्चाशत् स्युः तर्हि नूनं संस्कृतस्य स्थितिर्भिन्ना स्यात् ।

सामान्यशिक्षायां यत्संस्कृतमध्याप्यते तेन संस्कृतविकाशस्य सम्भावना कार्त्स्न्येन पराहता । आंग्ल्या हिन्द्या वोत्तराणि लिखन्ति छात्राः । P-h. D., D. Litt इत्यादि विषयकशोधसन्दर्भाः प्राय आंग्ल्या लिख्यन्ते । डॉ० श्रीलडुकेश्वरशतपथिनां "संस्कृतवर्णानां स्वरूपं समुत्पत्तिश्च' इत्येकं शोधसन्दर्भं विना न कोऽपि मुद्रितः संस्कृतभाषामयः शोधसन्दर्भो मे दृष्टिपथमागतः । एतदर्थं नूनं ते सर्वथा धन्यवादार्हाः ।

सरल-संस्कृत-प्रचाराय भारतीयविद्याभवनं संस्कृतपत्रस्योत्तरं हिन्द्या ददाति । नहि क्वापि मनस्येकं वचस्येकं कर्मण्येकं परिलक्ष्यते ।

संस्कृतप्रगतौ महानन्तरायो भवति पाठ्ययोजना । व्याकरणस्य नियमान् सरल-संस्कृतेन गद्याकारेण विलिख्य छात्राः पाठ्याः । सूत्राणामुपयोग उच्चाध्ययनस्तरे भवतु । शब्द-धातूनां साधनविधिरस्तु केवलमेव व्याकरण विपठिषूणांकृते । साहित्य-न्यायादिच्छात्राणां कृते नैतः प्रयोजनं किमपि । मूलत एव प्रौढं पाण्डित्यं स्रष्टुं लघुसिद्धान्तकौमुदीप्रमुखा ग्रन्था विहिताः । तान्छात्रा बोद्धुमक्षमा रटित्वा वा येन केनाप्युपायेन समुत्तीर्णा विद्याशून्यभट्टाचार्या भवन्ति ।

प्रथमतो धनागमस्य प्रशस्तोपायाभावात् मेधाविनो बुद्धिमन्तश्च छात्राः सम्पन्न-परिवाराणां नास्यां दिशि पदं ददति । प्रायशः 'सामान्यविद्यालयेषु पठितुमक्षमा दीनपरिवार-सन्तानाः संस्कृतं प्रति आयान्ति; तदुपरि अर्द्धसहस्रात् सहस्रात् वा वर्षेभ्यः पूर्वं संक्षिप्तशैल्या विरचितत्वात् कठिना ग्रन्थाः । एतावता को वा परिणामो भवतु ?

पाठ्यग्रन्थेषु संस्कृतेन लिखिता ऐतिहासिक-भौगोलिक वैज्ञानिकाद्याधुनिक विषयाणां समावेशो भवेत् येन छात्राः सामान्यविद्यालयच्छात्रेभ्यो न्यूना न स्युः । आधुनिकलेखकैः लिखिता ग्रन्थाः पाठ्येषु भवेयुः केवलमेव कालिदास-बाण-

मुद्रादीनां ग्रन्था न स्युः। मध्ये मध्ये पाठ्यानां परिवर्त्तनं भवेत्।

पण्डिताः पत्रव्यवहारं परस्परमालापञ्च संकृतेनैव कुर्युः। विवाहादिनिमन्त्रणपत्राणि संस्कृतेनैव मुद्रापणीयानि। वार्धाया हिन्दीप्रचारवत् संस्कृत-प्रचार-परीक्षा अपि प्रवर्त्तनीयाः। येन सामान्या अपि भाषां शिक्षितुमवसरं प्राप्नुयुः। संस्कृत-पत्रिकासु लेखा विज्ञापनादीनि च संस्कृतेनैव भवेयुः। सं. विद्यालयेषु पाठ्यविषयान् संस्कृतेनैव छात्रा बोधनीयाः। नितान्तप्रयोजनं विना सं. विद्यालयपरिसरे छात्राः पण्डिताश्च संस्कृतं विना नान्यां भाषां प्रयुञ्जीरन्।

एवं कृते सति संस्कृतप्रगतिरचिरेणैव ध्रुवा स्यादिति शम्।

# महाकवि कालिदासस्य काव्येषु संस्कार वर्णनम्

डाँ रामाशीष पाण्डेयः, संस्कृत विभागाध्यक्षः
मारवाड़ी महाविद्यालयः, राँची

सम् + कृ + घञ् प्रत्यये कृते निष्पन्नः संस्कार शब्द शुद्धि वासनाप्रतियत्नानुभवमानसकर्म – गुणविशेषप्रभृति अर्थानभिव्यनक्ति [1] जैमिनि-सूत्रे संस्कार-शब्दस्य प्रयोगः यागादौ शारीरिकमानसिक शुद्ध्यर्थञ्च दृश्यते [2] शाबरभाष्ये- 'संस्कारो नाम स भवति यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य' [3]। तन्त्रवार्तिके तु–योग्यतां चादधानाः क्रियाः संस्कार इत्युच्यन्ते [4]। वेदान्त–सूत्रस्य शाङ्करभाष्ये- 'संस्कारो हि नाम गुणाधानेन वा स्याद् दोषापनयनेन वा' [5]। वीर मित्रोदये संस्कारो द्विधा वर्णितः 'शरीर शुद्धये जातकर्मादि संस्काराः अदृष्टफलावाप्तये उपनयनादि संस्कारा विद्यन्ते। तत्र प्राप्यते यत्—"एते गर्भाधानादयः संस्काराः शरीरं संस्कुर्वन्तः सर्वेषु अदृष्टार्थेषु कर्मसु योग्यतातिशयं कुर्वन्ति। फलातिशयो योग्यतातिशयश्च। [6] कुमार–संभव महाकाव्यस्य प्रसिद्धटीकाकारेण मल्लिनाथेन संस्कार–शब्दस्य तात्पर्यं शुद्धिरेव दर्शिता—

"प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी, तया स पूतश्च विभूषितश्च

॥ कु० १।२८ इत्यत्र संस्कारवत्येवगिरा इत्यस्य व्याख्यायां मल्लिनाथः प्रतिपादयति यत् संस्कारो व्याकरण–जन्या शुद्धिस्तद्वत्या गिरा वाचा इति। एवमेव रघुवंश महाकाव्यस्य ७।९०, १५।७६ श्लोकयोरपि संस्कार शब्दः शुद्धताया अर्थमादधाति। अनेन वर्णनेन स्पष्टं प्रतीयते यत् शारीरिक मानसिक शुद्धचर्थं प्रवर्तितः संस्कार शब्दो भारतीय संस्कृतौ नितरां प्रामुख्यमादधाति। मनुस्मृतावपि–

१—हलायुधः—६८० पृष्ठे
२—जैमिनि सू०–३।८।३, ६।१।३५, ६।३,२५ १०।२।४६
३—शाबर भा०–६६०
४—तन्त्रवार्तिके–१०७८ पृष्ठे
५—वेदान्त सू०–शा०–भा०–१।१।४
६—धर्मशास्त्र का इतिहास–६। पृ० १६१

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव हि ॥[1] इति प्राप्यते । भारतीय संस्कृतौ भारतीयानां जीवनं विशेषतो वैदिकमार्गावलम्बिनां जीवनं संस्कारैः संस्कृतं भवति । विद्यते च महाकविना कालिदासेनाऽपि स्वकीये काव्ये संस्कार शब्दस्य प्रयोगः संस्कारार्थे कृतः यथा—

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
संचस्कारोभय-प्रीत्या मैथिलेयौ यथाविधि ॥
रघु० १५।३१

अत्र प्राप्यते यत् राज्ञः दशरथस्य जनकस्य च सखा मन्त्रद्रष्टा बाल्मीकिः उभयोः प्रीत्या सीतापुत्रयोः जातकर्मादि संस्कारं कृतवान् । संस्कारैः संस्कृतो जनः तेजसायुक्तः अलौकिक प्रभां कान्तिञ्च बिभर्ति । अभिज्ञानशाकुन्तल नाटके संस्कारस्य फलं वर्णितमस्ति—

प्रत्यादिष्ट-विशेषमण्डनविधिर्वाम-प्रकोष्ठार्पितं,
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरण प्रतान्तनयनस्तेजोगुणादात्मनः,
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६।६

अत्र प्राप्यते यत् संस्कारोल्लिखितः क्षीणोऽपि मणिः कान्तपूर्णः दृश्यते । एवमेव रघुवंश महाकाव्ये प्राप्यते यत् संस्कारयुक्ते सति रघुः परमां शोभां धारयामास—
"स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते । दिलीप सूनुर्मणिराकरोद्भवः प्रयुक्त संस्कार इवाधिकं बभौ ॥

एवमेव कुमार संभव महाकाव्यस्य १।२८, ७।६० रघुवंश महाकाव्यस्य १०।७८, १२।५६, १४।७५, १५।७६ श्लोकेषु संस्कार शब्दस्योल्लेखो वर्तते ।

## संस्कार संख्या निरूपणम्—

धर्मशास्त्रेषु संस्कार सख्या निरूपिता वैविध्येनोपवर्णिताः सन्ति । गौतमधर्मसूत्रे चत्वारिंशत् संस्काराः वर्णिता सन्ति[2] तेषु चतुर्दशब्रह्मसंस्कारा षड्विंशति च च दैवसंस्काराः सन्ति । आंगिरस प्रभृतयो धर्मशास्त्रकारा पञ्चविंशतिसंस्कारान् स्वीकुर्वन्ति । व्यासस्मृतौ षोडशमुख्यसंस्कारा विद्यन्ते । संस्कारभास्करेऽपि षोडश संस्कारा एव उल्लिखिता सन्ति । यथा—

"गर्भाधानमतश्च पुंसवनकं सीमन्त जाताभिधे
नामाख्यं सहनिष्क्रमेण च तथाऽन्नप्राशनं कर्म च ।
चूड़ाख्यो व्रतबन्धकोऽप्यथ चतुर्वेदव्रतानां पुनः
केशान्तः सविसर्गकः परिणयः स्यात् षोडशी कर्मणाम् ॥

## कालिदासस्य काव्येषु वर्णिताः संस्काराः—

महाकविकालिदासस्य काव्येषु गर्भाधान पुंसवनसीमन्तोन्नयन जातकर्म, नामकरण निष्क्रमणान्नप्राशन चूड़ाकरणोपनयन केशान्तविवाहादि संस्काराः वर्णिताः सन्ति ।

## गर्भाधान संस्कारः—

गर्भः सन्धार्यते येन कर्मणा तद् गर्भाधानमित्यनुगतार्थं कर्मनामधेयम् ।

संस्कारेषु प्रथमोऽयं संस्कारः निषेक शब्देनाप्याख्यायते । मनुस्मृतौ तु—निषेकादिश्मशानान्तो[3] इति वर्णनेन स्पष्टं प्रतीयते निषेक संस्कारः । याज्ञवल्क्य प्रभृतयः शास्त्रकाराश्चापि गर्भाधानसंस्कारं निषेक शब्देन सूचयन्ति[4] । विवाहस्य चतुर्थेरात्रौ गर्भाधानसंस्कारः कर्तव्यः इति सूत्र ग्रन्थेषु प्राप्यते ।[5] प्रतीयते यत् पुरा विवाह काले कन्या गर्भाधान योग्या एव चतुर्थरात्रौ निषेक-संस्कारयुक्ता

१—मनुस्मृतौ—२।१६६
२—पूर्वमीमांसा—१।४।२,
३—मनु०—२।१६।२६
४—याज्ञ०—२।१०
५—शांख्यायन गृह्यसूत्रे

न्तितम। अष्टवर्षा भवेद्गौरी नव वर्षा तु रोहिणी, वर्षा भवेत् कन्या ततः ऊर्ध्वं रजस्वला। इति मनुस्मृतौ क्तेन वचनेन गर्भाधानस्यौचित्यम्। न तु तद्व्यतिरिक्ताम्। अतो विवाहानन्तर कस्मिन्नपि शुभे समये गर्भाधान यायाः गर्भाधानसंस्कारस्य वर्णनं कृतम्। रघुवंश महाव्ये प्राप्यते यत्--

अथ नयन-समुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिवतेजो वह्निनिष्ठ्यूतमैशम्।
नरपति-कुलभूत्यैगर्भमाधत्त राज्ञी
गुरुभिरभिनिविष्टं लोकपालानुभावैः॥

अत्र गर्भमाधत्त राज्ञी इति विहितम्। आधत्त-(२।७५ त्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते। तथा मन्त्रे च दृश्यते-यं पृथिवी मह्युत्ताना गर्भमादधे। एवं त्वं गर्भमाधेहि मे मासि सूतवे॥ इत्याश्वलायनानां सीमन्त मन्त्रे स्त्रीपारधारणआधान शब्दप्रयोगदर्शनादिति सञ्जीविन्याम्। र्भाधानसंस्कारार्थं निषेक[1] शब्दस्य प्रयोगः कालिदासेपि कृतः--

"तस्मै हिमाद्रेः प्रयतां तनूजां।
यतात्मने रोचयितुं यतस्व।
योषित्सु तद्वीर्य-निषेकभूमिः सैव
क्षमेत्यात्मभुवोपदिष्टम्॥ (कुमा० ३।१६)

अनेन गर्भाधानसंस्कारस्य वर्णनं महाकवि कालिदासस्य व्येषु स्पष्टमेव। यद्यपि गर्भाधानससमय संकेतो पूर्णतया गृह्यते तथापि विवाहानन्तरमेव गर्भाधान-संस्कारः स्त्रानुमोदितः अत्रापि दृश्यते।

निषिक्तो यत्प्रयोगेण गर्भः सन्धार्यते स्त्रिया।
तद्गर्भालम्बनं नाम, कर्म प्रोक्तं मनीषिभिः॥

सं० प्र० पृ० १४१

पुंसवनादि संस्कारः—

संस्कारेषु गर्भाधानसंस्कारानन्तरं द्वितीयोऽयं पुंसवन-संस्कारः। पूमान्सूयतेऽनेनेति पुंसवनमिति व्युत्पत्या पुत्रोत्पत्यर्थमेव संस्कारोऽयं विहितः[2] पुंसवन संस्कारः द्वितीये तृतीये वा मासि कर्त्तव्यः इति प्राप्यते।[3] (क) गर्भ संस्कारोऽयं विहिते समये विधीयते। रघुवंश महाकाव्यानुसारं प्राप्यते यत् राजा दिलीपः स्ववैभवानुसारं स्वप्रियानुरागनुकूलं स्वीयालौकिक-सन्तोषानुरूपञ्च पुंसवनादि गर्भ-संस्कारान् कृतवान्—

"प्रियानुरागस्य मनः समुन्नते-
भुजार्जितानां च दिगन्त-सम्पदाम्।
यथाक्रमं पुंसवनादिकाः क्रिया
...ीरः सदृशीर्व्यधत्त सः॥" (रघु० ३।१०)

अभिज्ञा... ऽपि पुंसवनसंस्कारस्य वर्णनं यथा—

"देव इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निवृत्त-पुंसवना जायाऽस्य श्रूयते।" (अंक-६ पृ० ११३)

सीमन्तोन्नयन संस्कारः--

पुंसवनानन्तरं क्रमप्राप्तं सीमन्तोन्नयनं गर्भसंस्कारकं कर्म कर्त्तव्यमिति प्रथमेगर्भमासि षष्ठे अष्टमे वां विहितम्। सीमन्तशब्दः केशवेशे प्रसिद्धः सीमन्तोन्नयनसंस्कारे गर्भिण्याः सीमन्तस्योन्नयनं भवति यथा—विहित कर्मणि[4]। महाकविकालिदासेन रघुवंश महाकाव्ये पुंसवनादिका क्रिया (३।१०) इति कथयता सीमन्तोन्नयन संस्कारः संकेतितः। मल्लिनाथेनापि संजीविन्यां प्रकटितं यत्—

"आदि शब्देनानवलोभनसीमन्तोन्नयने गृह्येते।'

जातकर्म संस्कारः—

जातस्य कर्म इति व्युत्पत्या जातकर्म-संस्कारः नवजातस्य शिशोर्जननानन्तरं प्रथमः संस्कारः। पारस्कर-

१—कुमा० २।६०

२—पुमान् प्रसूयते येन तत्पुंसवनमीरितम्—सं० प्रका० पृष्ठ—१६७ (शौनकवचनम्)

३—(क) आश्व० गृ० सू० १।१३, संस्कार मयूखः

४—सीमन्तः उन्नीयते यस्मिन् कर्मणि तत् सीमन्तोन्नयनम् इति कर्मनामधेयम्—सं० प्र० पृ० १७२

गृह्यसूत्रे प्राप्यते यत् प्रसवकालादारभ्य जातस्यकर्म अत्र विहितम्। [1]प्रसवकाले अभ्युक्षणं ततः अवरापतनमिति सोष्यन्ती कर्म। जात कर्म तु द्विधा विभक्तम्—मेधाजनन-मायुष्यकरणञ्च। महाकवि कालिदासस्य काव्येषु जातकर्म संस्कारस्य वर्णनमतिशयेन प्राप्यते। रघुवंशमहाकाव्या-नुसारं दिलीपपुत्रः स्वतस्तेजस्वी सन्नपि महर्षिणा-वशिष्ठेन जातकर्म संस्कारे विहिते सतिअतीव शोभामाप—

"स जातकर्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते।
दिलीप—सूनुर्मणिराकरोद्भवः
प्रयुक्त संस्कार इवाधिकं बभौ॥

"सखा दशरथस्यापि, जनकस्य च सखा मन्त्रकृत्।
संचस्कारोभय-प्रीत्या मैथिलेयौ यथाविधि॥
(रघु० १५।३१)

अभिज्ञान शाकुन्तले मारीचः कथयति—'वत्स' कच्चि-दभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठित जातकर्मा पुत्र एष शाकुन्तलेयः—(अं० ४ पृ० १३८) तत्रैव राजा—"भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे"—(अभि० अं० ४ पृ० १३६) विक्रमोर्वशीये च तापसी कथयति—"शृणोतु महाराजः। एष दीर्घायुर्जात मात्र एवोर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः। यत्क्षत्रिय-कुमारस्य जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेष-मनुष्ठितम्। गृहीतविद्यो धनुर्वेदेऽभिविनीतः।
(विक्र० अं०५।पृ०२३६)

नामकरणसंस्कारः—

व्यवहार निर्वाहार्थं नामकरणमावश्यकमेव सर्वस्यापि वस्तुनः[2]। प्रसवदिनमारभ्य दशम्यां सूतिकागृहादुत्थाय पिता अपत्यस्य नामधेयं करोति। मल्लिनाथस्तु—'अशौचे तु व्यतिक्रान्ते नाम कर्म विधीयते' इति शंख वचनं संजीविन्यां प्रस्तौति[3] मनुस्मृतौ तु—'नामधेयं दशमे द्वादशे वा दिने नामकरण संस्कारः कार्यः। महाकविकालिदासस्य काव्ये नामकरणसंस्कारस्योल्लेखो यथा—रघुवंश महाकाव्या-नुसारं ज्ञायते यत् रघोः पत्नी ब्राह्मे मुहूर्ते कार्तिकेयसदृशं पुत्रं जनयामास। रघुरपि तं पुत्रं ब्राह्ममुहूर्तोत्पन्नत्वात् अजं नाम चकार—

'ब्राह्मे मुहूर्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम्।
अतः पिता ब्रह्मण एव नाम्ना
तमात्मजन्मानमजं चकार॥'(५।३६)

पुनश्च रघुवंश महाकाव्ये एव कुशलवयोर्नामकरणे—
"स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया।
कविः कुशलवावेव चकार किल नामतः॥ १५।३२

नाम्नः आधारवर्णने वृहद्देवतायां प्राप्यते यत्—
"निवासात्कर्मणो रूपात् मङ्गलाद्वाच आशिषः
यदृच्छयोपवसनात् तथामुष्यायणाच्च यत्॥(१।२५)

बोधायन गृह्यसूत्रानुसारं नामकरणे ऋषि देवतावाचक शब्दाः प्रयोज्या इति प्राप्यते।[4] नाम्नः सार्थकत्वपि व्याख्यातव्यं नामकरणे। रघुवंशमहाकाव्ये रघोः नामकरणे नाम्नः सार्थकत्वं द्रष्टव्यम्—

श्रुतस्य यायादयमन्तमर्भकस्तथा
परेषां युधि चेति पार्थिवः
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार
नाम्ना रघुमात्मसंभवम्॥ (३।२१)

१—पार० गृ० सू०-१।१६
२—नामाखिलस्य व्यवहारहेतुः, शुभावहं कर्मसु भाग्यहेतुः नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म॥ सं० प्र० पृ० २४१
३—रघु० ३।२१ (द्र०)
४—मनु० ३।३०

रघुवंशे एव रामस्य नामकरणे—

राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत् प्रथम मङ्गलम् ॥"-(१०।६७)

इति । पुनश्च अभिज्ञानशाकुन्तले भरणात् भरतः सर्वदमनात् सर्वदमनः इति प्राप्यते—

रथेनानुद्घातास्तिमितगतिना तीर्णजलधिः,
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥७।३३

यद्यपि गुणानुप्राणितं कर्मणानुप्राणितं नाम कालिदासस्य पात्रेषु प्रायेण दृश्यते तथापि—अनेन प्रतीयते यत् कालिदाससमयेऽपि नामकरणसंस्कारः यथा विधि यथासमये सम्पाद्यतेस्म । पुनश्च कल्पसूत्रानुमोदितं नाम जातस्य कृते विहितमासीत् ।

निष्क्रमणान्नप्राशनसंस्कारौ—

अथ निष्क्रमणं नाम गृहात् प्रथमनिर्गमः
अकृतायां क्रियायां स्यादायुः श्रीनाशनं शिशोः ॥

इति वृहस्पतिः[1]

कुमारस्य जननाच्चतुर्थे मासि निष्क्रमणिका गृहाद्बहिर्नयनं[2] कर्त्तव्यम्—"चतुर्थेमासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहादिति मनुस्मृतौ ।[3] एवमेव अन्नस्य प्राशनं यस्मिन्कर्मणितदित्यन्नप्राशनसंस्कारोऽपि षष्ठे मासि कर्त्तव्यः इति मनुस्मृतौ प्राप्यते ।[4] महाकविना कालिदासेन जातकर्मादिविधानं—( विक्र० अं० ५ पृ० २३६ ) वर्णयता आदिपदेन निष्क्रमणान्नप्राशनादि संस्काराणां वर्णमं संकेतितम् । महामहोपाध्यायेन मल्लिनाथेनापि प्रतिपादितम् यत्—जातकर्मादयः शब्दाः निष्क्रमणान्नप्राशनसंस्कारान् एव सूचयन्ति ।

चूड़ा कर्म संस्कारः—

चूड़ा शिखा क्रियते स्थाप्यते यस्मिन्कर्मणि तच्चूड़ाकरणम् । अतः चूड़ाकरणे शिखा स्थापनस्य व्यवस्था क्रियते[5] । चूड़ाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुति चोदनात् ॥ इति मनुस्मृतौ ।[6] आश्वलायन गृह्यसूत्रे—तृतीये वर्षे चूड़ाकरणं यथाकुलं कार्यमिति प्राप्यते । चूड़ाकरणस्योपयोगित्वमपि वशिष्ठस्मृतौ वर्णितम्—

सर्वेषामेव वर्णानां चूड़ाकर्म विधिस्मृतः
केशमूलं पिता ज्ञेयः केशाग्रं जननी तथा ॥
चौलेनैव यशोवृद्धिः चौलेनैवायुषः मतः
तस्मात् चौलं प्रयत्नेन कारयेद्बुद्धिमान्नरः ॥[7]

चूड़ाकरणसमयनिरूपणे तत्रैव—

तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतोहितम्
चौलं शिशूनां यत्नेन स्वगृह्योक्तं विधानतः ।
आधानतो जन्मतो वा सप्तमेऽब्देऽपि कारयेत् ॥[7]

महाकवि कालिदासस्य काव्येषु चूड़ाकरण संस्कारस्य वर्णनं प्राप्यते रघुवंश महाकाव्ये लभ्यते यत्-निष्पन्न चूड़ाकर्मा रघुः मन्त्रिपुत्रैः सह लिपिशिक्षणेन समस्तवाङ्मयं ज्ञातवान्—

स वृत्तचूलश्चल—काकपक्षकैरमात्यपुत्रैः
सवयोभिरन्वितः
लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् (३।२८

१—बौधा०—२।१।२८।२०
२—सं० र० मा० पृ— ८८६
३—मनु० २।३४
४—षष्ठेऽन्नप्राशनं मासि यथेष्टं मङ्गलं कुले—मनु० २।३४
५—द्र०-पारस्कर गृह्यसूत्रस्य हरिहरभाष्यम्-२१
६—२।३५
७— पञ्चरत्नविवाह पद्धतौ प्रक० ३। पृ० ९०

अत्रमल्लिनाथेन व्याख्यातम्—"चूड़ाकार्या द्विजातीनां सर्वेषामेव धर्मतः। प्रथमेऽब्दे तृतीये वा कर्त्तव्या श्रुति चोदनादिति मनुस्मरणात् तृतीये वर्षे वृत्तचूलो निष्पन्न चूड़ाकर्मा सन् स रघु (प्राप्ते तु पंचमे वर्षे विद्यारम्भं च कारयेत् इति वचनात् पंचमें वर्षे चलकाक–पक्षकैश्चलशिखण्डकैरिति। बालानां तु शिखा प्रोक्ता काकाक्ष–शिखण्डकः इति हलायुधः। महाकविना कालिदासेन स्वकाव्येषु अनेकत्र काकपक्ष[1] शिखण्डयोः[2] प्रयोगः कृतः।

उपनयन संस्कारः—

आपस्तम्ब-धर्मसूत्रे—"उपनयनं विद्यार्थस्य श्रुतितस्संस्कारः। विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः। तदर्थं श्रुतिविहितः संस्कारः[3] उपनयनं नाम। उपनयनं नाम येन कर्मणा यस्मिन् वा कर्मणि आचार्येण विद्यार्थं सुमुहूर्ते कुमारस्य स्वसमीपे नयनम्। तच्च संकल्प-प्रभृति सावित्री-व्रत-विसर्गान्त-कर्मसमुदायात्मकम्। मनुस्मृतौ उपनयनसंस्कारकालो यथा—

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम्
गर्भादेकादशे राज्ञां गर्भात्तु द्वादशे विशः॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे
राज्ञोबलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे॥
२।३७.३८

ब्रह्मचर्याश्रमप्रवेशात्पूर्णमुपनयनं कर्तव्यमिति धर्मसूत्रे-सूत्रितम्। रघुवंशमहाकाव्यानुसारं प्राप्यते यत् कृत यज्ञोपवीत संस्कारं रघुं विपश्चितो गुरवः शिक्षितवन्तस्ते च सफल प्रयत्ना अभूवन्—

"यथोपनीतं विधिवद्विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति॥ ३।२९

उपनयनानन्तरमेव ब्रह्मचारिभिः वेदाध्ययनं कर्त्तव्यमिति मूलप्रयोजनमुपनयनस्य। धर्मसूत्रे ब्रह्मचारि-प्रकरणे-

मेखलामजिनं दण्डमुपवीतञ्च सर्वदा।
कटिसूत्रञ्च कौपीनं, ब्रह्मचारी तु धारयेत्॥

कुमारसंभवमहाकाव्ये पञ्चमे सर्गे ब्रह्मचारी वेषधारी शिवः प्रविशति—

"अथाजिनाषाढधरः प्रगल्भवाग्
ज्वलन्निव ब्रह्ममयेन तेजसा
विवेश कश्चिज्जटिलः तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥५।३०

केशान्त संस्कारः—

केशस्य श्मश्रुप्रभृतेः अन्तः यत्र तत् कर्मेति अन्वर्थमिदमपि नामधेयं संस्कारस्य। केशानां श्मश्रुकूर्चयोश्चात्र वपनं कर्त्तव्यं भवति।[4]

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥

इति मनुस्मृतौ प्राप्यते। वेदाध्ययनान्तरं विवाहात् पूर्वं संस्कारोऽयं विहितः ब्रह्मचर्याश्रमान्ते गृहस्थाश्रम-

१—'काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते'— रघु० ११।१ "तौ प्रणाम चलकाकपक्षकौ भ्रातरावभृथाप्लुतो मुनिः" रघु. ११.३१ एवं—रघु० ११।४२, १८।४३ (द्र०)

२—"तौ पितुर्नयनजेन वारिणा किञ्चिदुक्षित-शिखण्डकावुभौ"—रघु० ११।५ 'को नु खल्वेष स वाणासनः पादपीठे स्वयं महाराजेन संयम्य मान-शिखण्डकस्तिष्ठति।'—विक्र० ५।५०२३८

३—आप० १।९

४—केशश्मश्रिवति च केशान्त —प्रा०गृ०-१।२४।७ प्रतिपत्तौ सर्वान् केशान् वापयति—बौ० गृ०—३।२।२५

प्रवेशात्पूर्वं विहितोऽयं संस्कार महाकवि-कालिदासस्य रघुवंशमहाकाव्ये संकेतरूपेण प्राप्यते--

अथास्य गोदान विधेरनन्तरं
विवाहदीक्षां निरवर्तयद् गुरुः
नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवावभुः ॥ ( ३।३३)

अस्मिन् श्लोके प्रयुक्त गोदानविधिशब्दः मल्लिनाथेन प्रतिपादितः संज्जीविन्याम्–गावो लोमानि केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति व्युत्पत्या गोदानं नाम ब्राह्मणादीनां षोडशादिषु वर्षेषु कर्तव्यं केशान्ताख्यं कर्मोच्यते ।

विवाह संस्कारः—

गृहस्थाश्रमः सर्वोपकारक्षमः आश्रम इति महाकविना कालिदासेन प्रतिपादितम् ।[1](क) मनुस्मृतावपि--यथामातरमासृत्य, सर्वे जीवन्ति जन्तवः । वर्त्तन्ते गृहिणस्तद्वदाश्रित्येतराश्रमाः ॥'' इत्यनेन गृहस्थाश्रमस्य महत्वमतितरां स्पष्टं भवति । गृहस्थाश्रमप्रवेशात्पूर्वं विवाहसंस्कारः विहितः अथवा गृहस्थाश्रमस्य विहितो विवाह संसकारः । वि + वह + घञ् इत्यनेन निष्पन्नः विवाह शब्दः विशिष्टं वहनमिति व्युत्पत्या स्वार्थमावहति । विवाहशब्दस्य पर्यायभूताः दारपरिग्रह पाणिग्रहण करग्रहोपयमपरिणयादयः शब्दाः विद्यन्ते । विवाहसंस्कारस्तु पुत्रोत्पादनार्थं शास्त्रविहितमिति कालिदासेनापि स्वीकृतम् ।[2] पुत्रस्तु पूर्वेषामृण निर्मोक्षकारकः ।[3]

विवाह संस्कारस्य चित्रं रघुवंश महाकाव्ये प्रथमं दर्शनीयम् भोजराजगृहे अग्निकल्पस्तस्य पुरोधा आज्यादिभिः अग्निं हुत्वा अग्निमेव विवाह साक्ष्ये आधाय इन्दुमती अजौ वधूवरौ संगमयांचकार–

"तत्रार्चितो भोजपतेः पुरोधा
हुत्वाग्निमाज्यादिभिरग्निकल्पः ।
तमेव चाधाय विवाहसाक्ष्ये
वधूवरौ संगमयां चकार ॥'(७।२०)

तथा च मालविकाग्निमित्रे विदूषकः कथयति-- 'भो वयस्य' विवाह नेपथ्येन सविशेषं खलु शोभते मालविका" ( माल० अं० ५।प० ३३३ ) । एवमेव कुमारसंभवमहाकाव्यस्य ७।७२ श्लोके विष्टरार्घ्यमधुपर्कप्रदानस्य ७।७६ श्लोके पाणिग्रहणस्य ७।७९ श्लोके प्रदक्षिणायाः ७।८० लाजाहुतिविधानस्य ७।८३ श्लोके प्रतिज्ञा वाक्यस्य ७।८५ श्लोके ध्रुवदर्शनस्य वर्णनं विवाहसंस्कारान्तर्भूतं विद्यते । एवञ्च रघुवंश महाकाव्यस्य ७।२१ श्लोके पाणिग्रहणस्य वर्णनं विद्यते । तथा च रघुवंश महाकाव्यस्य ७।२५,२६ ११।३२, १३।२६ श्लोकेष्वपि विवाहस्य वर्णनमायाति ।

अन्त्येष्टि संस्कारः—

मृत्योरनन्तरं शवसंस्कारः अन्त्येष्टिसंस्कारो नैष्ठिकसंस्कारो वा कथ्यते । धर्मसूत्रानुसारं अन्त्येष्टिक्रियायां वर्णनं महाकविकालिदासस्य काव्येषु प्रथमं दर्शनीयम् । अग्निचिदजः पितुरनग्नि नैष्ठिक विधिं यतिभिः सार्धं विदधे–

---

१—(क) अपि प्रसन्नेन महर्षिणात्वं सम्यग्विनीयानुमतो गृहाय ।
कालोह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥" ( रघु० ५।१० )

२—"त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ॥"
यशसे विजिगीषूणां प्रजायै गृहमेधिणाम् ( रघु० १।६ )

३—" न चोपलेभे पूर्वेषामृण–निर्मोक्षसाधनम् ।
सुताभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥ ( रघु० १०।२ )

अनेन श्लोकेन प्राप्यते यत् योगिनां दहनक्रिया तदा-वर्जिता आसीत् तस्मिन् समये भिक्षोः कलेवरं विले निदध्यादिति विधिः प्रचलितः।[१] शौनकस्योक्तिस्तु तथा चरितार्था आसीत्।

श्रुतदेह विसर्जनः पितुश्चिरमश्रूणि विमुच्य राघवः
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्॥

"सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च
न तस्य दहनं कार्यं नैव पिण्डोदक क्रिया।
निदध्यात्प्रणवेनैव बिले भिक्षोः कलेवरम्।
प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत्॥"

एवमेवाग्निसंस्कारोऽपि महाकवेरस्य काव्येषु वर्णितः। रामलक्ष्मणौ गृध्रराजस्य पितृवदौर्ध्वदैहिकं चक्रतुः—

"तयोस्तस्मिन्नवीभूत पितृव्यापत्तिशोकयोः
पितरीवाग्निसंस्कारात् परा ववृतिरे क्रिया॥
(रघु० १२।८७)

तथा चाग्निवर्णस्याग्निसंस्कारोऽपि रघुवंश महाकाव्यस्य १९।५४ श्लोके वर्णितः। कुमारसंभवमहाकाव्यस्य ४।६ श्लोके चितायाः वर्णनं लभ्यते।

पितृभ्यः श्रद्धया यद्दीयते तत्श्राद्धमिति श्राद्धसंस्कारः प्रजानिःश्रेयसे महत्वमण्डितः[२]। मनुरपि प्रजानां निःश्रेयसे श्राद्धस्योपयोगित्वमुपवर्णयति। रघुवंशमहाकाव्ये श्राद्धसंस्कारः द्रष्टव्यः पितृकार्यकल्पविदजः पितृभक्त्या तदौर्ध्वदैहिकमकरोत्—

अकरोत् स तदौर्ध्वदैहिकं
पितृभक्त्या पितृकार्य कल्पवित्।
नहि तेन पथा तनुत्यजस्तनयावर्जित
पिण्डकाङ्क्षिणः॥ (८।२६)

श्राद्धे पितृभ्यः प्रियवस्तुनः दानमावश्यकमिति रतिः वसन्तं कथयति यत् कामदेवाय वा प्रिया मञ्जरी त्वया श्राद्धे दातव्या—

परलोकविधौ च माधव! स्मरमुद्दिश्य विलोलपल्लवा
निवपेः सहकारमञ्जरीः प्रियचूत प्रसवो हि ते सखा॥
(कुमा० ४।३८)

श्राद्धे जलाञ्जलिदानस्य तिलोदकेन तर्पणस्य च महत्वं प्राप्यते। रतिः माधवं कथयति यत् नौ एक एव सलिलस्य अञ्जलिः दीयताम्—

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ
अविभज्य परत्र तं मया सहितः पास्यति ते स बान्धवः॥
(कुमा० ४।३७)

रघुवंश महाकाव्ये—"अनुपास्यसि बाष्पदूषितं परलोकोपनतं जलांजलिम्" (रघु० ८।६८) इति जलाञ्जलिदानस्य वर्णनमस्ति। अभिज्ञानशाकुन्तले राजा कथयति यत् नः कुले श्रुतिसंभृतानि निवपनानि कः करिष्यति—

"अस्मात् परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि करिष्यतीति।
नूनं प्रसूति-विकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति।६।२५

विदुषा अजेन गुणविशेषां भामिनीमिन्दुमतीमुद्दिश्य दशदिनात् परे महर्द्धयः क्रिया नगरस्योपवने एव अनुष्ठिताः—

अथ तेन दशाहतः परे गुणशेषामपदिश्य भामिनीम्
विदुष। निधयो महर्द्धयः पुर एवोपवने समापिता॥
(रघु० ८।७३

एवमेव रघुवंशमहाकाव्यस्य ८।८६ कुमारसंभवमहाकाव्यस्य ७।३७, ३८ एवमभिज्ञानशाकुन्तलस्य ६।२५ श्लोकेष्वपि श्राद्धो वर्णितः।

निष्कर्षतः कथनमिदं सर्वथा सत्यं प्रतीयते यत् कालिदास समये गृह्यसूत्रधर्मसूत्रस्मृत्यादिभिरनुमोदिताः संस्काराः

१—(द्र०) आश्व० गृ० सू० ४।५।७ (द्र०) ऋ० १०।१५।१४

२—अथैतन्मनुः श्राद्धशब्दं कर्म प्रोवाच।
प्रजा निश्श्रेयसाय च॥ आप० ध० सू० ७।१

लिता आसन् । वैदिक पद्धत्या एव सर्वे संस्काराः सम्पादिते स्म । परं सर्वे संस्काराः स्त्रीणां कृते न विहिताः । नामकरणान्नप्राशन चौलोद्वाहप्रभृति संस्कारा स्त्रीशूद्रादीनां तेऽपि प्रशस्या परम् उपनयन वेदारम्भादि संस्कारा तेषां ते सामान्येन नैव विहिताः । वैदिक कालेऽपि ब्रह्मवादिन्यः स्त्रियः उपनयनसंस्कार युक्ता वेदाध्ययने निरताः आसन् । कुमारसंभवमहाकाव्ये पार्वती तपोनिरता दृश्यते, मौञ्जीं बध्नाति अध्ययनेऽपि प्रशंसार्हा दृश्यते–

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम्
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते॥
कुमा० ५।१६

कल्पसूत्रानुसारं स्त्रीशूद्रादीनां संस्कारेषु लौकिकमन्त्राणां पुराणोक्तानां मन्त्राणां वा प्रयोगः कर्तव्यः न तु वैदिक मन्त्राणाम् स्त्रीणां विवाह काले तु वैदिक मन्त्राणां प्रयोगो विहितः । कुमारसंभव महाकाव्ये प्राप्यते यत् पार्वत्या विवाहः वैदिकपद्धत्या एव सम्पन्नः[1] कालिदासकाले स्त्रीणां श्राद्धसंस्कारोऽपि यथा विहित पद्धत्या सम्पाद्यते स्म । स्वयं विदुषा अनेन इन्दुमत्याः श्राद्धसंस्कारः यथा विहित पद्धत्या कृतः[2] तथा राज्ञा रामेण मातॄणां श्राद्धसंस्कार वैदिक विधिना एव सम्पादितः ।[3] अतः भारतीय संस्कृतेराधारभूताः संस्कारा कालिदासस्य काव्येषु सम्यक्तया वर्णिताः सन्तीति दिक् ।

●

# तन्त्रतत्वे श्रीजगन्नाथः

योगाचार्य्यः पण्डितवरः श्री रमाकान्तः 'करः'

भारतीयसंस्कृतिः हिन्दुसंस्कृतिरेव कथ्यते, वेदः प्रधानधर्मग्रन्थः देवमुखनिःसृतश्च । तन्त्रोद्भवं वेदकालात् प्रागेव । ''तनतर'' इति शब्दस्य अपभ्रंशत्वात् तन्त्रमिति शब्दस्योत्पत्तिसमः। 'त' पुण्यं, 'न'–अव्ययम्, 'त'–अमृतम् 'र' वर्णम् । तन्त्रस्य साधारणार्थः पुण्य–संसारस्य अमृतवर्णसम्बन्धः तथा च तत् सम्बन्धीयतत्वम् तन्त्रतत्वमेव । तन्यते विस्तार्य्यते ज्ञानंमनेनेति तन्त्रम् । वेदात् प्राक् तन्त्रस्योत्पत्तिः इति आङ्गलभाषया केनचित् पाश्चात्यदेशलेखकेन मतं दत्तम्––''Tantra is a Science by which one's knowledge expends or leads to liberation, That Tantra is as old as the Vedas.'' अर्थात् तन्त्र–विज्ञानेन मानवस्य ज्ञानं परित्राणाय धावति, कामिकागमशास्त्रेऽपि तथा सममतमुक्तम्–''तनोति विपुलानर्थान तत्व-मन्त्रसमन्बितान् । त्राणं सा कुरुते यस्मात् तन्त्रमित्यभिधीयते । परमात्मनः परमपुरुषस्य आदिपुरुषस्य वा प्रणोदित–विधानं तन्त्रमित्यभिधीयते । परमात्मनः परमपुरुषस्य आदिपुरुषस्य वा प्रणोदित–विधानं तन्त्रम् । कलियुगे तन्त्रस्य प्रयोगः बहुलतया दृश्यते । तत् प्रमाणं महानिर्वाण–तन्त्रे परिदृष्टम्–''कृते श्रुत्युक्त मार्गः स्यात् त्रेतायां स्मृति–सम्भवः । द्वापरे तु पुराणोक्तः कलावागम–

१–कुमा० ७।७०,–८७ २–रघु० ७।८, ७१, ८।७३
३–रघु० १५।६१

सम्मतः ॥' अर्थात् सत्ययुगे वेदानुसारेण, त्रेतायां स्मृत्यनुसारेण, द्वापरे तु पुराणानुसारेण एवं च कलियुगे तन्त्रोक्त–विध्यनुसारेण क्रिया सम्पाद्यते। कलियुगे बुद्धावतारस्य वृत्तान्तं गीत गोविन्दे वर्णितम् यत् बुद्धावतार एव श्री जगन्नाथः। अतएव कलियुगे तन्त्रस्य जगन्नाथस्य च उभयोः सम्बन्धः वर्त्तते। गीत गोविन्द शास्त्रे वैष्णवागमेषु च दशावतारस्य वर्णनं कृतम्। तथैव दशमहाविद्यानाम् दशावतारः नित्यतन्त्रशास्त्रे वर्णितः—

कृष्णस्तु कालिकादेवी श्रीरामस्तारिणी तथा।
भार्गवः षोडशी विद्या वामनो भुवनेश्वरी ॥
मत्स्यस्तु बंगलादेवी वरदो च्छिन्नमस्तिका।
धूमावती कर्मरूपा नृसिंहों भैरवी स्वयम् ॥
बुद्धरूपा महालक्ष्मी मातंगी कल्किरूपिणी।
एता दशमहाविद्या अवतारा हरेर्दश ॥"

(नृसिंह अत्र स्वयं विष्णुः तथैव जगन्नाथस्तु भैरवः, अतः तन्त्रमतेन कार्तिकमासि शुक्लचतुर्द्दश्यां शुभतिथौ जगन्नाथस्य नृसिंह-वेशः भवति पुरीक्षेत्रे )

अस्मिन् श्लोके बुद्धरूपा महालक्ष्मी अतः बुद्धरूपः जगन्नाथ इति प्रमाणितम्—"महापीठ-निरूपणम्" इति तन्त्रशास्त्रे देवी भागवते च वर्णितम्—"उत्कले नाभिदेशश्च विरजा क्षेत्रमुच्यते। विमला सा महादेवी जगन्नाथस्तु भैरवः।" अस्मिन् श्लोके विमलया सह जगन्नाथस्य सम्बन्धः परिदृश्यते। विमला यदि वा भैरवी जगन्नाथस्तु भैरवः इत्यत्र सिद्धम्। ततः पुरीक्षेत्रे श्रीमन्दिरे जगन्नाथस्य बलभद्रस्य सुदर्शनस्य विमलायाः महालक्ष्म्याः सुभद्रायाश्च महत्त्वमवर्णनीयम्' तन्त्रशास्त्रमते श्रीक्षेत्रे जगन्नाथः भैरवः एवं च विमला भैरवी रूपेण पूजितौ, अत्र विमलायाः पूजनं तन्त्रमते क्रियते। एवं दुर्गाष्टम्यां शुभतिथौ सतर्कतया सार्द्धं मन्दिरं निकषा बल्युत्सर्गं क्रियते। तत्क्षणादेव मन्दिरस्य शोधनं च क्रियते। श्रीजगन्नाथस्य पूजनविधौ अपि तन्त्रस्य प्राधान्यं परिलक्ष्यते।

जगन्नाथस्य प्रसादं विमलार्पणात् परं 'मा' प्रसादः" महाप्रसादः वा भूत्वा आनन्द बाजारे विक्रीण्यते' तन्त्रमते जगन्नाथपीठं श्रीचक्रोपरि स्थापितम्'। केनचित् गवेषकेणोक्तम्—"जगन्नाथस्य सिंहासनं शून्यगर्भः एवं च तत्र त्रिपुरादेव्याः यन्त्रं गोपनीयावस्थायां वर्त्तते।

जगन्नाथस्य गुण-कर्म-उपासनादि सम्बलितं यन्त्रं संयोज्य पटल–कवच–पद्धतयः क्रियन्ते एतदेव जगन्नाथ तन्त्रम्। तान्त्रिकाचार्य्याः मूलाधारचक्रं प्रत्यक्षरूपेण पूजयन्ति। अतएव ते कौलाः। जगन्नाथस्य मन्दिरं परितः उत्कीर्णं नग्नयुगलमूर्त्तयः परिदृश्यन्ते सर्वाअपि ताः कौलप्रथायाः निदर्शनम्। पंचमकारार्च्चना तन्त्रशास्त्रेषु प्रधाना। मद्य-मत्स्य-मेद-महाउर-मैथुनादि पंचमकाराः श्री जगन्नाथपीठेऽपि लोहित-मूर्त्तिकापात्रे घाषाजलं-मद्यं, दीर्घकान्ति विरिपिष्टकं-मत्स्यः, अपर विरपिष्टकं-मेदः, तिन्तुड़िरसेन मूर्छितं रागमूलंरसं–महाउर ( रुधिरं ), नग्नमूर्त्तयश्च—मैथुनम् इति। अत्रापि पंचमकारपूजनं भवति। अतः जगन्नाथः तन्त्रसिद्धः। उड्डीयानपीठरूपेण जगन्नाथपीठः प्रसिद्धम्। तन्त्रदर्शनस्य प्रभावेण अन्यत्र उच्छिष्टरूपेण विवेचितमन्नं अत्रैव कैवल्यरूपेण सर्वैः ग्राह्यम्। अतः कैवल्यस्यापि माहात्म्यम् तन्त्रचूड़ामणि शास्त्रे वर्णितम्—

कैवल्यग्रहणे कोऽपि जातिः अजातिः वा प्रभेदो नास्ति एतद तन्त्रसम्मतम्। कुलार्णवतन्त्रे वर्णितम् "प्रवृत्ते भैरवीचक्रे सर्वे वर्णाः द्विजातयः निवृत्ते भैरवी चक्रे सर्वे वर्णाः पृथक् पृथक्। सर् जान्-उड्रफमहोदयेन तत् सम्बन्धीया वार्त्ता उक्ता—"During the Cakraall eat, drink and worship together, there being no distinction of caste." जगन्नाथः उत्कलदेशस्य तथा भारतवर्षस्य प्रतीकः। अतः तस्य पीठम् प्रधानं तन्त्रशास्त्रेषु बहुशः दृश्यते। तन्त्रशास्त्रेषु तन्त्रपीठस्य शाक्तक्षेत्रस्य वा याः सूचनाः दर्शिताः, तासु श्रीक्षेत्रं पूर्णतः

पीठरूपमिति नूनं प्रमाणितमित्यत्र न सन्देहः। यथा– (कालिका-पुराणे) "ओड्यार्श प्रथमपीठं द्वितीयं जाल शैलकं 'तृतीयं पूर्णपीठं तु कामरूपं चतुर्थकम्।' वृहन्नील-तन्त्रे–"पीठानां परमं पीठं कामरूपं महाफलम्......श्री नीलपर्वते चैव कदम्बं कुंजके तथा।' ज्ञानार्णवतन्त्रे– "महालक्ष्मीमयं पीठं उड्डीयानमतः परम्।" प्रसिद्धं बौद्ध-शास्त्रे तथा बज्रतन्त्रे–"कात्यायनीं जगन्नाथं उड्डीशं च प्रपूजयेत्।

ईदृशमेव अस्माकं बौद्धतन्त्रेषु हिन्दुतन्त्रशास्त्रेषु च बहुस्थाने अपि जगन्नाथपीठस्य प्राधान्यं परिदृश्यते। पुरुषोत्तमक्षेत्रं केवलमपि तन्त्रसाधनायै मूलपीठमिव हिन्दु परम्परायाः रक्षकंचेतिशम्।

●

# कर्ममीमांसा दर्शनम्

भगवत्पूज्यपादाः स्वामिनः ज्ञानानन्द गुरुवर्याः

[ मोक्षपादे ]

प्रसंगाद् यज्ञमहायज्ञफलमभिधीयते —

## प्रकृतिप्रसादो यज्ञमहायज्ञः ॥ ५६ ॥

प्रकृतेः प्रसादो येन स प्रकृतिप्रसादस्तादृशो यज्ञो महायज्ञश्च। यज्ञेन महायज्ञेन च जीवः स्वस्वरूपप्राप्तिकरमुक्तिपदमधिकरोति। प्रकृतिमातुः स्वभावोऽयं यदसौ जीवान् अविद्याराज्यात् पृथक्कुर्वती विद्याराज्यं च प्रापयन्ती स्वस्वरूपमधिगमयति। अतो यज्ञेन महायज्ञेन च प्रकृतिः प्रसीदति। यथा किल राजाज्ञां पालयित्रीषु प्रजासु राजा प्रसन्नो जायते, तथैव प्राकृतिकं नियममनुसृत्य जीवत्सु जीवेषु प्रकृतिमाता सन्तुष्यति। प्राकृतिकनियमानुवर्त्तनेन प्रकृत्याः स्वाभाविकी गतिरक्षुण्णा तिष्ठति। इदमेव प्रकृतिप्रसादस्य कारणमवधेयम्॥ ५६॥

अन्यच्च —

## स प्रकृतिजयः ॥ ५७ ॥

स एव प्रकृत्यनुकूलाचारो यज्ञो महायज्ञो वा प्रकृतिजयः। प्रकृतौ जयः, प्रकृतौ जयो येन वा तादृशः। स मोक्षः प्रकृतिजयः, इदमप्यभिधातुं शक्यते। मुक्तिपदं प्रकृत्यतीतमिति सुविचारनिर्णीतः सिद्धान्तः। अतो मोक्षः प्रकृतिविजयस्य पदम्। यत्र प्रकृतिविलयस्तदेव ब्राह्मणः स्वस्वरूपम्। यदा तत्स्वरूपप्राप्तिरेव मुक्तिश्चेत्तदास्वीकर्तव्यमेव यत् मुक्तिपदं प्रकृत्यतीतम्। मोक्षाधिगमो हि प्रकृतिमातुः प्रसादो जयो वाऽभिधातुं शक्यते॥ ५७॥

विज्ञानमिदं स्पष्टयति—

## परिणामावसानं तदन्तिमफलम् ॥ ५८ ॥

परिणामस्य प्रकृत्याः परिणामस्यावसानः समाप्तिर्यत्र तदेव तदन्तिमं तस्य यज्ञस्य महायज्ञस्य चरमं फलमवधेयम। ब्रह्मणः स्वतन्त्रा ब्रह्मप्रकृतिः स्वीयं गुणत्रयमनुसृत्य यदा कार्यमनुतिष्ठति तदैव तद्गुणानुसारं सृष्टि-स्थितिप्रलयाः सम्भवन्ति। त्रिगुणानुसारपरिणामस्तत्स्वभावः। स हि न त्यक्तुं शक्यते। गुणो गुणिनो न पृथग्भवन्ति। अग्नेर्दाहिका शक्तिरिव त्रिगुणपरिणामो न प्रकृतेः पृथग्भवितुमर्हति। प्रकृतिपरिणामावसान एव मुक्तिपदमुदेति। ब्रह्मणि विलयं गतायाः प्रकृतेः परिणामस्यावसानो जायते। सुतरां प्रकृतिपरिणामावसानमेव यज्ञमहायज्ञफलम्॥ ५८॥

तदनन्तरं किमित्युच्यते—

## तदा स्वरूपविकाशः ॥ ५९ ॥

तदा तस्मिन् समये प्रकृतिपरिणामविलये जाते स्वरू-

पस्य विकाशो जायते । धर्मसाधनेन संस्कारशुद्धिस्तया च क्रियाशुद्धिस्तदन्ते च प्रकृतिविलयः स्वरूपोदयश्च । द्रष्टृदृश्य-सम्बन्धे नष्टे ब्रह्मप्रकृती ब्रह्मणि विलीनायां सत्यां नित्यमुक्तमद्वितीयं स्वरूपमेव शिष्यते । एषैव कैवल्या-वस्था ॥ ५९ ॥

तत्स्वरूपं कीदृशमित्यभिधीयते—

## स सच्चिदानन्दमयः ॥ ६० ॥

स आत्मा सच्चिदानन्दस्वरूपः तत्स्वरूपं सत् नित्य-स्थितिशीलम् । चित् चेतनमयं ज्ञानस्वरूपं वा आनन्दः सर्वानन्दातिशायीत्रितापातीतः । सच्चिदानन्दरूपस्य त्रिभा-वस्य यत्रैकाधारे स्थितिः सैव स्वस्वरूपावस्था । सच्चिदा-नन्दानां पृथक्पृथगवस्थानमेव द्वैतम् । यत्र त्रयाणामप्ये-कत्वसम्बन्धस्त देवाद्वैतं स्वस्वरूपं ब्रह्मपदं वा ॥६०॥

प्रसंगतः शंकां समाधत्ते—

## तस्मिन् प्रकृतिलयः ॥ ६१ ॥

तस्मिन् अद्वैतभावे प्रकृत्या लयो जायते । कस्यामव-स्थायां प्रकृतिलय इतिशंकायाः समाहितये समाधिगम्यं विषयं सुस्पष्टयितुं च सूत्रस्यैतस्याविर्भावः, सत्श्रित आनन्दस्य पृथगनुभूतिरेव द्वैतदशा । सतोभावेन प्रकृतिश्चिदो भावेन पुरुषस्तयोः परस्परसम्बन्धेनानन्दानुभव एव द्वैता-वस्थाप्रपञ्चानुभूतिहेतुः । परन्तु यत्राद्वैतभावे सच्चिदानन्द-भावैकत्वसम्बन्धोदयस्तत्र प्रकृतिरव्यक्ता विलीयते ॥६१॥

एतदभावे किमित्युच्यते—

## परिणतिरन्यथा ॥ ६२ ॥

अन्यथा एतदभावे प्रकृत्या परिणतिरवश्यम्भाविनी, यदि ब्रह्मणि प्रकृतिर्विलीना न स्यात्, यदि स्वस्वरूपे प्रकृतिरव्यक्ता न भवेद् व्यक्तैव तिष्ठेत्, यदि वा द्रष्टृदृश्य-भावो जागरूको भवेत्, तदानीं स्वभावमनुसृत्य प्रकृतिः परिणामिनी भवन्ती तिष्ठति । सद्भावावलम्बनेन प्रकृतिः-चिद्भावावलम्बनेन पुरुषः, आनन्दभावावलम्बनेन च तयोः शृङ्गारो जागर्त्येव । तदानीं सृष्टिप्रवाहः प्रचलति, प्रकृत्या स्त्रीधारा पुरुषेण च पुंधारा, आनन्देन च तयोः पारस्परिकः शृङ्गारो व्यष्टिपिण्डे समष्टिब्रह्माण्डे जायमानोऽनन्तकोटि-पिण्डब्रह्माण्डात्मकं सृष्टिप्रवाहं प्रवाहयन्नेवास्ते ॥ ६२ ॥

प्रसंगात्कर्मविभागः कथ्यते—

## कर्मविभागानन्त्यमनन्तत्वाच्छक्तेः ॥६३॥

शक्तेरनन्तत्वादानन्त्यात्कर्मविभागस्याप्यनन्तत्वं बोध्यम् । कर्मणो विराट्स्वरूपत्वालौकिकत्वख्यापनार्थ-मिदमुच्यते । तथाहि अनन्ता ब्रह्मशक्तयः । अनन्तस्य शक्तिरप्यनन्तैव । शक्तेरानन्त्यात् शक्तिसमुद्भूतकर्मविभाग-स्याप्यानन्त्यं सिद्धमेव । प्रकृतिस्पन्दनतः कर्मसमुत्पत्तिरिति प्रागेव निर्णीतम् । अतः कार्यकारणसम्बन्धेन कर्मविभाग-स्यानन्त्यमवधार्यम् ॥ ६३ ॥

प्रसंगादीश्वरस्येश्वरत्वं प्रतिपाद्यते –

## तस्मात् सर्वज्ञो नेश्वरेतरः ॥ ६४ ॥

तस्मात् कारणात् ईश्वरेतर ईश्वराद्व्यतिरिक्तः कोऽप्यन्यः सर्वज्ञो नास्ति । कर्मविभागानन्त्ये कर्मवैचित्र्यम-प्यनन्तस्वरूपमयमित्यत्र कः सन्देहः ? अत एव वेदशास्त्रेषु कर्मणो दुर्ज्ञेयत्वमुक्तम् । ज्ञानिना सताऽपि मानवेन कर्मणो भूतभविष्यद्वर्त्तमानस्वरूपं नैव ज्ञातुं शक्यते । शास्त्रवेत्ता योगशक्तियुक्तोऽपि मानवः कदाचिद् भूतकालिकं वर्त्तमान-कालिकं च ज्ञानं कर्त्तुं पारयेत्, परन्तु भविष्यतः कालस्य सम्बन्धे पूर्णज्ञानाधिगमो न सम्भवः । अन्यच्च विचारणीय-मेतद् यत् कर्मबीजसंस्कारस्य वासस्थानं चित्ताकाश-चिदाकाशमहाकाशनामकमाकाशत्रयमेव । यदि जीवेन स्वपिण्डज्ञानमेव कर्त्तुं शक्यते, तदा पिण्डव्यापकस्य चिदाकाशस्य, अनन्तकोटिब्रह्माण्डव्यापकस्य सम्बन्धेऽल्पज्ञेन तेन पूर्णं ज्ञानं नैव कर्त्तुं पार्यते । अतोह्येकः प्रकृतिद्रष्टा ईश्वर एव सर्वज्ञो भवितुमर्हति नान्यः ॥ ६४ ॥

[ क्रमशः



# शरद्वर्णनम्

विन्ध्येश्वरी प्रसाद मिश्रः 'विनयः'

( १ )

यमुनातट मञ्जु निकुञ्जघने, घनसाररसावलिते विपिने ।
विपिने नवनीरज गन्धयुते, युत पङ्कजकोषमिलिन्द जने ॥
जनमानसमानिमिमानमुदे, मुदिताधरपानपुटे कमने ।
कमने ननु रासरसे सु विभाति, 'शरत्' सखि ! नैशसरत्पवने ॥

( २ )

कलितकदम्बनिकुरम्बकेलिकुञ्जघने—
पुलिने कलिन्दजायाः लघु लघु सा विभाति ।
ललितवनाली परिवेष्टिते नु वृन्दावने
नव्यामेवशोभामावहन्ती तरसा विभाति ॥
वलितनिरभ्र शुभ्रतारकित तारापथसञ्चारादमन्द—
चन्द्रसारसरसा' विभाति ।
सरति समीरे सखि ! यामुने गभीरे नीरे
धीरे बलवीरे शरदेषा सहसा विभाति ॥

( ३ )

सुतनु ! न सम्प्रति दृश्यते, सरित्पङ्क्तिला काऽपि ।
सापत्यादिव निर्गता गगनाद्घनच्छटाऽपि ॥

( ४ )

"नन्दनन्दनावाहनम्"

( 'बुन्देलखण्डी' स्त्रीलोकध्वनिमाश्रित्य )

वृन्दावने यमुनाकूलकुञ्जे भ्रमरमुखरपुञ्जे, एहि नन्दलाल ।
कुसुमित सुकदम्बे पूरितघनविम्बे दिनमणि इव दर्शनं
प्रदेहि नन्दलाल ॥
कूजितखगवृन्दे वितरितमकरन्दे परभृतरवच्छन्दे—
पुलिने सुविशाले—
शोभितशशिबिम्बस्फुरित यामुनाम्भस्त्वमेहि नवल—
नर्तनानुकारिचन्द्रभाल ॥
वृन्दावने यमुनाकूलकुञ्जे भ्रमरमुखर पुञ्जे-
एहि नन्दलाल ॥
वादय वनमालि ! क्षणमिह मधुशालि –
स्त्रीयवेणुयन्त्रं धर्षितेन्द्रजाल !
कुरु कुरु नवलास्यं मधुसुस्मित हास्यं
देहि चरणदास्यं ललित धेनुपाल !!

पञ्जीकृत-संख्या—एल० आर० एन०/१०

# सूर्योदयस्य नियमाः

पत्र संहिता—

१—"सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यदशकं वर्तते। धनादेश-( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३.०० पृथक् प्रदेयानि स्युः।

२—आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनप्रथमङ्कतः ( जनवरी अंकतः ) एवं ग्राहकत्वं स्वीक्रियते। माध्यमिकेन केनापि अंकेन न स्वीक्रियते।

३—आंग्लमासस्य २६ तमे दिनांके 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वय सूचनीयाः।

४—लेख-कवितादीनां भाषया संयतया, सरलया शुद्धया च भाव्यम्। प्रकाशनीयलेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५—सम्पादकीय-विषयसम्बन्धे पत्रव्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय पत्रव्यवहारे च व्यवस्थापकः इति च स्पस्ट लेखनीयम् येन उत्तरलाभे मुधा विलम्बो न भवे्।

विज्ञापन शुल्कम्—

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष सौविध्याय पत्रव्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-तृतीयपृष्ठस्य | १५०) | प्रथमद्वितीयावरणपृष्ठयोः विज्ञापनं न स्वीक्रियते। | |

—संङ्केत—

**'सूर्योदयः'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी-१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम् लहुराबीर, वाराणसी २२१००१
मुद्रण स्थलम्—हनुमान मुद्रण यन्त्र, पियरी कलाँ वाराणसी।

